THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NOS. 268, 269, 279, 280, & 291.

मीमांसान्यायप्रकाशः

मीमांसकमूर्धन्यश्रीमदापदेवविरचितः

पण्डितप्रवरश्रीमदनन्तदेवविरचित

# भाट्टालङ्कारटीकायुतः

कलकत्तागवर्नमेन्ट संस्कृतविद्यालयाध्यापक

म० म० श्रीलक्ष्मणशास्त्रिणा

कलिकाताविश्वविद्यालयाध्यापक श्रीसीतारामशास्त्रिणा च

परिष्कृत्य शोधितो जयकृष्णदासगुप्तेन

मुद्रापितो विजयताम् ।

---

## MIMANSÂ NYÂYA PRAKÂSA

*By Apadeva*

*With a commentary called 'Bhattalankar,*

*by Pandit Ananta Deva.*

*Edited by M. M. Sri Lakshmana Sastri,*

*Professor, Government Sanskrit College, Calcutta and*

*Shree Sita Ram Sastri, Professor Calcutta University.*

FASCICULUS 1 to V.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES.

AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

*1921.*

# भूमिका ।

विदितमस्तु मीमांसाशास्त्रमधिजिगांसूनां, सम्प्रति मीमांसकवरापदेवप्रणीतमीमांसान्यायप्रकाशस्तत्पुत्रानन्तदेवविरचितभाट्टालङ्काराख्यटीकासहितः सम्मुद्र्य प्रकाश्यते, एष च ग्रन्थः पूर्वमीमांसाशास्त्रस्य द्वादशाध्यायात्मकस्य प्रधानतया प्रतिपाद्यानां सारभूतानां विषयाणां सङ्क्षेपेण सारल्येन च मीमांसाशास्त्रतत्त्वजिज्ञासूनां कृते तत्त्वावबोधनाय प्रणीतोऽतीवोपादेयः, अस्यैकस्याऽध्ययनेनाऽपि मीमांसाशास्त्रे सम्यक् प्रवेशो भवति, अतः सर्वत्रैव विद्वांसः प्रथमममुमेव ग्रन्थमध्यापयन्ति छात्रान् । अस्य च प्रचारः सर्वेष्वेव देशेषु बाहुल्येन वर्तते । सोऽयं ग्रन्थो मुम्बापुर्यां काश्यां कलिकातानगर्यामन्यत्र चाऽसकृत् संमुद्रितोऽपि अनेकेषु स्थलेष्वशुद्धिसत्त्वेनाऽसमञ्जसपाठभेदादिप्राचुर्येण च विद्यार्थिनामध्यापकानां च पठनपाठनयोर्महान्तं क्लेशमजीजनत् । विशुद्धपुस्तकालाभेन च मुहुरुत्ताम्यतो जनानुपलभ्य यथावद्विशुद्धिसम्पादनेन पठनपाठनयोः सौकर्यार्थं परिश्रमपूर्वकं संशोध्य पुनर्मुद्रणे प्रवृत्तेन मया दुरूहस्याऽस्य ग्रन्थस्य व्याख्यां विना तत्र तत्राऽतीव क्लेशमनुभवतामध्यापकानां प्रेरणया सव्याख्यमेव मुद्रापयितुमभीप्सुना व्याख्यानपुस्तकमन्वेषयता च काशीस्थश्रेष्ठिवरगोविन्ददासमहाशयेन कृपया प्रदत्तं ग्रन्थकर्तृपुत्रनिर्मितं भाट्टालङ्कारनामकं व्याख्यानं लब्धम् । तल्लाभेन च मुदितमानसस्तत्सहितमेवैनं ग्रन्थमुद्रयम् । यद्यपि वङ्गदेशप्रसिद्धधर्मशास्त्रज्ञपण्डितवरमहामहोपाध्यायस्वर्गवासि श्रीकृष्णनाथ न्यायपञ्चानन महाशयप्रणीता व्याख्या संमुद्रिता वर्तते, तथाऽपि गुरुपरम्परायातमीमांसाशास्त्रार्थपरिज्ञानाभावेन स्वकीयबुद्धिवैभवेनाऽन्यग्रन्थसाहाय्येन च व्याख्यानकाले व्याख्यातॄणां प्रायोऽनेके दोषाः सम्भवन्त्येवेति तस्यां टीकायां लोकानां तथाविधादराभावेन पुनरपि मूलार्थपरिज्ञाने साहायकापेक्षा तदवस्थैवेतीयमेव टीका संमुद्रिता । अ-

स्याष्टीकायाश्च कर्ता साक्षाद्ग्रन्थकर्तृपुत्रः पितुः सकाशादेवाऽधिगततत्त्वविज्ञानश्च । पिता च स्वीयं गुह्यतमपि ज्ञानं पुत्रायोपदिशतीति प्रसिद्धमेव । अतः सत्सम्प्रदायागतमीमांसाहृदयाभिज्ञतया टीकाकृतः सर्वत्र महानादरः क्रियते लोकैः । व्याख्यायां मुहुर्मुहुरालोच्यमानायामपि ग्रन्थकर्तुस्तादृशविज्ञानवत्त्वं पदेपदे स्फुटीभवति । अद्यावध्ययं ग्रन्थः कुत्राऽपि न सम्मुद्रितो द्राविडदेश एव कुत्रचित् प्रसिद्ध आसीदिति महता प्रयत्नेनाऽन्विष्याऽऽनाय्य विलेख्य पण्डितैः संशोध्यदत्तवते श्रीयुतगोविन्ददासमहाशयाय सहस्रशोधन्यवादाः समर्पिता अपि न पर्याप्ता भविष्यन्तीत्यस्ति मे विश्वासः । व्याख्यानस्य चेदमेकमेव पुस्तकमवलम्ब्य मुद्रणं समारब्धमिति भूयःसु स्थलेषु आदर्शपुस्तकानुरोधात् बुद्धिबलेन पाठान्तरमकल्पयित्वा यथावदेव पाठः संस्थापित इति पठनपाठनसमये ऽसंलग्नता भवेच्चेत् तत्क्षाम्यन्तु बुधवराः इति प्रार्थये । मुद्रणकार्ये समारब्धे नानाविधकार्यव्यग्रतया नाऽपारयं संशोधनं विधातुमिति कलिकाताविश्वविद्यालयाध्यापक पण्डितसीतारामशास्त्रिभिः शोधनकार्यं समापितमिति तेभ्योऽनेकान् धन्यवादान् वितरामि । विलुप्तप्रायप्राचीनग्रन्थप्रचारणबद्धदीक्षेण श्रीमता जयकृष्णदास गुप्तेनाऽस्मत्प्रोत्साहनयैतत्पुस्तकं सव्याख्यं मुद्रयित्वा प्रकाशितमिति तस्मै अनेकानाशीर्वादान् वितरामि, यदसौ दुर्लभान् संस्कृतग्रन्थानित्थं प्रकटीकुर्वन् प्रचारयंश्च विलुप्तप्रायं सनातनधर्मं पुनरुज्जीवयंश्चेश्वरानुग्रहेण चिरंजीव्यादिति । पाठकांश्च प्रार्थयामि, अस्मद्बुद्धिदोषेण प्रयत्नशैथिल्येन वा बहुस्थलेषु बह्व्यस्त्रुटयः स्युः, तथाऽपि गुणैकपक्षपातिभिर्भवद्भिस्तास्त्रुटयः क्षन्तव्याः, अवलोक्य च परिशील्य च सव्याख्यं ग्रन्थं समनुभूयतां विद्यानन्द इति ।

इति विदुषामनुचरः

लक्ष्मणशास्त्री

॥ श्रीः ॥

भाट्टालङ्कारसहितमीमांसान्यायप्रकाशस्य

# विषयसूचीपत्रम् ।


| विषयः | पृष्ठ | पङ्क्तिः |
|---|---|---|
| मूलकृतो मङ्गलाचरणम् | १ | |
| टीकाकृतो मङ्गलाचरणम् | ,, | |
| गुरुवन्दनम् | २ | १ |
| ग्रन्थस्य विषयप्रयोजनादि | ३ | १ |
| अथाऽतो धर्मजिज्ञासेति सूत्रार्थकथनम् | ५ | १ |
| धर्मस्वरूपनिरूपणम् | ८ | १ |
| धर्मलक्षणपदकृत्यकथनम् | १० | १ |
| यजेतेत्यत्र प्रकृतिप्रत्ययार्थकथनम् | १३ | ९ |
| यजेत स्वर्गकाम इतिवाक्यार्थकथनम् | १४ | २ |
| भावनानिरूपणम् | १७ | १ |
| शक्ततावच्छेदकनिरूपणम् | १९ | १ |
| भावनास्वरूपनिरूपणम् | २३ | १ |
| शाब्दभावनाकथनम् | २५ | ३ |
| वेदापौरुषेयत्वकथनम् | ३२ | १ |
| शाब्दभावनाया अंशत्रयकथनम् | ४१ | ४ |
| प्राशस्त्यपदार्थकथनम् | ४३ | ३ |
| प्राशस्त्यस्य लक्षणया लाभकथनम् | ४५ | १ |
| अध्ययनविधिनिरूपणम् | ४७ | १ |

| विषयः | पृष्ठ | पङ्क्तिः |
|---|---|---|
| अध्ययनविधिफलकथनम् | ४९ | १ |
| वेदस्य पञ्चधा विभागकथनम् | ५० | १ |
| विधिनिरूपणम् | ,, | ३ |
| विशिष्टविधिनिरूपणम् | ५१ | ५ |
| विशिष्टविधौ मत्वर्थलक्षणाकथनम् | ५२ | ४ |
| मत्वर्थलक्षणां विनाऽन्वयानुपपत्तिकथनम् | ५३ | १ |
| वैयधिकरण्येनाऽन्वयेऽदृष्टद्वयापत्तिः | ५७ | १ |
| तन्त्रसम्बन्धशङ्कानिराकरणम् | ५९ | ३ |
| सोमस्येतिकर्तव्यतात्वेनाऽन्वयनिरासः | ६१ | २ |
| सोमेनेत्यस्य गुणविधिशङ्का | ६८ | ४ |
| धात्वर्थस्य करणत्वेनाऽन्वयनियमनिरासः | ६९ | १ |
| गुणविधौ मत्वर्थलक्षणायां गुणान्वयानुपपत्तिः | ७५ | ५ |
| विधाने वेति वार्तिकाविरोधप्रदर्शनम् | ७७ | १ |
| विशिष्टविधिसिद्धान्तः | ८१ | १० |
| विधेश्चातुर्विध्यम् | ९१ | ९ |
| उत्पत्तिविधिनिरूपणम् | ,, | १३ |
| विनियोगविधिनिरूपणम् | १२३ | ९ |
| विधिसहकारिषट्प्रमाणनिरूपणम् | १२४ | ३ |
| श्रुतिस्वरूपनिरूपणं तत्त्रैविध्यकथनं च । | १२५ | २ |
| विभक्तिश्रुत्या अङ्गत्वम् | १२६ | ४ |
| अङ्गानामपूर्वप्रयुक्तत्वम् | १२९ | ४ |
| कर्तुराख्यातवाच्यत्वपूर्वपक्षः | १३० | ४ |
| कर्तुराख्यातावाच्यत्वसिद्धान्तः | १४० | ४ |
| श्रुतेर्लिङ्गादिभ्यः प्राबल्यम् | १५१ | ३ |
| लैङ्गिकविनियोगकथनम् | १५३ | ३ |
| लिङ्गद्वैविध्यम् | १५५ | १ |

| विषयः | पृष्ठ | पङ्क्तिः |
|---|---|---|
| लिङ्गस्य वाक्यादिभ्यः प्राबल्यम् | १६० | १० |
| वाक्यस्वरूपनिरूपणं सोदाहरणम् | १६३ | १ |
| प्रकृतिविकृतिस्वरूपनिरूपणम् | १६४ | ९ |
| वाक्यस्येतरेभ्यः प्राबल्यम् | १६७ | ३ |
| प्रकरणनिरूपणम् | १६९ | ६ |
| प्रयाजादीनां विश्वजिन्न्यायेन स्वर्गार्थत्वशङ्कानिराक० | १७० | ५ |
| प्रकरणं क्रियाया एव विनियोजकम् | १७५ | १० |
| प्रकरणद्वैविध्यम् | १७५ | ७ |
| विकृतौ प्रकरणस्याऽविनियोजकत्वम् | १७६ | ४ |
| विकृतौ क्वचित्प्रकरणसम्भवः | १८० | ८ |
| प्राप्तबाधादिविचारः | १८४ | १ |
| पृषदाज्यस्याऽपि प्रकरणादङ्गत्वम् | १८६ | ७ |
| अवान्तरप्रकरणनिरूपणम् | १९१ | ४ |
| प्रकरणस्य स्थानादितः प्राबल्यम् | १९३ | १५ |
| स्थानप्रमाणनिरूपणम् | १९९ | १० |
| स्थानस्य समाख्यातः प्राबल्यम् | २०२ | १० |
| समाख्यानिरूपणम् | २०५ | ९ |
| अङ्गद्वैविध्यम् | २०६ | ३ |
| क्रियारूपाङ्गद्वैविध्यम् | " | ४ |
| सन्निपत्योपकारकाङ्गद्वैविध्यम् | २०७ | ६ |
| सन्निपत्योपकारकस्याऽऽरादुपकारकाद्बलीयस्त्वम् | " | १६ |
| आरादुपकारककर्मनिरूपणम् | १० | १६ |
| अङ्गानामपूर्वप्रयुक्तत्वम् | २११ | १ |
| सन्नित्योपकारकाणामुत्पत्त्यपूर्वार्थत्वम् | ११४ | १३ |
| आरादुपकारकाणां केवलमपूर्वार्थत्वम् | २१८ | ३ |
| प्रयोगविधिनिरूपम् | २२० | ८ |

| विषयः | पृष्ठ | पङ्क्तिः |
|---|---|---|
| क्रमनिरूपणम् | २२४ | ३ |
| क्रमबोधकानि षट् प्रमाणानि | " | ४ |
| क्रमबोधकश्रुतिद्वैविध्यम् | २२५ | १ |
| श्रुतेरितरप्रमाणेभ्यो बलवत्त्वम् | " | ८ |
| आर्थक्रमनिरूपणम् | " | १३ |
| आर्थक्रमस्य पाठक्रमात्प्राबल्यम् | " | १७ |
| पाठक्रमनिरूपणम् | २२६ | २ |
| पाठस्य द्वैविध्यम् | " | ७ |
| मन्त्रपाठस्य ब्राह्मणपाठाद्बलीयस्त्वम् | " | ११ |
| स्थानक्रमनिरूपणम् | २२९ | ७ |
| मुख्यक्रमनिरूपम् | २३० | १७ |
| मुख्यक्रमस्य पाठक्रमाद्दौर्बल्यम् | २३२ | ३ |
| प्रवृत्तिक्रमाद्बलीयस्त्वम् | " | ११ |
| प्रवृत्तिक्रमनिरूपणम् | २३३ | ११ |
| अधिकारविधिनिरूपणम् | २३५ | १३ |
| शूद्रस्य यागादावनधिकारः | २३६ | १७ |
| स्त्रियाः स्वातन्त्र्येणाधिकाराभावनिरूपणम् | २३७ | १८ |
| सामर्थ्यस्याऽधिकारिविशेषणत्वम् | २४० | १३ |
| नित्यकर्मसु यथाशक्तिन्यायः | २४१ | १२ |
| मन्त्राणां सार्थक्यनिरूपणम् | २४२ | ५ |
| नियमविधिनिरूपणम् | २४३ | १ |
| 'विधिरत्यन्तमप्राप्तौ—' इति वार्त्तिकव्याख्यानम् | " | २२ |
| अपूर्वविधिनिरूपणम् | २४५ | १ |
| विधित्रयविचारः | " | ३ |
| परिसङ्ख्यानियमयोः पार्थक्यम् | ३१७ | ५ |
| मन्त्रप्रामाण्यनिरूपणम् | ३४५ | १ |

| विषयः | पृष्ठ | पङ्क्तिः |
|---|---|---|
| नामधेयानिरूपणम् | ३४९ | ६ |
| उद्भिच्छब्दस्य नामधेयत्वं मत्वर्थलक्षणाभयात् | ३५१ | १ |
| चित्राशब्दस्य वाक्यभेदभयात् कर्मनामधेयत्वम् | ३६३ | ३ |
| देवतावादः | ३६७ | २१ |
| अग्निहोत्रशब्दस्य तत्प्रख्यशास्त्रात् कर्मनामधेयत्वम् | ४०५ | १० |
| श्येनशब्दस्य तद्व्यपदेशात्कर्मनामधेयत्वम् | ४१६ | ११ |
| उत्पत्तिविशिष्टगुणबलीयस्त्वस्याऽपि नामधेयत्वनिमित्तत्वं | ४१६ | ६ |
| तत्खण्डनम् | ४१९ | ७ |
| निषेधानामर्थवत्त्वम् | ४२५ | ३ |
| निषेधानां निवर्तनाप्रतिपादकत्वम् | ,, | ११ |
| नञः प्रत्ययार्थान्वये बाधकद्वैविध्यम् | ४३६ | १ |
| उपसंहारस्वरूपकथनम् | ४५६ | ३ |
| निषेधगतो विशेषः | ४५९ | २ |
| अर्थवादानां सार्थक्यम् | ४६१ | ९ |
| शाब्दीभावनानिरूपणम् | ४७० | २ |
| आर्थीभावनानिरूपणम् | ४७९ | १ |
| स्मृतिप्रामाण्यव्यवस्था | ४८९ | ६ |
| ग्रन्थान्ते मङ्गलादि | ५०७ | |


इति विषयसूची समाप्ता ।



श्रीगणेशाय नमः ।

# मीमांसान्यायप्रकाशः ।

## भाट्टालङ्कारटीकासहितः ।

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ॥ १ ॥

---

दध्नो मन्थनकाम्यया व्रजवधूं कुम्भे तदासिञ्चतीं
सस्नेहं दधि देहि मह्यमधुनेत्यूचे रमेशोऽथ याम् ॥
ॐमित्युक्तिपुरःसरं निजकरे तस्यार्पणं कुर्वतीं
प्रत्युक्तिः कुरु कार्यमस्तु शमिति श्रीशस्य सा पातु नः ॥ १ ॥
अनल्पजल्पोत्थितदोषदुष्टां पुनः पुनस्तद्वचनेऽतिहृष्टाम् ॥
श्रीस्वामिसञ्जातगिरि द्युनद्यां निजां गिरं सम्प्रति मज्जयामः ॥२॥

आचारानुमितश्रुत्या मङ्गलफलत्वेनावगतं विघ्नध्वंसाद्यन्यतरदुद्दिश्य कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति श्लोकाभ्यां यदिति । मात्रशब्दः कात्स्न्र्यवाची "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरोक्तेः । यावन्तो यदीयाः कृपालेशाः पुरुषार्थप्राप्तिहेतुभूताः तत्फलोपहिता इति यावत् । ननु सर्वेऽपि धर्मादिचतुष्टयार्थिनः ते च यदि कृपालेशविषयतां गताः तदा निर्विषयसम्पूर्णकृपाया अप्रसिद्धौ तल्लेशानां पुरुषार्थप्रापकत्वोक्तेरसङ्गतिरिति आशङ्क्योक्तं भक्तेति । भक्तिः परमेश्वरे निरुपधिप्रीतिः तथा च—

अनन्तगुणसम्पन्नमनन्तभजनप्रियम् ।
अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणम् ॥ २ ॥

"या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु"
इति प्रार्थयन्तं प्रह्लादं प्रति भगवतोक्तं—
"भक्तिर्मयि तवास्त्येव भूयोऽप्येवं भविष्यति"(विष्णुपुराणे) इति ।

तद्वन्तो भक्ताः तेषु वत्सलः "वत्सांसाभ्यां कामबले"इति वत्सपदान्मत्वर्थीयो लच् ततश्च स्नेहवानित्यर्थः । अन्यत्र स्नेहवाचित्वेनादृष्टोऽपि वत्सशब्दो लजन्तवृत्तौ स्नेहमभिधत्ते तथा प्रतीतेः सूत्रान्तर्गतकामशब्दस्य व्याख्यातृभिस्तादर्थ्याङ्गीकरणाच्च, यश्च यदीयस्नेहविषयः सन् दुःखित्वेन तद्बुद्धिस्थो भवति स तदीयकृपाविषय इति भक्तानां पूर्णकृपाविषयत्वं द्योत्यते । यद्वा कामशब्दो लोके इच्छासामान्यवाचितया प्रसिद्ध इति सूत्रे निरुपधिपरदुःखहानेच्छात्मककृपावाचित्वेनैवाभ्युपेयः । ततश्च शब्दशक्त्यैव तेषां तद्विषयत्वलाभः । यद्यपि वदिरभिवादनस्तुत्योर्वाचकस्तथापि प्रणतिविशेषपूर्वकाशीर्वचनात्मनोऽभिवादनस्य (१)प्रकृतेऽसम्भवात् स्तुतिपरतया व्याख्येयः ।

अनन्तरूपिणमिति अनन्तसंज्ञमित्यर्थः । संज्ञाया अर्थानुसारितामाह अनन्तगुणेति । अनन्तस्य गुणाः अनन्ताश्च ते

(१) प्रणतिविशेषः पूर्वः प्रथमो यस्य एवंविधं यदाशीर्वचनं तदात्मकस्येत्यर्थः यस्मिन् प्रणतिविशेषे कृते उत्तरकालमभिवादनयोग्येनाशीर्वचनं प्रयुज्यते स एव प्रणतिविशेषोऽभिवादनम् तथाचाशीर्वचनफलकप्रणतिविशेषरूपस्य प्रकृतेऽभिवादनस्याऽसम्भवात् स्तुतिपरतया व्याख्येय इत्यर्थः । यथा श्रुते ऽभिवादनस्यावरकर्तृकस्य प्रणतिविशेषरूपस्याऽऽशीर्वचनात्मकत्वासम्भवेना-

इह खलु परमकारुणिकेन भगवता जैमिन्यृषि-

---

गुणाश्च तैः संपन्नस्तम् । कथं तादृश गुणवत्तालाभोऽभूदित्यत आह अनन्तभजनेति । अनन्तस्य परमात्मनो भजनं सेवनं तदेव प्रियं कामनाविषयो यस्य तम् । ततश्च भजनमहिम्नैव तल्लाभ इत्याशयः । गुरुदेवतैक्यचिन्तनद्योतनायाह । आनन्देति । आनन्दो विष्णुः "आनन्दो नन्दनो नन्द" इति विष्णुसहस्रनामसु पाठात् । यद्वाऽमुना पदेन गुणवत्तोपपादनाय विष्णावभेदे निर्दिष्टे तदुपपत्तयेऽनन्तभजनेति । अनन्तभजना विष्णुभक्ताः तेषां प्रियम् । न हि विष्णुभक्ता विष्णुभिन्ने प्रियबुद्धिं कुर्युरित्याशयः ॥ २ ॥

यज्जैमिनिप्रणीतद्वादशलक्षण्यात्मकशास्त्रीयंविषयादि तदेवेहापि ग्रन्थे इति सूचनाय शास्त्रीयं विषयादि दर्शयन्वेदार्थत्वेन धर्मो जिज्ञास्यो न धर्मत्वेन प्रथमसूत्रस्थाथशब्देन वेदाध्ययनस्य जिज्ञासाहेतुत्वोक्तेरिति(१)मतं निराकरोति । इहेति ।

---

ऽसाङ्गत्यप्रसङ्गात् प्रत्यभिवादनं हि तादृशं भवति अभिवादनं च सर्वत्र महत्कर्तृकाशीर्वादप्राप्तिमुद्दिश्यैव क्रियते इति भवति आशीर्वचनफलकमिति ध्येयम् ।

(१) अयं भावः अथातोधर्मजिज्ञासेत्यत्रत्याथशब्दस्य हि कृत्स्नवेदाध्ययनानन्तर्यमेवार्थो वाच्यः यतः स्वाध्यायोऽध्येतव्य इति विधिना कृत्स्नायाः स्वशाखाया अध्ययनं कर्तव्यत्वेन विहितम् । एवञ्च कृत्स्नां स्वशाखामधीत्य किमिति वेदार्थैकदेशधर्मविचार एव पुरुषः प्रवर्त्स्यति । किञ्च धर्मशब्दस्यापि अधर्मसाधारण्याय वेदार्थपरत्वं वक्तव्यमेवेतरथा ऽधर्मस्य परिहार्यत्वं न स्यात् इति केचिद्यदपि वदन्ति तथापि न तद्युक्तं यदि वेदार्थ एव जिज्ञास्यतया विवक्षितः स्यात्सूत्रकृतः किमिति वेदार्थजिज्ञासेत्येव न सूत्रयाञ्चकार धर्मजिज्ञासेतिविहाय, वेदार्थत्वव्याप्यधर्मावच्छिन्ने चोदनाविहिते कर्मण्येव प्रसिद्धस्य धर्मशब्दस्य प्रयोगात् न

वेदार्थपरत्वं धर्मशब्दस्य । किञ्च यथाश्रुतार्थं परित्यज्याश्रुतार्थकल्पनं हि अनुपपत्त्या कया चित् वक्तव्यम् । नच प्रकृते काचिदनुपपत्तिः अधर्मस्यापि धर्मे विचारिते स एवोपादेय इति च विज्ञाते परिहार्यत्वमर्थाद्गम्यते इति न तत्पृथक् वक्तव्यं भवति । यच्च कारणमुच्यते अथशब्देन वेदाध्ययनानन्तर्यमुक्तमिति तदपि विचारणीयम् । नहि यावत्योवेदशाखाः तासां सर्वासामध्ययनमेकेन पुरुषेण कर्तुं शक्यमसम्भवात् वेदानामनन्तत्वात् । नच साम्प्रतमुपलभ्यमानानामेव सर्वेषां वेदानामध्ययनमावश्यकमिति कुत्रापि स्मृतावुक्तं स्वशाखायामधीतायां तावतैव कर्मानुष्ठानोपपत्तेः प्रतिपादितत्वात् एवञ्च यस्य यस्य पुंसः कुलपरम्परया या या शाखा प्रचालिता सैव सम्पूर्णतयाऽध्येतव्या तत्तच्छाखीयैः, तावतैवेष्टसिद्धेः । नच तथापि धर्मविचारमात्रस्यैव कर्तव्यत्वे तत्र केवलं कर्मकाण्डाध्ययनमात्रमेवापेक्षितमिति वेदान्तसाधारणाध्ययनं निष्प्रयोजनं स्यादिति तत्सार्थक्याय धर्मशब्दस्य वेदार्थे लक्षणाऽभ्युपगन्तव्येति वाच्यम् । भवदुक्तरीत्या धर्मशब्देन वेदार्थमात्रं विवक्षित्वा धर्मब्रह्मोभयसाधारणवेदार्थमात्रस्यैव विचार्यत्वप्रतिज्ञायामङ्गीकृतायामग्रेतनसूत्रजातेन कुत्रापि उपनिषद्वाक्यान्युदाहृत्य विचारस्याकृतत्वेन सूत्रकारः स्वोक्तं विस्मृत्य धर्ममात्रं विचारयामासेति कल्पितं स्यात् नहि द्वादशाध्यायीं प्रणीयावाशिष्टानामपि वाक्यानां निर्णयं कर्तुं सङ्कर्षकाण्डमपि चतुरध्यायीरूपं प्रणीतवतः सूत्रकारस्य जैमिनेरुपनिषद्वाक्यविचारे विस्मरणं वा विघ्नजातं वा समभवदित्युत्प्रेक्षितुं शक्यते । न चाम्नायस्य क्रियार्थत्वादित्यादिना वेदान्तवाक्यानामपि आनर्थक्यं पूर्वपक्षीकृत्य विधिनात्वित्यादिसिद्धान्तसूत्रेण विध्येकवाक्यत्वेन प्रामाण्योपपादनात् कृत एव विचारइति साम्प्रतम् । तस्य विधिसन्निहितार्थवादविषयत्वात् उपनिषदां च विधिसन्निहितत्वाभावात् । प्रथमाध्याये हि धर्मप्रमाणं निरूप्यते अत एव भाष्यकारेणोक्तं "समस्तमध्यायं प्रमाणलक्षणमाचक्षत" इति । उपनिषदाञ्च धर्मप्रमाणत्वाभावेन तद्विचारे प्रथमाध्यायासङ्गतिः स्यात् अतोनात्रोपनिषद्विचारः । नहि ब्रह्मविचारे केवलमध्ययनमात्रानन्तर्यं तत्र साधनचतुष्टयसम्पत्तेः कारणत्वात् धर्मविचारे तु वेदाध्ययनमात्रस्यैव कारणत्वात् । किमर्थं तर्हि कृत्स्नस्वशाखाध्ययनमिति चेच्छृणु । ब्रह्मणः केवलवेदगम्यत्वेन वेदाध्ययनाभावे तदर्थग्रहणायोगेन तत्र

णा"अथातोधर्मजिज्ञासा"(१)इत्यादिना द्वादशस्वध्या

---

आदिरुपक्रमः । हेतौ तृतीया । धर्मोविचारित इति । विवक्षितप्रकारको निर्देशः धर्मजिज्ञासेत्येवोपक्रमः कृतो जैमिनिना

---

सन्देहानुत्पत्त्या ब्रह्ममीमांसाया एवानवसरप्रसङ्गः स्यात् अतस्तत्साधारणवेदाध्ययनमावश्यकम् । नच कर्मकाण्डमात्रमेवाध्येतव्यमिति वैशेषिकोविधिः कश्चन दृश्यते स्वाध्यायोऽध्ययनविधेः स्तद्विधायकत्वस्यावश्याभ्युपेयत्वे नैकदेशमात्रमध्येतुं शक्यते इति तत्साधारणाध्ययनमेव कर्तव्यमिति ध्येयम् ।

(१) अथ—गुरुकुलस्थितिपूर्वकं वेदाध्ययनातनन्तरं अतो यतः अध्ययनस्यार्थज्ञानं फलमतः धर्मस्य वक्ष्यमाणलक्षणस्य जिज्ञासा ज्ञानेच्छा कर्तव्येतिशेषः । अत्र च धर्मजिज्ञासापदं न विचारलक्षकं "धर्मं जिज्ञासितुमिच्छेत् तस्माद्धर्मोजिज्ञासितव्य" इत्यादिभाष्ये "सम्बन्धं क्रिययोर्होष ब्रूते शास्त्राच्च ते पृथक्" इत्यादिवार्त्तिके तद्व्याख्यार्थे च न्यायरत्नाकरे" अध्ययनजिज्ञासाक्रिययोः सम्बन्धमथशब्दो ब्रूते तेच शास्त्रादत्यन्तभिन्ने नहि जिज्ञासाशब्दो मीमांसापर्याय" इति श्रौतार्थपरत्वस्यैवोक्तेः । तथा । आनन्तर्यवचोव्यक्तिराश्रितैवात्रगम्यते" इति वार्त्तिके अथ शब्दआनन्तर्यार्थो नाधिकारार्थ इत्युक्तं जिज्ञासापदस्य च विचारलक्षकत्वेऽधिकारार्थताऽप्यविरुद्धेति । तृतीयाध्यायेऽप्युक्तं" प्रथमाध्यायप्रथमसूत्रे हि धर्मज्ञानेच्छाया वक्ष्यमाणव्याख्येयत्वेनानुपन्यासादनन्तरानुष्ठेयमात्रमेवोपदेष्टव्यमित्यधिकारार्थत्वं नोक्तम् । इह त्वध्यायरूपं वा तदर्थात्मकमेव वा । व्याख्येयमधिकर्तुं हि शक्यते शेषलक्षण" मितिग्रन्थयोराद्ये प्रथमसूत्रे विचारानुपादानादधिकारार्थताऽथशब्दस्य नास्तीत्युक्तं, द्वितीयग्रन्थे तु तृतीयाध्यायाद्यसूत्रे विचारोपादानादधिकारार्थतेत्युक्तम् । ब्रह्ममीमांसायामपि अथातोब्रह्मजिज्ञासेति सूत्रे वाचस्पतिमिश्रैः जिज्ञासा सन्दिग्धे वस्तुनि निर्णयाय भवति निर्णयश्च विचारसाध्य इति विचारकर्तव्यताऽर्थाद्गम्यते इति न जिज्ञासापदस्य विचारलक्षक-

न वेदार्थजिज्ञासेति, तेन हेतुना धर्मत्वेनैव श्रौतस्मार्तसाधारण्येनेह शास्त्रे धर्मो विचारितो न वेदार्थत्वेनेत्यर्थः । यद्यपि वेदाध्ययनानन्तर्यमेवाथशब्दार्थः भाष्यकारेण "तत्तु वेदाध्ययनं तस्मिन्हि सति साऽवकल्पते" इत्यादिना तथा व्याख्यातत्वात् तथापि न वेदार्थत्वेन जिज्ञास्यता चिकीर्षितविचारैकदेशहेतुत्वेनापि तदानन्तर्याभिधानोपपत्तेः अन्यथाऽध्ययनविधिविहितस्वाध्यायाध्ययनानन्तर्याभिधाय्यथशब्दवशेन कृत्स्नवेदार्थस्यापि जिज्ञास्यत्वानुपपत्तेः यथाहि वेदाध्ययनं वेदार्थविचार एव हेतुर्न स्मृत्यर्थविचारे एवमेकशाखाध्ययनमपि न शाखान्तरार्थविचारे हेतुः । स्यादेतत् अर्थज्ञानोद्देशेनाध्ययनं विदधताऽध्ययनविधिना विचारमन्तरेण तदयोगाद्विचारोऽध्ययनेतिकर्तव्यतात्वेनाक्षिप्यते करणं च विचाररूपेतिकर्त्तव्यतानुष्ठापकमित्यध्ययनस्य विचारहेतुत्वं सिद्धान्तिनोच्यते । तत्रैकशाखास्थप्रयोगविध्यर्थनिर्णयस्य शाखान्तरीयाङ्गवाक्यविचाराधीनत्वात् "पुरोडाशं चतुर्धा करोति" "द्वयोः प्रणयन्ति"

---

त्वमित्युक्तमिति । धर्मजिज्ञासितुमिच्छेदितीच्छाविषयेच्छाग्रहणन्तु जिज्ञासाद्वयाभिप्रायेण तथाहि प्रथमं तावद्धर्माधर्मौ ज्ञातव्याविति वृद्धेभ्यः श्रुत्वा तज्ज्ञातुमिच्छन् स्वाध्यायाध्ययनविधिना तादर्थ्येन विहितमध्ययनमपि तेभ्य एवावधार्याधीते वेदम् । ततोऽव्युत्पन्नस्याधीतादपि वेदादर्थज्ञानानुदयात् किमनेनोच्यते इति पुनरन्यादृशी जिज्ञासा जायते तद्वशेन च व्युत्पत्त्युपाये निगमनिरुक्तव्याकरणादिश्रवणे यतते ततश्च पदार्थज्ञानाद्वाक्यार्थः प्रतीयमानो न्यायानवधारणात्संशयितो भवति ततः पुनर्वाक्यार्थविशेषजिज्ञासा भवति तदिदं पश्चात्तनं जिज्ञासाद्वयमभिप्रेत्याथातोधर्मजिज्ञासेत्युक्तं यथोक्तं भाष्यकारेण न जिज्ञासामात्राभिप्रायेणेदमुच्यते किन्तु तादृशीं धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः या वेदाध्ययनमन्तरेण न सम्भवतीति ।

"उक्थानि गृह्णाति" इत्यादिवाक्यार्थनिर्णयस्य च "आग्नेयं चतुर्द्धाकरोति" "अध्वर्युप्रतिप्रस्थातारौ प्रणयतः" "तं पराञ्चमुक्थानि गृह्णाति" इत्यादिशाखान्तरीयवाक्यविचाराधीनत्वादेकशाखाध्ययनेनापि शाखान्तरविचारोऽवश्यमनुष्ठाप्यते ऽतः सम्भवति हेतुत्वमिति ? तर्हि श्रौतानामिव स्मार्ताचारप्राप्ताङ्गानामप्यनुष्ठापनं कुर्वतां प्रयोगविधीनामर्थनिर्णयाय तेन स्मृत्यादिविचारोऽप्यनुष्ठाप्यत इति सम्भवति तस्यापि प्रतिज्ञाविषयत्वमित्याशयः । सूत्रं तु—विश्वजिन्न्यायेन स्वर्गफलकोऽध्ययनविधिर्न विचारमाक्षिपतीति बाधकाभावे "अधीत्य स्नायात्" इति स्मृतिवशादध्ययनानन्तरं समावर्तनं कार्यमिति शङ्कायां प्रवृत्तमित्थं व्याख्येयम्—यतो दृष्टार्थावबोधफलकत्वे सम्भवति स्वर्गकल्पनाऽनुचिता स्मृतिश्चानन्तर्यात्मकक्रमविधित्वाभ्युपगमे विरुध्यमानाऽप्यध्ययने स्नानपूर्वकालतामात्रविधित्वेन भवत्युपपन्ना "वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति" इत्यादिना "तथा तेषु वर्त्तेथा" इत्यन्तेन(१) ग्रन्थेन तैत्तिरीयैर्वेदाध्ययनान्ते वेदार्थोपदेशकर्त्तव्यतोपदेशाच्चैवमेव व्याख्यातुमुचिता, अतोऽध्ययनानन्तरं धर्मजिज्ञासैवोचिता न स्नानमिति । अध्ययनविध्यर्थं त्ववसरे वक्ष्यामः । अथ धर्मो न शास्त्रे विचारितः प्रत्यध्यायं प्रमाणभेदशेषादीनां अर्थान्तराणां निरूपणात् "न कलञ्जं भक्षयेत्" इत्यादिवाक्यार्थाऽधर्मस्य षष्ठे निरूपणाच्चेत्यत आह । द्वादशास्वित्ति । धर्मसम्बन्धिनामेव प्रमाणादीनां निरूपणीयत्वादधर्मस्य धर्मप्रतिस्पर्द्धितया निरूपणीयत्वाच्छास्त्रविषयत्वं धर्मस्यैवेति भावः । ननु धर्मपदमपूर्वाभिधायीति काणादप्रसिद्धिः, नच प्रत्यधिकरणमपूर्वं चिन्त्यत

(१) तैत्तिरीयोपनिषदि प्रथमवल्ल्याम् इति शेषः ।

येषु धर्मो विचारितः(१)। तत्र वेदेन प्रयोजनमुद्दिश्य

---

इत्याशङ्क्य सूत्रस्थधर्मपदार्थमाह । तत्रेति । यागादिकर्त्तरि अपूर्वसत्त्वाज्ञानशून्यैरपि धार्मिकपदप्रयोगात् "तानि(२) धर्माणि प्रथमान्यासन्"इतिश्रुतौ यज्ञे धर्मपदप्रयोगात् ।

"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।

अयन्तु परमो धर्म"(याज्ञ.स्मृ.आचा.)इत्यत्राप्येषां मध्येऽयं परमो ब्राह्मणः इत्यत्र षष्ठ्यन्तपदनिर्दिष्टानां ब्राह्मणत्ववदिज्यादीनां धर्मत्वप्रतीतेर्नाऽदृष्टवाचि धर्मपदं, किन्त्वदृष्टव्यापारेण यद्बलवदनिष्टाऽननुबन्धिफलकरणमनदृष्टं तद्वाचीत्याशयः । वेदपदं च पारायणविधाविव न मन्त्रब्राह्मणग्रन्थपरम् असम्भवापत्तेः नापि तदन्तर्गतवाक्याभिप्रायं, किन्त्वपौरुषेयवाक्यपरं तेन लिङ्गादिकल्पितश्रुतिविहितानामपि धर्माणां सङ्ग्रहः विधीयमानत्वं चाज्ञातज्ञाप्यत्वं न प्रयुज्यमानत्वमप्रयोज्यस्यापि पञ्चमवर्षादिकालस्य धर्मत्वात् । यथाहुः—श्रेयस्करभाष्यव्या-

---

(१) प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारसामान्यातिदेशविशेषातिदेशोहबाधतन्त्रप्रसङ्गाख्या द्वादशानामध्यायानां द्वादशविषयाः समस्तस्य चार्थस्य वक्ष्यमाणस्य प्रतिज्ञापिण्डोऽयं धर्मजिज्ञासेति यथा राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञोगमनमुक्तं भवति तथा यैर्जिज्ञासितैर्विना धर्मो जिज्ञासितो न भवति तानिअर्थाक्षिप्तान्येव भवन्तीति न पृथक्सूत्रयितव्यानि इति न तेषां विचारस्याप्रतिज्ञातार्थविचारत्वमिति ध्येयम् ।

(२) तानि धर्माणीत्यत्र प्रातिपदिकं तावद्यज्ञवाच्येव अन्यस्याप्रकृतत्वात् यज्ञेन यज्ञमयजन्तदेवाइति पूर्वत्र तस्यैव प्रकृतत्वात्तत्समानाधिकरणश्च धर्मशब्दः ततः सोऽपि यज्ञविषय एव, लिङ्गसङ्ख्ययोस्तु छान्दसत्वादसौ व्यत्यय इति भावः ।

ख्यावसरे *भट्टाः—

(१)"श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।

चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता" इति । (श्लो. वा. चो. सू. १९१)

अत्र च "यस्मिन्प्रीतिः पुरुषस्य" इति पुरुषार्थलक्षणान्तर्गतप्रीतिपदेन श्रेयःपदव्याख्यानाद्दध्यग्निहोत्रगोदोहनादेर्धर्मत्वं स्थापयिष्यते इति चैतद्वार्त्तिकात् पूर्वत्र भट्टोक्तेः भावार्थाधिकरणे च फलभावनाकरणस्यैव धर्मत्वोक्तेः को धर्म इति स्वरूपजिज्ञासातः कानि साधनानीतिपृथगङ्गजिज्ञासोक्तेश्च क्रत्वर्थानां धर्मत्वा-

(१) चतुर्थाध्यायस्य प्रथमपादे अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति प्रथमसूत्रस्थक्रत्वर्थपुरुषार्थपदार्थज्ञानार्थं तयोर्लक्षणपरसूत्रम्—यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणा ऽविभक्तत्वात् । यस्मिन् स्वर्गादिसुखविशेषे पश्वादिसुखसाधने च लब्धे प्रीतिः कृतार्थोऽस्मीति धृत्तिस्तत्साधनं पुरुषार्थः । यद्वा यस्मिन्ननुष्ठिते पुरुषस्य प्रीतिः सुखविशेषो भवति स पुरुषार्थः यथा यागेऽनुष्ठिते स्वर्गरूपसुखं भवति तत्त्वामिति लक्षणसमन्वयः । प्रयाजादौ क्रतूपकारकत्वेन फलसाधनत्वाभावान्नातिव्याप्तिः तदन्योविहितः क्रत्वर्थः तस्य लिप्सा इच्छा अर्थलक्षणा शास्त्रं विना अर्थतः स्वत एव लक्षणमुत्पत्तिर्यस्याः तादृशी तेन फलेन सह साध्यसाधनभावस्य अविभक्तत्वात् अव्यभिचारात् क्वचिच्छेति । इत्थं च शास्त्रजन्यज्ञानाजन्येच्छाविषयसाधनत्वं पुमर्थत्वम् । स्वर्गेच्छायाः शास्त्रजन्यज्ञानाजन्यत्वेन तदिच्छाविषयस्वर्गसाधनत्वाद्यागे लक्षणसमन्वयः । एवं चैतत्सूत्रघटकप्रीतिपदेन श्रेयःपदव्याख्यानात् य एव श्रेयस्करः स एव धर्मशब्देनोच्यते इति भाष्येण प्रीतिजनकस्यैव धर्मत्वकथनात् । वार्तिककारेणाप्येतदुक्तम्—हि यतः श्रेयः पुरुषप्रीतिः सा च चोदनालक्षणैः चोदनाविहितैः द्रव्यगुणकर्मभिः सम्पाद्यते तस्मात्तेषां द्रव्यगुणकर्मणामेव धर्मशब्दवाच्यत्वं नत्वपूर्वादीनामित्यर्थः ।

* तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः य एव श्रेयस्करः स एव धर्मशब्देनोच्यत इति भाष्यव्याख्यानावसरे इत्यर्थः ।

भावे तदसङ्ग्रहाय प्रयोजनमनुद्दिश्येति । कामशब्दोपात्तं प्रयोजनपदार्थः तत्साधनत्वेनाज्ञातज्ञाप्यमितिविशिष्टार्थः । अस्ति च विश्वजिदादीनामपि कल्प्यकामपदेन फलनिर्देशः । यदि तु वाजपेयानुष्ठानमजानद्भिः बृहस्पतिसवकर्त्तरि धार्मिकोऽयमिति व्यवहारात् क्रत्वर्थानामपि धर्मत्वं तदा विवाहार्थानृतवदनादावभ्यनुज्ञाशास्त्रेण निषेधातिक्रमनिमित्ताऽनिष्टाननुबन्धित्वेनाऽज्ञातज्ञाप्येऽतिप्रसङ्गवारणाय प्रयोजनमिति । नहि तेन शास्त्रेणानृतवदनं क्रतूपकारस्य स्वर्गादेर्वा हेतुत्वेन ज्ञाप्यते । नच विवाहाख्यश्रेयःसाधनत्वादुक्तरूपेण वेदबोधितत्वाच्चास्तामस्यापि द्वितीयसूत्रानुसारेण श्रेयस्करत्वं— भाष्यानुसारेण च धर्मत्वमिति शङ्क्यम् । धर्मत्वं वेदबोधितश्रेयःसाधनतेति भट्टोक्तेः । यथाहुः—

(१)"श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचर" इति ( श्लो. वा. चो. सू. १४)

बलवदनिष्टाऽननुबन्ध्यर्थकमर्थपदं श्येनवारणाय ।

ननु नैव श्येनस्यानिष्टहेतुत्वं तस्य विहितत्वेन निषेधाऽवि-

(१) ननु गोदोहनादि द्रव्यं नीचैस्त्वादि गुणो यागादिक्रिया च फलसाधनत्वाद्धर्मोनापूर्वादिरिति भाष्ये वक्ष्यते द्रव्यादि च प्रत्यक्षमिति कथं चोदनैव प्रमाणमित्यवधारितमित्याशङ्क्य वार्तिके एतदुक्तं यद्यपि द्रव्यक्रियागुणादीनां धर्मत्वं भाष्यकारेण स्थापयिष्यते तथापि तेषां यदिन्द्रियग्राह्यं रूपं न तेन रूपेण धर्मत्वं, केन तर्हि रूपेण धर्मत्वमित्यत आह हि यतः एषां द्रव्यक्रियागुणादीनां अलौकिकश्रेयःसाधनता वेदं विना नान्येन प्रमाणेन गम्यते किन्तु केवलं चोदनात एव गम्यते अतएव ताद्रूप्येण चोदनाबोधितालौकिकश्रेयःसाधनत्वेन रूपेण धर्मत्वमत एव हेतोर्न धर्मस्येन्द्रियग्राह्यत्वापत्तिरित्यर्थः । इन्द्रियपदं चोपलक्षणं नानुमानादिगोचर इत्यपि द्रष्टव्यम् ।

धेयत्वात् । नच तद्विधौ करणेतिकर्त्तव्यतयोर्विहितत्वेपि फलांश-स्याविहितत्वान्निषेधविषयत्वमिति वाच्यम् । वैरिमरणस्य हिंसा-निषेधाविषयत्वात् । नच तद्वैरिमरणं भावयेदिति–तद्भावनाया अनुवाद्यत्वान्निषेध्यत्वं, भावनाया अनुवाद्यत्वे तद्विशेषणैकत्वा-देरविवक्षाप्रसङ्गात्—अतः कथमनर्थत्वं श्येनस्येति चेत् । वैरिमणं मया कर्त्तव्यमिति सङ्कल्पस्य भावनाशरीरान्तर्गत-स्यापि रागतः प्राप्तत्वेन विध्यसंस्पृष्टस्य निषेध्यत्वादिति गृहाण । यद्वा "योहि हिंसितुमिच्छेत्"इतिभाष्येण हिंसाफल-कत्वावगमाद्धिंसापदस्य च प्राणवियोगानुकूलव्यापारवाचित्वा-त् वैरिमरणफलोपहितव्यापारः कश्चित् श्येनादिफलम् । अ-स्तिच प्राणवियोगानुकूलदृष्टोपायेनेव श्येनादिना तमनुष्ठाप-यतोनिषेधातिक्रम इति सम्भवति श्येनादेरनर्थत्वम् । नचैवमस्या-ऽधर्मपदवाच्यतापत्तिः अनिष्टानुबन्धित्वेपि स्वरूपेण नि-षिद्धत्वाभावात् निषिद्धस्यैवाधर्मत्वात् ।

यदि तु स्वयमनिषिद्धेपि परम्परयाऽनिष्टानुबन्धिन्यधर्म-पदं लोके प्रयुज्यते भवतु तदा श्येनादेरधर्मत्वम् । यथाहुः—

(१)"अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता ।

---

(१) श्येनादौ हि विधीयमाने फलत्वेनोद्दिश्यते हिंसा नतु सैव विधीयते तावदेव च तस्याश्चोदनालक्षणत्वं तथा हिंसा श्ये-नसाध्यतया लक्ष्यते । न चैतावता विधेयत्वम् नहि यद्विधिप्रमेयं तद्विधेयमितिविधेयलक्षणं, किन्तर्हि ? यत्राऽप्रवृत्तः पुरुषो विधि-वशात्प्रवर्तते तद्विधेयम् । नच फलस्य तदस्ति, विधितः प्रागेव तत्र रागतः प्रवृत्तेरित्यविधेयत्वम् तथा भावनाविधिरप्यर्थाद्विधे-येष्ववतरन्नन्यतः प्राप्तात्फलांशाद्विनिवृत्तः साधनेतिकर्तव्यतांशयो-रेवावतरतीति तयोरेव विधेयत्वं न फलस्येति । यत एवं फलस्यानर्थत्वमतस्तद्द्वारेणाऽनर्थत्वात् श्येनस्य न धर्मत्वं नाप्यधर्मत्वं स्वरूपेणानर्थत्वाभावात् फलस्यानर्थानुबन्धित्वा-त् तद्द्वारेण श्येनोऽप्यधर्म इत्युपचर्यत इत्याह अत इति ।

फलानर्थानुबन्धित्वात्तद्द्वारेणोपचर्य्यते ।
यदा त्वप्रीतिहेतुर्यः साक्षाद्व्यवहितोऽपि वा ।
तस्य धर्मत्वमुच्येत तदा श्येनेऽप्यधर्मता" इति ( श्लो, वा. चो. सू. २६६) ।

अथ नित्यनैमित्तिकानां प्रयोजनमुद्दिश्य विधानाभावात् धर्मत्वानुपपत्तिरिति चेत् ।

"पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनोव्यपोहति" ।

इत्यादिस्मृतिभ्यो "यद्राव्या पापमकार्षम्" (नारायणोपनि.) इत्यादिमन्त्रेभ्यश्च पापक्षयमुद्दिश्य तेषां विध्यवश्यम्भावात् । उपपादितं च पापक्षयफलकत्वमेषां सर्वशक्त्यधिकरणे मिश्रैः(१.) यद्यपि न्यायसुधाकृतोनैतन्मतं यथोक्तं यावज्जीवाधिकरणे तेन-

"सन्ध्योपासनमात्राद्धि सर्वपापक्षये सति ।
अग्निहोत्राद्यनुष्ठाने कः प्रवर्त्तेत बुद्धिमान् ।
एकस्य तु क्षये कस्येत्यवगन्तुं न शक्यते" ।

---

नन्विष्टसाधनत्वाच्छ्येनादेर्धर्मत्वं भवेदित्याशङ्क्येदमुत्तरमुक्तम्-श्येनः समीहितस्य शत्रुवधस्य साधनं, सोऽपि प्रत्यवायस्येत्येषा तावदर्थस्थितिः धर्मशब्दार्थत्वं तु श्येनादेः कीदृशमिति लोकानुसारेण सम्प्रधार्य निर्णेतव्यं नात्राभिनिवेश इति सम्प्रधारणमेव दर्शयति वार्तिककारः-यदि येनेष्टसिद्धिः स्यात् अनुष्ठानानुबन्धिनी । तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम् । यदा तु चोदनागम्यः कार्याकार्यानपेक्षया ॥ २७१ ॥ धर्मः प्रीतिनिमित्तं स्यात्तदा श्येनेपि धर्मता । यदित्वप्रीति हेतुर्यः साक्षाद्व्यवहितोऽपि वा ॥ २७२ ॥ सोऽधर्मश्चोदनार्थः स्यात्तदाश्येनेऽप्यधर्मता" इति । प्रमादेन तस्य धर्मत्वमुच्येतेति टीकायामापतितमिति ज्ञेयम् ।

( १ ) द्वितीयाध्यायस्य चतुर्थपादे प्रथमाधिकरणे "तस्माज्जीवने निमित्ते पुरुषस्य प्रत्यवायपरिहाराय दर्शपूर्णमासप्रयोगो विधीयते जीवनं च यावद्विनिपातं नियतमिति नियतनिमित्तत्वान्नियमोऽयं विधीयते इति पुरुषार्थं" इति ग्रन्थेन ।

इत्यादि,(१) तथापि तेन स्वकाले क्रियमाणानां नित्यादीनामकरणजन्यदोषाभावफलकत्वाभ्युपगमादुक्तस्मृतिमन्त्रेभ्यश्चातिक्रान्तेपि काले विहिताकरणोत्पन्नदोषनाशायावश्यकर्त्तव्यत्वाभ्युपगमात्सम्भवत्येव तन्मतेपि तेषामुक्तविधधर्मत्वम्।

अथ "यजेत स्वर्गकाम" इत्यत्र यागस्यैव भावनोद्देश्यत्वान्न फलोद्देशेन तद्विधिसम्भवः। नच प्रत्ययवाच्यभावनायाः समानाभिधानश्रुत्यवगतविध्यन्वयविरोधान्न यागोद्देश्यत्वसम्भव इति शङ्क्यम्। धातुप्रत्ययोभयश्रवणे प्रतीयमानभावनाया धातुवाच्यत्वं परित्यज्य प्रत्ययवाच्यत्वे नियामकाऽभावात्, प्रत्युत यजेतेत्यस्य विवरणे यागेन भावयेदित्यस्मिन् वाक्ये भावयतिना सहाख्यातोच्चारणात् पर्याययोश्च सहानुच्चार्यत्वनियमाद्धातुवाच्यत्वमेव वक्तुमुचितम्, तथाच समानाभिधानश्रुत्यवगतयागभाव्यकत्वानुरोधेन पद-

(१) निषिद्धाचरणदोषनाशार्थत्वाभ्युपगमे त्वनाचरितनिषिद्धस्य पुरुषस्य नित्यकर्मणामकर्तव्यत्वापत्तेर्नावश्यकत्वसिद्धिः प्रायश्चित्तत्वेन चाविधानान्नोपात्तदुरितक्षयार्थत्वेऽग्निहोत्रादेः किञ्चित्प्रमाणमस्ति विस्तरेण चोपात्तदुरितक्षयार्थताऽग्निहोत्रादेस्तन्त्रसारेऽस्माभिर्निरस्ता उपात्तदुरितक्षयार्थत्वोद्घोषस्तु विहिताऽकरणजन्यमेव दुरितं विहितकालसमीपे प्राप्तत्वादाङ्पूर्वस्य ददातेर्गृह्णात्यर्थवाचित्वेन ग्रहणफलप्राप्तिलक्षणत्वोपपत्तेरुपात्तदुरितमभिप्रेत्य व्याख्येयः अकरणे दोषप्रसक्तेरिति हेत्वभिधानादप्ययमेव वार्तिककृतोऽभिप्रायो लक्ष्यते अनर्थपरिहारार्थत्वमात्रहेतुत्वं तु व्यवधानादयुक्तं "पूर्वां सन्ध्याञ्जपन् विप्रोनैशमेनो व्यपोहती"त्यादिस्मृतिस्तु निशान्तविहितकर्माननुष्ठानजन्यमेनोनैशमित्येवं व्याख्येया "यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेणशिश्ने"त्यादि मन्त्रवर्णोऽपि मनःप्रभृतीनामन्यासक्तत्वाद्रात्र्यन्तविहितकर्माननुष्ठानेन यत्पापमकार्षमित्येवं व्याख्येयः इत्युक्तं न्यायसुधायाम्।

विधीयमानोऽर्थो धर्मः—यथा यागादिः। स हि 'यजेत स्वर्गकाम' इत्यादिवाक्येन स्वर्गमुद्दिश्य विधीयते।

तथा हि यजेतेत्यत्रास्त्यंशद्वयम्, यजिधातुः

---

श्रुत्यवगतविध्यन्वय एव हेय इत्यत आह। तथाहीत्यादि। अंशद्वयं—शक्तशब्दद्वयम्। धातुरिति वाच्ये यजिधातुरित्युक्तिर्यज्यभिधानेन चरितार्थस्य धातोर्न भावनावाचित्वमपि युक्तमिति द्योतनाय। नच यागात्मनैव धात्वभिहितव्यापारे कारकान्वयसम्भवान्नैव तदतिरिक्तभावनाभिधानमाख्यातपदे क्वापीति शङ्क्यम्। पचतीत्यस्य पाकं करोतीति विवरणानुपपत्तेः घञन्तपाकादिपदोक्तव्यापारव्यतिरिक्तव्यापारस्यात्र करोतिनाऽप्रतीतेः। न च पाकादिपदं फलमात्रपरं वक्तुं युक्तं, फलकाले पाकोवर्त्तते इति प्रयोगापत्तेः परैरनभ्युपगमाच्च। किञ्च स्वयमकारकस्य यागस्य सकलकारकविशेष्यात्मना धातुनाऽभिधाने तृतीयाद्वितीयाद्यन्तानां नाम्नामन्वयो न स्यात् स्याच्चोद्भिदादीनां विनैव मत्वर्थलक्षणया गुणविधित्वम्। प्रत्ययोक्तिश्च "भावप्रधानमाख्यात" मितिस्मृतेरनुभवाच्च यजेतेत्यत्र विशेष्यभूताया भावनायाः "तयोस्तु प्रत्ययार्थः" इति स्मृतेः प्रत्ययवाच्यत्वं युक्तमितिद्योतनाय। यथाहुः—

(१)"प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा।

---

(१) भावप्रधानमाख्यातमिति नैरुक्तवचनबलेन णिजन्ताद्भवतेरच्प्रत्ययेकृते भावशब्दव्युत्पत्तेर्भावनाप्राधान्याविषयत्वावसायात्प्राधान्याभावे च कृदन्तवन्निरपेक्षस्य कारकान्वयायोगापत्तेराख्यातेभ्यश्च भावनाप्राधान्यावगतेः सर्वस्य सम्वेद्यत्वान्न तावत्प्राधान्ये विप्रतिपत्तुं शक्यं प्रकृत्यर्थत्वे च सति विशेषणत्वापत्तेः प्राधान्याभावप्रसङ्गात् प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेति प्रत्ययार्थप्राधान्यस्मृतेश्च

प्रत्ययश्च । तत्र प्रत्ययेऽप्यस्त्यंशद्वयम्, आख्यातत्त्वं

---

प्राधान्याद्भावना तेन प्रत्ययार्थोऽवगम्यते ।
तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः ॥
प्रत्ययश्रुतिवेलायां भावनात्माऽवगम्यत" इति ।

भावयतिना सहाख्यातोच्चारणं तु साधुत्वार्थं सङ्ख्याद्यर्थान्तरकथनार्थं वेत्याशयः । ननुप्रत्ययस्याऽपि विध्यभिधानेन चरितार्थस्य न भावनाभिधायित्वमुचितमित्याशङ्क्य शक्ततावच्छेदकभेदेन न्याय्यमेवैतादित्यभिमेत्याह । प्रत्ययेऽपीति । अंशद्वयं शक्ततावच्छेदकद्वयम् ।

ननु आख्यातत्ववत् धातुत्वमेव यजिशक्ततावच्छेदकमस्तु "तयोस्तु प्रत्यय" इति स्मृतिस्तु सुबभिप्रायेण सङ्कोच्यतां निर्वचनार्हत्वं तु धातुत्ववदाख्यातत्वेपि तुल्यम् । यद्यादेशगामितिप्त्वाद्यन्यतमत्वमाख्यातत्वमुच्येत न तर्हि एकशक्ततावच्छेदकसिद्धिः । अथ स्थानिगामिलत्वमनुगतमाख्यातत्वं ? तर्हि आदेशश्रवणादर्थबोधो न स्यात् । अथादेशोपस्थापितः स्थान्येवार्थबोधकः ? उक्तं हि "स इति प्रकृतापेक्षः तत्प्रत्यया"दिति भाष्यव्याख्यापरम् "अथवा तच्छब्दस्य प्रकृ-

---

कर्तृसङ्ख्यादेः प्रत्ययार्थस्य प्राधान्याभावात्प्रत्ययार्थः प्रधानमेवेति नियमायोगेपि प्रत्ययार्थ एव प्रधानमिति नियमोपपत्तेर्नामस्वपिच कृत्तद्धितान्तेषु कारकविभक्त्यन्तेषु च प्राधान्यस्य प्रत्ययार्थत्वाव्यभिचारात्सत्त्वप्रधानानि नामानि इतिस्मृतेश्च लिङ्गसङ्ख्यासम्बन्धार्हत्वविषयतया व्याख्यानोपपत्तेः प्रातिपदिकार्थप्राधान्यपरत्वेऽपि वा प्रतीत्यनुसारात्प्रथमान्तनामविषयतया व्याख्यानोपपत्तेः प्रातिपदिकार्थप्राधान्यस्य प्रत्ययार्थत्वव्यभिचारानापादकत्वात्प्राधान्येन भावनायाः प्रत्ययार्थताऽवसीयत इत्याशय इति न्यायसुधा ।

तद्ग्राहित्वं प्रसिद्धं स इत्युक्ते तच्छब्दप्रत्ययात्स एवार्थ" इति वार्त्तिकं व्याचिख्यासता न्यायसुधाकृता "सर्वनामतच्छब्दादेशेन स इत्यनेन स्थानिनः तच्छब्दस्य प्रत्ययादित्यन्यथा व्याचष्ट इति । यस्तु "तिङर्थौ कर्तृकर्मणि"इत्यादौ कर्त्राद्यादेशार्थत्वव्यवहारः स स्थानिस्मृतिमुखेन तज्ज्ञाप्यत्वाभिप्रायेण नेयः इदानीन्तनानां तु आदेशे शक्तिभ्रमादनुपस्थितेपि स्थानिनि अर्थबोधोपपत्तिरित्युच्येत । नैतत् । स्थानिनः स्वरूपेणार्थबोधकत्वानुपलम्भात् । यदि हि घटावित्यत्रौकारस्येव लकारस्य क्वचिदर्थबोधकत्वं स्यात् तदा वारिणीत्यत्रौकारादेशस्यौकारस्मारकत्ववत् लादेशस्य लकारस्मारकत्वमाश्रीयेतेत्यत आह । आख्यातत्त्वं चेति । यद्दशसु लकारेषु वर्त्तते लत्वं तदेव आख्यातत्वमित्यन्वयः । न ह्येवंरूपं धातुष्वनुगतं धातुत्वं वक्तुं शक्यम् । ऋकृत्वादिन्यायेन चानेकवर्णसमूहात्मकेषु धातुषु न धातुत्त्वं जातिः । धातुवाच्यत्वे च भावनाया यागदानादिशब्देभ्योपि भावनाप्रतीतिप्रसङ्गः । यद्याख्यातान्ते धातुवाच्यतोच्येत तर्हि लाघवादस्त्वाख्यातवाच्यत्वम् । यथा चैकवर्णात्मका अकारादयोविष्ण्वादिषु शक्ताः सदा सन्तोपि न तान्सदा बोधयन्ति । नाप्यकारादिपदोपस्थापिताः श्रोत्रलिप्यन्यतरजन्योपस्थितेरेव तेषु शब्देषु तत्तदर्थबोधाख्यफलोपधानावच्छेदकत्वात् । तथा लाघवात् "लः कर्मणि"इत्यादेर्वेदाङ्गान्तःपातित्वेन वैदिकपरिगृहीतपाणिनीयवचनाच्च लत्वेन शक्तिग्रहे जातेऽपि तिबाद्यादेशजन्योपस्थितेरेव भावनोपस्थितिफलोपधानावच्छेदकत्वात् न स्वरूपेणोच्चारिताच्छतृशानज्भ्यां वा स्मारिताल्लकाराद्भावनाप्रतीत्यभावो दोषाय । नच स्वयमशक्ताः शक्तशब्दान्तरस्मरणेनार्थबोधार्थं प्रयुक्ताः शक्तिभ्रमाच्च शक्तत्वेन कैश्चिद्व्यवहृतास्तिबादयः कथं

लिङ्त्त्वं च । आख्यातत्त्वं च दशसु लकारेषु विद्यते ।
लिङ्त्त्वं च पुनः केवलं लिङ्येव । तत्राख्यातत्वलि-

---

न गाव्यादितुल्याः स्युरिति शङ्क्यं सर्वसमभिव्याहारे स्वो-पस्थित्यनपेक्षार्थबोधकगवादिस्मारणेनार्थबोधकतया गाव्या-दीनामशक्तिमत्त्वरूपापभ्रंशत्वस्य सम्भवात् । नहि गाव्या-दिशब्दोपस्थितिमनपेक्ष्य गवादीनामिव, तिवाद्युपस्थितिमन-पेक्ष्य लकारस्यार्थबोधकत्वमस्ति येन तद्वदशक्तिमत्वं तिवा-दिषु वक्तुं शक्येत । यद्यप्यौकारस्याऽस्ति स्वातन्त्र्येण बो-धकत्वं तथा ऽपि न सर्वसमभिव्याहारे, वारिणीइत्यादिसम-भिव्याहारे आदेशस्मारितस्यैव तस्य बोधकत्वात् । नचाऽना-दिवाचकत्वं साधुत्त्वं येनावाचकेषु कथं स्यादिति शङ्क्यम् । कर्मधारयोत्तरभावप्रत्यये भावप्रत्ययोत्तरकर्मधारये वा सा-ङ्केतिकेषु तदभावेन साधुत्वस्य ताद्रूप्यासम्भवात् । अनादेराव-पनवाचिनोगोणीशब्दस्य गवि साधुत्वापत्तेश्च । अथैतद्दोष-परिहाराय यदर्थवाचित्वं यस्यानादि स तत्र साधुरित्युच्येत साङ्केतिकानां सादित्वेपि तच्छक्तेरनादित्वेन च तेषु साधुत्वमु-पपाद्येत ? तन्न, लक्षणया गौण्या वाऽर्थान्तरेषु प्रयुज्यमानानाम-साधुत्वापत्तेः । तस्मात्सर्वसमभिव्याहारेषु स्वोपस्थित्यनपेक्षार्थ-बोधकशब्दस्मरणं विनैव यः शब्दो यमर्थं बोधयति स तत्र साधु-रित्यवश्यं वाच्यम् । सम्भवति चैवंसति गवादीनामिव तिबादी-नामपि साधुत्वमिति ज्ञेयम ।

अथ भावनावाचिसर्वाख्यातानुस्यूतमाख्यातत्त्वं यथा भावनाशक्ततावच्छेदकमङ्गीक्रियते तथा विध्यभिधायिलिङ्लो-डाद्यनुस्यूतं विधिशक्ततावच्छेदकमङ्गीकार्यं न लिङ्त्वं तत्राह । लिङिति । आख्यातत्वाद्वैलक्षण्यद्योतनार्थः पुनः शब्दः ।

यतः केवलं तादृशधर्मान्तरासमानाधिकरणं अतोलिङ्त्येव सदपि तदेव शक्ततावच्छेदकमित्यर्थः ।

स्यादेतत्—नाख्यातत्त्वं भावनाशक्ततावच्छेदकं पच्यते इत्यादिषु भावकर्मप्रत्ययेषु भावनाभिधाने भावनया च कर्त्राक्षेपे सति पचतीतिवत् कर्त्तर्येव सङ्ख्यान्वयप्रसक्तेः भवति जानातीत्यादौ भावनाप्रतीत्यापत्तेश्च अध्येतव्य इत्यादौ तव्यस्याऽनाख्यातत्वेन भावनाबोधकत्वानुपपत्तेश्च, नापि लिङ्त्त्वं विधिशक्ततावच्छेदकं "हविरार्तिमार्छेत्" "जर्त्तिलयवाग्वा जुहुयात्" इत्यादौ विध्यापत्तेरत आह । तत्रेति । तृतीयेत्थंम्भावे । आख्यातत्वरूपेण लिङ्त्त्वरूपेण च भावनोच्यत एवेत्यक्षरार्थः । कर्तृप्रत्ययेषु भवनाख्यप्रयोज्यव्यापारोवाच्यशरीरप्रविष्टोऽथवाऽऽक्षेपलभ्यः प्रयोजकव्यापारोपसर्जनत्वेन प्रतीयते—कर्मप्रत्ययेषु, भावप्रत्ययेषु तु प्रयोजकव्यापारं प्रति विशेष्यत्वेन । यथाहुः—

"कदाचित्पुनः समानपदैकदेशोपात्तोपसर्जनीभूतप्रयोज्यक्रियः प्रयोजकव्यापारोविवक्ष्यते क्रियते कटोदेवदत्तेन" इति । एवं च पचतीत्यादिजन्यप्रतीतौ विशेष्यभूतं प्रयोजकव्यापारं प्रत्याश्रयत्वेन कर्त्ताऽन्वेति, पच्यते ओदन इत्यादौ तु विशेषणीभूतव्यापारं प्रति कर्तुराश्रयत्वेनान्वयात् विशेष्यभूतव्यापारं प्रति कर्माऽऽश्रयत्वेनान्वेति । एवं च भावप्रत्ययस्थलेपि पाकः क्रियत इत्येवं कर्मप्रत्ययेनार्थविवरणाद्विशेष्यभूतव्यापारं प्रति धात्वर्थ एवाश्रयत्वेनान्वेति । पच्यते स्वयमेवेत्यत्र तु विशेषणविशेष्यभूतौ व्यापारौ प्रत्येकस्यैवाश्रयत्वं, आख्यातजन्यप्रतीतिविशेष्यव्यापारं प्रति च समानाभिधानश्रुत्या शेषत्वेनान्वितायाः सङ्ख्याया द्वारापेक्षायां तादृशव्यापाराश्रयपरिच्छेदो द्वारमाश्रीयत इति नियमस्य सर्वाख्यातेषु स्वीकरणा-

नैव क्वचित्कर्त्रन्वयादन्यत्र तत्प्रसक्तिशङ्कावसरः । यद्वा यथैवाऽऽख्यातत्वाविशेषेपि परमते प्रतीतिविशेषमनुसृत्य केचित् कर्त्रभिधायिनो न सर्वे, तथाऽस्मन्मते पचति पच्यतइत्यादीनां पाकं करोति पाकः क्रियते इति करोतिविवरणाऽविशेषात्समेपि भावनावाचित्वे क्वचिदेव कर्तृगतसङ्ख्याभिधानं न सर्वत्र, भवतीत्यत्र तु भवनकर्त्तरि भावनाया बाधान्नैव वक्ष्यमाणभावनाबोधक्रमाख्यातं, किन्तु तेन व्यापारमात्रं बोध्यते तत्र च धात्वर्थोऽभेदेनान्वेति घटादिस्त्वाश्रयत्वेनेति बोध्यम् । अतएवोक्तम्—

(१)"सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति ।
सामानाधिकरण्येन करोत्यर्थो ऽवगम्यते"

इह हि केभ्यश्चिद्धातुभ्यः परा तिङ्विभक्तिरुचार्य्यमाणा-

---

(१) आख्यातस्य भावनावाचित्वमाक्षिप्तं समाधातुं करोत्यर्थवाचित्वं तावदुपपादयति । सिद्धेति । किं करोति पचतीति करोतिसामानाधिकरण्येनाख्यातप्रत्यये करोत्यर्थो वाच्योऽवगम्यत इत्युक्ते भवत्यादिपराख्यातप्रत्यये करोत्यर्थसामानाधिकरण्याभावात्करोत्यर्थवाचित्वं न सिद्धतीत्याशङ्क्य सिद्धेत्युक्तम् । आक्षेपवाद्यसिद्धमपि आख्यातप्रत्ययस्य क्रियावाचित्वं स्वसिद्धान्तसिद्धमङ्गीकृत्य नाख्यातमात्रस्य करोत्यर्थवाचित्वं ब्रूमः किन्तु करोतिसामाधिकरण्यवतामेवाख्यातानामिति ख्यापनाय सिद्धकर्तृक्रियावाचित्वमुपलक्षणं कृतम् । यद्वा ये धात्वर्थस्य स्वरूपेण धातुनाऽभिहितस्यापि निष्पाद्यत्वलक्षणक्रियारूपेण प्रमाप्रत्ययवाच्यत्वमङ्गीकृत्य मीमांसकाभिमतधात्वर्थातिरिक्तं भाव्यनिष्ठभावनावाचित्वं प्रत्ययस्य नेच्छन्ति तान् प्रति भावनावाचित्वं साधयितुं करोत्यर्थवाचिताऽनेन साध्यत इत्यदोषः । नन्वसिद्धकर्तृविषयेष्वस्त्यादिपरेष्वाख्यातेषु करोतिसामाधिकरण्याभावेन करोत्यर्थक्रियावाचित्वाभावात्तद्व्यावृत्त्यर्थं सिद्धविशेषणं व्यर्थमित्याशङ्क्य भाव्यनिष्ठभावनारूपकरोतिवाच्य-

कर्त्रात्मलाभमेव व्यापारं प्रतिपादयति यथाऽस्ति भवति विद्यतिभ्यः" (तं०वा०२अ०१पा०१अ०) इति । एवञ्च जानाति इच्छति यतते इत्यादिष्वपि करोत्यर्थानवबोधकाख्यातेन बोधिते व्यापारसामान्ये धात्वर्थानामभेदान्वयो बोध्यः । अयं तु भेदः ज्ञानस्य प्रमाणवस्तुपारतन्त्र्यात् इच्छायाः विषयसौन्दर्याधीनत्वात्तदुभयाधीनोत्पत्तिकत्वाच्च यत्नस्य धात्वर्थानां करोत्यर्थाविषयत्वात्प्रकृताख्यातानां व्यापारसामान्यपरत्वं पूर्वत्र तु कर्त्तरि भावनाबाधादिति । वार्त्तिके च सिद्धकर्तृक्रियावाचीत्यनन्तरं कृत्यन्वययोग्यधात्वर्थकाक्रियावाचिनीत्यपि बोध्यम् । एवमन्यत्रापि करोत्यर्थानवबोधकाख्यातेषूह्यम् । एवं च भावनां प्राधान्येन बोधयत्स्वाख्यातपदेषु "तयोस्तु प्रत्ययः प्राधान्येने"तिस्मृतिवशाद्भावनायाः प्रत्ययवाच्यत्वं स्वीकृतं, कृदन्तेषु तु भावनाप्राधान्यसाधकस्मृत्यभावात्कर्त्रादिसमर्पकदेवदत्तादिपदेभ्य इव स्वप्राधान्येन कर्त्रादिप्रतीतेश्च कर्त्रादिभिश्च भावनाक्षेपसम्भवान्न भावनाभिधायित्वम् । यथाहुः—

"धात्वर्थः कारकैरेव गुणभूतोऽवगम्यते ।

---

क्रियावाचित्वाभावेऽपि कर्त्रात्मलाभाख्यक्रियावाचित्वसद्भावाद्विशेषणसाफल्यं दर्शयितुं सिद्धासिद्धकर्तृक्रियावाचीन्याख्यातानि विविनक्ति । इहेति । भवतेर्जन्माख्याद्यभावविकारवाचित्वात्ततः परा तिङ्विभक्तिर्जायमानस्य कर्तुर्जन्मोत्पत्त्याद्यपरपर्यायात्मलाभमात्ररूपं व्यापारं प्रतिपादयति अस्तिविद्यत्योस्तु द्वितीयभावविकारवाचित्वात्ततः परा सत्तां प्रतिपद्यमानस्य कर्तुः स्वसत्ताख्यात्मलाभमात्ररूपमित्यर्थः । अन्यात्मलाभविषयस्यैव व्यापारस्य करोत्यर्थत्वात्तस्य चास्त्यादिपरया विभक्त्याऽनभिधानात्करोत्यर्थक्रियावाचित्वाभावेऽप्यात्मलाभस्यानिष्पन्नरूपत्वेन व्यापारशब्दवाच्यत्वाद्व्यापारस्य क्रियात्वप्रसिद्धेर्व्यापाराख्यक्रियावाचित्वस्य सर्वाख्यातेषु भावादर्थवद्विशेषणमित्यर्थः ।

भावनात्मा कृदन्तेषु तस्मान्नैवाभिधीयत"(२) इति ।
(तं० वा० २ अ० १ पा० १ अ०)

तव्यस्यापि कृद्विशेषकृत्यान्तर्गतत्वाद्भावनानभिधायि (त्वेपि) कृत्यानां प्रैषे स्मरणात्प्रैषस्य च पुंव्यापारात्मकभावनाविषयत्वाद्भावनाक्षेपकत्वमस्ति । अध्येतव्य इत्यत्र त्वध्ययनस्याप्राप्तत्वात्प्रैषासम्भवेन यद्यपि विधिपरत्वमाश्रीयते । उक्तं हि—

"प्रवर्तनस्मृतिप्राप्ते प्रैष इत्यभिधीयते ।
अप्राप्तप्रेषणं सर्वे विधित्वं प्रतिपद्यते"(तं.वा.२अ.१पा.१अ.) इति।

तथापि प्रैषविध्योः प्रवर्त्तना(त्वास)त्वाविशेषादस्त्येव भावनाया आक्षेपइति युक्तमाख्यातत्वं भावनाशक्ततावच्छेदकमिति । सत्यपि लिङोविध्यभिधायित्वे "यस्योभयं हविरार्तिमाच्छे" दित्यत्र यच्छब्देन विधिशक्तिप्रतिबन्धाद्विध्यनापत्तिः । "य एवं विद्वानग्निं चिनुते","योदीक्षितोयंदग्नीषोमीय"मित्यत्र तु विद्वत्तादीक्षयोर्यच्छब्दान्वयान्न चयनपश्वालम्भयोर्विधिप्रतिबन्धः, जर्त्तिलयवाग्वेत्यादि तु पयसा जुहोतीति विध्यन्तरशेषत्वान्न विधिपरं अतोयुक्तमेवाख्यातत्वलिङ्त्वयोर्भावनाविधिशक्ततावच्छेदकत्वमित्याशयः । यद्यपि विधेराख्यातार्थभावना भिन्ना यजेतेत्यादौ प्रतीयते तथापि गवानयनं कुर्वित्यत्र विध्यात्मनाऽवगतस्य व्यापारस्य तत्कारयेत्यत्राख्यातार्थत्वात्तयोरनतिभेदद्योत-

(२) यदि चाख्यातवत् स्वप्राधान्येन कृदन्तेषु भावनाऽवगम्येत ततो धात्वर्थप्रतीतिनिरपेक्षभावनाप्रतीत्युपपत्तेर्वाच्यत्वं कल्प्येत, धात्वर्थनिष्पादकत्वेन तु तद्गुणत्वप्रतीतेधात्वर्थप्रतीतिसापेक्षत्वान्न साक्षाद्वाच्यत्वकल्पना युक्तेत्याह । धात्वर्थ इति । देवदत्तेनेत्यादिकारकविभक्ति श्रवणे यथा कारकसिद्ध्यर्थत्वेन तद्गुणतयाऽप्यवगम्यमानाया भावनाया न कारकविभक्तिवाच्यत्वं कल्पितं तथा धात्वर्थसिद्ध्यर्थत्वेनाप्यवगम्यमानाया न धातुवाच्यत्वं कल्पनीयमिति दृष्टान्तार्थं कारकग्रहणम् ।

ङ्ख्याभ्यां भावनैवोच्यते । भावना नाम भवितु-

---

नाय भावनेत्येकवचनम् । द्योतनफलं चार्थभावनास्वरूपनिरूपणावसरे वक्ष्यामः ।

कोऽसावाख्यातार्थप्रतीतिविषयो भावनापदार्थः यद्बोधवशाद्भवतीत्याख्यातस्य व्यापारपरत्वमुच्यते नहि भावना व्यापारभिन्नाऽस्ति, सत्वे वा भवतीत्यादेर्लाक्षणिकत्वापात इत्यत आह । भावना चेति । अत्र च नाख्यातशक्यतावच्छेदकं कथ्यते भवितृभावकयोस्तदन्तःपातानभ्युपगमात् । नापि भावनालक्षणं भवनानुकूलव्यापारत्वमात्रस्यैव लक्षणत्वसम्भवेनेतरपदवैयर्थ्यापत्तेः सकलस्यापि प्रकृत्यर्थेऽतिप्रसक्तेश्च । किन्तु यथा का धूमनिष्ठा व्याप्तिरिति प्रश्ने धूमत्वमित्युत्तरेऽतिप्रसङ्गादिदोषाभावेपि प्रश्नस्थव्याप्तिपदेन वन्ह्यनुमितिकरणीभूतज्ञानविषयस्य विवक्षितत्वाद्यत्पदार्थविशिष्टधूमत्वं तत् ज्ञानविषयस्तत्पदार्थविशिष्टधूमत्वप्रतिपादकमुत्तरमुच्यते तथा यजतिभवतीत्यादौ यादृशार्थप्रतीत्यप्रतीतिभ्याम्भावयतीत्याख्यातार्थविवरणभावाभावौ भवतस्तादृशार्थस्य पूर्वग्रन्थे भावनापदनिर्दिष्टस्योक्तविधजिज्ञासायाममुना ग्रन्थेन तत्स्वरूपं कथ्यते । नचैवमाख्यातार्थप्रतीतौ भवित्रादेर्नियप्रतीत्याऽऽख्यातशक्यान्तःपातः शङ्क्यः यथा करणत्वादौ गृहीतशक्तिकयापि तृतीयाविभक्त्याऽऽकाङ्क्षाविशेषसहकृतया क्रियासामान्यान्वितमेव करणत्वं गम्यते ऽतएव क्रियाङ्गत्वं श्रौतं क्रियाविशेषावगतिः परं पदान्तरलभ्येतिव्यवहारः शास्त्रे, तथा व्यापारत्वेन व्यापारे गृहीतशक्तिकाख्यातादाकाङ्क्षासहितात्कर्तृनिष्ठतया भाव्यभवनानुकूलतया च व्यापारप्रतीतिसिद्धेः यथा च "प्राकाशावध्वर्यवे ददात्येकाङ्गं इत्यादौ परपदार्थसम्बन्धविधिपक्षे बा-

धकवशादाकाङ्क्षाप्रापितक्रियान्वयत्यागेपि न विभक्तौ लक्षणा शक्यार्थात्यागात्, तथा भवतीत्यत्रासिद्धस्य घटादेः कर्त्तुः परभवनानुकूलव्यापाराश्रयत्वबाधादाकाङ्क्षाप्रापितभाव्यान्वयबाधेपि न लक्षणापातः आख्यातशक्यस्य व्यापारात्मनोऽपरित्यागात् । नच विशेषात्मना धातुनोपात्तस्य भवनस्य सामान्यव्यापारात्मना प्रत्ययेनाभिधानं व्यर्थमिति शङ्क्यं, भावयतीत्यत्रेव भवतीत्यत्रापि साधुत्वार्थमुच्चारितप्रत्ययेन जायमानप्रतीतेर्व्यर्थाया अप्यनिवार्यत्वात् । यथा च प्रयोज्यव्यापारविशिष्टप्रयोजकव्यापारवाचिभावयतिना प्रयोजकव्यापारमात्रवाचिन्यपि करोतौ पर्यायत्वप्रसिद्धिः आकाङ्क्षासहितस्य करोतेर्भावयतितुल्यप्रतीतिजनकत्वात्, तथा व्यापारमात्राभिधायिन्यप्याख्याते भावयतिपर्यायत्वप्रसिद्धिरुपपादनीया ।

अथ कोऽसौ कर्तृपदार्थः ? यदन्विततया आकाङ्क्षासहिताख्यातात्प्रतीयमानोव्यापारोभावयतिवत्प्रतीयत इति उच्यते न तावदितरकारकप्रयोजकत्वं निर्वर्त्तकत्त्वं वा कर्तृत्वं, भवतीत्यादौ घटादेरसम्भवात् । यद्याख्यातोपात्तव्यापाराश्रयत्वं(तदुक्तं ह्येवं साम्प्रदायिकैः अस्यांशुक्रान्वारम्भणादिकर्तृत्वसमर्थनाये)त्युच्येत तर्हि कर्त्तरि सिद्धे तदन्वितव्यापारप्रतिपादनमाख्यातेन आख्यातोपात्तव्यापाराश्रयस्य च कर्तृत्वमित्यन्योन्याश्रयमिति चेत् न, यथासमभिव्याहारं प्रथमान्तादिपदबोधितस्यैव कर्तृपदार्थत्वात् । ततश्च कर्त्तृव्यापारोऽन्यभवनान्वितो यजतीत्यादौ प्रतीयते न भवतीत्यत्रेति मूलार्थः । एवं च भवनान्वित इति वक्तव्ये भवनानुकूलइत्यनुकूलपदं प्रयोजकप्रयोज्यव्यापारयोरनुकूलत्वं संसर्गविधया भासत इति द्योतनाय, न त्वाख्यातजन्यबोधे तदपि प्रकार इति बोधाय अनुकूलत्वस्यापि संसर्गान्तरप्रतीतिकल्पनायां गौरवात् । सकलधातूत्तरोच्चारितेभ्यः सिद्धकर्तृक्रियावाचिभ्य आ-

ख्यातेभ्यः प्रतीतायाः क्रियायाः कर्माकाङ्क्षायां तदर्थकाद्वितीयान्तादिसमभिव्याहारस्यात्रश्यवाच्यत्वाद्धातूनां सकर्मकाकर्मकात्मना द्वैविध्यं न स्यादिति शङ्कां निराकर्त्तुमन्यस्येति वक्तव्ये भवितुरित्युक्तम् । भावना हि भवनकर्तृत्वेनेप्सितत्वेन चोपस्थितमेव भाव्यमपेक्षते तत्वेन चोपस्थितिः कामशब्दात् । स्वर्गोमे भवतु इति कामयमानपुंपरत्वात्स्वर्गकामपदस्य । अतः कामपदोपस्थापितं भाव्यमङ्गीकरोति । द्वितीयायास्तु सत्यपि क्वचिन्मते ईप्सितवाचित्वे धात्वर्थतावच्छेदकफलशालिनमेव तत्वेन साऽभिधत्ते न तु धात्वर्थजन्यफलशालिनमन्तरा यं कं चित् अतिप्रसङ्गात् । अत एव धात्वर्थकर्मणि भावनाकर्मत्वविवक्षायां द्वितीयान्तेन तदर्पणम्, न तु तदन्यस्य तद्विवक्षायां यथा वेतनकाम ओदनं पचतीति । अत एव च "विश्वजितायजेते" इत्यत्र स्वर्गकाम इत्येव कल्प्यते न स्वर्गमिति । क्वचिद्भावनाया एव कर्म द्वितीयान्तेनागत्या ज्ञाप्यत इति स्वीकुर्मः यथा "अग्निश्चिनुत"इति । न ह्यत्राग्नेर्धात्वर्थकर्मत्वं धात्वर्थावच्छेदकतया प्रतीयमानस्य स्थलनिर्वृत्त्यात्मनः फलस्य स्थलाश्रितत्वेनाग्न्यनाश्रितत्वात् । उक्तं हि न्यायरत्नमालायां(१) "येन धातुना यत्फलाभिधाननिरूपणीयेन रूपेणक्रिया ऽभिधीयते तद्धातूक्तायां क्रियायां तत्फलभागर्थः कर्म भवतीति"सम्भवति तु भावनाकर्मत्वमुद्देश्यत्वात् । एवं च सुखकामः शयीत स्वास्थ्यकाम आसीतेति कामपदेनैव भाव्यलाभान्नाऽकर्मकधातुयोगे द्वितीयान्तसमाभिव्याहार आवश्यक इति भावः । विशेषपदं च धात्वर्थसमवायिव्यापारसामान्यं भावनेति मतनिराकरणाय । धात्वर्थभेदे हि भावनापि भिद्यते । न च व्यक्तिभेदे-

(१) विधिनिर्णये ह्येतदुक्तं "तस्मादेक एव व्यापारः फलभेदेन निरूप्यमाणस्तंतं कर्मभेदं भजते यदा फलनिरपेक्षेण स्वरूपेण निरूप्यते प्रयतते चलतीत्यादिभिस्तदाऽकर्मको भवति यदा तु फलाधीननिरूपणीयेन रूपेणैव निरूप्यते तदा सकर्मक इत्यादिः ।

भवनानुकूलो भावकव्यापारविशेषः । सा च द्वि-
विधा, शाब्दी भावना आर्थी भावना चेति ।

तत्र पुरुषप्रवृत्त्यनुकूलभावकव्यापारविशेषः शा-

सामान्यं भिद्यते । अतो धात्वर्थातिरिक्त एव व्यापार आख्यातेन भावनारूपेण बोध्यत इत्याशयः । आख्यातजन्यप्रतीत्या प्रवर्त्तनाया अपि उक्तरूपेण क्वचिद्विषयीकरणात् लक्ष्यान्तःपातोलक्षणान्वयश्चोपपादनीयः ।

आख्यातत्वलिङ्त्वावच्छिन्नशक्त्योर्विषयभेदं दर्शयितुमाह । सा चेति । शाब्द्यां भावनायां मतद्वयं वक्ष्यते प्रेरणात्मिका सेष्टसाधनता वेति । आद्ये शब्दनिष्ठत्वाच्छाब्दीति वक्ष्यते द्वितीये शब्दैकगम्यत्वाच्छाब्दीति । आर्थ्या अपि यत्नैकरूपत्वमते अर्थयत इत्यर्थः पुरुषः तद्धेतुत्वादार्थी । करणानुग्राहकफलव्यापारात्मत्वमते तु प्रथमान्तादिपदोपस्थापितार्थगामित्वादार्थी । तत्रेति । विधेश्चेतनविषयत्वाचेतनाचेतनसाधारणं प्रवृत्तिपदार्थं विशेषयितुं पुरुषेति । यथा चैष साधारणः तथाऽङ्गत्वलक्षणे वक्ष्यामः । यज्ज्ञानं प्रवृत्त्यनुकूलं स एव लिङर्थोन त्विच्छादिरिति ज्ञप्तये विशेषेति । आक्षेपजां पुरुषोपस्थितिमिव प्रत्यक्षजां लिङादिशब्दोपस्थितिमादाय तदुभयानुरक्तप्रवर्त्तनाप्रतीत्युपपत्तेर्न शब्दस्य शब्दवाच्यत्वापत्तिरिति ज्ञापनाय श्रवण इति । विशिष्टाभिधानाय हि विशेषणस्य नियता पूर्वोपस्थितिरपेक्ष्यते न तु विशेषणाभिधानं यथाहुः—

"विशिष्टग्रहणं नेष्टमगृहीतविशेषणम् ।
अभिधानाभिधाने तु न केनचिदिहाश्रिते"(१) (तं. वा. ३ अ. ४ पा. १३ सू.) इति ।

---

(१) अगृहीते विशेषणे तदनुरक्ता विशेष्ये बुद्धिर्नोपजायत इति

प्रवृत्तिस्तु यद्यर्थभावनात्मिका भाव्यं तु तस्याः पुरुषप्रवृत्तिरितिव्यवहारात् तदा तस्या आख्यातत्वावच्छिन्नशक्त्युपस्थापिताया आकाङ्क्षावशेन लिङर्थे प्रकारीभूय भानसम्भवान्न लिङ्त्वावच्छिन्नशक्तिविषयता । अथतु "भावनादेः प्रवृत्तिविषयत्वेने"त्यादिभट्टसोमेशोक्तिवशेन मयैतत्कर्त्तव्यमिति सङ्कल्पात्मिका भावनातो भिन्नैव प्रवृत्तिस्तद्द्वारेण च भावनाया विधिभाव्यत्वमिति स्वीक्रियते, एवमेव ह्युक्तादि भावनाविवेके महामुद्गलभट्टैः, तदा तस्या उपस्थापकान्तराभावात् भवति शक्यान्तःपातः ।

यत्तु प्रवृत्तेर्भावनात्मत्वेपि लिङ्त्वावच्छिन्नशक्तिविषयत्वमावश्यकं यतो "भावप्रधानमाख्यातमितिस्मृत्या" आख्यातत्वावच्छिन्नशक्त्या लडादिष्विव लिङादिष्वपि प्रतीयमानभावनाया मुख्यविशेष्यतात्मकप्राधान्यकथनान्न लिङर्थं प्रति प्रकारतया ज्ञापनं सम्भवतीति । तत्तुच्छम् । एकप्रत्यये द्विर्भावनाऽभिधानेऽतिगौरवात्सर्वाख्यातेषु धात्वर्थनिरूपितभावनाप्राधान्यकथनेन(१) स्मृत्युपपत्तेः निरपेक्षशक्यताशालिन्योर्विधिभावनयोर्युगपदेकशब्दोपस्थापितयोः सङ्ख्याकारकन्यायेनान्विताभिधानेऽवश्यं वाच्ये मूलोपन्यस्तप्रतीतिमनुसृत्याख्यातार्थस्य लिङर्थं प्रति प्रकारतौचित्याच्च । न हि पुष्पवन्ताविति पदं प्रति सूर्यचन्द्रयोरिव विधिभावनयोर्मिलितयोः शक्यतेति वक्तुं शक्यं लडादिषु भावनाया अप्रतीतिप्रसक्तेः(२) । नाप्यनेकार्थाऽक्षादिव(३)त्तयोः प्रत्ययं क्रमेण जनयति । नाप्येकशेषवल्लुप्तानेकशब्दसहितः येन

---

तद्ग्रहण मादर्तव्यं नत्वनभिहितविशेषणत्वेन किञ्चिद्दुष्यति यदि नामानभिहितमपि 'विशेषणं केनचिदन्येन प्रत्याय्यमानं विशिष्टप्रत्ययोत्पादनाय पर्याप्तं भवति किं तत्राभिधानानुरोधेन इति भावः ।

(१) भावप्रधानमाख्यातमिति स्मृत्युपपत्तेरित्यर्थः ।

(२) तत्र विधेरभावादिति शेषः । (३) अक्षादिशब्दवदित्यर्थः ।

तत्तद्दृष्टान्तेनाऽन्विताभिधानं तयोः प्रसज्येत। एतेन प्रवृत्त्यन्यभावनापक्षेपि विधिभावनयोरवश्यवक्तव्येऽन्वये भावनां प्रति स्वर्गादिभाव्यस्य(१) विशेषणतायाः क्लृप्तत्वात् भावनाया अपि विधिं प्रति विशेषणत्वमेवोचितम्। अत्र च व्यापारे मां प्रवर्त्तयतीत्यनुभवाच्च । अत्र च ग्रन्थेन साक्षाल्लिङ्जन्यप्रतीतिर्लिङः प्रवर्तनाभिधायित्वसाधकतयोपन्यस्यते शास्त्रानुमतयावद्विशेषणविशिष्टाधिकारिकर्मकविधेयविशेषान्वितप्रवर्तनां लिङाऽनुभूय तावद्विशेषणवैशिष्ट्यमात्मनि पश्यतः पुरुषस्य मामयमत्राऽयं प्रवर्त्तयतीति प्रतीतिसम्भवात् । नहि स्वर्गकामपदकल्पनात्प्राक् "विश्वजिता यजेत"इति विधिं शृण्वतः सम्भवति प्रतीतिर्मामयं प्रवर्त्तयतीति । तदूर्ध्वं त्वतिदेशादिविशिष्टमनुमालोचयतो "नासोमयाजी सन्नयेत्"(२)इतिवद्विश्वजिति पुरुषविशेषपर्युदासाभावमनुपलम्भेन निर्णीतवतो भवति प्रथमं प्रतीतिः इष्टप्रथमयज्ञं कृतदर्शपूर्णमासं स्वर्गकाममयं प्रवर्त्तयतीति । ततश्च तादृशोऽहमिति निश्चयवान्स इत्थमुपलभते मामयं प्रवर्तयतीति । अत उदाहृतप्रतीतिः स्वजनकीभूतप्रतीत्यन्तराक्षेपमुखेन तज्जनकतया लिङः प्रवर्त्तनाभिधायित्वसाधिकेति विवक्षितम् । सूचितं चैतद्विलक्षणार्थकवाक्यद्वयोल्लेखिप्रतीत्युपन्यासेन । 'अयं मां प्रवर्त्तयतीति'वाक्यं हि स्वमते क्रियाविशेष्यकबोधजनकं, द्वितीयं तु शब्दादिविशेष्यकमेव बोधं जनयति । न च लिङ्जन्यप्रतीतेर्द्विरूपत्वम्, तस्याः प्रवर्त्तनाविशेष्यकत्वनियमात्सम्भवति त्वार्थिकबोधस्यानियतविशेष्यकत्वमिति । अथ प्रवर्त्तनाज्ञानमपि

(१) स्वर्गादिरूपभाव्यस्येत्यर्थः।

(२) यथा येन सोमयागेनानुष्ठितस्तेन दर्शपूर्णमासयोः सान्नाय्ययागो-दधिपयोयागो न कर्तव्य इति पुरुषविशेषस्य निषेधो वर्तते तथाऽत्र नास्तीत्यर्थः।

न वायवादिवत्प्रवृत्तिजनकं किन्तु समीहितहेतुताज्ञापनेनेति वरं लिङः सर्वस्य प्रवर्तकत्वं येन तद्वाचित्वमङ्गीकृतमत आह। नियमेनेति। यद्यपि समीहितहेतुताज्ञानादेव प्रवृत्तिस्तथापि न तज्जननेन लिङः सर्वस्य प्रवर्त्तकत्वं येन तद्वाचित्वमङ्गीक्रियेत "विवाहेऽनृतं वदेत्" "देवान् पितॄन्समभ्यर्च्य मांसमश्नीयात्" इत्यादिविधिभिः प्रवृत्त्यै स्वविषयस्याऽनिष्टाजनकत्वज्ञानजननात्। प्रवृत्त्युपयोगिनो विवाहतृप्त्यादीष्टहेतुताज्ञानस्यान्वयव्यतिरेकसिद्धत्वेन विधिना तज्जननवैयर्थ्यात्(१)। न चैवमनिष्टाजनकत्वं शक्यमिति शङ्क्यम्। "अग्निहोत्रं जुहुयात्" इत्यादिविधिना इष्टसाधनत्वस्य प्रकारान्तरेणाप्राप्तस्य ज्ञापनात्। निषेध्यस्यानिष्टहेतुत्वस्य अप्रसक्तस्य निषेधासम्भवाच्च। श्येनविधिनाऽनिष्टाहेतुत्वज्ञापनासम्भवाच्च(२)। नचानियतप्रतीतिजनकतया लिङोऽनेकार्थाभिधायित्वं युक्तं प्रवर्त्तनाभिधायिना तु लिङा सर्वत्र नियमेन जनिता प्रवर्तनाप्रतीतिः क्वचिदिष्टहेतुताज्ञानव्यापारेण क्वचिदनिष्टहेतुताज्ञानव्यापारेण प्रवृत्तिं जनयतीत्याशयः। यश्चेति। नियमेनेत्यनुवर्त्तते। तेन च लभ्योऽर्थो द्विविधः। यस्माच्छब्दाद्यद्भासत एव नतु कदाचिदुच्चारितान्न भासते यथा गोशब्दात्खण्डव्यक्तिः यथा बर्हिरादिशब्दात्संस्कारविशेषः। यस्मादनन्तरं प्रतीयमानश्च यस्माच्छब्दादेव प्रतीयते न तु

(१) यदि लिङ इष्टसाधनताबोधकत्वमेवास्थीयते तर्हि उदाहृतस्थलेषु इष्टसाधनत्वस्यान्वयव्यतिरेकाभ्यामेव सिद्धत्वेन तद्वैयर्थ्यमेव प्रसज्यते। नच तर्हि अनिष्टाजनकत्वमेव लिङोऽर्थ उच्यतां तत्राह—नचेत्यादि। तन्मात्रार्थकत्वे अग्निहोत्रं जुहुयादित्यादाविष्टसाधनत्वबोधासम्भवात्।

(२) श्येनयागेऽनिष्टाजनकत्वाभावात् माहिंस्यादित्यनेन श्येनफलभूताया हिंसाया अनिष्टजनकत्वेन परम्परया श्येनस्यापि तद्बोधनात्।

ब्दी भावना । सा च लिङ्त्वांशेनोच्यते, लिङ्श्रवणे 'अयं मां प्रवर्त्तयति' 'मत्प्रवृत्त्यनुकूलव्यापारवानयम्' इति नियमेन प्रतीयमानत्वात् । यच्च यस्मात्प्र-

---

तद्बोधितार्थाक्षेपात् यथा आख्यातबोधितभावनाक्षेपात्कर्त्ता । यथा वा वत्साद्विपदोपस्थापितादवस्थाविशेषाद्गोत्वमिति । अथ भावनान्यप्रवृत्तिपक्षे नागृहीतविशेषणान्यायेन प्रवृत्तेर्नियतं प्रत्याय्यत्वाज्जातिवत्सैव लिङः शक्याऽस्तु नत्वाऽऽज्ञादिरनियतोव्यापारः तत्प्रतीतिस्तु यद्यपि नाक्षेपाद्घटते प्रवृत्तेस्तदविनाभावात्, तथापि लक्षणया भविष्यति मञ्चाः क्रोशन्तीतिवत्सम्बन्धमात्रेण लक्षणोपपत्तेरिति चेत् । न, तत्रैव हि शक्यतापर्याप्तिः यन्मात्रप्रतीत्यै भवति शब्दप्रयोगः यथा गोः सामान्यविशेषोभयात्मकत्वेपि सामान्यज्ञापनायोच्यते "गवा क्रीणाति" यथा वा गीतिमात्रप्रतीत्या "एकं साम तृच"इति, यत्र तु नैवं, तत्र विशिष्टमेव शक्यं, यथा—स्नुषानप्त्रादिशब्देषु देवतातद्धितेषु वा, नहि ते पुत्रमात्राभिधायिनो देवतामात्राभिधायिनो वा, एवं लिङादीनामपि प्रवृत्तिमात्रप्रत्यायनाय प्रयोगाऽदर्शनात्प्रवर्त्तनाभिधायित्वमिति । यद्यच्छब्दज्ञाप्यं तत्तद्वाच्यमिति उक्त्या च ज्ञाप्यज्ञापकभाव एव पदपदार्थयोरनादिः सम्बन्धो नतु पुरुषसङ्केतात्मेति सूचितम् । आदैजादिषु वृद्ध्यादिव्यवहारे पाणिनिसङ्केतस्येव सर्वार्थेषु सर्वशब्दव्यवहारेषु विशेषसङ्केतस्योपजीव्यत्वे हि पाणिनिवत्स स्मर्येत । इदानींतनेन च केनचिदश्वादौ सङ्केतेन गोपदे प्रयुक्ते परे नेत्थं ब्रूयुः न गोपदमश्ववाचकममुना सङ्केतेन प्रयुक्तमिति, गव्यश्वे च सङ्केताविशेषात् । न च सङ्केतमन्तरेणार्थबोधकः शब्दः प्रथमप्रयोगेपि बोधयेदिति शङ्क्यम्—वृद्धव्यवहारादिजन्यसम्बन्धग्रहस्य तत्सहकारित्वात् । उक्तन्यायेन व्यक्तेरवाच्यत्वमित्यभिप्रेत्याह ।

तीयते तत्तस्य वाच्यम्, यथा गोशब्दस्य गोत्वम् ।

गोत्वमिति । नचैवं लिङ्गसंख्याद्यन्वयः प्रातिपदिकार्थे न सम्भवतीति शङ्क्यम् । सामान्यविशेषयोरत्यन्तभेदाभावेन सामान्यात्मनाऽभिहितस्यापि विशेषात्मना तदन्वयसम्भवात्(१) । अत्यन्तभेदेऽपि जातिवाचिषु विंशत्यादिभिन्नगुण्यादिवाचिषु च निरुढलक्षणोपस्थापितव्यक्तावेव तत्स्वीकारात् । विंशत्यादिशब्देषु हि लक्षणया सङ्ख्येयपरेष्वपि क्वचिल्लिङ्गसङ्ख्यान्वयः शक्यसङ्ख्यायामेव दृश्यते यथा "विंशत्यात्रिंशतायाह्यर्वाङ्चत्वारिंशता हरिभिर्युजाना" इति । षष्ठ्या च दिवसै"रिति च ।

यत्तु भवदेव आह क्रियाकारकसम्बन्धयोग्यपदार्थावगमे सति सम्बन्धानुपपत्त्या लक्षणाऽङ्गीक्रियते न च तदयोग्याकृतिमात्राभिधाने सम्भवति लक्षणा, क्रियापदस्य लक्षणया व्यक्तिपरत्वे तदन्वययोग्या व्यक्तिः कारकपदेन लक्षणीया, लक्षितायां च तस्यां तदन्वययोग्या व्यक्तिः क्रियापदेन लक्षणीयेत्यन्योन्याश्रयात् अतो जातिव्यक्त्योरुभयोरभिधानविषयत्वेनैव प्रतीतिः । अयं तु भेदः यथा यागनिष्पादकत्वेन साक्षाद्यागगोचरा या कृतिः सैव स्वर्गोद्देश्यकत्वात्तत्कृतिरित्यप्युच्यते तथा साक्षादाकृतिमेव विषयीकुर्वन्नभिधाव्यापारो व्यक्त्युद्देश्यकत्वाद्भवति तद्विषयः । यस्तु व्यक्तौ लक्षणानिर्देशः स व्यवधानाभिप्रायेण । एवं च यावज्जीवाधिकरणे सिद्धान्ते सम्बन्धसामान्याऽभिधायिनैव णमुला निमित्तत्वाख्यविशेषाभिधानात्पूर्वपक्षिणं प्रति काललक्षणाप्रसंजनं सङ्गच्छते सामान्येन विशेषलक्षणायां तु दोषसाम्यं स्यात्स्वमतेपीति ।

तन्न । अरुणगुणस्येव जातेरपि कारकत्वसम्भवेन क्रियान्वययो-

(१) लिङ्गसङ्ख्याद्यन्वयसम्भवादित्यर्थः ।

स च प्रवृत्त्यनुकूलव्यापारविशेषो लोके पुरुषनिष्ठो-

ग्यत्वसिद्धेः अयोग्यत्वेपि निरूढलक्षणाया अनुपपत्त्यनुसंधानानपेक्षत्वेनोक्तदोषानवतारात् । अनुपपत्तिवशेन लक्षणास्थलेपि मञ्चाः क्रोशतीत्यादावभिधोद्देश्यत्वेन पुरुषादिधीसम्भवेन लक्षणोच्छेदापत्तेश्च निरूढसांप्रतिकलक्षणयोः सांप्रतिक्या अन्याय्यत्वात्सम्भवत्येवोक्ताधिकरणे परं प्रति तदापादनम् । अथ तदेवाभिधोद्देश्यं यन्नियमेन तत्प्रयुक्तप्रतीतिभाक् भवति यथा व्यक्तिः नच मञ्चपदात्पुरुषोनियमेनाभिधोद्देश्यतया प्रतीयत इति तत्प्रतीत्यै लक्षणाश्रयणम् । तन्न । तदेव हि शब्देन लक्ष्यं यत्र तात्पर्यं, यत्प्रतीतिमुद्दिश्य यः शब्दोऽर्थमभिधत्ते स तत्पर इति कथं लक्ष्यस्य नाभिधोद्देश्यत्वम् । उक्तं च भवतैव—

"अभिधानशक्तेरेवाभिधेयाविनाभावोपस्थापितार्थतात्पर्याया लक्षणाशक्तित्व"

मिति अरुणाधिकरणे । तस्माद्यच्छब्दाभिधेयं तदुद्देश्यकाभिधानं कुर्वंच्छब्दोमुख्यः, अभिधेयाविनाभूतं तत्सदृशं चोद्दिश्य प्रवृत्तस्तु लाक्षणिकोगौणोवेति सम्भवति व्यक्तेर्लाक्षणिकत्वम् । अथ न प्रवर्त्तनात्वेन लिङभिधेयाया अपि प्रवर्त्तनाया "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" इति सूत्रे लिङोनानार्थत्वोपन्यासेन शक्यतावच्छेदकभेदप्रतीतेरित्याशङ्क्येष्टसाधनताऽन्या प्रवर्त्तनेति मतमनुसृत्याह । स चेति । प्रवर्तनात्वेन लिङभिधेयाया अपि प्रवर्तनाया लौकिकवाक्येषु बहुविधपुरुषाशयरूपतया विध्यादिशब्दचतुष्टयेन विवरणमत्र सूत्रे क्रियते । यतो विधिर्निकृष्टप्रवर्त्तनं यजेतेति । निमन्त्रणमावश्यके कर्मणि प्रवर्त्तनं श्राद्धे भुंजीत भवानिति । आमन्त्रणमभ्यनुज्ञात्मकं प्रवर्त्तनं ब्राह्मणः काममश्नीयादिति । अधीष्टः उत्कृष्टप्रवर्त्तनं अध्यापयेद्भवानिति ।

ऽभिप्रायविशेषः, वेदे तु पुरुषाभावात् लिङादिशब्द-निष्ठ एव। न हि वेदः पुरुषनिर्मितः ।

---

न त्वत्र शक्यतावच्छेदकभेदोऽविवक्षितो गौरवादित्याशयः । यद्यप्येषां प्रवर्त्तनात्वेन शक्यतायामपि लिङोऽनेकार्थत्वमपरिहार्यं अस्मिन्नेव सूत्रे यतः संप्रश्नप्रार्थनयोरपि स्मर्यते लिङ् किं भाट्टमधीयीय भोजनं लभेयेति च। तथा सूत्रान्तरे "कामप्रवेदने कच्चि" दिति "हेतुहेतुमतोर्लिङ्" इत्यादावर्थांतरेऽपि स्मर्यते। तथापि शक्यपरिहारं गौरवं न स्वीकर्तुमुचितमिति चतुर्णां प्रवर्त्तनात्वेनैव शक्यत्वम् पृथिव्याद्यनेकार्थत्वेन स्वीकृतमपि गोपदं सास्नादिमत्स्वनुगतजातिवाच्येव स्वीक्रियते ।

यजेतेति प्रकृतलिङर्थस्वरूपमाह । वेद इति । स इत्यनुषङ्गः। पुरुषाभावान्निर्मातुरभावात् । येन पुरुषेण निर्मितं यद्वाक्यं तदन्तर्गत एव लिङ् तद्गतां प्रवर्त्तनामभिधत्ते इति नियमभिप्रेत्येदम् । निर्मितत्वं च न ताल्वादिव्यापारकर्मत्वं वेदेपि तत्सत्वात् नाप्यभिनवानुपूर्व्यात्मना रचितत्वं स्वाभिप्रेतज्ञप्तये प्रयुक्ते परनिर्मितश्लोकेऽन्तर्गतलिङा प्रयोक्तृगतप्रवर्त्तनाभिधानस्य दृष्टत्वात् । किंतु स्वानुपजीविमानान्तरबोधितार्थबोधनाय प्रयुक्तत्वं,(१) वेदस्यानुपूर्व्यात्मना रचितत्वे सकलपुरुषनिरूपितस्येदृग्विधनिर्मितत्वस्याभावोन वक्तुं शक्यत इति च तादृग्रचितत्वात्मकपौरुषेयत्वस्य निराकरणायाह नेति । यतो "वेदो धर्ममूलं" इत्यादौ स्वतन्त्रमानत्वेन प्रसिद्धो वेदोऽतोऽसौ न पौरुषेयः मन्वादिस्मृतितुल्यत्वप्रसङ्गात् परमते च योगमहिम्ना सर्वज्ञर्षीणां स्वभावतः

---

(१) स्वं नोपजीवति यत्प्रमाणं तद्बोधितार्थबोधनाय प्रयुक्तं यद्वाक्यं तदेव निर्मितमित्युच्यते ।

सर्वज्ञेश्वरस्य ज्ञानप्रामाण्याविशेषेण तदुभयवचसोर्विशेषस्य वक्तुमशक्तेरित्याशयः ।

अथ वेदः पौरुषेयः(१) वाक्यत्वात् काठकादिसमाख्या-

(१) अत्र पौरुषेयत्वं नाम न पुरुषनिर्वर्त्यत्वमात्रं तथा सति नैयायिकनये वर्णानां क्षणिकत्वेन तत्समुदायरूपवेदस्य प्रतिपुरुषं वेदाध्ययनसमये भिन्नत्वेन जन्यतया तत्साधने अस्मदादिनिर्मितत्वव्यवहारोपत्त्या परमेश्वरप्रणीता वेदा इति तेषां सिद्धान्तानुपपत्तिः नहि अनेनानुमानेन नैयायिका वेदानां भ्रमप्रमादादिदोषवत्पुरुषप्रणीतत्वमनुमन्यन्ते किन्तु ईश्वरप्रणीतत्वम्। नच तदिदानीमुच्चार्यमाणे समानानुपूर्वीकेऽपि वेदेऽस्मदुच्चारणजन्ये समस्ति ईश्वरोच्चारिताया आनुपूर्व्या अस्मदुच्चरितायाश्च साजात्येऽपि परस्परमभेदाभावात् तद्व्यक्तितोऽस्मदुच्चारितानुपूर्व्या भिन्नत्वात् यथाहि गात्रचलनादिकं नर्तकः करोति शिक्ष्यमाणा नर्तक्यपि तदनुकरोति न तु तामेव करोति तद्गात्रचलनव्यक्त्यपेक्षया नर्तकीनिष्ठगात्रचलनव्यक्तेर्भिन्नत्वात् तद्वत् उपाध्यायोच्चारिता याऽऽनुपूर्वी न तामेवोच्चारयति माणवकः, किन्तु तत्सजातीयमानुपूर्व्यन्तरमेवञ्च प्रतिपुरुषं वेदनिर्मातृत्वप्रसङ्गः येषामपि मीमांसकानां मते वर्णा नित्यास्तेषां वर्णानां नित्यत्वेपि पदानां नित्यत्वं न शक्यते समास्थातुम्। आनुपूर्वीभेदवन्तोहि वर्णाः पदं न च वर्णानां नित्यविभूनां देशतः कालतो वा पौर्वापर्यमिति अभिव्यक्तिधर्म एवानुपूर्वीत्यास्थेयं तथा च कथं तदुपगृहीतानां वर्णानां पदता नित्या भविष्यति पदानित्यतया च वाक्यानित्यतापि व्याख्याता भवति एवं सति वाक्यसमुदायरूपस्य वेदस्यापि कथं नित्यत्वं, किन्तु पुरुषभेदेन भिन्नत्वमेवेति पुरुषनिर्वर्त्यत्वमात्रमेव चेत्पौरुषेयत्वं तर्हि मीमांसकं प्रति सिद्धसाधनं स्यात् अध्यापकपरम्परया पुरुषजन्यत्वस्य तैरप्यङ्गीकारात् अतः पुरुषस्वातन्त्र्यमेव पौरुषेयत्वं तदभावश्चापौरुषेयत्वं यथाहुर्भट्टाः "यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता" स्वातन्त्र्यं च पूर्वपूर्वानुपूर्वीमनपेक्ष्योच्चारणं तच्च महाभारतादौ व्यासादीनामस्ति व्यासोच्चारणात्पूर्वं तत्सजातीयोच्चारणस्याजातत्वात् एतादृशोच्चारणविषयत्वरूपं पौरुषेयत्वं महाभारतादिग्रन्थस्यास्ति, अध्यापकानां वेदेषु तादृशमुच्चारणं नास्ति, किन्तु ईश्वरस्यैवेति तन्निर्मितत्वमेव, नत्वस्मदादिनिर्मितत्वप्रसङ्गः ईश्वरस्य सर्व-

नाच्च(१) "त्रयोवेदा अजायन्ते" इति श्रुतेश्च मन्त्रार्थवादसिद्ध-प्रलयकाले(२) प्रणष्टाध्येतृकपूर्ववेदस्य सर्गारम्भे सम्प्रदायाधिगमासम्भवेन पुरुषविशेषस्य तन्निर्मातृत्वकल्पनाया उचितत्वाच्च । वक्त्रा यत्प्रतीतिमुद्दिश्य यद्वाक्यमुच्चारितं तस्य तत्परत्वमिति लोकदृष्टतात्पर्यस्यापौरुषेयवाक्येऽसम्भवेनोपक्रमोपसंहारादेर्वेदवाक्यगततात्पर्यनिर्णायकत्वकथनानुपपत्तेश्च । (३)शाब्दज्ञानप्रामाण्यस्याप्तवाक्यजन्यत्वाधीनत्वेन तदभावे शब्दोत्थज्ञानस्याप्रामाण्यापाताच्च। नच समाख्यानं प्रवचननिमित्तं प्रवचनस्यानेकपुरुषसाधारण्येनासाधारणव्यपदेशानिमित्तत्वात्(४) । न च कर्त्रस्मरणादपौरुषेयत्वं अस्मर्यमाणकर्तृकचिरकालिककूपादेस्तादृग्प्रस-

शक्तित्वेन स्वतन्त्रतया पूर्वकल्पविलक्षणानुपूर्वीरचयितृत्वं सम्भवतीति तदेव साध्यते तथा च नापसिद्धान्तो नवा सिद्धसाधनार्थान्तराद्यवकाशः। मीमांसकमते एतादृशस्वातन्त्र्यस्य कस्मिन्नपि पुरुषेऽनभ्युपगमात् ।

(१) यथा यः पाकं करोति सपाचक इति समाख्यायते इति कस्य चित्पुरुषस्य पाचक इति संज्ञायां श्रुतायां श्रोतुर्भवति बोधोऽयं पाकं करोति तद्वत् काठकं कालापकं कौथुममित्यादिसमाख्यां दृष्ट्वा भवति लोकानां बोधः कठादिभिर्निर्मिता वेदा इति ।

(२) प्रलयोत्तरं पुनः सृष्टिसमये पूर्वकल्पीयाध्यापकानामभावेन किमाश्रयस्य वेदस्य पुनरभिव्यक्तिः स्यादिति सर्वथा विनाश एव प्रलयेऽङ्गीकार्यः पुनश्चेश्वरेण जगद्रक्षार्थं सृज्यते इति वक्तव्यम् । तथा च ईश्वरजन्यत्वं स्वीकर्तव्यमिति भावः ।

(३) वेदवक्तुः स्वतन्त्रस्याभावे तदुच्चरितत्वरूपतात्पर्याऽसम्भवादुपक्रमोपसंहारादिभिर्वेदतात्पर्यनिर्णयनिरूपणस्यासङ्गतत्वापत्तिः एवं वक्तृविशेषजन्यत्वाभावे गुणघटितसामग्रीजन्यत्वाभावेन वेदजन्यज्ञाने प्रामाण्यमेव न स्यात् इति भावः ।

(४) यथाऽनेककारणसमवधानजन्माऽप्यङ्कुरो नर्त्वादिभिर्व्यपदिश्यते किन्तु शाल्यादिभिर्व्यपदिश्यते शाल्यङ्कुरो यवाङ्कुर इति । तत्कस्य हेतोः बीजस्यासाधारणकारणत्वात् इतरेषां च साधारणत्वात्तद्वदत्रापीति भावः ।

क्तेः । न च पौरुषेयवाक्यप्रामाण्यस्य तत्कर्तृप्रत्ययाधीनसिद्धिकत्वात् अवश्यस्मर्त्तव्यकर्त्तुरस्मणं दृश्यादर्शनवत् अभावग्राहकमिति शङ्क्यम् । छन्दोगप्रसिद्धस्योहग्रन्थस्य कर्तुरस्मरणेनापौरुषेयत्वप्रसङ्गात् । न चेष्टापत्तिः आम्नायादेव विशेषनिर्णये किमुत्तरयोर्योनिवर्णवशेन गेयमुत्तरावर्णवशेन वेत्यादिविचारानुत्थानापत्तेः(१) सत्यपि सर्वज्ञप्रणीतत्वेन तुल्यत्वे "तद्विदां च स्मृतिशील" इति वेदवित्स्मृतित्वेन स्मृतीनां प्रमाणत्वात् तासां दौर्बल्यं सेत्स्यतीति वदन्तं प्रत्याह । वेदस्येति ।

सर्वं निखिलशाखागोचरं न तु निखिलकालवर्त्ति पक्ष इति विवक्षितं

(१) प्रथमतन्त्रे ९ अध्याये २ पादे ९ अधिकरणे विचारितम् इदं श्रूयते रथन्तरमुत्तरयोर्गायति यद्योन्यां गायति तदुत्तरयोर्गायति । तत्र कयानश्चित्र आभुवत् इत्यसावृक्योनिः तस्यामृचि कया इत्यक्षरद्वयमाद्यो भागः नश्चित्र आभुवत् इत्यक्षरषट्कं द्वितीयो भागः तस्मिन्भागे द्वितीयाक्षरे चकारस्योपरितनमिकारं विलोप्य तस्य स्थान आयीभावमाम्नाय गीतिर्निष्पादिता । कस्त्वा सत्योमदानामित्यनन्तरभाविन्युत्तरा तस्यां योनिन्यायेन चतुर्थाक्षरे तकारस्योपरितनं थकारमोकारं च लोपयित्वा तयोः स्थान आयीभावः । अभीषुणः इत्यसावपरोत्तरा तस्यामपि चतुर्थाक्षरे णकारस्योपरितनमकारं लोपयित्वा तस्य स्थान आयीभावः कर्तव्यः अन्यथा गीतिनाशप्रसङ्गात् इति प्राप्ते ब्रूमः नाऽत्र योनौ वर्णान्तरस्याऽऽगमः कृतः । किं तर्हि ? विद्यमान एव चकारस्योपरितन इकारः सामप्रसिद्धया प्रक्रियया वृद्धः सन् ऐकारो भवति, तस्य सन्ध्यक्षरत्वादकारः पूर्वभागः इकारः उत्तरभागः तावुभौ विश्लेषेण गीयमानावायीभावं प्रतिपद्येते तथा च सामगा आहुः "वृद्धन्तालव्यमायीभवति" इति । तथा सति चतुर्थाक्षरे नास्ति तालव्य इकार इत्यायीभावो न कर्तव्यः अभीषुणः सखीनामविता जरितृणामित्येतस्यामुत्तरायां द्वादशाक्षरगतस्य रेफस्योपरितन इकारः पूर्ववदायी भवति । सोऽयमायीभाव उक्तरीत्या वर्णाभिव्यञ्जकत्वादुत्तरागतवर्णवशेन कर्तव्यः गीत्यर्थत्वाभावेन योनिक्रमे तेन विनाऽपि न गीतिर्विनश्यति अयं विचारो निरर्थक एव प्रसज्येतेति भावः ।

इदानीन्तने सिद्धसाधनापत्तेः दृष्टान्तत्वेन तदुपन्यासानुपपत्तेश्च अतोऽतीतकालस्यैव पक्षता ज्ञेया। नच पूर्वानुमानवशेनामुष्य सप्रतिसाधनत्वं स्मर्त्तव्यास्मरणबाधितत्वात्तस्य, युक्तं हि ऊहस्य पौरुषेयत्वं नावमिकन्यायसहकृतात् "यद्योन्यां गायति तदुत्तरयोर्गायति" इत्याद्यतिदेशवचनादुत्तराद्यारूढगानकर्त्तव्यतायास्तत्प्रमेयभूतायाः कर्तृप्रत्ययमनपेक्ष्यैव सिद्धेः अनादरेणैव कर्त्रस्मरणसम्भवात् अपौरुषेयत्वे च आम्नानत एव उत्तराद्यृक्षु गानसिद्धावतिदेशवचोवैयर्थ्यापत्तेः वेदप्रमेयस्य तु यागस्वर्गसम्बन्धादेस्तत्कर्तृप्रत्ययाधीनसिद्धिकत्वेनावश्यस्मर्त्तव्यस्य कर्त्तुर्नियतरूपेणास्मरणाद्भवति तदभावनिर्णयः। किञ्च(१) पराभिमतानुमानं जन्यमानान्तरमूलकत्वेन सोपाधिकं यद्धि प्रमाणवाक्यं पौरुषेयं तत्तादृगेवेति नियमः। नच वेदार्थः प्रत्यक्षेण ग्राह्यः अविद्यमाने यागादौ शब्दान्तरादिगम्यवैजात्यस्य यागानुष्ठानानन्तरक्षणेऽविद्यमानस्वर्गादौ तत्साध्यत्वस्य च प्रत्यक्षेण ग्रहीतुमशक्यत्वात्। तदुक्तं "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्"इति(२)। विद्यमानोपलम्भनत्वे हेतुः

---

(१) जै.सू. १ पा. ४ सू.। (२) वेदः पौरुषेयो वाक्यत्वादिति परकीयानुमाने जन्यमानान्तरमूलकत्वमुपाधिः यत्र यत्र पौरुषेयत्वं महाभारतादौ तत्र तत्र तद्ग्रन्थप्रतिपाद्यार्थतत्वं प्रमाणान्तरेण ज्ञात्वा तत्तद्ग्रन्थप्रणयनात्तत्र जन्यमानान्तरमूलकत्वमस्ति साधनं तु वाक्यत्वं वेदेष्वस्ति तत्र च जन्यमानान्तरमूलकत्वं नास्ति तदर्थस्य यागस्वर्गसम्बन्धादेर्यागादिनिष्ठस्वर्गसाधनत्वस्य वा एतद्वाक्यं विहाय केनापि प्रमाणेन पूर्वं कस्याप्यज्ञानात् तत्र जन्यमानान्तरमूलकत्वं नास्तीति साध्यव्यापकत्वेसतिसाधनाव्यापकत्वाद्भवत्युपाधिः। तथा च वाक्यत्वं न पौरुषेयत्वप्रयोजकं किन्तु जन्यमानान्तरमूलकत्वं, न च तद्वेदेष्वस्तीति न तेनानुमानेन पौरुषेयत्वसिद्धिरित्यर्थः।

इन्द्रियाणां सत्सम्प्रयोगे पुरुषस्य यद्बुद्धिजन्म तद्धि प्रत्यक्षमिति । प्रत्यक्षपूर्वकत्वाच्चानुमानादेर्न तद्ग्राह्यत्वमपि वेदार्थस्य सम्भवतीति नोक्तोपाधिशून्ये वेदे प्रमाणत्वाभिमते वाक्यत्वहेतुः पौरुषेयत्वं साधयितुमलम् ।

स्यादेतत् मानान्तरगृहीतार्थकं प्रमाणवाक्यं पुरुषेण निर्मातुं शक्यं नान्यदिति प्रमाणवाक्यं स्वपौरुषेयत्वाय स्वार्थग्राहकं मानान्तरमपेक्षते न तज्जन्यत्वमपि अतः पौरुषेयप्रमाणवाक्यत्वं स्वानुपजीविमानान्तरग्राह्यार्थकत्वमात्रेण नियतमिति ईश्वरीयनित्यप्रत्यक्षग्राह्यत्वाद्वेदार्थस्य सम्भवति पौरुषेयत्वं वेदस्येति । तन्न । वेदप्रामाण्याधीनसिद्धिकेश्वरीयज्ञानमूलकत्वेन वेदप्रामाण्यकथनेऽन्योन्याश्रयात्(१) ।

अथ क्षित्यादि सकर्तृकं कार्यत्वादित्यनुमानान्नित्यज्ञानवदीश्वरसिद्धौ तदीयज्ञानमूलकत्वेन वेदप्रामाण्यं सेत्स्यती. ति चेत्र् ? न, यादृक्साध्यसम्बन्धोदृष्टान्ते हेतोः क्लृप्तः तादृगेव साध्यं हेतुना सिध्यतीति. अनित्यज्ञानवत एव क्षित्यादिकर्तुः सिद्धौ तदीयज्ञानस्यापि मूलप्रमाणं विनाप्रामाण्यासिद्धेः । नच जन्यज्ञानवतः शरीरित्वापत्तेः तत्र च मानान्तरविरोधान्नित्यज्ञानवत एव कर्त्तुः सिद्धिरिति शङ्क्यम् । जन्यज्ञानवत्कर्तृकत्वव्याप्तप्रकृतहेतोरेव तत्सिद्धिबाधकत्वात् । अथ दृष्टान्तदृष्टजन्यज्ञानवत्कर्त्रसम्भवे हेतुप्रभवा कर्तृसामान्यसिद्धिर्नित्यज्ञानवन्तं आक्षिप्य पर्यवस्यतीत्युच्यते, तर्हि उष्णाग्निनियतेन

(१) वेदवाक्यं प्रमाणं बुद्धवाक्यं न प्रमाणमित्यर्धजरतीयन्यायप्रसङ्गाच्च—वेदानां ईश्वरोच्चरितत्वेनेश्वरज्ञानमूलकत्वेन प्रामाण्याभ्युपगमे बुद्धस्यापीश्वरावतारत्वेनास्तिकैरङ्गीकारात् तज्ज्ञानमूलकस्य बुद्धागमस्य कथमप्रामाण्यं वक्तुं शक्यते उभयोस्तुल्यत्वादित्यपि बोध्यम् ।

हिमे दृश्यमानेन तृणविकारेण जाताऽग्निसिद्धिः प्रत्यक्षविरोधादुष्णाग्न्यसम्भवेऽनुष्णाग्निमाक्षिप्य पर्यवस्येत् । तस्मान्नित्यज्ञानवज्जगत्कर्तृसिद्धिमिच्छद्भिरपि तस्यै वेदापौरुषेयत्वं स्वीकार्यं तदा हि स्वतः प्रमाणाद्वेदात्स्यादपि तत्सिद्धिः(१)। अथाप्रमाणमेव वेदवाक्यं उक्तहेतोः भवतु पौरुषेयं अप्रमाणवाक्यरचनस्य मूलप्रमाणानपेक्षत्वात् इति चेन्न । अप्रामाण्ये कारणान्तराभावात् तथाहि अनधिगततथाभूतार्थबोधकत्वं प्रामाण्यं, तदभावस्त्रेधा सम्भवति अबोधकत्वात् अधिगतबोधकत्वात् बोध्यस्य तथाभूतत्वाभावाद्वा, सोपि द्वेधा सम्भवति अर्थक्रियाकारित्वगुणजन्यज्ञानविषयत्वादिसाधकाभावाद्वा बाधकमानान्तराद्वा, तदपि द्वेधा मिथ्यैतदिति ज्ञानं दुष्टकरणज्ञापितत्वं वा, वेदवाक्यस्य च दुष्टत्वं त्रेधा पुरुषसम्बन्धात्स्यात् पदपदार्थसम्बन्धस्य पौरुषेयत्वात् वाक्यतदर्थसम्बन्धस्य तत्वात् वाक्यस्य वा,(२)तत्र न तावदबोधकत्वं वेदे वक्तुं शक्यं आकाङ्क्षादियुक्तेभ्योऽगृहीतसङ्गतिकेभ्योवैदिकपदेभ्योवाक्यार्थबोधस्यानुभवसिद्धत्वात् । नचासौ मानान्तरेण केनाप्यधिगत इति निरूपितं प्रत्यक्षसूत्रे । विषयतथात्वनिश्चयात्मनोदितं च ज्ञानं न तत्सिध्यर्थं अर्थक्रियाकारित्वाद्यपेक्षते अन्यथाऽर्थक्रियादिज्ञानस्याप्यर्थक्रियातथात्वसिद्ध्यर्थमर्थक्रियान्तरापेक्षत्वेऽनवस्थापत्तेः अ-

(१) वेदानामपौरुषेयत्वेन स्वतः प्रमाण्याभ्युपगमे प्रमाणान्तरसंवादस्य विसंवादस्य वा तुच्छत्वेन स्वातन्त्र्येण ईश्वरासिद्धिर्भवेत्तदाश्रित्य चानुमानमपि तत्साधकं भवितुमर्हति । तदभावे बलाभावेन न साधकम्भवति यथा सिंहः किरातैर्हन्तुं शक्योऽपि दुराधर्षं वनं प्रविश्य निर्भयः सन् विचरति वनं च सिंहाधिष्ठितं किराताप्रवेश्यं भवति तद्वत् वेदवाक्यसमाश्रयेण लब्धवृत्ति अनुमानं ईश्वरं साधयितुमर्हति अनुमानसत्वेन च वेदवाक्यमपि वचनव्यक्त्याभासेभ्यो दूषितं न भवतीति सुव्यक्तमाकरे ।

(२) पौरुषेयत्वादिति शेषः ।

तथाभूतस्यापि स्वप्नस्यार्थक्रियादर्शनेन तस्यास्तथाभूतत्वव्यभिचाराच्च । एतेन शाब्दबोधस्याऽऽप्तवाक्यजन्यत्वमन्तरेण न प्रामाण्यमित्यपि निरस्तम् । प्रामाण्यघटकयावत्पदार्थानां उक्तविधया प्रकारान्तरेणैव सिद्धेः । नच वेदार्थे मिथ्याप्रत्ययः स हि स्वर्गफलकविधिषु क्षणिककर्मणः आमुष्मिकफलत्वानुपपत्त्या स्यात् । निरस्ता चैषा ऽपूर्वाधिकरणे । चित्राकारीर्यादिविधिषु चाऽनन्तरं फलानुपलम्भात् स्यात् । घटते च तदर्थसत्यत्वेपि चित्राफलस्यानन्तरमनुपलम्भः चातुर्थिकन्यायेन तस्य ऐहिकामुष्मिकत्वात् कारीरीफलस्य तु ऐहिकस्वभावस्यापि वैगुण्यादनन्तरमनुपलम्भसम्भवः पदपदार्थसम्बन्धस्य पौरुषेयत्वं निरस्तं प्राक् । वाक्यवाक्यार्थसबन्धे तु पौरुषेयत्वं द्वेधा सम्भवति वाक्यस्य वाक्यार्थे सङ्केतात्मकशक्तिस्वीकाराद्वा काश्यपीयमतानुसारेण वाक्यार्थानुमापकस्य वाक्यस्यानुमापकतानिर्वाहकसंबन्धे पुरुषप्रत्ययनिरूपितत्वाद्वा, तत्र वाक्यं तावत् पदसमुदायः एकार्थप्रतीतिजनकत्वोपाधिना पदेष्वेकवाक्यत्वप्रतीतिसम्भवेन तदतिरिक्तस्य वाक्यस्य निष्प्रमाणकत्वात् । इत्थं चाकाङ्क्षादिमत्पदोपस्थापितपदार्थेभ्य एव लक्षणया वाक्यार्थप्रतीत्युपपत्तेः । नच तत्र शक्तिमङ्गीकुर्मः नतरां सङ्केतत्वं तस्याः । न च सम्भवत्यनन्तवाक्यार्थेषु कस्यापि सङ्केतः । दृश्यते च पुरुषप्रत्ययमनपेक्ष्य श्रुतमात्राल्लौकिकवाक्यादपि बोध इति न द्वितीयोपि । तस्माद्वेदस्य प्रकारान्तरेणाप्रामाण्यशङ्काया असम्भवात्पौरुषेयत्वेनैवाप्रामाण्यं इत्यन्त्यः पक्षोऽत्रशिष्यते । नच पौरुषेयत्वमुक्तानुमानात्सिध्यतीत्युक्तम् । नच समाख्यानात्तत्सिद्धिः कठादिपुंविशेषष्टत्तिप्रवचनातिशयेन केनापि तदुपपत्तेः कठचरणैः पुरुषैः परम्परयाऽधीयमानत्वेन वा तत्सम्भवात् । तदुक्तं "आख्याप्रवचनाद्" इति(१) "तेभ्यस्तपस्तेपानेभ्य"

(१) जै० सू० १ अ० १ पा० ।

"वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा"(१) (वाक्याधिक० श्लो० वा० ३६६)

इत्यादिना वेदापौरुषेयत्वस्य साधितत्वात् । "यः कल्पः स कल्पपूर्वं" इति न्यायेन संसारस्यानादित्वादीश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वा उपदिशतीत्ये-

इति श्रुतिवशेनाग्न्यादिकर्तृकत्वं वेदेषु वदद्भिः परैरपि इत्थमेव समाख्यार्थोवर्णनीयः । नचैतच्छ्रुतिवशेनैव तत्सिद्धिः अस्या विध्यन्तरशेषत्वेन स्वार्थे तात्पर्याभावात् (किं परोचेष्टा) उच्चैष्ट्वादिस्तुतिपरत्वात् । एतेन मन्त्रार्थवादेभ्यः सृष्टिप्रलयसिद्धिर्निरस्ता तेषामपि विध्यन्तरशेषत्वेन स्वार्थे तात्पर्याभावात् किंपरो धर्म इत्यादिप्रयोगाच्च तादर्थ्यात्मकं तात्पर्यं वेदेष्यविरुद्धं यत्प्रतीत्यर्थं यद्वाक्यं तत्परं तदिति तादर्थ्यं च न पुरुषव्यापारघटितमिति वक्ष्यामः।

अभ्युपेसापि अनुमानात्सृष्टिप्रलयेश्वरसिद्धिं न वेदस्य पौरुषेयत्वमित्याह । यः कल्प इति । संसारसादित्वे ह्यभिनवानुपूर्वीविरचनमवश्यमभ्युपेयं स्यात् । नच तत्सम्भवति प्रथमोत्पन्नप्राणिनो-

(१) यद्यपि कर्तुरस्मरणात् सम्बन्धस्य कृतकत्वं परिहृतं तथापि न वेदानां परिहृतं इत्यत उक्तं "सम्बन्धाकारणन्यायाद्वक्तव्या वाक्यनित्यतेति"। तुल्यन्यायत्वाद्वेदानामपि कृतकत्वं परिहृतमेवेत्यर्थः । सङ्घातत्वरूपोहेतुः सत्प्रतिपक्षितश्चेत्याह । "सङ्घातत्वस्य वक्तव्यमीदृशं प्रतिसाधनम् । वेदस्येत्यादि"। नन्वेवं भारतादिष्वपि शक्यं वक्तुं? सत्यं तत्तु दृढेन कर्तुः स्मरणे न बाध्यते तदाह"भारतेऽपि भवेदेवं कर्तृस्मृत्या तु बाध्यते"। ननु तर्हि वेदेपि केचित्तुस्मरन्त्येवकर्तारमत आह "वेदेऽपि तत्स्मृतिर्या तु साऽर्थवादनिबन्धना" इत्यादिवार्तिकमनुसन्धेयम् ।

तावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेश्च । ततश्च पुरुषाभावाच्छब्दनिष्ठैव सा । अत एव शाब्दीभावनेति व्यपदिशन्ति ।

सा च शाब्दी भावनांऽशत्रयमपेक्षते, साध्यं साधनमितिकर्त्तव्यतां चेति । तत्र साध्याकाङ्क्षायां

---

व्याप्तिग्रहाभावेन स्तनपानादिप्रवृत्त्युपयोगीष्टसाधनतानुमित्यसम्भवापत्तेः धर्मादिशून्यस्य सुखाद्यभावप्रसक्तेश्च । नच भवदभिमतो वेदनिर्मातेश्वरोऽसर्वज्ञो येन गतकल्पस्थानुपूर्वीमज्ञानाद्वक्तुमशक्नुवन्नभिनवं वा रचयतीत्युच्येतेति पञ्चम्यन्तद्वयाशयः । यद्यपि परैर्नित्यज्ञानवानीश्वरोऽभ्युपगतः तथाप्यनुमानात्सिध्यन्नीश्वर उक्तन्यायेन जन्यज्ञानवानेव सिध्येत् स्वीकुर्वन्ति च केचित्तं तथाभूतं "स इक्षांचक्र" इत्यादि श्रुतिभ्यः इत्यभिप्रेत्य स्मृत्वेति प्रमाणान्तरेणोपलभ्येति चोक्तम् ।

अपेक्षत इति । यजेतेत्यत्रार्थभावनायामिव शाब्दभावनायां करणाद्यात्मना स्वांशान्वयप्रतीत्यै नायमपेक्षोपन्यासः प्रवर्त्तनागोचरप्रवर्त्तनान्तराभावेन कर्त्तव्यत्वेनाप्रतीयमानायास्तस्या इतिकर्त्तव्यतान्वयासम्भवात् प्राशस्त्यविधिज्ञानयोः करणेतिकर्त्तव्यतात्मनाऽन्वयाननुभवाच्च । किन्तु यजेतेत्यादिविधिवशात्पुरुष इव स विधिरप्यध्ययनविधिवशाद्भावनामनुतिष्ठन्कीदृशभाव्याद्यन्वितां भावनामनुतिष्ठतीति जायमानाऽऽकाङ्क्षाऽत्र निर्दिश्यते । यथाहि विहितव्यापारमनुतिष्ठतां ज्ञानवतां भवत्याकाङ्क्षा किममुष्य व्यापारस्य साध्यादीति तथैषापि । तत्रेति । किमस्यां साध्यत्वेन सम्बध्यते इत्याकाङ्क्षायां वक्ष्यमाणत्याद्युत्तरं देयमि-

वक्ष्यमाणांशत्रयोपेताऽर्थीभावना साध्यत्वेन सम्बध्यते, एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः। यद्यपि सङ्ख्यादीनामप्येकप्रत्ययगम्यत्वं समानं तथाऽप्ययोग्यत्वान्न तेषां भाव्यत्वेनान्वयः। करणाकाङ्क्षायां लिङादिज्ञानं करणत्वेन सम्बध्यते। तस्य च करणत्वं न भावनोत्पादकत्वेन सन्निकर्षस्येव रूपादिज्ञाने, सन्निकर्षात्प्राक् रूपज्ञानस्येव लिङादिज्ञानात्प्राक् शब्दधर्मभावनाया अभावप्रसङ्गात्, किं तु भावनाभाव्यनिर्वर्त्तकत्वेन। लिङादिज्ञानं हि

---

ति व्याख्येयम्। सम्बध्यत इति। भावना साध्यतां प्रतिपद्यते इत्याशयेन न तु तस्याः साध्यत्वेनान्वयोबोध्यत इत्याशयेन। एवमग्रेपि। अंशत्रयग्रहणेपि करणेतिकर्त्तव्यतयोरेव प्रवर्त्तनाभाव्यशरीरे निवेशः, न भाव्यस्य। एकेति। अध्ययनाविधिनाऽर्थाद्यजेतेति लिङं पुरुषप्रवर्त्तने प्रवर्त्तयता तत्समानाभिधानश्रुत्यवगतभावनाया एवोद्देश्यत्वेन स्वीकरणादित्याशयः। लिङादीति। आदिना प्रवर्त्तनाप्रवर्त्यतत्संसर्गाणां सङ्ग्रहः। अयमत्रेदृशं पुरुषं प्रवर्त्तयतीति ज्ञानं ह्युक्तन्यायेन समुद्भूतं करणतां प्रतिपद्यते। यद्वा लिङादि कारणं यस्य तच्च तत् ज्ञानं चेति विग्रहः। लिङ्शब्देन यजेतेति प्रकृतस्य परामर्शः। तज्जन्यमेव प्रवर्त्तनाज्ञानं फलपर्यन्तां प्रवृत्तिं जनयितुमलम्। न लौकिकशब्दान्तरजन्यम्, शास्त्रपरिमाणत्वादिति न्यायादित्याशयः। सर्वलिङ्जन्यज्ञानानामादिभूतमुपजीव्यं यत् ज्ञानं लिङ् प्रवर्त्तनाभिधायीति सम्बन्धज्ञानमिति यावत् तत्करणमित्यपि कश्चित्। भाव्येति। भाव्यनिर्वर्तकं तद्विशिष्टात्मना भावनाया

शब्दभावनाभाव्यार्थीभावनां निर्वर्तयति, कुठार इव च्छेदनम् । अतो लिङ्गादिज्ञानस्य करणत्वेनान्वयः ।

इतिकर्त्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमितिकर्त्तव्य-

निर्वर्त्तकत्वेन कथ्यत इत्याशयः । इतिकर्त्तव्यतात्वेनेति । यथा हि यागेन स्वर्गे जनयितव्येऽपेक्षितोपकारं कुर्वतः प्रयाजादेरितिकर्त्तव्यतात्वं यागभावनायां, एवं विधिज्ञानेन प्रवृत्तौ कर्त्तव्यायामपेक्षितः प्रवृत्तिप्रतिबन्धकाऽऽलस्यादिनिवृत्तिरूप उपकारः प्राशस्त्यज्ञानेन क्रियत इति भवति तस्येतिकर्त्तव्यतात्वं प्रवर्त्तनायाम् ।

प्राशस्त्यपदार्थश्च यद्यपि नेष्टसाधनत्वं तद्धि विधिबोधितमेवार्थवादैर्बोध्येतान्यद्वा ? आद्ये वैय्यर्थ्यापत्तेः द्वितीये वेदतात्पर्यगोचरस्य तात्विकत्वावश्यंभावेनौदुम्बराधिकरणादौ कृतस्योर्गवरोधादिफलनिराकरणस्यानुपपत्तिः,(१) नाप्यनिष्टाननुबन्धित्वं तद्धि प्रवृत्तिप्रतिबन्धकालस्यहेतुदृष्टश्रमाद्यननुबन्धित्वं, अदृष्टानिष्टान्तराननुबन्धित्वं वा, आद्ये बाधः । अन्त्येऽप्रसक्तप्रतिषेधः श्येनाद्यर्थवादेष्वसम्भवाच्च,(२) तथापि प्राशस्त्यं नाम गुणवत्वं यथा च ज्ञाजनकस्वभावे शब्दे ज्ञानगतयाथार्थ्यात्मकातिशयप्रयोजक आप्तोच्चरितत्वादिधर्मः पूर्वैर्गुण(३) इत्युच्यते एवं फलगतक्षिप्रत्वाद्य-

(१) औदुम्बरोयूपोभवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै इत्यादौ यूपौदुम्बरतायाः न फलमूर्गवरोधादिकमुपदिश्यतेऽपि तु स्तुतिरित्यादेरसङ्गतत्वापत्तेर्न विधिबोधितान्यस्येष्टसाधनत्वादेरर्थवादैर्बोधसम्भवः ।

(२) श्येनयागस्य परम्परया ऽदृष्टनरकरूपानिष्टजनकत्वेन अनिष्टा ऽननुबन्धित्वस्य यथा वैश्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्यर्थवादेन बोधासम्भवादित्यर्थः ।

(३) नैयायिकादिमते ज्ञानप्रामाण्यस्य परत एवोत्पद्यमानत्वेनाप्तोच्चरितवाक्यादेव प्रमोत्पद्यते इति प्रमात्वप्रयोजकं आप्तोच्चरितत्वा-

तात्त्वेन सम्बध्यते । तच्च प्राशस्त्यज्ञानं "वायुर्वै क्षेपिष्ठा देवता" इत्यर्थवादैर्जन्यते । ते ह्यर्थवादाः

तिशयप्रयोजकं विधेयक्षिप्रगामिदेवताकत्वादि गुणपदेन विवक्षितं, तेनैव च रूपेण तं तं गुणं विधेयगामिनमर्थवादो बोधयति, शक्यते च वक्तुं उदुम्बरत्वपर्णत्वादिविशिष्टं काष्ठं पञ्चपापश्लोकश्रवणविशिष्टं क्रतुफलं जनयतीति केचित्,

तन्न । यदि ह्युक्तविधगुणस्य फलगतातिशयजनकतावच्छेदकता विध्यनपेक्षेणार्थवादेन तात्विकी सिद्ध्येत् विधेयस्य फलसाधनता किं न सिध्येत् । नच वेदतात्पर्यगोचरस्यातात्विकत्वं वक्तुं शक्यम् । यद्यपि प्रवृत्तिमुद्दिश्य प्रवृत्तेनार्थवादेनातात्पर्यगोचरमुक्तविधप्राशस्त्यं बोध्यत इत्युच्यते, तथापि सर्वार्थवादेषु नोक्तविधप्राशस्त्यबोधकत्वसम्भवः "एतानि वै दश यज्ञायुधानि" "एकं वृणीत" इत्यादौ तादृशगुणासम्भवात् तस्माद्यज्ज्ञानं प्रवृत्तिप्रतिबन्धकाऽऽलस्यादिनिवर्त्तकं स एव गुणः क्षिप्रफलदत्वादिस्तादृशज्ञानविषयतावच्छेदकीभूतरूपेण च तद्वत्तात्मकं प्राशस्त्यमालस्यादिनिवृत्त्यर्थमर्थवादोबोधयतीत्यन्ये ।

परे तु प्रशस्तमित्यत्र शंसातिना गुणवत्ताभिधानमुच्यते निष्ठाप्रत्ययेन तत्कर्म, ततश्च गुणवत्तया ऽभिहितमिति शस्तपदार्थः इष्टसाधनत्वं, प्रशब्दार्थश्च प्रकर्षः तात्पर्यात्मकोऽभिधानान्वयी ततश्च तात्पर्येणेष्टसाधनतया बोधितत्वं प्राशस्त्यमर्थवादैर्बोध्यते इत्थं च सर्वार्थवादानां प्राशस्त्यलक्षकत्वं सम्भवति । सङ्गृह्णते च-

"अर्थवादोपपत्ती च लिङ्गन्तात्पर्यनिर्णय"

इति प्राचामुक्तिः । नच तादृशप्राशस्त्यज्ञानस्य प्रवृत्त्यनुप-

दिर्गुणशब्देनोच्यते तद्वत् फलनिष्ठः क्षिप्रत्वादिरूपोयोऽतिशयः तत्प्रयोजकं क्षिप्रगामिदेवताकत्वादिकं गुणपदेन कथ्यते इत्यर्थः ।

स्वार्थप्रतिपादने प्रयोजनमनुपलभमाना लक्षणया

योगित्वं, सकृत्प्रयोजकवाक्यश्रवणेनोत्पन्नप्रवर्त्तनाज्ञानस्याऽऽलस्यादिवशेनाऽप्रवर्त्तमानस्याभ्यासादिलिङ्गज्ञानादमुष्येष्टहेतुतां तात्पर्येणाऽयं वोधयतीति निर्णीतवतः प्रवृत्तिदर्शनात् । यद्यप्यध्ययनविधिना वेदवाक्यानां सामान्यतः प्रयोजनवत्त्वर्थे तात्पर्यं बोधितं तथापि च तत्तद्विधिभिः स्वविषये पुम्प्रवृत्त्यर्थं विशेषतस्तात्पर्योपस्थित्यपेक्षायां अर्थवादैस्तदुपस्थाप्यते विधिविहितः पदार्थ इव प्रयोगकाले मन्त्रैरिति ज्ञेयमित्याहुः ।

लक्षणयेति । स्वार्थप्रतीतिजन्यप्रतीतिविषयत्वं लक्षणाघटकसम्बन्धः दृश्यते हि विधेयगतसदसद्गुणप्रत्यायने विधेयसम्बन्धिगतसदसद्गुणप्रत्यायने विधेयान्यनिन्दाप्रत्यायने विधिसमभिव्याहृतविधेयनिन्दाप्रत्यायने वा विधेयप्राशस्त्यप्रतीतिः "वायुर्वै क्षेपिष्ठा देवता," "न स पापं श्लोकं शृणोति" इति "आपौवे शांता" "यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति" इति "यदभिघारयेद्रुद्रायास्ये पशून्निदध्यादथो खल्वाहुरभिघार्या एव" इत्येवमादौ, तादृशसम्बन्धस्य च सर्वपदार्थेषु पर्याप्तत्वात्सर्वपदेषु प्राशस्त्यलक्षणा ।

स्यादेतत् अनन्यलभ्यं हि प्रयोजनं वक्तुमुचितं "वसन्ताय कपिञ्जलान्" इत्याद्यर्थवादशून्यविधिवच्च सर्वत्र विधिभ्य एव प्राशस्त्यलाभात्तल्लक्षणायामप्यानर्थक्यं तदवस्थं, किञ्च प्रयाजादिविधीनामननुष्ठापकत्वात्(१) "वर्मवाएतत्" इत्यादिजनितप्राशस्त्यबोधस्य न तदनुग्राहकत्वं नापि तदनुष्ठापकप्रधानविध्यनुग्राहकत्वं तत्संनिधिपाठाभावेन तच्छेषत्वासम्भवात् ततश्च कृतायामपि लक्षणा-

---

(१) प्रधानविधेरेवाङ्गानुष्ठापकत्वसत्वेन प्रयाजादिविधीनां कर्मस्वरूपबोधकत्वमेवेति न तदर्थवादानां तदनुग्राहकत्वसम्भव इति ।

क्रतोः प्राशस्त्यं प्रतिपादयन्ति, स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात् । न चेष्टापत्तिः, अध्ययनविध्युपात्तत्वे-

यां यद्यानर्थक्यं किं तत्स्वीकारेण अत आह । स्वार्थेति । स्वार्थपरत्वे एवानर्थक्यं न प्राशस्त्यपरत्वे इति द्योतनाय मात्रशब्दः यथाहि नियमांशेऽदृष्टकल्पनामङ्गीकृत्याऽन्यलभ्यमपि वैतुष्यमवघातसाध्यत्वेनाश्रीयते एवमन्यलभ्योपि प्राशस्त्यबोधोभवत्यर्थवादफलम् । अङ्गविध्यर्थवादानां तु तद्द्वारेणैव(१) प्रधानविधिशेषभूतानामङ्गेषु प्रवृत्तिं जनयन्तं प्रधानविधिं प्रति सम्भवत्यनुग्राहकत्वमित्याशयः ।

ननु नाध्ययनविधिरर्थज्ञानमुद्दिश्याध्ययनं विधत्ते येनार्थवादानां प्राशस्त्यपरता कल्प्यते, कुतः ? अध्ययनस्य तत्साधनताया मानान्तरसिद्धत्वात् । नचावघातविधिवदेष नियमविधिः यतोऽपूर्वीयवैतुष्यमवघातेनैव कुर्यादितिवदपूर्वीयमर्थज्ञानमध्ययनेनैव कुर्यादिति न शक्यं वक्तुम्, अना(२)भ्याधीतेऽध्ययनविधावपूर्वोपस्थित्यभावात् कथंचिदुपस्थितावपि अध्ययनस्य क्रत्वर्थत्वापत्तेः। अथ नियमविधिस्थले नियमो न वाक्यार्थः येनार्थज्ञानस्वरूपे नियमाऽसम्भवात् अपूर्वीयत्वेन तत्र नियमं बोधयितुमपूर्वोपस्थितिरपेक्ष्येत, किन्तु नियमः फलमित्युच्यते, तथाप्यवघातनियमादृष्टस्येवाध्ययननियमादृष्टस्य क्रतावनुपयोगान्न तन्नियमस्य विधिफलत्वसम्भवः । भवेदप्यधीतविध्यर्थज्ञानस्य विहितकर्मणि नियमः न त्वधीतनिषेधार्थज्ञानं निषिद्धकर्मणि निय-

(१) अङ्गद्वारेणैव प्रधानशेषभूतानामित्यर्थः ।

(२) क्रतुविशेषमारभ्य तत्प्रकरणे अध्ययनविधेरपाठात् कथमपूर्वोपस्थितिसम्भवः तदभावे च नापूर्वसाधनमर्थज्ञानमध्ययनविधिः फलत्वेन स्वीकर्तुं शक्नोति कथञ्चित्तदुपस्थित्यङ्गीकारेऽध्ययनस्य क्रत्वङ्गत्वापत्तिरित्यर्थः ।

नानर्थक्यानुपपत्तेः। तथाहि "स्वाध्यायो ऽध्येतव्यः"

---

न्तुं शक्यम्। न च साम्नां हुमादिस्तोभानामध्ययनस्य राजकर्तृकस्य वैश्यस्तोमाद्यध्ययनस्यार्थज्ञानफलकत्वं घटते अतो विश्वजिन्न्यायेन स्वर्गफलत्वम्—"अनधीयाना व्रात्या भवन्ति" इति स्मृतिवशेन प्रत्यवायपरिहारार्थत्वं वाऽध्ययनविधौ स्वीकार्यं ग्रहणाध्ययने फलार्थवादाभावेन रात्रिसत्रन्यायासम्भवात् तस्मादध्ययनस्य प्रधानकर्मत्वान्न तत्संस्कार्यत्ववशेनार्थवादानां प्रयोजनवदर्थपरत्वं गुणकर्मत्वे वा पारायणाद्युपयोगिनं स्वाध्यायं भाव्यमङ्गीकृत्य निराकाङ्क्षो ऽध्ययनविधिर्नार्थज्ञानं भाव्यमपेक्षत इत्यत आह।

स्वाध्याय इति। वेदस्येत्यनन्तरमर्थज्ञानोद्देशेनेति शेषः। नाध्ययनस्य स्वर्गफलत्वं पापपरिहारफलत्वं वा युक्तं सर्वौषधावघातवत्सकृदुच्चारणेन शास्त्रार्थसिद्धिप्रसङ्गात्, स्वाध्यायकर्मत्वनिर्देशेन प्रतीयमानसंस्कारकर्मताबाधापत्तेः। सर्वक्रतुविधिष्वर्थज्ञानविचाराक्षेपगौरवापत्तेः। दृष्टार्थज्ञानफलत्वसम्भवेऽदृष्टफलत्वायोगाच्च। नापि स्वाध्यायभाव्यकत्वं तत्स्वरूपे आनर्थक्यात्। "हिरण्यं भार्य" मित्यत्र हिरण्यपदेन क्रत्वपूर्वस्येव स्वाध्यायपदेन पारायणापूर्वलक्षणाया अनुपपत्तेः। नचाध्ययनविधिसिद्धस्वाध्यायावाप्तेः क्रतुविधिभिर्ग्रहणात् सिद्धान्तरीत्याऽध्ययननियमस्य क्रत्वपूर्वोपयोगः शङ्क्यः अर्थज्ञानेनेव ब्राह्मणाद्यवाप्त्याऽविनाभावाभावेन सामान्यसम्बन्धबोधानपेक्षलिङ्गेन क्रतौ विनियोगायोगात् स्वाध्यायस्योद्देश्यत्वे तदेकत्वाविवक्षायामेकस्य पुंसोदैवात्पूर्वजाधीतानेकशाखाध्ययनस्य शास्त्रतः प्रसक्तौ सर्वशाखाप्रत्ययमेकं कर्मेतिन्यायोच्छेदश्च स्यात् क्रतुविधिष्वर्थज्ञानाद्याक्षेपगौरवतादवस्थ्यं च। तस्मादर्थज्ञानमुद्दिश्याध्ययनं विधीयते इत्याशयः।

इत्यध्ययनविधिः सकलस्य वेदस्याध्ययनकर्त्तव्यतां बोधयन् सर्वो वेदः प्रयोजनवदर्थपर्यवसायीति सूचयति,

---

कथं तर्हि स्वाध्यायान्वयः ? तत्र भवदेवः यथा "पार्वणे जुहोती"त्यत्र पर्वपदोक्तानां यजतीनां देवतात्मना होमं प्रति गुणत्वेनान्वयेपि होमस्य कर्माङ्गस्य केन द्वारेणोपकारकत्वमित्यपेक्षायां तेषामेव संस्कारो द्वारमाश्रीयते एवं स्वाध्यायाध्ययनेनार्थज्ञानं कुर्यादित्यध्ययनस्य शब्दतः प्रधानकर्मत्वेपि स्वाध्यायद्वारेणैवाध्ययनस्यार्थज्ञानार्थत्वकल्पनादर्थादध्ययनस्य गुणकर्मत्वसिद्धिः। सम्भवति चैवं सति देवताभूतयजिसाहित्यवत्स्वाध्यायैकत्वविवक्षापि। न चार्थज्ञानमुद्दिश्याध्ययनविधिवैयर्थ्यं, अर्थप्रतिपादनपरोवेद इति निर्णयस्य तत्फलत्वात् यद्वाक्यं यादृशार्थप्रतीतिमुद्दिश्योच्चार्यते तत्तदर्थप्रतिपादनपरमिति व्यक्तं लोके विशिष्टार्थप्रतीतिमुद्दिश्योच्चरितमेतदितिनिर्णीते तदसमर्थतया प्रतीयमानेऽपि गौरश्वः पुरुषो- हस्तीत्यादिवाक्ये गौण्यध्याहारादिकल्पनेन विशिष्टार्थपरतास्वीकरणात् तत्प्रतीतिसमर्थेऽप्यन्यप्रतीतिमुद्दिश्योच्चारितमेतदिति ज्ञाते अक्षमानयेत्यादौ तत्परत्वाऽस्वीकरणाच्च विशेषतश्च वेदवाक्येषु गुरूच्चारणाऽनूच्चारणात्मकाऽध्ययनाऽधीनो विशिष्टपरतानिर्णयः। स्वेच्छया हि वेदवाक्यानि पठताऽङ्गवाक्येष्वपि फलपदमुच्चार्येत "योऽध्वर्युः स होता" "य ऋत्विजस्ते यजमाना" "मुष्टीश्चतुरोनिर्वपति" तनूनपातं यजति" इत्यपि पठ्येत तत्र नाङ्गाङ्गिभावव्यवस्था सिद्ध्येत् न स्याच्चाध्वर्युकार्ये होतृविधिः ऋत्विक्कार्ये च यजमानविधिः सप्तदशशरावे च चरौ संख्याऽनुग्रहेण मुष्टिपरिमाणबाधः क्रमनियमश्चेत्याह तन्मतमनुसृत्योक्तम्।

सकलस्येत्यादि। वेदस्येति षष्ठ्या शाब्दबोधे स्वाध्यायस्याध्ययनं प्रति गुणत्वेनान्वयोद्योत्यते। सूचयतीति।

निरर्थकस्याध्ययनानुपपत्तेः ।

---

प्रयोजनवदर्थे वेदतात्पर्यनिर्णयोऽध्ययनविधिफलमित्यर्थः ।

अन्येतु न पर्वपदाभिहितदेवतावत् स्वाध्यायस्य गुणत्वेनान्वयः तव्यप्रत्ययेन कर्मतयाऽभिहितस्य प्राधान्यान्वयौचित्यात् तेन यथा "पुरोहितं वृणीत" इत्यत्र प्रतीतप्राधान्याऽपरित्यागेन(१) वाक्यार्थ आश्रीयते वृतेन पुरोहितेनेष्टं भावयदिति, तथा प्रकृतेऽधीतेन स्वाध्यायेनार्थज्ञानं भावयेदिति वाक्यार्थः । एवं च पुरोहितैकत्ववत्स्वाध्यायैकत्वस्यापि विवक्षासिद्धिः, अध्ययनविधिश्रवणाच्च जायमानोऽर्थपरत्वनिर्णयः स्यादप्यध्ययनविधिफलं न त्वध्ययननियमस्य, पुस्तकादिनापि हि महाभारतादिवन्नियतानुपूर्वींमाधिगच्छन्तः प्राप्नुयुरेव विशिष्टार्थबोधम् । त्रैवर्णिकाधिकारनियमस्तु भवेदध्ययननियमस्य फलं, विनाऽर्थज्ञानं क्रत्वनुष्ठानासंभवात् क्रतुविधीनामर्थज्ञानापेक्षां जानतः साङ्गाध्ययननियमविशिष्टार्थज्ञानस्य च प्रयोजनापेक्षां पश्यतः पुरुषस्य लिङ्गकल्पितश्रुत्या तादृगर्थज्ञानं क्रत्वङ्गमिति बोधे जनिते तादृशज्ञानवत एव क्रतुष्वधिकार इति बोधावश्यम्भावात् । यद्यप्यग्निसाध्येषु कर्मसु त्रैवर्णिकाधिकारोऽग्निबलादेव सिद्ध्यति तथापि "दर्भस्तम्बे जुहुयात्" इत्यादिष्वनग्निसाध्येषु तत्सिद्धिरुक्तविधार्थज्ञानबलादेव भवति । वस्तुतस्त्वाधानस्यानङ्गत्वेपि तज्जन्यापूर्वविशिष्टाग्नीनां क्रत्वङ्गत्ववत् अध्ययनस्यानङ्गत्वेपि तन्नियमादृष्टविशिष्टार्थज्ञानस्योक्तश्रुत्या कर्माङ्गत्वेन ज्ञा-

---

(१) पुरोहितपदोत्तरद्वितीयया कर्मत्वस्याभिहिततया तस्य प्राधान्यं प्रतीतं वरणनिरूपितं तस्यापरित्यागेन वृतेन पुरोहितेनेत्यनेन वरणस्य पुरोहिते गुणत्वस्यैव स्थापनेन यथा वाक्यार्थस्तथा तव्यप्रत्ययेनाध्ययननिरूपितप्राधान्यस्य स्वाध्याये सत्त्वेन तदपरित्यज्याध्ययनस्यैव तत्र गुणत्वाङ्गीकारेण वाक्यार्थबोध आश्रीयते इति भावः।

स च वेदो विधिमन्त्रनामधेयनिषेधार्थवादात्मकः। तत्र विधिः प्रयोजनवदर्थविधानेनार्थवान्। स चाप्राप्तमर्थं विधत्ते-यथा "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति विधिरप्राप्तं प्रयोजनवद्धोमं विधत्ते, अग्निहोत्रहोमेन स्वर्गं भावये-

पनान्न नियमानर्थक्यं नियमादृष्टस्याहवनीयवत् क्रत्वपूर्व एवोपयोगात्। एतेन क्रत्वर्थनिषेधेष्वध्ययननियमस्यार्थवत्ता सिद्धा। पुरुषार्थनिषेधेष्वपि तन्नियमस्य प्रायश्चित्तापूर्वोपयोगोबोध्यः। शक्यते हि वक्तुं अध्ययनावाप्तनिषेधेनैव स्वानुष्ठितकर्मणो दोषजनकत्वं ज्ञात्वा तन्निवृत्त्यर्थं कृतप्रायश्चित्तात्तन्निवृत्तिर्भवतीति। वक्ष्यति चैतद्विस्तरेणावसरे। एवं च नित्याद्यनुष्ठानस्याध्ययनविधिसिद्धार्थज्ञानमन्तरेणासम्भवात्सिद्धमध्ययनस्य फलतोनित्यत्वं द्रढयितुमध्ययनाकरणे "अनधीयाना व्रात्या भवन्ति" इति प्रत्यवायस्मरणं सङ्गच्छत इत्याहुः। तन्मतमभिप्रेत्यैवाह। सकलस्येति। कर्मणि षष्ठी। अध्ययनेन स्वाध्यायं भावयेदित्यापाततो बोधयत् स्वाध्यायप्रयोजनाकाङ्क्षायामधीतेन स्वाध्यायेन प्रयोजनवदर्थज्ञानं कुर्यादितिविपरिणामेन बोधयति स्वाध्यायस्योपयोगयोग्यतया सक्तुवैलक्षण्यादित्याशयः(१)।

ननु सन्ति वेदावयवा अन्येपि तद्वदर्थवादानां भवतु लक्षणां विनैव फलवत्तेत्याशङ्क्यार्थवादेषु तद्वैलक्षण्यं दर्शयितुं वेदावयवान्तराणामुद्देशपूर्वकमुपयोगं तावदाह। सचेत्यादिना। विधौ सम्भदव-

(१) सक्तून् जुहोतीत्यनेन होमेन सक्तून् भावयेदिति बोधाङ्गीकारे होमेन रक्षाभूतानां भाव्युपयोगाभावेन सक्तूनां संस्कारकर्मत्वं परित्यज्य द्वितीयया तृतीयार्थं लक्षयित्वा सक्तुकरणकाग्रहेमेनेष्टं भावयेदिति प्रधानकर्मत्वमाश्रितं न तथा प्रकृतं वेदानामग्रे उपयोगसाहित्यमिति भावः।

दिति । यत्र तु कर्म प्रकारान्तरेण प्राप्तं तत्र तदु-द्देशेन गुणमात्रविधानम्—यथा "दध्ना जुहुयात्" इति । अत्र होमस्य "अग्निहोत्रं जुहुयात्" इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम्—दध्ना होमं भावयेदिति । यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते । तदुक्तम्–'न चेदन्येन शिष्टा' इति । शिष्टा उपदिष्टा इत्यर्थः । यथा "सोमेन यजेत" इत्यत्र

---

न्तर्भावस्यापि नामादेः पृथक् कथनं विभिन्नन्यायव्युत्पाद्यप्रयोजनवत्त्वाकृत्वख्यापनाय । धात्वर्थानुबन्धिगुणानां धात्वर्थानुवादेन विधानस्थले धात्वर्थस्यैव कर्मत्वेनान्वय इत्याशयेनोक्तं होममिति । प्रयोगानुबन्धिगुणस्य तु तदनुवादेन विधौ धात्वर्थः करणत्वे नैवान्वेति यथा "पूर्णमास्यां पौर्णमास्या यजेत"इत्यादौ । नचेदिति । "तद्गुणास्तु(१) विधीयेरन्न विभागाद्विधानार्थे" इतिसूत्रस्य पूर्वोभागः । यदि शास्त्रांतरेण कर्म गुणाश्च विशिष्य

---

(१) दर्शपूर्णमासयोः श्रूयते 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । तत्र यथाऽग्निहोत्रशब्दोऽग्नयेहोत्रमत्रेत्यमुमर्थं निमित्तीकृत्य कर्मनामधेयं तथाऽऽग्नेयशब्दोऽप्यग्निसम्बन्धं निमित्तीकृत्य कर्मनाम स्यादिति चेन्मैवम् नामत्वे देवताराहित्यप्रसङ्गात् अग्निहोत्रे त्वग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीत्यनेन विहितो मन्त्रः प्रत्यक्षविहित इति मान्त्रवर्णिकी देवता लभ्यते इह तु न तादृशो मन्त्रोऽस्ति, आग्नेयशब्दस्तु देवतां विधातुं शक्नोति अग्निर्देवताऽस्येत्यस्मिन्नर्थे तद्धितस्योत्पन्नत्वात् । न च द्रव्यदेवतयोरुभयोर्गुणयोर्विधानाद्वाक्यभेद इति शङ्कनीयं कर्मणोऽप्राप्तत्वेन गुणद्वयविशिष्टस्य कर्मण एकेन वाक्येन विधानात् । तस्मादाग्नेयशब्देन देवतागुणो विधीयते इति प्रथमाध्यायस्य चतुर्थपादे सप्तमाधिकरणे विचारितम् ।

सोमयागयोरप्राप्तत्वात्सोमविशिष्टयागविधानम्—सोमवता यागेनेष्टं भावयेदिति । न चोभयविधाने वाक्यभेदः, विशिष्टस्यैकत्वात् । विशिष्टविधौ च मत्वर्थलक्षणा—यथा सोमपदेन मत्वर्थो लक्ष्यते सोमवतेति । न हि मत्वर्थलक्षणां विना सोमस्याऽन्वयः सम्भवति, न तावत्सामानाधिकरण्येनान्वयः तथा सति प्रत्यक्षविरोधापत्तेः नहि सोमो यागो भवितुमर्हति । यदि तावत्सोमयागयोरैक्यरूपेण भावनायां करणत्वेनैवान्वयः 'सोमेन यागेनेष्टं भावयेत' इति, तत उभयविधाने वाक्यभेदः,

शिष्टा न भवन्ति तर्हि तत्कर्म गुणाश्च विधीयेरन्निसत्वयत्वार्थमुक्त्वाऽविभागादित्यत्वयत्वार्थं वक्तुमाह । नचोभयेति । ननु सोमस्य कारकात्मना भावनाऽन्वयात्कथं सोमवतेति यागविशेषणत्वमत आह । विशिष्टविधाविति । कारकद्वारेणैव भावनान्वययोग्यगुणविशिष्टधात्वर्थविधाविति बोध्यं तेन साहिस्रविशिष्टयागविधौ राजप्रभृतिकर्तृविशिष्टराजसूयप्रयोगविधौ च न मत्वर्थलक्षणापत्तिः । ऐक्यरूप्येणेत्यस्य विवरणं करणत्वेनैवेति । विधेयभेदनिमित्ता विध्यावृत्तिः स्यादित्याशयेनाह । वाक्यभेद इति । ननु (१)शब्दान्तराधि-

(१) २० अध्याये १ मपादे १ अधिकरणे विचारितं सोमेन यजेत हिरण्यमात्रेयाय ददाति दाक्षिणानि जुहोति इत्यादीनि बहून्याख्यातान्तानि श्रूयन्ते तानिवर्ण्येव फलभावनायामन्वयं प्राप्नुवन्त्युत नानाफलभावनास्त्विति संशये भावनावाचिन आख्यातस्यैकत्वाद्भावनाया एकत्वं युक्तं नचधातुभेदाद्भावनाभेदः तद्वाचित्वाभावेन धातोस्तस्यामप्रयोजकत्वादिति प्राप्ते ब्रूमः अस्त्वाख्यात-

सोमस्य यागवत्फलभावनाकरणत्वेन प्राधान्यापा-

करणन्यायेन भावनाया अवश्यं विधेयत्वादुभयविशिष्टा सैकैव विधे येसाशङ्क्याह । सोमस्येति । यागवत्सोमस्याद्दष्टार्थत्वेन प्रतिनिधिग्रहणप्रसक्तौ पूतीकविधेर(१)पूर्वविधित्वेन गौरवं स्यादित्याशयः । श्रुतिवशाद्दृष्टार्थत्वेऽवगते समापतद्गौरवं प्रमाणमुखत्वान्न दोषायेत्याशङ्क्याह । यागार्थत्वेति । फलोद्देशेन विधीयमानसोमस्याश्रयापेक्षायां समभिव्याहृतयागस्य कथं चिदाश्रयत्वेनान्वयं स्वीकृत्यानङ्गभूतसोमेन प्रकृतियागोपपादनेपि विकृतिषु तदप्राप्तेर्न सोमेन तासामनुष्ठानं स्यात् नाप्याक्षिप्तद्रव्यान्तरेण "त्रिवत्सः सांडः

मेव भावनायाः प्रयोजकं तच्चाख्यातं प्रतिधातु भिन्नं नहि बहूनां धातूनामुपर्येक आख्यातप्रत्ययः श्रूयते । नापि व्याकरणे धातुसमूहादेकमाख्यातं विहितं, तत आख्यातानां बहूनामेकैकधातुविशेषानुरक्तत्वेनोत्पन्नानां भावनावाचित्वेन यागदानहोमाः परस्परं भिद्यन्ते इति ।

(१) यदि सोमं न विन्देत पूतीकानभिषुणुयात् इति किमयमभावे विधिः सोमाभावे पूतीकैर्यागं कुर्यादिति सोमजातिरिव पूतीकजातिर्यागसाधनपरिच्छेदकत्वेन विधीयते उत प्रतिनिधिनियमः यः सोमजातिपरिच्छिन्नात्सकलानवयवानुपादातुमशक्तो विकलानुपादित्सते स पूतीकगतानिति पूतीकत्वं सोमावयवोपलक्षणं न साधनोपलक्षणमिति, तत्राभावे विधिरिति प्राप्ते नियम इत्याह—साधनत्वं हि पूतीकानामत्यन्ताप्राप्तं विधातव्यं प्रतिनिधिनियमे तु पाक्षिकप्राप्तानां नियमात्रं विधीयते इति लाघवं भवति । ननु सुसदृशानामन्येषां सम्भवादीषत्सदृशाः पूतीकाः पक्षे नैव प्राप्नुवन्तीति कथं नियम्यन्ते ! उच्यते सौसादृश्यं हि न प्रतिनिधेः प्रापकं. किं तर्हि नियामकं मुख्याभावात्तु प्रतिनिधिप्राप्तिस्तस्यां चावस्थायां यावन्न्यायेन सदृशं नियन्तु मुपक्रम्यते तावद्वचनेनासुसदृशाः पूतीका नियम्यन्तेऽतः प्रतिनिधिनियमोऽयमिति ६ अध्याये ३ पादे १३ अधिकरणे निर्णीतं तद्याहन्ये तेत्याशयः ।

तश्च, यागार्थत्वानुपपत्तिश्च, यागे द्रव्यानुपपत्तिश्च,

सोमक्रयण" इत्यादौ क्रयाद्यनुवादेन गुणविध्यनुपपत्तेरित्याशयः।

स्यादेतत्, एकक्रियान्वितयोः सोमयागयोररुणैकहायनीन्यायेन परस्परनियमे सति सोमस्य यागद्वारेणैव फलार्थत्वं सिध्यति न स्वातन्त्र्येण, एवं च विकृतियागानां द्रव्याकाङ्क्षायां प्रकृत्यनङ्गमपि तत्साधनत्वेन नित्यवदवगतः सोमः साधनत्वेन कल्पते अग्नीषोमीयानुबन्ध्ययोः पौर्वापर्यमिव साद्यस्के, ततश्च नोक्तदोषगणप्रसक्तिः। सम्भवति च दृष्टार्थे सोमे प्रतिनिधिः। नच प्रधानत्वान्न सोमस्य प्रतिनिधिः स्यादिति शङ्क्यं, त्वन्मते सोमवाक्यविधेयभावनायाः सोमयागोभयकरणत्वेन केवलयागकरणकवाक्यान्तरीयभावनाभिन्नाया आरंभोत्तरं सोमाभावेऽप्याचारानुमितश्रुत्या केवलयागानुरक्ताया अवश्यसमापनीयत्वे ज्ञापिते सोमसाध्यतयाऽवगतापूर्वसिद्ध्यर्थं तत्प्रतिनिधेरवश्यस्वीकार्यत्वादत आह। याग इति। "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति" इत्यत्र हि समाहारद्वन्द्वाश्रयणेन रथघोषयोरुपाकरणार्थत्वविधिरिति पूर्वपक्षे द्वयोः द्वयोः साक्षात्क्रियान्वयसम्भवान्नाऽरुणैकहायनीन्यायेन परस्परनियम इति यस्य कस्य चिद् घोषस्याङ्गत्वासिद्धिः प्रयोजनमित्युक्तं तन्त्ररत्ने, तेन न्यायेन सोमयागयोः परस्परनियमाभावे सकृत् श्रुतस्य यागस्य फलसाधनत्वेन सोमाश्रयत्वेनान्वयासम्भवे प्रकृतावेव द्रव्यानुपपत्तिः स्यात् किमुत विकृतावित्याशयः।

ननु दर्भमन्त्रयोरुपाकरणसाधनत्वेन प्राप्तयोः कार्ये विधीयमानौ रथघोषौ तद्वत्साक्षादुपाकरणहेतू भवत इति युक्तं, प्रतीयते च द्वन्द्वोपात्तयोरैक्यरूपेण क्रियान्वयः, ननु सोमयागौ पूर्वक्लृप्ते कार्ये विधीयेते, नच समानभिन्नपदोपा-

प्रत्ययवाच्यभावनायाः समानपदोपात्तेन यागेन करणाकाङ्क्षाया निवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेनान्वयानुपपत्तिश्च स्यात् ।

---

तौ यागसोमावेककरणाकाङ्क्षोपशामकाविति वक्तुं शक्यं, तस्माद्यथा "कपिंजलैर्यजेत" इत्यादौ बलवदभिधानश्रुत्या कारकस्य लिङ्गसङ्ख्यान्वयेऽवगतेपि येन पुंसा बहुसङ्ख्येन यजेत तेन किंजातीयेनेत्याकाङ्क्षान्तरे दुर्बलपदश्रुत्युपस्थिता जातिरन्वेति कपिञ्जलजातीयेनेति, एवं समानपदश्रुत्या भावनाकरणत्वेन यागेऽवगते किं साधनकेन यागेनेत्याकाङ्क्षान्तरेण सोमस्य भावनान्वयो वाच्यः ततश्च यथा साक्षाद्भावनया सम्बध्यमानावपि दर्शप्रयाजौ विभिन्नाकाङ्क्षाग्राह्यत्वमहिम्नोपकार्योपकारकभावं भजतः इत्थमिमावपि मिथः सम्भन्त्स्येते, सम्भवति चांशत्रयाकाङ्क्षाभ्योपि भिन्ना कर्त्राद्याकाङ्क्षावद्यागसाधनाकाङ्क्षा भावनाया अत आह । प्रत्ययेति ।

यद्धि क्रियया यादृगन्वयितयाऽऽकाङ्क्षितं तादृगन्वयितया ज्ञायमानमेव तत्तदाकाङ्क्षां पूरयितुमलं इति नियमात् किंसाधनकेनेत्याकाङ्क्षायां सोमसाधनकेनेत्येवं यागविशेषणत्वेनोपस्थितस्यैव सोमस्य कारकात्मना क्रियान्वयोवाच्यः किंजातीयेन किंगुणकेनेत्याकाङ्क्षयोः पश्वरुणपदाभ्यां निरूढलक्षणोपस्थितव्यक्तिविशेषणत्वेन ज्ञापितजात्यादेस्तदात्मनाऽन्वयवत् । नच मत्वर्थलक्षणामनिच्छतां तादृशान्वयः सम्भवतीति करणत्वेनैवान्वयोयागवत्स्यात् तत्र च त्वदुक्त एव दोष इत्यर्थः । एतेन "हिरण्यमात्रेयाय ददाति" इत्यादौ कर्मसम्प्रदानादेरपि मत्वर्थलक्षणया धात्वर्थविशेषणत्वेनान्वयोबोध्यः । तदपि हि श्रुतभावनया तद्विशेषणत्वेनैवाकाङ्क्ष्यते दानेन क्रतूपकारं भावयेदित्युक्ते हि भवत्याकाङ्क्षा किंकर्मकेन किंसम्प्रदानकेन चेति, यस्त्वत्र सोमेने-

यदि च वैयधिकरण्येनान्वयः, [!] तत्र न तावत् 'यागेन सोमम्' इत्यन्वयः समानपदोपात्तत्वात्प्रत्ययवाच्यफलभावनायां करणत्वेनान्वितस्य यागस्य सोमकर्मकभावनान्वयानुपपत्तेः, यागस्य सोमार्थत्वापत्तेश्च । न चेष्टापत्तिः, अदृष्टद्वयापत्तेः । न हि या-

---

त्यतोविशेषस्तमनन्तरं वक्ष्यामः ।

वैयधिकरण्येन—भिन्नकारकद्वारेण । समानेति । यागस्य सोमसंस्कारकत्वं वदता हि सोमस्य फलभावनाकरणत्वं वाच्यं निष्फलस्य संस्कार्यत्वानुपपत्तेः एवं च यागसंस्कृतेन सोमेन फलं भावयेदिति निष्पन्नः श्रुतविधिः सोमकरणिकां फलभावनां विधत्ते आर्थिकस्तु यागकरणिकामित्युच्येत समानाभिधानश्रुत्या च विधिभावनयोरन्वयोयुक्त इति श्रुताख्यातेन फलभावनैवाभिधीयते तत्र चैष दोष इत्याशयः ।

ननु स्वीक्रियत एव भवतापि श्रुतभावनाया अध्याहृतभावनाया वा धात्वर्थान्यकरणकत्वं वृतेन पुरोहितेन भावयेदित्यादौ, स न्यायः प्रकृतेपि अनुसर्त्तव्योऽत आह । यागस्येति । पुरोहिते कर्मत्वश्रवणात्तद्गतानतिरूपदृष्टार्थत्वलाभाद्युक्तं श्रुत्याऽर्थाद्वाऽध्ययनस्य स्वाध्यायार्थत्वन्यायेन तादर्थ्यं वरणस्य, नतु करणत्वेन श्रुतं यागजन्यदृष्टातिशयहीनं सोमं प्रति यागस्याङ्गत्वं युक्तमित्याशयः, । ननु भावनायाः करणाकाङ्क्षायां समानपदोपात्तोपि यागो न करणत्वेनान्वेति तत्र तृतीयाभावात् तृतीयान्तपदोपस्थितसोमस्य तु भावनाकरणत्वे झटिसत्वगते यागस्य तादर्थ्यमेवोचितमिति नानिष्टमत आह । नचेति । यद्यपि सोमस्य शीघ्रं करणत्वेन फलभावनान्वयः प्रतीयते तथापि फलगौरवाद्धेय इति

गस्य सोमार्थत्वं दृष्टद्वारेण सम्भवति, व्रीहिष्ववघाते-
नेव यागेन सोमे कस्यचिद्दृष्टस्याजननात् । अत-
स्तेन तावत्सोमे किञ्चिददृष्टं जननीयम्, प्रोक्षणेनेव

---

भावः । नन्वाश्रयतया करणतानिर्वाहको यागः सोमस्य दृष्ट-
विधयैवोपकारकोऽत आह । व्रीहिष्विति ।

इन्द्रियोद्देशेन होमकरणत्वविशिष्ट दध्न इव यागकरणत्वविशिष्टसो-
मस्य फलेन विधिमङ्गीकृत्य यागस्याश्रयत्वमुच्यते उत फलकरणत्वेन
ज्ञातस्य सोमस्याङ्गत्वेन यागे ज्ञाते कथमस्योपकारकत्वमित्याकाङ्क्षायां
आश्रयत्वेनेति–कल्प्यते ? नाद्यः प्रथमप्रतीतस्य यागनिरूपितकर-
णत्वस्याप्राप्तस्यावश्यं विधेयत्वेन कल्प्यफलकरणत्वस्याविधेयत्वा-
पत्तेः सोमयागयोः फलनिरूपितकरणत्वकल्पनासाम्ये समानपदो-
पात्तस्य सोमशेषितयाऽवगतस्य यागस्यैव तत्कल्पनौचित्याच्च ।
द्वितीये तु प्रोक्षणान्वयात्प्राग्व्रीहीणामिव यागान्वयात्प्राक् सोमस्य
फलान्वयेन भवितव्यं फलकरणत्वेनावगतं प्रत्येव निष्फलस्यांग-
त्वसम्भवात् ततश्च यागान्वयात्प्रागेव सोमस्य फलकरणत्वे नि-
र्व्यूढे न यागस्य तन्निर्वाहकता संभवतीत्याशयः ।

वस्तुतस्तु न यागवत्सोमस्य फलभावनायां शीघ्रमन्वयः संभवति
निर्णीतः पदार्थः पदार्थान्तरेणान्वेतीति नियमेन सोमान्वयात्प्राक्
यागभावनान्वयनिर्णयस्यावश्यवक्तव्यत्वे सति योग्यतया यागस्यैव
करणत्वान्वयनिर्णयात् अभिधानश्रुत्यवगतप्रवर्त्तनान्वयमहिम्ना
फलोद्देश्यकतयाऽवगतभावनायां शब्दादेव शक्त्या लक्षणया वाऽ-
वगतस्य विषयतया यागवैशिष्ट्यस्य सोमकरणकत्वविरोधाच्च, या-
गविषयिणी कृतिः फलोद्देश्यकेत्युक्ते हि यागेन फलं कार्यमिति
धीरवश्यं भवतीत्युक्तं भवदेवेन, यथा चाऽजत्वविरोधिगोत्वव्या-
प्यवत्सत्वोपदेशोऽजत्वप्राप्तिं प्रतिबध्नाति तथा सोमकरणत्वविरो-

व्रीहिषु । तथा यागस्य सोमार्थत्वे फलभावनायां सोमस्य करणत्वेनान्वयो वक्तव्यः । भावनाकरणत्वं च भावनाभाव्यनिर्वर्तकत्वेनेत्युक्तम् । न च सोमोऽदृष्टमन्तरेण फलं जनयितुं समर्थः, "ग्रहैर्जुहोति" इति वाक्यविहितहोमेन तस्य भस्मीभावात् । अतोऽदृष्टद्वयापातान्न यागस्य सोमार्थत्वमिति न 'यागेन सोमं भावयेत्' इत्यन्वयः सम्भवति, करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च ।

अथ, 'सोमेन यागं भावयेत्' इत्यन्वयः ! न, तत्र यद्यपि सोमस्य करणत्वेन यागार्थत्वाद्यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं लभ्यते इति नादृष्टद्वयापत्तिः, नापि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वान्वयानुपपत्तिः करणत्वेनैवान्वयात्, तथाऽप्यप्राप्तत्वा-

---

धियागकरणत्वव्याप्ययागविषयकत्वधीरपि सोमकरणकत्वधियम् । नच तेनैव विषयत्वेनान्वयोधात्वर्थस्य, तथासति करणत्वकल्पनापत्तेरिति शङ्क्यं, द्रव्यदेवतान्वयज्ञापनस्य यागपरत्ववद्विषयत्वान्वयज्ञापनस्य करणत्वपरत्वात् उक्तन्यायेन च फलाय विधीयमानस्य सोमस्य नाश्रयलाभः सम्भवतीति न सोमस्य श्रुतमपि करणत्वं फलनिरूपितं, यागनिरूपितं तु स्यात् ततश्च यागगुणत्वेन प्रतीयमानस्य सोमस्य न तच्छेषित्वं संभवति इत्याशयेनाह । करणत्वेनेति ।

अप्राप्तत्वादिति । शास्त्रान्तरेणेष्टहेतुतयाऽवगतस्य संभवति भावनायामुद्देश्यत्वं नाप्राप्तस्य, स्वत इष्टत्वाभावादित्याशयः ।

द्भावनाकरणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तदवस्थैव ।

ननु यजेतेत्यत्र यागस्य न करणत्वेन नापि साध्यत्वेनोपस्थितिः तद्वाचकतृतीयाद्यभावात्, किन्तु भावनायां यागसम्बन्धमात्रं प्रतीयते, यागस्य च भावनासम्बन्धः करणत्वेन साध्यत्वेन च सम्भवति, तत्र करणत्वांशमादाय फलसम्बन्धः साध्यत्वांशमादाय गुणसम्बन्धश्च स्यात् इति चेत्—मैवम् । यद्यपि भावनया

---

वाजपेयाधिकरणपूर्वपक्षन्यायेन मत्वर्थलक्षणामाक्षिपति । नन्विति । सम्बन्धमात्रेति । संसर्गविधया विषयताभानेऽपि न तस्याभीप्सितत्वमनभीप्सितत्वं वा भासते संसर्गे धर्मान्तराऽभावात् इप्सितत्वेन भाने हि साध्यत्वेनैवान्वयः स्यात् अन्योद्देश्यकभावनायामनीप्सितविषयत्वेन भाने करणत्वेनैवान्वयः स्यादित्याशयः । करणत्वेनेत्यतः प्रागर्थादिति शेषः ततश्चार्थात्सेत्स्यदपि यागकरणकत्वं यागकर्मकत्वं च शाब्दबोधे यागीयतया भासमानायां भावनायां वस्तुसत्फलगुणाभ्यां तन्त्रसम्बन्धयोग्यतापादकं भविष्यतीत्याशयेनाह । तत्रेति । नच कारकव्यवधानेनैव यागस्य भावनान्वयित्वमकारकस्य साक्षात्क्रियान्वयासम्भवादितिशङ्क्यं, नामार्थविषयत्वादस्य नियमस्य । तत्कुत इति चेत् ? भवति जानातीत्यादौ धात्वर्थस्य साक्षात्तदन्वयस्वीकरणात् प्रयाजादिभावनानामित्थमित्यव्यवधानेन प्रधानभावनान्वयाच्च । ततश्च सोमकरणिका फलकर्मिका यागीया भावनेति विनैव मत्वर्थलक्षणया बोधो घटत इत्यर्थः । यजेतेतिपदाद्यागीयतया भावनाप्रतीतिसम्भवमभ्युपेत्याह । यद्य-

यागस्य सम्बन्धमात्रं प्रतीयते तथाऽपि करणत्वेनोपस्थितिदशायां न साध्यत्वेनोपस्थितिः सम्भवति विरोधाद् विरुद्धत्रिकद्वयापत्तेश्च । तदवश्यं 'यागेन स्वर्गं भावयेत्' इति करणत्वेनान्वये सति पश्चात् 'सोमेन यागं भावयेत्' इति साध्यत्वेनान्वयो वक्तव्यः । ततश्च वाक्यभेदः । न च प्रत्ययाभिहितभावनास्वरूपे यागस्वरूपमात्रमन्वेतीति वक्तुं युक्तम्, कारकाणामेव क्रियान्वयात् । तत्सिद्धं सोमस्य न यागे सामानाधि-

---

धीति । मात्रमित्यस्यानन्तरपदादिति शेषः । अपीत्यस्य फलान्वयसिध्या इति । समानाभिधानश्रुत्यवगतविध्यन्वयवशेनेष्टं भावयेदिति भावनासाध्यत्वेनावगतस्य हि फलस्य केन भावयेदिति भावनाद्वारककरणान्वयाकाङ्क्षा न वस्तुतो यागकरणिकयापि यागीयतयोपस्थापितभावनयाऽन्वयेन शाम्यति, अतस्तच्छमनाय यागेन भावयेदित्युपस्थितिरवश्यं कल्प्या, तस्यां च न सोमापेक्षिता साध्यत्वेनोपस्थितिः सम्भवतीत्याशयः । विरोधात् । विरुद्धत्रिकद्वयापत्तेरित्यर्थः । तत्परिहाराय तन्त्रसम्बन्धत्यागेनोभयसम्बन्धस्वीकारे त्वाह । तदिति । इदानीं न पदादपि यागीयतया भावनाप्रतीतिरित्याह । नचेति । एवेति । धात्वर्थक्रियावादिभिर्विशेषणगतविभक्तेः साधुत्वार्थतां स्वीकुर्वद्भिः परैर्यथा स्तोकं पचतीत्यादौ नामार्थधात्वर्थयोरभेदान्वयं स्वीकृत्यापि भेदेन नामार्थान्वयोविभक्त्यर्थद्वारक एव स्वीक्रियते तथोक्तोदाहरणेषु धात्वर्थादेरकारकस्य भावनायामभेदान्वयेपि भेदेन तदन्वयः कारकद्वारैव स्वीकार्यः कुर्यादितिप्रतीयमानभावनया किं केनेति कारकद्वारेणैव धात्वर्थान्वयाकाङ्क्षणात् ।

करण्येन वैयधिकरण्येन वाऽन्वयः सम्भवतीति ।

ननु यजेतेत्यत्र प्रत्ययाभिहितभावनायाः करणाकाङ्क्षायां यथा यागः करणत्वेनान्वेति तथेतिकर्त्तव्यताकाङ्क्षायां सोमस्येतिकर्त्तव्यतात्वेन भावनायामेवान्वयो ऽस्तु, किं मत्वर्थलक्षणया इति चेत्—मैवम् । सोमेनेति तृतीयया करणत्ववाचिन्या सोमस्येतिकर्त्तव्यतात्वानभिधानात् । तत्र यदीतिकर्त्तव्यता-

---

तत्रान्योद्देशेन विधीयमानस्य करणत्वेनान्वयः स्वोद्देशेनान्यविधावीप्सितकर्मत्वेन उद्देश्यत्वविधेयत्वान्यतरानिर्णयात् प्रागीप्सितानीप्सितसाधारणविषयतात्मककर्मत्वेन,तस्मान्न यागीयतया प्रतीतभावेनायां युगपत् गुणफलान्वय इत्याशयः । आख्यातप्रतीतेर्व्यापारसामान्ये हीत्थमित्यभेदान्वयित्वमितिकर्त्तव्यतात्वं ततश्चेतिकर्तव्यतात्वेनान्वेतीत्यस्याभेदेनान्वेतीत्यर्थः फलितः नच सोमस्याभेदान्वय आख्यातार्थे सम्भवति कारकोपसर्जनत्वादित्याशयेनाह । नेति । ननु तृतीयैवाभेदं बोधयतु ततश्च ज्ञाप्यमानभावनानिरूपिताभेदतया भविष्यति सोमस्येतिकर्त्तव्यतात्वं तत्राह । सोमेनेति । इतिकर्त्तव्यतापदप्रवृत्तिनिमित्तस्याभेदस्यानभिधानादित्यर्थः । ननु मत्वर्थलक्षणास्थानेऽभेदलक्षणैव स्वीकार्याऽत आह । तत्रेति । गुणइति । नावमिकमिदं सूत्रं यथा "अदितिः पाशान् प्रमुमोक्त्वे तान्" इति मन्त्रे प्राधान्येन प्रकाश्यायाः पाशमोचनक्रियाया अग्नीषोमीये सम्भवत्प्रकाशनत्वादसम्भवत्प्रकाशनमपि बहुत्वमत्रयवाभिप्रायेण गुणत्वान्नीयते एवं प्रत्ययार्थं प्रधानतया यथाश्रुतमङ्गीकृत्य गुणभूतार्थबोधकप्रकृतौ मत्वर्थलक्षणाऽन्यायापि स्वीकार्येत्यर्थः ।

तात्वं लक्षणयोच्यते ततो वरं सोमपद एव प्रकृतिभूते मत्वर्थलक्षणा 'गुणे त्वन्याय्यकल्पनेति' न्यायात् ।

अथ 'वेदो वा प्रायदर्शनात्' इत्यधिकरणोक्तासंजात-

---

ननु नैतद्युक्तं यतः सत्यामपि मत्वर्थलक्षणायां प्रत्यय एव तत्स्वीकरणमुचितं सोमकरणकेनेति तथासति तृतीयया सोमगतकरणत्वाभिधानात्सोमस्य श्रौताङ्गत्वसम्भवात् सोमवतेति लक्षणायां तृतीयया यागगतकरणत्वाभिधानप्रसङ्गात् उक्तं च संस्थाधिकरणे सोमस्य श्रौताङ्गत्वं मिश्रैः सोमस्तावच्छ्रुत्या यागार्थ इति । एवं च समानन्यायेषु आरुण्यैन्द्रीसूक्तवाकेषु श्रौताङ्गत्वमरुणाधिकरणादिषु निर्दिष्टं प्रत्यये मत्वर्थलक्षणायामेव सङ्गच्छते । किञ्च प्रकृतिगतलक्षणायां पश्वेकत्वाधिकरणोक्तं पशुत्वलिङ्गसङ्ख्यानामेककारकद्वारेण क्रियान्वयित्वं व्याहन्येत ।

"गुणपक्षे विधेयत्वं सङ्ख्याकारकयोरपि" ।

इत्युद्भिदधिकरणवार्तिकं च,मत्वर्थगतयोर्लिङ्गसंख्ययोर्विभक्त्याऽभिधानप्रसक्तेः। नच सर्वविशिष्टविधौ गुणवाचकपदेषु प्रकृतौ मत्वर्थलक्षणाश्रयणं सम्भवति"दण्डं ददाति" "पदे जुहोति""अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति""अग्नये पवमानाय निर्वपेत्" इत्यादिषु द्वितीयाद्यर्थकर्मत्वादेर्मत्वर्थेऽनन्वयात् सोमवतेति यागसोमयोः सम्बन्धसामान्यावगमे सोमस्य देवतात्वेनाप्यन्वयप्रसङ्गश्च । अथ तु प्रत्यय एव मत्वर्थलक्षणोच्यते ततोवरमभेदलक्षणा "गुणानां च परार्थत्वात्" इति धात्वर्थव्यवधानमन्तरेण भावनान्वयौचित्यात् सप्तमाद्ये प्रधानभावनान्वयोक्तेश्च । उक्तं च"प्रयोगे पुरुषश्रुतेः" इत्यधिकरणे मिश्रैः "नच यागविशेषणत्वं गुणानां येन तस्यैकस्य विशिष्टस्य विधानात् वाक्यभेदः परिह्रियेत सर्वेषां भावनागामित्वात्" इति, तस्मान्मत्वर्थलक्षणा नोपपद्यते इत्याश-

विरोधित्वन्यायेनान्त्ये प्रत्यय एव लक्षणेति चेत्, तथाऽपि सोमस्येतिकर्त्तव्यतात्वेनान्वयानुपपत्तिः । सि-

---

येन शङ्कते । अथेति । यथा हि "त्रयो वेदा असृज्यन्त" इत्युपक्रमानुरोधेन "उच्चैर्ऋचा क्रियते" इति विधौ जघन्ये प्रधानभूतेप्यृगादिपदे वेदलक्षणाऽङ्गीक्रियते ऋग्वेदविहितमुच्चैरिति । तथा प्रधानभूतार्थबोधके प्रत्यक्षेपि जघन्यत्वाल्लक्षणोचितेति भावः । पूर्वपक्ष्युक्तां प्रत्ययगतलक्षणोपपत्तिमभ्युपेत्येतिकर्त्तव्यतात्वलक्षणां निराचष्टे । तथापीति । वस्तुतो न प्रत्यये लक्षणा सम्भतीतिद्योतनायापिशब्दः । न तावत्सोमकरणकेनेति लक्षणायामपि सोमस्य यागं प्रति श्रौताङ्गत्वसिद्धिः प्रोक्षिताभ्यामुलूखलमुसलाभ्याम्"इत्यत्र विधेयभावनानन्वयिकर्मत्वाभिधायिनिष्ठाप्रत्ययेनोलूखलमुसले प्रति प्रोक्षणस्येव विधेयभावनानन्वयिकरणत्वाभिधायिन्याऽपि तृतीयया सोमस्याङ्गत्वासिद्धेः स्यादपि श्रुतविधिविधेयस्य प्रोक्षणस्य तत्सहकारितया निष्ठाप्रत्ययो विनियोजकः न तु कल्प्यविधिविधेये सोमे श्रुतविधिसमभिव्याहृतायास्तृतीयाया विनियोजकत्वं, तस्मात्प्रकृतौ प्रत्यये वा मत्वर्थलक्षणां वदता ततः प्राक् ज्ञायमानं तदुपजीव्यं सोमयागसम्बन्धमपेक्ष्य सोमस्य श्रौताङ्गत्वव्यवहारो नेयः यस्य ह्यबाधितं यदङ्गत्वं प्रत्यक्षया विभक्त्याऽनधिगतं बोध्यते तस्य तदङ्गत्वं श्रौतं सा विभक्तिरतत्परा तत्परा वेत्यन्यदेतत् । जायते च "सोमेन यजेत"इतिश्रवणात्सोमेन यागं कुर्यादिति प्रथमबोधः सर्वेषां, सर्वत्राख्यातसम्बद्ध इति न्यायात् तृतीयाम्नानाच्च । न च "प्रयाजशेषेण हवींषि"इत्यत्र प्रथमोत्पन्नस्य प्रयाजशेषाङ्गत्वबोधस्य बाधात्प्रयाजशेषं क्षारयेदिति लक्षणया प्रयाजशेषप्राधान्यकल्पनावत्प्रकृते मत्वर्थलक्षणया कल्प्यमानोपि विपरीतवाक्यार्थोऽमुष्य प्रथमबोधस्य बाधात्कल्प्यते तद्बाधे शक्यासम्बद्धस्य ल-

क्षणानुपपत्तेः तादृशबोधसिद्ध्यै विध्यन्तरकल्पनाच्च । किन्तु शाखान्तराद्यागप्राप्तिमालोच्य यागविधिपरत्वेन निर्णीतस्य वचसो यागमुद्दिश्य सोमविधिपरत्वावबोधात् इत्थं चैन्द्र्यादिष्वप्यूह्यं, सोमवतेति लक्षणयापि च जायमानबोधे प्रथमात्रगतस्य लिङ्गादिविशिष्टकरणत्वस्य भानात्सोमकरणकेनेतिलक्षणायामिव सम्भवति विधेयतावच्छेदकतया संख्याकारकयोर्विधेयत्वोक्तिः सोमस्य देवतात्वाप्रसक्तिश्च सम्भवति च प्रथमबोधमनुसृत्य लिङ्गसंख्याजातीनां कारकद्वारेण क्रियान्वयित्वव्युत्पादनं, नह्येकपशुकरणकेनेति लक्षणायामपि लिङ्गादेः क्रियारूपभावनान्वयो लभ्यते च द्वितीयान्तादिगुणपदेषु लक्षणास्वीकृतेति सोमेनेत्यादिषु तथा स्वीकार्या, उद्भूतशक्त्यात्मनाऽवगतस्य क्रियान्वययोग्यस्य करणत्वस्य यागान्वययोग्यानुद्भूतशक्त्यात्मनोपस्थितिकल्पनागौरवात् तादृशोपस्थितिकल्पनापूर्वकं लक्षणोपस्थितयागान्वयकल्पनातोऽनुशासनसिद्धेत्थंभावनाभावार्थत्वाश्रयणेन तदन्वयस्वीकारौचित्याच्च । "त्रिवृता यूपं परिवीय" "पृष्ठैरुपतिष्ठते" इत्यादौ त्रिवृत्करणकेन परिव्याणेन पृष्ठकरणकेनोपस्थाने नेत्येवमर्थं स्वीकुर्वता परोपन्यस्तेत्थंभावार्थत्वपरिहाराय कारकविभक्तेर्बलीयस्त्वकथनानुपपत्तेश्च उपपदविभक्तेर्हि ततो दौर्बल्यं पदान्तरमपेक्ष्यार्थबोधकत्वादमुख्यार्थत्वात् अश्रुतक्रियागर्भान्वयबोधकत्वाद्वा त्रिवृत्करणकेनेति बोधयन्त्यां तृतीयायां च त्रयमप्येतदविशिष्टं अनुशासना सिद्धकल्पनाश्रयणं परमधिकं, द्वितीयांतादिगुणपदेषु त्वगत्या प्रत्यये लक्षणाश्रयणं धातुना करणोपस्थापितस्य मत्वर्थस्य कर्मत्वाद्यनन्वयित्वात् । यदि च प्रकृतिसंजातबोधस्य पुंसः प्रत्ययश्रवणे विरोधबुद्धिर्जायेत तदा स्यादसंजातविरोधित्वन्यायेन प्रत्यये लक्षणा, यो हि जघन्यशब्दः स्वतोमुख्यशब्दोत्थबुद्धिविरुद्धां बुद्धिमादधाति स लक्षणया नेयः यथा ऋगादिः, यस्तु

द्रव्यस्य वस्तुन इतिकर्तव्यतात्वाभावात्, क्रियाया एवेतिकर्त्तव्यतात्वात्, द्रव्यस्य केवलमङ्गत्वात्। अत-

स्वतो मुख्यशब्दबोधितार्थान्वितमर्थं बोधयन्न विरुध्यते, मानान्तरविरोधात्परं तु 'तस्मिन्, मुख्ये वा लक्षणा' इति सन्देहः, तस्य प्रधानभूतार्थत्वेन गुणभूतार्थकेऽमुख्य एव लक्षणा युक्ता। यथा हि "स द्वेष्यायादेय" इति विधिवाक्यापेक्षितविषयार्पकत्वेन गुणभूते मुख्येऽपि "तस्यैकहायनी गौर्दक्षिणा" इतिवचोऽन्तर्गते दक्षिणाशब्दे,। अत्र हि नोपक्रमोपसंहारयोः स्वतो विरोधाल्लक्षणाप्रसक्तिः, किंतु "ऋत्विगाचार्यौ नातिचरितव्यौ" इति शास्त्रविरोधात् तथा, सोमेनेत्यत्र तु प्रकृतिप्रत्ययर्योर्न स्वतो विरोधः, यागविधायकप्रत्ययसमभिव्याहाराद् लक्षणाऽऽश्रीयमाणा प्रकृतावेव वक्तुमुचिता। यद्यपि प्रत्यये लक्षणा स्यात्तथाऽपि प्रत्ययेन मत्वर्थलक्षणैवोचिता नाऽभेदलक्षणा, भावनिरूपिताभेदायोग्यत्वात्सोमस्येत्याशयः। कथं तर्हि सोमादेः फलभावनाऽन्वयित्वकथनं ग्रन्थेष्वत आह—क्रियाया इति। कल्पितविशेषणविधिबोधितायाः सोमकरणकक्रियायास्तदेकवाक्यतापन्नेन तत्प्रधानविधिना प्रधानभावनेतिकर्त्तव्यतात्वं बोधयता तद्द्वारेण करणीभूतसोमस्य फलभावनाऽन्वयापादनेनोदाहृतग्रन्थाविरोध उपपद्यते, परम् आघाराग्निहोत्राधिकरणगता सोमस्य फलभावनाकरणत्वोक्तिः, अभेदलक्षणायां साऽनुपपन्ना स्यादित्यर्थः। ननु यथाऽरुणापदस्य लक्षणया द्रव्यप्रतिपादकत्वेऽपि तत्परतृतीययाऽऽरुण्यनिष्ठमेव करणत्वं बोध्यते, तथा सोमवतेति लक्षणायामपि तृतीयायाः सोमनिष्ठकरणताबोधकत्वं स्वीकृत्योक्तग्रन्थकृतां भावनान्वयित्वोक्तिः, श्रौताङ्गत्वोक्तिश्च किं नोपपद्यतेऽत आह। द्रव्यस्येति। यथा ह्यारुण्यं क्रियान्वयित्वादेकहायन्या सह शाब्दबोधे समप्रधानतयाऽवगतमर्थादेकहायनीं प्रति प-

एवेतिकर्त्तव्यतात्वाभावाद् द्रव्यस्य प्रकरणादग्रहणम् ।

यथाऽऽहुः—

रिच्छेदकतात्मकं गुणभावं प्रतिपद्यते, नैवं शाब्दबोधे सोमस्य यागेन समप्राधान्यसिद्धिपूर्वकमर्थाद्यागे गुणत्वं वक्तुं शक्यम्, समानपदोपात्ततया भावनाकरणत्वेनावगतं यागं प्रति सोमोऽङ्गत्वेनान्वेतीति भावार्थाधिकरणसिद्धत्वादित्याशयः। (१)एकहायनीगृष्ट्यादि(२) प्रति आरुण्यं च गृष्ट्यादेरिव यागं प्रति सोमस्य तादर्थ्याभावप्रसङ्गाच्चेत्याशयः। यद्वा किमिति प्रधानविधौ सोमकरणकभावनायाः फलभावनान्वयपूर्वकं तद्ग्रन्था व्याख्यायन्ते प्रकृतविधावेव तादृगन्वयः स्वीक्रियतामत आह द्रव्यस्येति । द्रव्यं हि केवलं श्रुतं मत्वर्थलक्षणयाऽङ्गत्वेन स्वीकर्तुमुचितं न तद्विशिष्टभावनेतिकर्तव्यतात्वेन, तस्याः अत्राश्रुतत्वाद्, अध्याहाराच्च लक्षणाया ज्यायस्त्वादिति भावः। यद्वा यथा "आग्नेयोऽष्टाकपालः"इत्यत्र विद्वद्वाक्यविहितयागानुवादेनाग्निविशिष्टद्रव्यविधिर्नाश्रीयते द्रव्यदेवतयोः सम्बन्धस्य प्रागसिद्धत्वात्, तथा सोमयागयोः सम्बन्धस्य प्रागसिद्धत्वान्न सोमविशिष्टस्य विधेयता सम्भवति, अतो यजेतेत्यस्योपपद्यते इतिवच्छुद्धकर्मविधित्वमङ्गीकृत्य सोमेनेत्यस्य कल्प्यविशेषणविध्यन्वयो वक्तुमुचितः, अलं तादृशपदयुक्तविधिकल्पनया,मत्वर्थलक्षणया चेत्यत आह द्रव्यस्येति । देवतोद्देश्यकत्यागकर्मतात्मको हि द्रव्यसमवायिदेवतासम्बन्ध एकयागभावनान्वयाधीनासिद्धिः, द्रव्यदेवतयोर्यागभावनान्वयविधिपरे वाक्ये सिद्धवन्न तद्वैशिष्ट्यं शक्यते वक्तुम्, शक्यते तु भावनान्वयितया यागविधिपरवाक्ये यागसोमसम्बन्धस्य सिद्धवन्नि-

(१) एकहायनीत्यादित आरभ्य फलमुखत्वादित्याशय इत्यन्तो ग्रन्थोऽधिकः कस्मिंश्चित्पुस्तके ।

(२ एकहायनीमुष्ट्यादि प्रति आरुण्यं च मुष्ट्यादेरिवेति मातृका।

"नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः॥इति"।

तदेतदग्रे वक्ष्यामः।

किं च "सोमेन यजेत" इति हि यागस्योत्पत्तिवाक्यं नाधिकारवाक्यम्। "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यस्याधिकारवाक्यत्वात्। उत्पत्तिवाक्ये च नेतिकर्त्तव्यताकाङ्क्षा, इष्टविशेषाकाङ्क्षाकलुषितत्वेनेतिकर्त्तव्यताकाङ्क्षाया विस्पष्टमनुत्थानात्।

---

देशः, अबाधितप्रथमबोधादेव सोमादेर्विधेययागफलभावनान्वयमनपेक्ष्य यागाङ्गत्वसिद्धेः। तत्र श्रुतेन यजेतेत्यनेनान्वयं प्रति निराकाङ्क्षसोमेनेतिपदकल्प्यपदान्तरान्वयं प्रापयितुमुचितात्विशिष्टविध्युत्तरकालं तु समापतन्ती विशेषणविधिकल्पना न दोषाय फलमुखत्वादित्याशयः। अग्रे—प्रकरणनिरूपणावसरे। ननु मा भूत्सिद्धस्य सोमस्येतिकर्त्तव्यतात्वं तदनुरक्तप्रत्ययार्थस्य तु दध्यनुरक्तकारकस्य फलभावनाकरणत्ववत्संभवति फलभावनेतिकर्त्तव्यतात्वमत आह—किञ्चेति। न तावत्प्रत्ययवाच्यकारकस्येतिकर्त्तव्यतात्वसम्भवः, क्रियासाधनात्मना तृतीयाभिहितस्य क्रियायामभेदान्वयायोग्यत्वादिति दर्शयितुं प्रकृतस्यापि सोमवाक्यस्य निर्देशपूर्विका हिशब्दोक्तिः। यदि प्रत्ययलक्षिता सोमकरणिका भावना तत्त्वेनान्वेतीत्युच्येत तन्निराकरणायाह—नाधिकारेति। उत्पत्तिवाक्ये, तन्मात्रपरे वाक्ये। आकाङ्क्षेत्यनन्तरं तदन्वयमाक्षिपतीति शेषः। ननूत्पत्तिवाक्यगतानामपि नाम्नामितिकर्त्तव्यतार्थकत्वं सप्तमान्त्ये ऽभ्यधायि, तत् कथमसत्यां तत्र तदाकाङ्क्षायां स्यादत आह—विस्पष्टमिति।

तात्सिद्धं सोमस्य नेतिकर्त्तव्यतात्वेन भावनायामन्वयः।

तस्माद्विशिष्टविधावन्वयानुपपत्त्या अवश्यं मत्वर्थलक्षणा वाच्येति।

नन्वेवमपि "सोमेन यजेत" इत्यत्र न विशिष्टविधानम्, गौरवात्, मत्वर्थलक्षणापाताच्च, किं तु "दध्ना जुहोति" इतिवद् गुणमात्रविधानमस्तु, विधिशक्तेर्गुणे उपसंक्रमात्।

यथाऽऽहुः—

"सर्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे।
विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता" ॥ इति।

न च यागस्याप्राप्तत्वान्न तदुद्देशेन सोमविधानमिति वाच्यम्। "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यनेन यागस्य प्राप्तत्वात्। न चास्याधिकारविधित्वेन नोत्पत्तिविधित्वमिति वाच्यम्। "उद्भिदा यजेत पशु-

---

इतिकर्त्तव्यतान्वयाक्षेपकत्वेनेत्यर्थः। यथा हीष्टविशेषाकाङ्क्षा सत्यपि नोत्पत्तिवाक्ये तद्विशेषान्वयमाक्षिपति वाक्यान्तरादेव तल्लाभात्, तथा यत इष्टविशेषलाभस्तत एव फलवदफलसन्निधिकल्पितवाक्यान्तरैकवाक्यत्वादितिकर्त्तव्यतान्वयलाभान्न सत्यपि तदाकाङ्क्षेतिकर्त्तव्यतान्वयमाक्षिपति यद्बशाल्लक्षणाऽऽश्रीयेत। अन्वयानुपपत्त्या त्वाश्रीयमाणा सा पूर्वोक्तनयेन, त्वदुक्तदृष्टान्तेन च प्रकृतावेवोचिताऽऽश्रयितुम्। ज्योतिरादिनामस्वपि प्रकृतावेव कर्मलक्षणाऽऽश्रीयते न तु प्रत्ययेनोत्तरकालत्वादेः। प्रकृते च प्रकृतौ मत्वर्थलक्षणाया एव सम्भवात्तदाश्रयणमित्याशयः। सोमस्य, सोमसम्बन्धिनः कारकादेः। एवमपि—विशिष्टविधौ मत्वर्थलक्षणाया

कामः" इतिवद् एकस्यैवोभयविधित्वोपपत्तेः। एवं च "सोमेन यजेत" इत्यत्र न मत्वर्थलक्षणा। यदि ह्यत्र विशिष्टविधानं स्यात्तदाऽन्वयानुपपत्त्या मत्वर्थलक्षणा स्यात्। "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यत्र तु यागविधाने क्व चिन्न मत्वर्थलक्षणा। न तावदेतस्मिन् वाक्ये, 'ज्योतिष्टोमेन यागेन स्वर्गं भावयेद्' इति सामानाधिकरण्येनैव नामपदस्यान्वयात्। नापि "सोमेन यजेत" इत्यत्र यागोद्देशेन सोमविधानात्—'सोमेन यागं भावयेद्' इति।

नन्वनुवादेऽप्यस्ति मत्वर्थलक्षणा।

अत एवोक्तम्—

"विधाने वाऽनुवादे वा यागः करणमिष्यते।

---

आवश्यकत्वेऽपि। ननु विशिष्टविध्यभावेऽपि यागस्वरूपार्थतया विधावानर्थक्यादपूर्वसाधनात्मना तमुद्दिश्य सोमविधौ भवेदेव मत्वर्थलक्षणा यद्यागेनापूर्वं कुर्यात्तत्सोमवतेति, इत्यत आह—नापीति। लक्ष्यमाणाऽपि साधनता न यागविशेष्यतया लक्ष्यते गौरवात्, किन्तु विशेषणतया। ततश्च सोमेनापूर्वसाधनं भावयेदिति विनैव मत्वर्थलक्षणया वाक्यार्थसम्भव इत्याशयः। स्यादेतद् नापूर्वसाधनमुद्दिश्य विहितानामपूर्वार्थत्वं सिध्येत विशिष्टोद्देशेन विहितस्य विशेषणाङ्गत्वेऽर्थज्ञानमुद्दिश्य विहिताध्ययनस्यार्थाङ्गत्वापत्तेः। अतोऽपूर्वार्थतामिच्छतोक्तविधवचनव्यक्त्याश्रयणेन मत्वर्थलक्षणामाश्रित्यापूर्वोद्देशेन सोमविधानं स्वी-

तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति" ॥ इति। अतश्च विशिष्टविधाविव गुणविधावप्यस्त्येव मत्वर्थलक्षणेति चेत्।

मैवम्। गुणान्वयानुपपत्त्या हि मत्वर्थलक्षणाऽङ्गीक्रियते। यदा तु भावनायां धात्वर्थस्य करणत्वेनान्वयस्तदाऽन्वयानुपपत्त्या साऽङ्गीकर्त्तव्या। गुणविधौ च न धात्वर्थस्य करणत्वेनान्वयो मानाभावात्।

---

कार्यमिति शङ्कते—नन्विति। तद्वाचित्वम्, तत्प्रतिपादकताम्। न वयमुद्देश्यतावच्छेदकरूपप्रवेशेनापूर्वार्थतां धर्मेषु ब्रूमः, किन्तु साधनतयोद्दिश्य विहितानां साध्यार्थत्वनियमात्। दृश्यते चेक्षणसाधनसंस्कारस्याञ्जनादेरीक्षणार्थत्वव्यवहारः। साधनता तु फलोपधानात्मिका भाव्यशरीरनिक्षिप्ता न वेत्यन्यदेतत्। त्वन्मते परम् उलूखलतत्प्रोक्षणयोरिव व्रीहिद्रव्यस्य स्विष्टकृदादिकर्मणश्चापूर्वार्थत्वाविशेषान्न व्रीह्यनुरोधेन प्रतिपत्तिलोपः स्यात्। तस्मात् 'सोमेनापूर्वसाधनं भावयेद्' इति त्रिनैव मत्वर्थलक्षणया वाक्यार्थोपपत्तिरित्याशयेनाह—मैवमिति। ननु न व्रीहीणामिव यागस्य कर्मत्वं श्रूयते येनोक्तविधवाक्यार्थः स्यात्, यजेतेति पदात्तु भावार्थाधिकरणन्यायेन भावनायां यागस्य करणत्वेनैवान्वयप्रतीतिस्तदा मत्वर्थलक्षणाया आवश्यकत्वमत आह—गुणेति। गुणस्येति। एवेति शेषः। उभयोर्गुणधात्वर्थयोरप्राप्तत्वे प्राप्तत्वे वा भावार्थाधिकरणन्यायः, यथा सिद्धान्ते सोमवाक्ये(१), "ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्" इत्यत्र वा। गुणमात्रस्याप्राप्तत्वे तु

---

(१) न्यायेन करणत्वेनान्वय इति पाठोऽधिकः कस्मिंश्चित्पुस्तके।

न हि "दध्ना जुहोति" इत्यत्र होमस्य करणत्वं श्रूयते। तद्वाचकतृतीयाद्यभावात्। कल्प्यते इति चेन्न। गुणस्य तत्र विधित्सितत्वेन साध्याकाङ्क्षायां साध्यत्वकल्पनाया एवोचितत्वात्—'दध्ना होमं भावयेद्' इति।

न चायमस्ति नियमो 'भावनायां धात्वर्थस्य करणत्वेनैवान्वयो, न प्रकारान्तरेण' इति। षष्ठाद्यपूर्वपक्षानुत्थानापत्तेः।

षष्ठाद्ये हि "यजेत स्वर्गकामः" इत्यादौ प्रत्ययवाच्यायां वक्ष्यमाणार्थभावनायां समानपदश्रुत्या यागस्य भाव्यत्वमाशङ्क्यापुरुषार्थत्वेन परिहृतम्। यदि च धात्वर्थस्य करणत्वेनैव भावनायामन्वयस्तदा भाव्यत्वशङ्कैव नोदेतीति व्यर्थं षष्ठाद्यमधिकरणमापद्येत।

किं च वाजपेयाधिकरणे तन्त्रसंबन्ध आशङ्क्य

---

फलश्रवणे तदश्रवणे च फलमुद्दिश्य धात्वर्थमुद्दिश्य वा गुणस्यैव विधित्सितत्वान्न धात्वर्थस्य करणत्वेनान्वय इति भावः। ननु प्रकृत्यर्थान्वितस्वार्थाभिधानशक्तिः प्रत्ययगामिनी भावार्थाधिकरणन्यायेन करणत्वान्वयनियामिका वाच्या, अन्यथा ऽनेकविधान्वयविषयत्वे तस्या गौरवादत आह—नचेति। व्यर्थमिति। शब्दशक्तिमहिम्ना हि करणत्वान्वयावगमे पदश्रुत्या भाव्यत्वान्वयशङ्काया असम्भवात्तन्निराकरणं व्यर्थमित्याशयः। सत्यपि प्रकृत्यर्थान्विताभिधायित्वे प्रत्ययात् शब्दशक्तिसिद्धकरणविषयताया एव शक्यान्वयत्वावगमान्न गौरवापत्तिः। ननु भूतभव्यन्यायाच्छब्दशक्तिसिद्धमपि करणत्वमपहाय भाव्यत्वान्वयः कल्प्य इति शङ्कां निराकर्तुं षष्ठाद्यमत आह वाजपेयेति। शब्दशक्त्यनभि-

परिहृतः। धात्वर्थस्य करणत्वेनैवान्वये तन्त्रसम्बन्धशङ्कैव न स्यात्। तन्त्रसम्बन्धशङ्कापरिहारौ च व्याख्यातौ।

किं च धात्वर्थस्य न करणत्वेनैवान्वयः। गुणकामाधिकरणे आश्रयत्वेन धात्वर्थान्वयस्योक्तत्वात्।

तथा हि—"दध्नेन्द्रियकामस्य जुहुयाद्" इत्यत्र न तावद्धोमो विधीयते। तस्य वचनान्तरेण विहितत्वात्। नापि होमस्य फलसम्बन्धः, गुणपदानर्थक्यापत्तेः। नापि गुणसम्बन्धं विधत्ते, फलपदानर्थक्यापातात्। नाप्युभयसम्बन्धं विधत्ते, प्राप्ते कर्मण्यनेकविधाने वाक्यभेदापत्तेः।

यथाऽऽहुः—

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥ इति।

अत्र च कर्मपदवद् गुणेत्युपलक्षणम्। एकोद्देशेनानेकविधाने वाक्यभेदात्।

अत एव ग्रहैकत्वाधिकरणे "ग्रहं सम्मार्ष्टि"

---

त्रस्यैव कस्य चित्सम्भवन्त्यास्तन्त्रसम्बन्धशङ्कायाः सम्भवाति परिहारोऽत आह—धात्वर्थस्येति। आश्रयत्वेन—फलभावनाकरणीभूतगुणावच्छेदकत्वरूपनिरूपकत्वेन। ततश्च भावनान्वयित्वमपि नास्ति, नतरां तत्करणत्वमित्यर्थः। एकोद्देशेनेति। प्राप्तस्यैकस्यानेकसंबन्धविधाने इत्यर्थः। अन्यथा होममुद्दिश्येन्द्रियस्य विधनाभावेन प्रकृतासिद्धेः। अतएव—कर्मग्रहणस्योपलक्षणत्वा-

इत्यत्र ग्रहोद्देशेन एकत्वसंमार्गविधौ वाक्यभेदाद् ग्रहैकत्वमविवक्षितमित्युक्तम्।

(१) रेवत्यधिकरणे च "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इत्यत्र 'वारवन्तीयस्य रेवतीसम्बन्धे, अग्निष्टोमसम्बन्धे, फलसम्बन्धे च विधीयमाने वाक्यभेदाद्भावनोपसर्जनं भावनान्तरं विधीयते' इत्युक्तम्।

तस्मात्प्राप्ते होमे नोभयविधानं सम्भवति। नापि होमान्तरं विधीयते, गौरवात्, प्रकृतहानाप्रकृतकल्पना-

---

देव। गुणग्रहणोपलक्षणत्वस्य प्रकृतादन्यत्रापि फलमाह रेवतीति। "त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" इति यागं विधाय पठिते हि "एतस्यैव" इतिवचसि वारवन्तीयगुणस्य फलसम्बन्धशङ्कायां वाक्यभेदेन परिहारोऽभ्यधायि नचात्रानेकगुणानां विधित्सितत्वम्, पशूनां फलत्वात्, स्तोत्रस्याश्रयत्वात्।

ननु रेवत्यधिकरणत्वमेव दध्यधिकरणत्ववत्फलोद्देशेन विधेयं भवतु, तन्निरूपकत्वेन च वारवन्तीयमग्निष्टोमसाम कार्यमितिपूर्ववाक्यस्थवारवन्तीयान्वयान्न विधेयान्तरापत्त्या वाक्यभेद इति चेद्, न। प्रधानविधिशेषभूतेन पूर्ववचसा प्रधानयागशेषत्वेनोपस्थापितस्य वारवन्तीयस्याश्रयत्वेनान्यान्वयासम्भवात्, सप्तम्यभिहिताधिकरणत्वस्य तृतीयान्तैतच्छब्देन परामर्शासम्भवाच्च।

गौरवं प्रकटयति प्रकृतेति। करणत्वविशिष्टदध्येव

---

(१) २।२।११।

प्रसङ्गाद्, मत्वर्थलक्षणाप्रसङ्गाच्च । नापि दध्येव केवलं करणत्वेन विधीयते इति युक्तम् । केवलस्य व्यापारानाविष्टस्य करणत्वानुपपत्तेः । कर्तृव्यापारव्याप्यत्वनियमात्करणत्वस्य ।

किं तर्हि विधीयते इति चेद्, दध्नेति तृतीययोपात्तं दधिकरणत्वं फलभावनायां करणत्वेन विधीयते, प्रत्ययार्थत्वेन दध्नोऽपि तस्य प्राधान्यात् । एवं च 'दधिकरणत्वेनेन्द्रियं भावयेद्' इति वाक्यार्थः । करणत्वं च किंप्रतियोगिकमित्यपेक्षायां सन्निधिप्राप्तो होम आश्रयत्वेन संबध्यते(१) । ततश्च सिद्धो धात्वर्थस्याश्रयत्वेनान्वयः ।

---

फले विधीयतां तत्राह दध्नोऽपीति । ततश्चेति । यद्यपि संनिधिवशादेव होमस्याश्रयत्वं सिद्धम्, तथाऽ-

---

(१) अयं भावः–"दध्नेन्द्रियकामस्य जुहुयाद्" इति वाक्ये जुहोतेर्नोद्देश्यतया नवा विधेयतयाऽन्वयः, किन्तु उक्तरीत्या 'य इन्द्रियकामः स दध्ना' इति इन्द्रियकामोद्देशेन दधिविशिष्टं कारकं जुहोतिपरप्रत्ययेन विधीयते । तत्र कारकस्य क्रियापेक्षित्वादपेक्षितक्रियासमर्पणार्थं केवलप्रत्ययप्रयोगस्यासम्भवाच्च यस्मिन् कस्मिंश्चिद्धातौ प्रयोक्तव्ये जुहोतिः प्रयुज्यते तदर्थस्य सन्निहितत्वेनानुवादसम्भवात्, न धात्वन्तरम् । तदर्थस्याप्राप्तत्वेनानुवादासम्भवात् तस्यापि विधेयत्वापत्त्या वाक्यभेदापत्तेः । एवं च दध्नेति तृतीयया प्रतीयमानं कारकं किंक्रियानिरूपितमिति क्रियाविशेषापेक्षायां सन्निधानाद् बुद्धौ विपरिवर्तमानहोमक्रियानिरूपितमित्यवगमेनोक्तधात्वर्थस्य फलभावनाकरणीभूतगुणावच्छेदकत्वरूपनिरूपकत्वापरपर्यायेणाश्रयत्वेनान्वय इति ।

प्रकृतमनुसरामः । तत्सिद्धं 'धात्वर्थस्य न करणत्वेनैनान्वयः' इति, किं तर्हि क्व चित् करणत्वेन, क्वचित् साध्यत्वेन, क्व चिद् आश्रयत्वेनेति । गुणविधौ च साध्यत्वेनैवान्वयः सम्भवतीति न मत्वर्थलक्षणायाः प्रयोजनम् ।

किं च गुणविधौ मत्वर्थलक्षणायां गुणस्य धात्वर्थाङ्गत्वे किं मानमिति वक्तव्यम् । न तावच्छ्रुतिः । मत्वर्थलक्षणायां तृतीयाश्रुतिर्मत्वर्थस्यैवाङ्गत्वे मानं स्याद् न गुणस्याङ्गत्वे(१) । समभिव्याहारात्मकं वाक्यमिति चेत् । तत्किं स्वतन्त्रमेव मानम्, उत लिङ्गश्रुती कल्पयित्वा? । नाद्यः । बलाबलाधिकरणविरोधात् । तत्र हि वाक्यं लिङ्गश्रुती कल्पयित्वाऽङ्गत्वे मानमित्युक्तम् । द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यन्तरकल्पने तस्या एव वा आवृत्तिकल्पने व्यर्थः प्रयासः समा-

---

पि समभिव्याहृतधातुर्यथाप्राप्तं होममनुवदन्नाश्रयत्वेनैव तं बोधयतीति न भावनायां करणत्वेन स्वार्थबोधकत्वनियमो धातुषु सङ्गच्छत इत्याशयः । न तावदिति । मत्वर्थलक्षणातः पूर्वं यागकर्मकभावनाकरणत्वेन दध्न उपस्थितिं कुर्वती विभक्तिः सिद्धान्तन्यायेन श्रौताङ्गत्वव्यवहारं प्रवर्त्तयतीति न वक्तुं शक्यम्, जुहोतीति पदशक्तिमहिम्ना होमकरणिकाया एव भावनायाः प्रतीतेरित्याशयः । नचारुण्यन्यायोऽत्रेत्याह मत्वर्थेति । विलक्षणानुपूर्वीकल्पनमभिप्रेत्य श्रुत्यन्तरेति । श्रुतसजा-

---

(१) प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेरिति भावः ।

श्रितः स्यात्। विशिष्टविधौ चाऽगत्या तदाश्रयणम्।

किं च भवतु श्रुत्यन्तरकल्पनम्, तथाऽपि तत्सहकृतः प्रत्यक्ष एव विधिर्धात्वर्थाङ्गत्वेन गुणं विधत्ते, उत कल्पितं विध्यन्तरम्?।

कल्पितमिति चेन्न, श्रुतविधेर्व्यर्थतापत्तेः। न हि तेन तदा गुणो विधीयते, कल्पितविध्यन्तराङ्गीकारात्। नापि धात्वर्थः। तस्य वचनान्तरेण विहितत्वात्।

अथ श्रूयमाण एव विधिः कल्पितश्रुतिसहकृतो धात्वर्थाङ्गत्वेन गुणं विधत्ते इति चेत्, तर्हि तत्र कथं धात्वर्थस्यान्वयः?। करणत्वेनेति चेन्न, अन्वयानुपपत्तेः। न हि सम्भवति दध्ना होमेनेत्यन्वयः। साध्यत्वेनान्वयो 'दध्ना होमं भावयेद्' इति चेत्, न। तथा सति 'अनुवादेऽपि धात्वर्थः करणत्वेनैवान्वेति' इत्येतदुपेक्षितं स्यात्। विवक्षितवाक्यार्थश्च विनैव मत्वर्थलक्षणयाऽङ्गीकृतः स्यात्। तस्मान्न गुणविधौ मत्वर्थलक्षणा।

यत्तु 'विधाने वाऽनुवादे वा' इति वार्त्तिकम्। तत् प्रतीतिमवलम्ब्य, न वस्तुगतिम्।

तथा हि—यावद्धि "अग्निहोत्रं जुहुयाद्" इति वाक्यं नालोच्यते, केवलं "दध्ना जुहोति" इति वाक्य-

---

तीयकल्पनमभिप्रेत्य तस्याइति। तर्हितत्रेति। कल्पितश्रुत्यर्थान्वितविधिबोधावसरे किं करणत्वेनैवान्वयं वदसि अन्यथा वे-

मालोच्यते, तदा षष्ठाद्यन्यायेन(१) होमस्याभाव्यतां

(१) षष्ठाध्यायस्याधिकारप्रतिपादकत्वेन विषयाभावप्रयोज्याध्यायानारम्भत्वनिरासायारब्धेऽस्मिन्नधिकरणे "यजेत स्वर्गकामः" "चित्रया यजेत पशुकामः" "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिषु पुरुषस्य कर्तृतामात्रं प्रतिपाद्यत उत कर्मजन्यफलभोक्तृत्वरूपः स्वाम्याख्योऽधिकारोऽपीति सन्दिह्य तन्निरसनाय आख्यातैः प्रतिपाद्यमानभावनायां भाव्यतया धात्वर्थस्यान्वय आहोस्वित्स्वर्गादेरिति सन्देहे एकपदश्रुत्या शीघ्रोपस्थितस्य धात्वर्थस्यैव पदान्तरोपस्थाप्यात्स्वर्गादेर्विलम्बोपस्थितिकात्पूर्वमन्वयः । सत्येवं स्वर्गादेर्गुणत्वमभ्युपेयम् । स्वर्गशब्दस्य सुखसाधनचन्दनवनितादिषु प्रयोगदर्शनात् । तेषां च द्रव्यत्वेन कामयितुं शक्यत्वात् द्रव्यमन्तरेण च यागानुपपत्तेः । एवञ्चोक्तविधिभिः फलानभिधानेन फलभोक्तृतारूपस्वाम्याख्याधिकाराभावे नोक्तोऽध्याय आरब्धव्यः ।

तदुक्तम्—

धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते ।
स्वर्गादिः खलु वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥
भूतं च स्वर्गपश्वादि द्रव्यं भव्याय कर्मणे ।
उपदेश्यं न भूताय भव्यकर्मोपदेशनम् ॥

इति पूर्वपक्षे, सिद्धान्तः—

यजेतेत्यादौ प्रत्ययस्य आख्यातत्वलिङ्त्वरूपांशद्वयसत्त्वेन तस्मादाख्यातत्वेन भावनायाः लिङ्त्वेन च विधेः प्रतीतिः । एवं च समानाभिधानश्रुत्योपस्थितस्य विधेर्भावनायां प्रथममन्वयो भवति । विधिश्च प्रवर्तनारूपः । प्रवृत्तिहेतुव्यापारश्च प्रवर्तनेति तद्योगिता भावनायाः पुरुषार्थभाव्यकत्वे न सम्भवतीति यागातिक्रमेण सुखरूपत्वेन स्वर्गस्यैव भाव्यत्वं विधिश्रुतिबलादध्यवसीयते ।

अयम्भावः—लिङादयः प्रवर्तकज्ञानजनकाः । प्रवृत्तिश्च द्वेधा स्वेच्छाजन्या परप्रेरणाजन्या च । स्तन्यपानादौ स्वेच्छया, गामानयेत्याद्याचार्युक्तवाक्योत्तरम् 'आचार्यप्रेरितोऽहं गामानयामि न स्वेच्छया,' बालकरोदनस्थले मातुः 'बालप्रेरिताऽहं स्तन्यं ददामि न स्वेच्छया' इति प्रेरणज्ञानात् प्रवृत्तेर्दर्शनात् । तत्र शब्दश्रवणपूर्विकायां प्रवृत्तावन्वयव्यतिरेकाभ्यां प्रेरणाज्ञानस्य प्रवर्तकत्वात्,"विधिनिमन्त्रण"—इत्याद्यनुशासनाच्च लिङादीनां प्रेरणात्मकविध्यभिधायित्वमावश्यकमिति ।

ननु भवतु भावनायां प्रथमं विध्यन्वयः तथाऽपि कथं पुरुषार्थभाव्यकत्वम्। नच विधेः प्रवर्तनात्मकत्वादपुरुषार्थभाव्यकत्वे प्रवर्तनाऽनुपपत्तेर्विधिसम्बन्धादेव तत्तमिति वाच्यम्। लिङादयो हि 'गामानय' इत्यादिलौकिकव्याक्यस्थले आचार्यादिरिव 'मामेते प्रवर्तयन्ति' इत्येवंरूपं पुरुषस्य स्वकीयप्रवर्तनाज्ञानमात्रमुत्पाद्य चरितार्थाः। तत्र यदि प्रवर्तनार्थः पुरुषः प्रवृत्तिविषयस्य फलसाधनत्वं जानाति तदा प्रवर्तते न चेत् सत्यपि उक्तप्रवर्तनाज्ञाने नैव प्रवर्तते। यदि हि लिङादिभिरवश्यं पुरुषः प्रवर्तनीय इति निर्बन्धो भवेत्तदा ते प्रवर्तनां बोधयित्वा फलाभावे पुरुषस्य प्रवर्तयितुमशक्यत्वात्प्रवृत्तिविषयस्य फलसाधनतामापाद्य प्रवृत्तिपर्यन्तं व्याप्रियेरन्। नच तथा निर्बन्धे किञ्चित्प्रमाणमस्ति। लिङादिशक्तिमात्रादुत्पन्नं प्रवर्तनाज्ञानमदृष्टार्थमपि सार्थकं भवेत् न तु तावता फलवत्त्वसिद्धिरिति चेन्न।

अध्ययनविधिनाऽधीतैरक्षरैर्यथाशक्ति पुरुषस्योपकर्तव्यमिति शक्त्यनुसारेण स्वाध्यायाक्षराणि विनियुञ्जानेन सर्वे वैदिका लिङादयः पुरुषप्रवृत्तिबोधनेन विधिज्ञानेन वा करणेन स्वस्वसन्निहितार्थवादप्ररोचनानुगृहीतेन भावयेयुरिति प्रवर्तनायां विनियुज्यन्ते। ततश्च ज्योतिष्टोमादिवाक्यगतानां तेषां प्रवर्तनाबोधजननमात्रेण चारितार्थ्यं न सम्भवति। अध्ययनविधिना ज्योतिष्टोमादिवाक्यगतलिङादिप्रवर्तनाया स्वभाव्यप्रवृत्तिपर्यन्ताया लिङादीन् प्रति विधानेन कर्मसु पुरुषप्रवृत्तेरपि लिङादिभिरवश्यं सम्पाद्यत्वात्। तस्मात् स्वर्गकामवाक्ये प्रवर्तनामात्ररूपेणावगम्यमानस्याप्यस्य विधेरध्ययनविधिना कर्तव्यत्ववेषेणावगमाद्युक्तं प्रथमावगतविधिसम्बन्धबलात्पुरुषार्थभाव्यकत्वमिति।

एवं च विधिश्रुतेः, कामनायोगाच्च स्वर्गपश्वादीनामेव भाव्यत्वम् यागश्च तत्साधनमिति।

तदुक्तम्-

पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना।
अवरुद्धा न यागादि भाव्यमालम्बितुं क्षमा॥
स्वर्गादिः कामनायोगात्फलत्वेनैव गम्यते।
स्वरसात्पुरुषाणां हि कामना फलगोचरा॥ इति।

सितान्तःकरणानां भवत्येतादृशी मतिर्यद् 'दधिमता होमेनेष्टं भावयेद्' इति ।

प्रतिपदाधिकरणे(२।१।१वर्ण१)हि "सोमेन यजेत" इत्यादिषु किं 'गुणधात्वर्थयोः फलभावनाकरणत्वेनान्वय उत एकस्यैव' इति सन्दिह्य प्रधानसम्बन्धलाभाद् विनिगमनाविरहाच्च सर्वेषां फलभावनाकरणत्वेनान्वयमाशङ्क्य लाघवादेकस्यैव फलभावनाकरणत्वमित्युक्तम् । भावनाकरणत्वं हि भावनाभाव्यनिर्वर्त्तकतया । भाव्यं च स्वर्गादि नादृष्टमन्तरेणेति अनेकेषां करणत्वेऽनेकादृष्टकल्पनाप्रसङ्गः । तस्मादेकस्यैव करणत्वम् ।

---

त्यर्थः । अनेकादृष्टेति । (१) यद्यपि सिद्धान्ते द्रव्यादिनियमादृष्टकल्पनादनेकादृष्टकल्पना तुल्या, तथाऽपि दृष्टार्थद्रव्यादिविधानेन पर्यवसिते तद्विधौ द्रव्यादिकार्याश्रितेन नियमस्य फलत्वेन अदृष्टकल्पना पूर्वपक्ष्यभिमतद्रव्यादिजन्यतत्कल्पनातो लघीयसी, विधिपर्यवसानाय कल्प्यमानस्य तस्य शाब्दबोधविषयत्वकल्पनाधिक्यादिति ज्ञेयम्(२)।ननु "विधाने वा" इतिवार्त्तिकमुद्भिदधिकरण-

---

(१) होमस्य विधिविहिताधिकरणकद्रव्यप्रक्षेपात्मकस्य, यागस्य देवतोद्देश्यकद्रव्यत्यागात्मकस्य, एवं ददातीत्यादौ धात्वर्थस्य द्रव्यमन्तरेणानुपपत्त्या तदुपपत्तये 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति न्यायेन आक्षेपेण द्रव्यमात्रस्य प्राप्तौ द्रव्यविशेषविधिर्नियमार्थ इति तत्र नियमादृष्टकल्पनाऽवघातस्थलवद् । एवमेव देवतादिष्वपि इति बोध्यम् ।

(२) अयं भावः-सिद्धान्ते "दध्ना जुहोति" इत्यादीनां द्रव्यविधीनां 'दध्ना होमं भावयेद्'इति शाब्दबोधोत्तरं होमोद्देशेन दध्नः करणत्वेन द्रव्यान्तरैः पाक्षिकप्राप्तिं समीक्ष्य विधेः पाक्षिकाप्राप्तपूरकत्वे तात्पर्य-

यदाऽप्येकस्य तदाऽपि किं द्रव्यगुणयोः फलभावनाकरणत्वम्, उत धात्वर्थस्येति भावार्थाधिकरणे (२।१।१ वर्ण२)-सन्दिह्य द्रव्यगुणयोरेव भावनाकरणत्वं, 'भूतं भव्यायोपदिश्यते' इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वम्, पदश्रुतेर्बलीयस्त्वादित्युक्तम् ।

अतश्च सिद्धमेतद्वाक्यान्तरानालोचनदशायां गुणविधावपि धात्वर्थस्य करणत्वाशङ्कायां गुणपदे मत्वर्थलक्षणेति ।

यदा तु "अग्निहोत्रं जुहोति" इति होमविधायकं वाक्यान्तरमालोच्यते तदा होमस्य वाक्यान्तरेणैव विहितत्वात्तदुद्देशेन गुणमात्रं विधीयते इत्यालोचनान्न मत्वर्थलक्षणेति ।

अत एवोक्तं पार्थसारथिमिश्रैराघाराग्निहोत्राधिकरणे(२।२।४)–'फलतो गुणविधिरयं न प्रतीतितः' इति ।

यद्वा एतद्वार्तिकमधिकारविध्यभिप्रायम् । "उद्भिदा यजेत" इत्यादीनामधिकारात् । तत्र हि यागो विधी-

सिद्धान्तस्थम्, तत्र गुणविधिगतापातबोधोपन्यासस्य न प्रकृतोपयोगं पश्यामोऽत आह यद्वेति । अधिकारादिति । उद्भिद्वाक्य-

कल्पनयेतरनिवृत्तिरर्थात्सिद्धा भवति । तत्रेतरनिवृत्तेर्दृष्टप्रयोजनाभावाददृष्टं कल्प्यते । नैतावता तस्याः, तत्फलस्यादृष्टस्य वा शाब्दबोधेऽन्तर्भूततया प्रवेशः । पूर्वपक्षिणस्तु शाब्दबोधात्प्राक् सर्वेषां भावनाकरणत्वेनान्वयपर्यालोचनया करणत्वस्य चादृष्टमन्तरेणासम्भवात्प्रकृतेऽदृष्टान्तर्भावेनैव शाब्दकल्पनेति तदाधिक्यमिति दिक् ।

यताम्, उत्पत्तिवाक्यसिद्धो वाऽनूद्यताम्, उभयथाऽपि धात्वर्थस्य करणत्वेनान्वयात् तृतीयान्तस्य तद्वाचित्वम्, अन्यथाऽन्वयानुपपत्तेरिति।

तस्माद् गुणविधौ विनाऽपि लक्षणया अन्वयोपपत्तेर्न मत्वर्थलक्षणेति।

अतश्च "सोमेन यजेत" इत्यत्र न विशिष्टविधानम्, किं तु गुणमात्रविधानम्, यागस्तु "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येतस्मिन्वाक्ये विधीयते इत्येव युक्तम्। अन्यथा मत्वर्थलक्षणापत्तेरिति।

अत्रोच्यते। यद्यपि यागोद्देशेन सोमविधौ न मत्वर्थलक्षणा, तथाऽपि यागस्याप्राप्तत्वात् "सोमेन यजेत" इत्यत्र न यागोद्देशेन सोमविधानं सम्भवति। न च "ज्योतिष्टोमेन" इत्यादिना प्राप्तत्वात्तदुद्देशेन गुणमात्रं विधीयते

---

स्य प्रकृतत्वात्तत्समानन्यायानि विध्यन्तराण्यत्रामुना ग्रन्थेन विषयीक्रियन्ते इत्यर्थः। अधिकारविधिग्रहणं च स्वरूपेण धात्वर्थमनुवदतां करणत्वेन तदन्वयं बोधयतां "पौर्णमास्यां पौर्णमास्या यजेत" "वाजपेयेन यजेत" इत्यादीनामुपलक्षणार्थम्। तत्रैव वाक्ये कर्मोत्पत्तिपरतोचिता यस्य तत्परताग्राहकं शब्दान्तराद्यन्यतरत्सम्भवति। नच प्रकृताग्नीषोमीयादित्यागेनापूर्वयागविधायकं ज्योतिष्टोमवाक्यमित्यत्र किंचिन्मानम्। सोमवाक्ये तु पश्वाद्यवरुद्धेषु यागेषु अनिविशमानस्य गुणस्य सम्भवत्यपूर्वकर्मपरताग्राहकत्वम्, अतो न ज्योतिष्टोमवाक्यप्राप्तकर्मानुवादेन सोमविधिरित्याशयेन समाधत्ते अत्रेति।

इति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वानुपपत्तेः। कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः।

तस्येति। प्रकृतयागानामेव फलसम्बन्धपरतया सम्भवद्गतिकस्य नापूर्वकर्मविधित्वं सम्भवतीत्याशयः। कर्मेति। तत्स्वरूपबोधकतामात्रं ह्युत्पत्तिविधित्वमिति योजना। तच्चोक्तन्यायेन सोमवाक्ये एव सम्भवतीति भावः।

अथ सोमवाक्ये दूरस्थाविहितद्रव्यकविश्वजिदाद्यनुवादेन सम्भवद्विधेरुपादेयसोमगुणस्य न स्ववाक्ये कर्मोत्पत्तिपरताऽऽक्षेपकत्वं सम्भवति, सम्भवति तु अनुपादेयफलसम्बन्धपरज्योतिष्टोमवाक्ये विश्वजिदाद्यविपरिवृत्त्या तद्भिन्नकर्मोत्पत्तिपरत्वम्, अनन्यथासिद्धानेकवैकृतलिङ्गवशेनाग्नीषोमीयादीनां फलसम्बन्धाभावनिर्णयात्। अभ्युपगम्यते हि लिङ्गवशादेव स्वरसामस्वतिदेशनिर्णयः(१),न त्वाग्नेयादिवचोभिः क्वापि गुणवि-

(१) गवामयने "अभितो दिवाकीर्त्यं स्वरसामानः" इति श्रुतम्। तत्रत्यमासषट्कमध्यवर्तिनः प्रधानभूतस्य विषुवदित्याख्यातस्य दिवाकीर्त्यमित्यपरं नाम। तस्य पुरस्तात्पश्चाच्च स्वरसामाख्यास्त्रयोऽहर्विशेषा मिलिताः षट् भवन्तीत्यर्थः। स्वराख्यानि सामानि यत्रेति स्वरसामशब्दव्युत्पत्तिः। तेषु च ग्रहसातत्यादयः केचन धर्मा विहिताः। अन्यत्रापि "पृष्ठ्यः षडहो द्वौ स्वरसामानौ" इति श्रूयते। तत्र संशयः–एतयोर्गावामयनिकस्वरसामविकारत्वं न वेति। तत्रातिथ्येष्टिविधिगतवैष्णवशब्दवदस्यापि स्वरसामशब्दस्य सामरूपगुणविधायकत्वेनानतिदेशकत्वान्न तद्विकारत्वमिति प्राप्ते राद्धान्तः–

अनन्यगतिकलिङ्गवशादेतयोस्तद्विकृतित्वमिति। तथाहि उक्ताष्टाहे त्रिवृत्पञ्चदशसप्तदशादित्रयस्त्रिंशान्तं स्तोमषट्कम् आद्ये षडहे क्रमेण चोदकतः प्राप्तम्। तत्र तृतीयषष्ठदिवसगतयोः सप्तदशत्रयस्त्रिंशयोर्व्यत्यासं विधाय सप्तमाष्टमयोरह्नोः सप्तदशस्तोमं सिद्धवत्कृत्वा त्रिष्वन्त्येष्वहस्सु सप्तदशस्तोमनैरन्तर्यमर्थवादेन "त्रयाणां सप्तदशाना-

तेन च विहितस्य कर्मणः फलविशेषसम्बन्धमात्रमाधिकारविधिना क्रियते। फलविशेषसम्बन्धबोधकस्याधिकारविधित्वात्। यथा "आग्नेयोऽष्टाकपालो भवति" इत्येतद्विहितस्य कर्मणः फलविशेषसम्बन्धमात्रं "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्यं विधत्ते इति तस्याधिकारविधित्वं, नोत्पत्तिविधित्वम्।

स्यादेतत्। "दर्शपूर्णमासाभ्याम्" इत्येतस्य नोत्पत्तिविधित्वं सम्भवति, "आग्नेयोऽष्टाकपालः" इत्यादि-

---

धिसंभव इत्याशयेनाह स्यादेतदिति। न विश्वजिदाद्यविपरिवृत्तिमात्रवशेन ज्योतिष्टोमवाक्यस्योत्पत्तिपरत्वं यावत्स्वान्यशास्त्रविहितकर्मानुवादत्वबाधं विना तत्परताया अनिर्णयात्। प्रकृते च प्रकृतफलाकाङ्क्षयागानामेव फलसम्बन्धप्रतिपादनसम्भवात्। नच लिङ्गविरोधः। तत्र नित्यानुवादवचनानां सम्भवद्गतिकत्वात्। प्रभवति तु सोमाख्यो गुणः स्ववाक्ये सन्निहितकर्मानुवादतां दूरीकर्तुम्। भवितव्यं च कर्मान्तरदूरीकरणेन, अनुवादानां सन्निहितगामितया औत्सर्गिकत्वात्। नच विश्वजिदाद्यनुवादेन सोमविधिसम्भवः, तथा सति तद्वाक्येन सोमद्रव्यकतयाऽवगतानां सन्निहितानां सिद्धान्तरीत्या ज्योतिष्टोमपदाभिधेयत्वेन फलसम्बन्धप्रसक्तौ "य एतेनानिष्ट्वाऽथान्येन" इत्यस्य निष्फलत्वापत्तेः। ज्योतिष्टोमभिन्नसोमयागाभावात्, अतो विश्वजिदादिभिन्नस्य ज्योतिष्टोमस्यावश्यस्वीकर्तव्यतापत्तिः सोमवाक्य एव स्वी-

---

मनूचीनतायाः" इति अनुवदति। तत्रोपान्त्यान्त्ययोरह्नोः स्वरसामशब्दो यदि सप्तदशस्तोममतिदिशेत्तदैतदुपपद्येतेति अनन्यसाधारणलिङ्गवशातोऽस्य विकारता तद्वत्प्रकृतेऽपि इति भावः।

वाक्यानर्थक्यापत्तेः । न हि तेन तदा कर्म विधीयते, तस्य तदा "दर्शपूर्णमासाभ्याम्" इत्यनेन विहितत्वात् । नापि गुणविधानं सम्भवति, प्राप्ते कर्मणि अनेकगुणविधाने वाक्यभेदापत्तेः । अत "आग्नेयोऽष्टाकपालः" इत्यस्योत्पत्तिविधित्वं "दर्शपूर्णमासाभ्याम्" इत्यस्य चाधिकारविधित्वं युक्तम् ।

"ज्योतिष्टोमेन" इत्यस्य तु अधिकारविधेः "उद्भिदा यजेत पशुकामः" इत्यादिवदुत्पत्तिविधित्वेऽपि स्वीक्रियमाणे न कस्यचिदानर्थक्यम् । "सोमेन यजेत" इत्यस्य गुणविधित्वात् । यागोद्देशेन सोममात्रविधानाच्च न वाक्यभेद इति चेत्-

नैवम् । यद्यपि "सोमेन यजेत" इत्यत्र न वाक्यभेदः, तथाऽपि "ज्योतिष्टोमेन" इत्यस्मिन्वाक्ये कर्मस्वरूपे तस्य च फलसम्बन्धे विधीयमाने गौरवलक्षणो वाक्यभेदोऽस्त्येव । "सोमेन यजेत" इत्येतद्वाक्यविहितकर्मणः फलसम्बन्धमात्रविधाने तदभावात् । "उद्भिदा यजेत" इत्यत्र तु वचनान्तराभावेनागत्या तदाश्रयणम् ।

---

कर्तुमुचितेति परिहरति नैवमिति । "ज्योतिष्टोमेन स्वर्गकामः"-इति वाक्ये कर्मोत्पत्तिं वदता च "सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः" "वसन्ते ज्योतिष्टोमेन यजेत" "वसन्ते ज्योतिषा यजेत" इत्येतेषु विनिगमकाभावात् काम्यत्वेनोत्पन्नस्य नित्यत्वज्ञापने नित्यानित्यसंयोगविरोधात्सर्वेषु कर्मोत्पत्तिपरताऽभ्युपेया । ततश्चानेककर्म-

न च "सोमेन यजेत" इत्यत्रापि कर्मस्वरूपे गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम् । श्रूयमाणेन विधिना गुणस्याविधेयत्वात्(१) । विशेषणविधेरार्थिकत्वात् । सर्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः । "ज्योतिष्टोमेन" इत्यस्य तूत्पत्तिविधित्वे कर्मस्वरूपं फलसम्बन्धश्चेति उभयं श्रूयमाणेनैव विधिना विधातव्यमिति दृढो गौरवलक्षणो वाक्यभेदः ।

यथाऽऽहुः—

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् ॥

एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥ इति ।

न च "सोमेन यजेत" इत्यस्योत्पत्तिविधित्वे यद्यपि न वाक्यभेदः, तथाऽपि मत्वर्थलक्षणा स्यादेवेति वाच्यम् । तस्याः स्वीक्रियमाणत्वात् । लक्षणातो वाक्यभेदस्य जघन्यत्वात् । लक्षणा हि पददोषो वाक्यभेदस्तु वाक्यदोषः । पदवाक्यदोषयोर्मध्ये पदे एव दोषकल्पनाया उचितत्वाद् 'गुणे त्वन्याय्यकल्पना' इति न्यायात् ।

---

कल्पनापत्तिरिति गौरवं दर्शयितुं विषयभेदकृततात्पर्यभेदात्मकेऽपि वाक्यभेदे गौरवलक्षणत्वोक्तिः । अविहितत्वादिति । नन्वेवम् "एकादश प्रयाजान्" इत्यादिवचःसु श्रौतविधानलिप्सया विशिष्टविधितामाशङ्क्य 'विशिष्टविधौ वाक्यीयविधानस्यावर्जनीयत्वाद्वरं गुणविधिः' इति दाशमिकोक्तिर्व्याहन्येत, गुणस्याविधेयत्वे वाक्यीयवि-

---

(१) अविहितत्वादिति पाठष्टीकासम्मतः ।

अत एव "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यत्र 'आधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधाने वाक्यभेदात्पदद्वयाभ्यामवस्थाविशेषो लक्ष्यते' इत्युक्तम्। तस्माद्वाक्यभेदप्रसक्तौ लक्षणैव स्वीकार्य्या । तस्मात् "सोमेन यजेत" इत्ययमेवोत्पत्तिविधिर्न "ज्योतिष्टोमेन" इत्ययं गौरवलक्षणवाक्यभेदापत्तेः ।

किञ्च "सोमेन यजेत" इत्यत्र यागविधाने श्रुत्यर्थविधानं स्यात्, गुणविधाने तु वाक्यार्थविधानम् । तच्च श्रुत्यर्थविधानसम्भवे ऽयुक्तम् ।

यथाऽऽहुः—

"वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे" ।इति ।

वाक्यार्थः पदान्तरार्थ इत्यर्थः । "ज्योतिष्टोमेन"

---

ध्यप्रसक्तेरिति चेन्न ' विधेयतावच्छेदकवैशिष्ट्यस्य वाक्यलभ्यतामभिप्रेत्य तत्सम्भवात् । एवं च उत्पत्त्यादिविधिव्यापारेषु द्वित्रिचतुःसंख्याव्यापारकर्तृत्वेन तत्र तद्विधीनां सांप्रदायिकैर्व्यवस्थापनान्नार्थिकोत्पत्तिविधिकल्पना भवतीत्याशयः । द्वयाभ्यामिति । (१)जातपुत्रकृष्णकेशपदयोः प्रत्येकमनेकपदात्मकताशयम् । किञ्चेति । धात्वर्थस्य विशिष्टरूपेण विधाने हि विधेयतावच्छेदकस्य वाक्यलभ्यत्वेऽपि विधेयं श्रुत्या लभ्यते गुणविधौ विधेयतावच्छेदकविधेययोरुभयोरपि वाक्येनैव लाभ इत्याशयः । इदमपि

---

(१) जातपुत्रकृष्णकेशेतिपदद्वयस्यैकस्यैव सत्त्वेन द्विवचनानुपपत्तिमभिप्रेत्येदमुच्यते । जातपुत्रेतिपदद्वयात्मकमेकं पदं कृष्णकेशेतिपदद्वयात्मकमपरमितिपदद्वयाद्वितयाभिप्रायिकोक्तोक्तिरिति भावः ।

इत्यत्रापि फलोद्देशेन यागस्यैव विधानान्न वाक्यार्थविधानम्, तदुत्पत्तिविधित्ववादिनाऽपि तदङ्गीकाराच्च । तस्माद् "ज्योतिष्टोमेन" इत्ययमधिकारविधिरेव ।

श्रौतविधानमनेकविधिकल्पनया यद्यपि "एकादश प्रयाजान्" इत्यादौ नाश्रितं(१) तथाऽप्युक्तन्यायेनानेकवाक्येष्वनेकयागविधिकल्पनाद्वरमेकवाक्येनैकविधिकल्पनमभ्युपेत्य श्रौतविधानमिति बोध्यम् । ननु ज्योतिष्टोमवाक्ये प्राप्तयागोद्देशेनाप्राप्तफलविधाने न श्रौतविधिरत आह तदुत्पत्तीति । तस्य फलोद्देशस्य, 'यस्मिन्प्रतीतिः' इतिन्यायेन परेणाप्यभ्युपगमादित्यर्थः । यदि "भूयस्त्वेनोभयश्रुति" इति-

(१) तत्रहि–अग्नीषोमीयपशौ श्रूयते–"एकादश प्रयाजान्यजति"-इति, एवं चातुर्मास्येऽपि–"नव प्रयाजान् यजति नवानुयाजान्" इति । एवमादिषु प्राकृतविध्यन्तोऽतिदिश्यते नवेति संशयव्युदासाय एतैरेकादशत्वादिगुणविशिष्टप्रयाजादिविधिरुत प्राकृतप्रयाजाद्यनुवादेन-गुणमात्रविधिरिति विचारे चोदकेन उपकारमात्रातिदेशात्तत्प्राप्तपदार्थोद्देशेन गुणविध्यसम्भवात्सङ्ख्याविशिष्टानां प्रयाजानामेवात्र विधानम्, एवं च धात्वर्थविधानाच्छ्रुतिरनुगृह्यते । तेषां च प्रयाजादीनामपूर्वाणां विधाने उपकारस्यापि कल्प्यत्वेनाधिकगौरवापत्त्या प्राकृतानामेव क्लृप्तोपकाराणां तेषामेतैर्वाक्यैर्विधानं गृहमेधीयाज्यभागन्यायेन चोदकव्यापाराभावार्थमिति प्राकृतविध्यन्तस्यानतिदेशे प्राप्ते उच्यते—

प्रकारद्वारतः प्राप्तेरतिदेशेन कर्मणाम् ॥
तान्यनूद्य गुणः शक्यो विधातुमिति तद्विधिः ॥
नच सत्यां गतौ न्याय्यं विशिष्टविधिगौरवम् ।
वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः ॥

श्रुत्यर्थविधिलिप्सया धात्वर्थे विधित्सिते गुणवादस्याप्रमादपाठायावश्यं वाक्यार्थविधिरङ्गीकार्यः । तथा सति विधिशक्तेर्गुण उपसङ्क्रमेण अनेकविधिप्रयुक्तगौरवपरिजिहीर्षया चोदकात् उपकारद्वारा प्राप्तिमालोच्य तदनुवादेन गुणमात्रविधानस्य युक्ततया गृहमेधीयन्यायानवसरादस्ति विध्यन्तातिदेश इति सिद्धान्तः ।

अपि च कर्मस्वरूपविधिस्तत्र स्वीकार्य्यो यत्र कर्मणो रूपमुपलभ्यते। यागस्य च द्वे रूपे—द्रव्यं देवता चेति। "सोमेन यजेत" इत्यत्र यद्यपि देवता नोपलभ्यते सोमयागस्याव्यक्तत्वाद्, अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्यम्, न तु देवताराहित्यमात्रम्, "ऐन्द्रवायवं गृह्णाति" इत्यादिवाक्यविहितग्रहणदेवतानां सत्त्वात्, ग्रहणार्थाभिरपि देवताभिः प्रसङ्गतो यागोपकारस्य क्रियमाणत्वात्, तथाऽपि द्रव्यमुपलभ्यत एव, तेनापि यागस्वरूपं ज्ञातुं शक्यमेव। "ज्योतिष्टोमेन

---

न्यायेन (१)रूपवति वाक्ये यागोत्पत्तिरुचिता इति विवक्षितम्, सोमवाक्ये देवताया अश्रवणादैन्द्रवायवादिवाक्येषु द्रव्यदेवतोभयश्रवणात्तेष्वेव यागोत्पत्तिराश्रीयतामिति शङ्कां निराकुर्वन्ननुवदति यद्यपीति। न ह्यैन्द्रवायवादिवाक्येषु यागार्थतया देवताः प्रतीयन्ते येन तत्र यागविधिराशङ्क्येत। अतः सोमवाक्ये देवताश्रवणाभावो यागार्थदेवताभावाद्, न वाक्यान्तरविहितदेवताकत्वादित्याशयवानाह अव्यक्तत्वादिति। ननु देवतानामभावे यागानुष्ठानासम्भवाद्यागमनुमाय तदनुवादेन तेषु देवताविधिराश्रयणीयः, पेषणस्येव "पूषा प्रपिष्टभागः" इत्यत्रात आह अव्यक्तत्वं चेत्यादिना। ग्रहणार्थतया विहितदेवतानां यागाकाङ्क्षायां यागस्य देवताकाङ्क्षायां यागार्थत्वं

---

(१) वेदद्वयश्रुतं कर्म रूपभूयस्त्वेन विधेयतयाऽवगन्तव्यम्। यथा यजुर्वेदसामवेदयोः श्रुतस्य ज्योतिष्टोमस्य यजुर्वेदे द्रव्यदेवतरूपश्रवणाद्विधेयत्वं सामवेदे तदश्रवणाद् गुणविध्यर्थोऽनुवाद इति निर्णीयते तद्वदित्यर्थः।

स्वर्गकामो यजेत" इत्यत्र च न द्रव्यं देवता वा श्रूयते अतस्तस्योत्पत्तिविधित्वे यागविशेषज्ञानं 'यागसामान्यस्याविधेयत्वाद् विशेषस्यैव विधेयत्वाद्'इत्यादिक्लेशेन स्याद् । अतो नायं कर्मोत्पत्तिविधिः ।

नन्वेवमपि "अग्निहोत्रं जुहोति"इत्ययमपि होमोत्पत्तिविधिर्न स्याद् रूपाश्रवणात् । तच्छ्रवणाच्च "दध्ना जुहोति"इत्ययमेवोत्पत्तिविधिः स्यात् । तथा चाघाराग्निहोत्राधिकरण(पू०मी० अ०२ पा०२ अधि०५)विरोधः । तत्र हि(१) "अग्निहोत्रं जुहोति"इत्यस्योत्पत्तिविधित्वं "दध्ना जुहोति"इत्यादीनां गुणविधित्वमुक्तमिति चेत्-

सत्यम् । "अग्निहोत्रं जुहोति"इत्यत्र यद्यपि

---

(१) अस्मिन्नधिकरणे "य एवं विद्वान् पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजते" इत्यनयोः "आग्नेयोऽष्टाकपालः" इत्यादिवाक्यविहिताग्नेयानुवादकत्ववद् "दध्ना जुहोति" "पयसा जुहोति" इत्येतद्विहितकर्मसमुदायानुवादकत्वम् "अग्निहोत्रं जुहोति" इत्यस्य, एवं "सन्ततमाघारयति" "ऋजुमाघारयति" "ऊर्ध्वमाघारयति" इत्येतद्विहितानुवादः "आघारमाघारयति" इति । कर्मविधायकत्वस्य रूपाश्रवणादयुक्तत्वादित्याशङ्क्य दध्यादिवाक्यानां गुणमात्रविधायकत्वस्य गुण्यसिद्ध्याऽसम्भवेन, गुणविशिष्टगुणिविधायकत्वस्य च गौरवपराहतत्वेन कर्ममात्रविधायकत्वम् । रूपालाभस्तु न, दध्यादिवाक्येभ्यो द्रव्यलाभात्, देवतायाश्च 'अग्निर्ज्योतिः' इत्यादिमन्त्रवर्णात्प्राप्तेः । मन्त्रवर्णस्यापि-

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ॥
देवताया विधिस्तत्र दुर्बलं तु परात्परम् ॥

इत्यनेन देवतासमर्पकत्वाभिधानाद् । इति ।

रूपं नोपलभ्यते, अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वात्, तदेतदग्रे वक्ष्यामः, तथाऽपि तस्योत्पत्तिविधित्वं स्वीक्रियते, अन्यथा ऽऽनर्थक्यापत्तेः । "दध्ना जुहोति"इत्यस्य च नानर्थक्यं गुणविधित्वात् । अतः "अग्निहोत्रं जुहोति"इत्ययं कर्मोत्पत्तिविधिरिति युक्तम् । "ज्योतिष्टोमेन"इत्यस्य च नानर्थक्यम्, अधिकारविधित्वोपपत्तेः । अतः किमर्थं सम्भवति रूपवति वाक्ये कर्मविधाने तद्रहिते तत् स्वीकार्यम् ।

किं च "दध्ना जुहोति"इत्यस्य कर्मोत्पत्तिविधित्वे "पयसा जुहोति"इत्यनेनैतत्कर्मानुवादेन न पयो विधातुं शक्यते, उत्पत्तिशिष्टदध्यवरोधात् । उत्पत्तिशिष्टगुणावरुद्धे हि न गुणान्तरं विधीयते, आकाङ्क्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात् । अतस्तेनापि विशिष्टं कर्मान्तरं विधेयम् । तथा चानेकादृष्टकल्पनागौरवम् । "अग्निहोत्रं जुहोति"इत्यस्य तु उत्पत्तिविधित्वे एतद्वाक्यविहितस्य कर्मणो द्रव्याकाङ्क्षायां युगपदेव खलेकपोतन्यायेन "दध्ना जुहोति" "पयसा जुहोति"इत्यादिवाक्यैर्गुणा विधीयन्ते इति नानेकादृष्टकल्पनागौरवम् । अतः "अग्निहोत्रं जुहोति"इत्ययमुत्पत्तिविधिः, "पयसा जुहोति"

---

विनाऽपि यागोपकारकत्वस्य देवतासु कल्पनासम्भवान्नानेक-

इत्यादयस्तु गुणविधय इति युक्तम् । "सोमेन यजेत" इत्यत्र तु रूपवति वाक्ये कर्मोत्पत्तिविधाने स्वीक्रियमाणे न किं चिद् दूषणम्, पक्षद्वये ऽप्येकस्यादृष्टस्य तुल्यत्वात । तस्माद् युक्तं "सोमेन यजेत" इत्ययमेवोत्पत्तिविधिरित्यलमनया अप्रसक्तविधिनिरूपणानुगतप्रपञ्चनिरूपणचिन्तया ।

प्रकृतमनुसरामः । तत्सिद्धं 'विधिः प्रयोजनवन्तमप्राप्तार्थं विधत्ते' इति ।

स च विधिश्चतुर्विधः—उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारविधिश्चेति ।

तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः—यथा-

---

वाक्येषु यागकल्पनोचितेत्यर्थः । पक्षद्वयेऽपीति । यद्यपि परमतेऽनेकादृष्टकल्पनाऽस्ति तथाऽपि स्वमते समापतन्त्यदृष्टकल्पना तावत्परमते तुल्यैव, अधिका तु पूर्वमुक्तैवेत्याशयः ।

प्रयोगेति । यद्यप्याकरे चतुर्थपञ्चमाभ्यां प्रयोगविधिं निरूप्य षष्ठेऽधिकारविधिनिरूपणमकारि इति प्रयोगविधेः पूर्वनिपात उचितः, तथाऽप्यधिकारिणं प्रति साङ्गप्रधानप्रयुक्तेः प्रयोगविधिना कर्त्तुं शक्यत्वादधिकारिनिरूपणानन्तरं तद्व्यापारनिरूपणमुचितमित्याशयेनेदम् । कृतं चाकरेऽपि प्रकृतिविकृतिसम्बन्धिविधित्रयनिरूपणान्ते प्रयोगविधिव्यापारानिरूपणमेकादशद्वादशाभ्याम् । प्रयोज्यपरिमाणाधीननिरूपणत्वादधिकारिणस्तन्निरूपणात्प्राक् प्रयोज्यनिरूपणं तु न दोषायेति बोध्यम् । तत्रेति । मात्रशब्दो भिन्नक्रमः । कर्मस्वरूपबोधकतामात्रमुत्पत्तिवि-

धित्वमित्यर्थः। बोधस्य चानन्यसाध्यस्यैव फलत्वसम्भवादज्ञातबोधकत्वमिति लभ्यते।

अस्य च विधेः सहकारीणि मानानि प्रदेशभेदेन कृतकरिष्यमाणसूचनतया मूलकृतेहोपक्षितान्यपि सुखबोधाय प्रदर्शयामः-

तत्रोत्पत्तिविधेर्द्वे कार्ये-कर्मोत्पत्तिः कर्मभेदज्ञप्तिश्च। शब्दान्तरम्, अभ्यासः, संज्ञा, गुणः, प्रकरणान्तरम्-इत्येतानि साक्षात्प्रथमकार्ये तत्प्रणालिकया च द्वितीये सहायतां भजन्ते। संख्या तु तेषामन्यतमेन कर्मोत्पत्तिपरताङ्गते विधौ तदुत्पाद्यकर्मणि पृथक्कृत्वा निवेशस्वाभाव्येनानेकत्वं बोधयन्ती द्वितीये एव सहायतां भजते। यदि तु क्वचित्कर्तृकपालादिगता संख्या वाजिनवत्कर्मोत्पत्तिपरतां विधेरापाद्य कर्म भेदयति तत्र गुणत्वेनैव भेदकता न संख्यात्वेन पृथक्त्वनिवेशस्वाभाव्यानपेक्षणादिति बोध्यम्। कर्मेति चात्र भावनोच्यते न धात्वर्थः, तेन कस्य चिद्धात्वर्थभेदकत्वाभावेऽपि कर्मभेदकत्वव्यपदेशो नानुपपन्नः।

तत्रापर्यायधात्वन्तरनिष्पन्नाख्यातपदात्मकं शब्दान्तरं प्रसिद्धभेदधात्वर्थोपस्थापनपूर्वकं तदनुरक्तभावनां प्रतिपादयत्तद्भेदभिन्नामेव प्रतिपादयति। यथा "सोमेन यजेत" "हिरण्यमात्रेयाय ददाति" इत्यत्र। यद्यपि न गुणभूतधात्वर्थानुरोधेन प्रधानभूतभावनाया आख्यातैक्यवशेनाभिन्नतया प्रतीयमानायां भेदकल्पनमुचितम्, नचैकादृष्टकल्पनयोपपत्तावनेकादृष्टकल्पनं भावनाभेदनिबन्धनम्, तथाऽपि प्रतियोग्यधीननिरूपणस्याभावस्य प्रतियोगिभेदेनेव, अनेकविषयाधीनानिरूपणस्य ज्ञानस्य विषयभेदेनेव धात्वर्थाधीननिरूपणाया भावनाया धात्वर्थभेदेन भिन्नाया एव प्रतीतेरनेकादृष्टकल्पनागौरवं प्रमाणमुखत्वान्न दोषाय। यदि समस्ताग्नीषोमप्रातिपदिकादुत्पन्नतद्धितवदरुणादिपदेभ्यः पृथक्भूतक्रीणातिवदनेकधातुनिष्पन्नं तेभ्यः पृथग्भूतं वाऽऽख्यातपदं श्रूयेत स्यात्तदा

समूहालम्बनज्ञानवद् द्वित्वावच्छिन्नाभाववद्वा ऽनेकधात्वर्थविशिष्ट-मेकं भावनातत्त्वम् । इह तु एकैकधातुनिष्पन्नाख्यातेन निरपेक्षप्रातिपदिकप्रकृत्यर्थानुरक्ततया प्रतीयमानं भावनास्वरूपम् "अग्नये कृत्तिकायै" इत्यत्र देवताकारकवद् नैकमवगन्तुशक्यम् । अथ ज्योतिष्टोमवाक्ये याजिश्रवणं यागानुवादत्वेन स्वीकृत्य केवलभावनाविधानमुच्यते, तदनुवादेन चोक्तवाक्ययोर्धात्वर्थानुरागाविधिराश्रीयते । तन्न । फलवाक्यस्योत्पत्तिपरतायाः प्रागेव निरासाद् धात्वर्थाधीननिरूपणाया भावनायास्तदन्वयमन्तरेणानुवदितुम् अयोग्यत्वात् । अत एव शब्दान्तरगुणयोर्भेदकतायां विशेषसिद्धिः । गुणो हि पूर्वगुणानुरक्तरूपेण सम्भवदनुवादेऽपि यागादौ निराकाङ्क्षत्वादिना निवेशमलभमानो भेदको भवति । शब्दान्तरन्तु धात्वर्थाननुरक्तरूपेणासम्भवदनुवादां भावनां धात्वर्थानुरक्तरूपेण बोधयत् पूर्वनयेन भेदयतीति ।

वस्तुतस्तु ज्योतिष्टोमवाक्यादिविहितभावनाननुरञ्जकत्वेन वाक्यान्तरयोर्ज्ञाप्यमानौ धात्वर्थौ करणत्वेनान्वयं प्राप्नुत इति वाच्यं विधेयत्वात् । तत्तद्वाक्ये निरपेक्षकरणतयाऽवगतयोश्च ज्योतिष्टोमवाक्यगतयाजिना लक्षणया युगपदुपादानात्करणयोः फले समुच्चय इति वाच्यम् । न च करणभेदो भावनाभेदमन्तरेण सम्भवति । सैव हि भावनेत्युच्यते यद्व्यापारव्याप्यतामप्रतिपन्नं करणत्वाभिमतं करणतां प्रतिपद्यते । दृश्यते च करणभेदे तदनुग्राहकव्यापारभेदो लोके । एवं च ज्योतिष्टोमवाक्येऽपि भावनाभेदः स्यात् । एवं च निराकाङ्क्षेऽन्वयासम्भवस्य गुणशब्दान्तरयोस्तुल्यत्वात्किमिति मानान्तरव्यवहार इति न शङ्क्यम् । स्वरूपेणाविधेयाया भावनाया एकहायनीपिङ्गाक्षीशब्दयोस्तत्तद्रूपेण द्रव्यस्येव धात्वर्थानुरक्तरूपेण विधेयत्वस्योभयत्र सम्भवे केन नैराकाङ्क्ष्यमित्यत्र विनिगमकासम्भवाच्च । यद्धि परान्वयमपेक्ष्य

विधिर्गोचरयति. सम्भवति तस्य बहुष्वपि वचःसु बह्वन्वयमपेक्ष्य विधिना बहुकृत्वो विषयीकरणम् । यत्र तु "चतुरवत्तं जुहोति" इत्यादौ सत्यपि शब्दान्तरे प्रकृतभावनाभ्यो यागीयहविःसम्बन्धेन जुहोत्यर्थे यागांशे प्रकृतबुद्धिर्नापैति तत्रापि प्रक्षेपभावनायाः प्रकृतभावनाभ्यो भिन्नाया विधेयत्वादस्त्येव कर्मभेदः, अपूर्वभेदः परं नास्ति, "यैस्तु द्रव्यं चिकीर्ष्यते"(१) इति न्यायेन प्रक्षेपस्य गुणकर्मत्वात् ।

गुणासंक्रान्तविधिशक्तिकं समानार्थधातुनिष्पन्नमाख्यातान्तरमभ्यासः । स च धात्वर्थभावनयोरुभयोर्भेदं बोधयति अन्यथा वैयर्थ्यापातात् । यथा "समिधो यजति तनूनपातं यजति" इत्यत्र । न चात्र समिदादिदेवतासु विधिशक्तिसंक्रमः शङ्क्यः, सति यागभेदे क्रमविनियुक्तमन्त्रप्रख्यापितदेवतासम्बन्धं निमित्तीकृत्य समिदादिपदानां नामत्वेन गतिसंभवे धात्वर्थविधिं परित्यज्य गुणविधेरन्याय्यत्वात् । नच "वसन्तमृतूनाम्" इत्यादिमन्त्रलिङ्गेन वसन्तादिदेवतानामपि प्राप्तेर्न समिदादीनामेव देवतात्वप्राप्तिरिति शङ्क्यम् । सत्यपि देवतान्तरे समिद्देवतासत्त्वमात्रेण समित्पदस्य नामत्वोपपत्तेः । अन्यथा ऽग्निहोत्रपदे ऽप्यनुपपत्तेः ।

वस्तुतस्तु "आज्यस्य व्यन्तु" इति प्रदेयहविःसम्बन्धित्वेन सामिधां प्रकाशनाद्यथा देवतात्वं प्रतीयते नैवं वसन्तस्य, प्रीतेर्देवतात्वं विनाऽपि सम्भवात् । यथा च विहितानुवादिवाक्यं विध्यनुसारेण नेतुमुचितम् एवं कृतानुमन्त्रणमन्त्रः

(१) 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते तस्य द्रव्यप्रधानत्वात्' । इति सम्पूर्णं सूत्रम् ( पू०मी०अ०२पा०१सू०८ ) अस्यार्थः—यैः कर्मभिः द्रव्यं संस्कार्यत्वेन चिकीर्ष्यते तत्र धात्वर्थो गुणः प्रतीयेत तस्य धात्वर्थस्य द्रव्यप्रधानत्वाद् द्रव्यं प्रधानं यस्य तत्त्वात् । यथा "व्रीहीनवहन्ति तण्डुलान् पिनष्टि' इत्यादौ वितुषीभावादिरूपदृष्टफलसंभवान्नादृष्टकल्पनेति ।

करणमन्त्रानुसारेण नेतुमुचित इति समिदादीनामेव देवतात्वकल्पनमुचितम् । अत एव प्रयाजानुमन्त्रणानामदृष्टार्थत्वेन समुच्चयमङ्गीकृत्य पञ्चमे क्रमानियमः सिद्धान्तितः(२) । तस्माद्युक्तो भेदः । यागयोर्भेदव्यवहारश्च प्रयोगकृतः स्वरूपकृतो जातिकृतो वेत्यन्यदेतत् ।

यत्र त्वभ्यासेन कल्प्यमानकर्मान्तरस्य न स्वरूपलाभः, तत्र प्रकृतानुवाद एव स्वीक्रियते यथा, "य एवं विद्वान्पूर्णमासीं यजते", "य एवं विद्वानमावास्यां यजते" इति विद्वद्वाक्ययोः । यद्यपि ध्रौवमसंयुक्तोत्पन्नमुपांशुयाजेनैवैतद्वचोविहिताभ्यां कर्मभ्यामपि लभ्यते, तथा ऽपि न देवतालाभः, तद्विशेषसाधकमानाभावात् । नच "वार्त्रघ्नी पूर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्"इत्यत्र पूर्णमास्यमावास्यापदाभ्यामिमे कर्मणी अनूद्य मन्त्रविधानान्मान्त्रवर्णिकदेवतालाभः शङ्क्यः । आज्यभागयोरनुवाक्यान्तरकल्पनाक्लेशापत्तेः । अनयोश्च कर्मणोर्याज्याकल्पनापत्तेः । आसामृचामन्यतमयोर्याज्यात्वकल्पने ऽनुवाक्यासमाख्याविरोधापत्तेः । द्वयोर्द्वयोरनुवाक्ययोरेकैकस्मिन्कर्मणि अन्याय्यविकल्पापत्तेश्च । लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेन प्र-

(२) दर्शपूर्णमासयोर्याजमानकाण्डे "वसन्तमृतूनाम्"इत्यादयः प्रयाजानुमन्त्रा आम्नातास्तेषां नियतः क्रमोऽभ्युपेय आग्नेयोपांशुयाजाद्यनुमन्त्रणादिषु तन्नैयत्यदर्शनादिति चेन्न । क्रमनियामकस्यात्राभावात् । न च पाठो नियामकः, शाखाभेदेन पाठव्यत्ययदर्शनात् । नाप्यर्थो यवागूपाकन्नियामकः । अनियमस्वीकारेऽत्र यवागूपाकवदनुपपत्त्यभावात् । तत्तद्यागीयविशेषादर्शनाल्लिङ्गस्याप्यसामर्थ्यात् । नच वाजपेयिकपशुसंस्कारन्यायेन प्रवृत्तिक्रमेण समिदनुमन्त्रणाय गृहीतमन्त्रकशाखास्थानामेव मन्त्राणां तनूनपादादीनामनुमन्त्रणामिति वाच्यम् । शास्त्रविहितप्रत्यासत्त्यनुग्राहकत्वेन प्रवृत्तिक्रमस्य अनेकशाखागतोक्तानुमन्त्रणमन्त्रेषु प्रत्यासत्त्या अविधानादप्रवृत्तेरिति ।

तीयमानानां वाक्येनान्यत्र विनियोगायोगाच्च । आज्यभागाङ्गत्वेन प्राप्तानां मन्त्राणां पूर्णमास्यमावास्ययोः कालयोः कर्मणोर्वा व्यवस्थापनेन नियमविधित्वे सम्भवति तदङ्गत्वबाधेनान्याङ्गत्वापूर्वविधेरन्याय्यत्वाच्च । अथ यदाग्नेयादिवाक्येष्विमे अनूद्य द्रव्यदेवताविधानाद् रूपलाभ इत्युच्येत । तन्न । प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदात्, आग्नेयवचस्युद्देश्यद्वयनिमित्तस्य वाक्यभेदस्यावर्जनीयत्वाच्च । अथ "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इत्यत्र दर्शपूर्णमासपदनिर्दिष्टयोर्विद्वद्वाक्यस्थकर्मणोश्चतुर्थ्या सर्वे कामा देवतापरत्वेनोच्यन्ते इति चेत् । न । "एकैकस्मै कामायान्ये यज्ञक्रतवः" इत्युपक्रमगतश्रुत्यनुसारेणास्याश्चतुर्थ्यास्तादर्थ्यचतुर्थ्यर्थत्वेन देवतापरत्वासम्भवात् । अथासंयुक्ताज्यस्योक्तन्यायेनैतयोः कर्मणोर्हविष्ट्वेनात्रगतस्यानुवादेन "सर्वस्मै वा एतद्यज्ञाय"इति वचसि चतुर्थ्या सर्वयज्ञात्मकदेवताज्ञापनान्नानुपपत्तिरिति चेन्न । तथा सत्युपांशुयाजेऽपि चतुर्थीसमर्पितदेवतया मान्त्रवर्णिकदेवताबाधे सति "विष्णुरुपांशु यष्टव्यः" इत्यादिनिर्देशानुपपत्तेः । जौहवौपभृतवचःसु प्रयाजानुयाजपदोत्तरचतुर्थीवदिहापि चतुर्थ्यास्तादर्थ्यपरत्वौचित्याच्च । अथाव्यक्तत्वसामान्येन सौमिकविध्यन्तातिदेशादनयोरुद्भिदादिवद्धवतु देवतालाभ इति चेन्न । दर्शविधिगतविध्यन्तेन निराकाङ्क्षीभवद्भिर्दीक्षणीयादिभिर्विशिष्टां भावनां विदधतः सोमविधेर्विध्यन्तेन निराकाङ्क्षीभवद्भ्यां कर्मभ्यां विशिष्टां भावनां विदधति दर्शविधौ परस्पराश्रयापत्तेः । तादृशभावनाया ऐष्टिकप्रातःकाले ऽनुष्ठानानुपपत्तेश्च । प्रतिपद्यप्रविष्टायां यदीष्टिः समाप्यते पुनः प्रणीय कृत्स्नेष्टिः कर्त्तव्येति वचोवैयर्थ्यापत्तेश्च । नचैवमपि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्ये स्वर्गकामपदं सर्वकामवाक्यप्राप्तानुवादमाश्रित्य "दर्शपूर्णमासाभ्याम्" इत्येतद्भवत्यनयोर्देव-

तासमर्पकं चतुर्थ्यन्तस्याप्येवंरूपसंभवादिति वाच्यम् । तथा सति हि प्रयाजादिविधेः सर्वकामविध्येकवाक्यत्वकल्पनेनैव प्रयाजादीनां दर्शाद्यङ्गत्वं सिध्येत् । नच सन्निहितगोदोहनादिविध्येकवाक्यतया नैराकाङ्क्ष्यसम्भवे दूरस्थेनैकवाक्यत्वकल्पना घटत इति तेषां तदङ्गत्वं न स्यात् । यदि वा स्याद् विद्वद्वाक्यविहितयागाङ्गत्वे विकार एव स्यात्, सर्वकामवाक्यगतदर्शपूर्णमासपदस्य तत्प्रख्यन्यायेन(१) तन्मात्रनामत्वात् । तथा सत्याग्नेयदर्शनानुपप-

---

(१) तन्न्यायबोधकं सूत्रं यथा—"तत्प्रख्यं चान्यशास्त्रम्" इति । तस्य विधित्सितस्य गुणस्य प्रख्यं प्रख्यापकं प्रापकमिति यावत्, अन्यशास्त्रं चेदस्ति तद्गुणसमर्पकत्वेनाभिमतः शब्दः कर्मनामधेयं भवतीति तदर्थः ।

यथा "अग्निहोत्रं जुहोति" इत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयता । ननु नेदं युक्तम् अप्रसिद्धकर्मनामत्वकल्पनापेक्षया प्रसिद्धत्वेन प्रवृत्तिविशेषकरत्वेन च गुणविधानस्यैव न्यायानुसृतत्वात् । नच वाच्यम्–अग्निहोत्रशब्दस्य क्वचिदप्यप्रसिद्धिरिति । समुदायस्य क्वचित्प्रसिद्ध्यभावेऽपि अवयवाग्निशब्दस्यार्थविशेषे प्रसिद्धत्वेन तद् आदायैव समुदायस्य प्रसिद्धार्थकत्वसम्भवात् । किञ्च नामधेयत्वे रूपराहित्यप्रसङ्गः । नच "सर्वस्मै वा यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इत्यनेन ध्रौवाज्यस्य साधारणत्वेन रूपवत्त्वसिद्धिरिति वाच्यम् । उक्तरीत्या द्रव्यलाभेऽपि देवतायाः सर्वथाऽलाभात् यागस्य च द्रव्यदेवतोभयात्मकत्वात् । ननु गुणविधित्वे मत्वर्थलक्षणापत्त्योद्भिदधिकरणविरोधेन तस्य नामता । नच होत्रशब्दं भावार्थकत्रन्प्रत्ययान्तमाश्रित्य 'अग्नये होत्रम्' इति व्युत्पत्त्या कर्मसामानाधिकरण्यसिध्या न मत्वर्थलक्षणाऽऽपत्तिरिति वाच्यम् । चतुर्थीतत्पुरुषस्य प्रकृतिविकृतिभाव एव नियमनेन तस्यात्राप्राप्तेः । नापि कर्मसाधनत्वेन हविष्परकं स्वीकृत्य बहुव्रीहिणा कर्मसामानाधिकरण्योपपादनं युक्तम् । वैयधिकरण्ये बहुव्रीहेरनाश्रयणादिति चेन्न । "सप्तमीविशेषणे" इति सूत्रस्य सामान्यतो ज्ञापकत्वमाश्रित्य वैयधिकरण्येऽपि उक्तसमासस्य साधुत्वेन बहुव्रीहिणैव मत्वर्थकोडीकाराल्लक्षणाया अप्राप्तेः । इति चेन्न । गुण-

त्ति (१), अतस्तृतीयान्तचतुर्थ्यन्तयोस्तुल्यरूपत्वेऽपि प्रकृते तृतीयान्तत्वमेव वक्तुं युक्तम्। तस्मान्न यागविधिः संभवतीत्यवगतपूर्णमास्यमावास्यासम्बन्धानां यजीनां समुदायावाभ्यां वचोभ्यामनूद्येते। नच वैयर्थ्यम्। एतद्वाक्यावगतसमुदायद्वित्वाभिप्रायेण निर्ज्ञातार्थके "दर्शपूर्णमासाभ्याम्" इति पदे सति तत्समानाधिकरणेन यजिना आग्नेयादीनां केषांचिदेव फलसम्बन्धसिद्धेः। अन्यथा ह्युत्पत्तौ कालयोगिषु द्विवचनासम्भवात्, द्वित्वयोगिषु चाज्यभागादिषु प्रातिपदिकासंभवात्, अनिर्ज्ञातार्थके तस्मिन् यजिना सन्निहितानां सर्वयागानां फलसम्बन्धः स्यात्। नच यागान्तरव्यावृत्तेन नित्यवद् द्विदेवत्यत्वैकादशकपालद्रव्यकत्वात्मकैकोपाधिनाऽग्नीषोमीयैन्द्राग्नयोर्द्वित्वव्यपदेशार्हत्वात्तयोरेव स स्यादिति शङ्क्यम्। ततोऽप्येकविधदेवता(२)हविरन्वयिनोराग्नेययोर्भेदमते झटिति तदर्हत्वप्रतीतेः। स्यात्तर्हि तयोरेव फलसम्बन्ध इति चेत्। न। यतो द्वित्वान्वयिनोरपि कालसम्बन्धं निमित्तीकृत्य प्रातिपदिकाभिधेयत्वं कल्प्येत, क्लृप्तं तु तद् विद्वद्वाक्यविहितयोः। तद्गतयोरसप्तम्यन्तयोः पूर्णमास्यमावास्यापदयोर्नामत्वेनैवाग्निहोत्राघारवत्प्रतीतेः, संभवति च तयोर्विद्वत्पदोपाधिनैव द्वित्वान्वयित्वम्। भवेद् अनयोरेव तर्हि प्राधान्यमिति चेत्, न। यतोऽनयोः प्रातिपदिकप्रकृतौ क्लृप्तायामपि द्विवचननिर्देशो विधिवाक्यद्वारकं विद्वत्पदसंबन्धं निमित्तीकृत्य कल्प्यः, आज्य-

विधानं स्वाक्रियमाणे वाक्यार्थविधानं स्यात्। तच्च सम्भवति श्रौतार्थविधाने अयुक्तम्। तदुक्तम्—वाक्यार्थविधिरन्याय्यः श्रौतार्थविधिसम्भवे। वाक्यार्थः पदान्तरार्थः इति। किञ्च विधित्सितोऽग्निरूपो गुणो मन्त्रवर्णाद् "अग्निर्ज्योतिः—" इत्यादेः प्राप्त इति न विधातुं शक्यते, तस्मादग्निहोत्रशब्दः कर्मनामधेयमिति।

(१) प्रयाजादीनां दर्शार्थत्वानुपपत्तिरितिपाठोऽधिकः पुस्तकान्तरे।

(२) एकविधिदेवतेति पाठः पु०।

भागयोश्च द्वित्वान्वये क्लृप्ते ऽनुवाक्याद्वारककालसम्बन्धं निमित्तीकृत्य कर्मधारयेण प्रातिपदिकप्रवृत्तिः कल्प्येति विनिगमकाभावो भवेत्तर्हि स्ववाक्ये वाक्यान्तरे वाऽवगतकालसम्बन्धानामेव यागानां फलसम्बन्धः, तत्र प्रातिपदिकसंभवात् । नच द्विवचनानुपपत्तिः । समुदायगतस्यैव कालगतस्य द्वित्वस्योक्तिसंभवात् समुदायकालयोर्गुणत्वाविशेषादिति चेत् न, समुदायसमुदायिनोरनतिभेदेन समुदायगतसङ्ख्यायाः समुदायिगतत्वोक्तिसंभवात्, कालस्य तु भेदात् । नन्वनतिभिन्ननिष्ठस्येवातिभिन्ननिष्ठस्यापि धर्मस्य नान्यत्रासंभवः, षष्ठे(१) द्रव्यभेदे ऽपि क्रियाभेदाभावोक्तेः । रूपभेदेन संभवासंभवयोरुपपादने विशेष्यतावच्छेदकीभूतरूपावच्छेदेनान्यत्र दृष्टः संख्यान्वयः प्रकृते ऽनुपपन्नः । नहि समुदायसमुदायिनोरभेदे ऽपि समुदायरूपेणान्वययोग्या संख्या यागरूपेणान्वेतीति वक्तुं शक्यम् । तस्माद्विशेष्यभूतप्रकृत्यर्थगतत्वायोगे

---

(१) षष्ठे तृतीयपादीयतृतीयाधिकरणे प्रतिनिधिविचारप्रस्तावभूते दर्शपूर्णमासादिषु मुख्यासम्भवे समाश्रीयमाणं नीवारादिद्रव्यं क्रियां भिनत्ति नवेति विचारे द्रव्यस्य क्रियारूपत्वेन रूपभेदे रूपिणोऽपि भेदावश्यंभावात्प्रतिनिधीयमानं द्रव्यं प्रकृतात्कर्मणः कर्मान्तरत्वमापादयति । तदुक्तम्—

द्रव्यस्यैव क्रिया नाम रूपं नार्थान्तरं ततः ॥
तदात्मनश्च तद्भेदे न भवेद्भिन्नता कथम् ॥

इति प्राप्त उच्यते—क्रियाया जात्यादिवदाश्रयव्यक्तिभेदेऽपि अभिन्नबुद्धिविषयतया द्रव्यभेदे ऽपि एकत्वान्न तस्या भेदकं प्रतिनिधिद्रव्यमिति ।

तदुक्तम्-

तदात्मनोऽपि त्वस्यैव व्यतिरेकः क्रियानपि ॥
जातिवद् गुणवच्चातस्तद्भेदेऽपि न भिद्यते ॥ इति ।

सत्यानर्थक्यतदङ्गन्यायेन(२) विंशतिर्गाव(३) इत्यत्र विंशतिपदोत्तरविभक्त्यभिहितैकत्ववद् द्वित्वमपि विशेषणे समुदाये ऽन्वेतीति वाच्यम्, तुल्यं च विशेषणत्वं कालेऽपीति किमिति तद्गतसङ्ख्याऽभिधानमिति चेत् न। यतो न वयमनतिभेदात्समुदायगतसङ्ख्यायाः समुदायिषु संभवं ब्रूमः, किंतु "राजसूयेन यजेत"इत्यादौ विशेषणान्वयिसंख्याया विशेष्यान्वयोक्तिदर्शनात्प्रकृतेऽपि विशेषणगतसंख्याया विशेष्यान्वयं स्वीकुर्वतः केन संसर्गेण विशे-

---

(२) वाजपेयप्रकरणे "सप्तदशारत्निर्वाजपेयस्य यूपो भवति" इति श्रुतम्। तत्र सप्तदशारत्निशब्दोदितस्योर्ध्वमानस्य वाजपेयाङ्गता सान्निध्यात्, किञ्च प्रकरणस्याप्येवमनुग्रहः। नच कर्मणोऽमूर्तत्वेन नोक्तमानसम्बन्धार्हतेति वाच्यम्। साक्षात्सम्बन्धानर्हत्वेऽपि परम्परया तत्सम्बन्धिखादिरमूर्ध्वं यत् षोडशिपात्रं तत्र सम्बन्धद्वारा तस्य तदर्हत्वात् इति चेन्न। सप्तदशारत्निर्यूप इति सामानाधिकरण्याद् यूपेन तस्य साक्षादन्वयः। सच यूपः पशोरङ्गमिति तद्द्वारा मानमपि पशोरङ्गम्। पशोश्च वाजपेयाङ्गत्वात्पशुद्वारा तद् वाजपेयाङ्गम्। वाजपेये च सत्यपि सान्निध्ये यागस्य साक्षादन्वयायोग्यत्वात् परम्परान्वये स्वीकर्तव्ये उक्तरीत्या लक्षणाश्रयणं विनैतस्य स्वीकार उचितः। अन्यथा यूपशब्दस्य षोडशिपात्रावाचकत्वेन षोडशिग्रहलक्षणाऽऽश्रयणीया स्यात्। प्रकरणं तूक्तरीत्या वाजपेयसम्बन्धेनाविरोधिवाजपेयस्येतिश्रूयमाणषष्ठ्याः सम्बन्धमात्रशक्तत्वेन परम्परासम्बन्धस्यापि तच्छक्यार्थत्वाद् इति। तदुक्तं सूत्रकृता—आनर्थक्यात्तदङ्गेषु इति। प्रधानेऽङ्गस्य आनर्थक्यात्तदङ्गेषु प्राजापत्यादिपशुषु निविशते इदं वाक्यमित्यर्थः।

(३) विंशतिपदोत्तरैकवचनस्य 'प्रत्ययानां मुख्यविशेष्यतासम्बन्धेन प्रकृतिजन्योपस्थितिविषयान्वितस्वार्थबोधकत्वम्' इति व्युत्पत्तेर्विंशतिपदजन्योक्तसम्बन्धावच्छिन्नोपस्थितिविषयताश्रयतत्सङ्ख्याकव्यक्त्यन्वितस्वार्थबोधकत्वं वक्तव्यम्। तच्च प्रकृत्यर्थस्य एकत्वविरुद्धविंशतित्वसङ्ख्यावरुद्धत्वेनासम्भवीति उक्तसङ्ख्याकव्यक्तिसमुदाये विशेषणीभूते यथाऽन्वेति एवं प्रकृते विशेष्येऽन्वयबाधात् विशेषणेऽन्वयः शिखी ध्वस्त इत्यादिवदिति बोध्यमिति दिक्।

षणगतसंख्याया विशेष्येऽन्वय इति शङ्कायां स्वाश्रयतादात्म्येनेति वक्तुम् अनतिभेदमुदाहराम: । नचेत्थमतिभिन्नकालादिगतसङ्ख्यादेरन्यान्वयित्वं क्वचिद् व्युत्पन्नं यदुपपादनाय स्वाश्रयवृत्तित्वादिसम्बन्ध आश्रीयेत । "समिधो यजति" इत्यत्र तु यजिसामानाधिकरण्याय समित्पदोत्तरविभक्त्या यागलक्षणामाश्रित्य विभक्त्यभिहितबहुत्वस्य मन्त्रदृष्टदेवतान्वयबाधाय विभक्त्यन्तस्यैव यागनामत्वाङ्गीकाराच्च संख्याया यागान्वयित्वम् । नचैवं दर्शपूर्णमासपदे ऽपि शङ्क्यम् । केवलदर्शपदस्य तत्पर्यायस्य चैकवचनान्तस्य तत्र तत्र कर्मणि प्रयोगदर्शनेन प्रातिपदिकस्यैव कर्मनामतायास्तत्र वक्तुमौचित्यात् । तत्सिद्धमाग्नेयादीनां केषांचिदेव फलसंबन्धाय समुदायानुवादाविति ।

नन्वेवं "विष्णुरुपांशु यष्टव्यः" इत्यादिवाक्यत्रयेण यागत्रयस्य विधिप्रतीतेः " उपांशुयाजमन्तरा यजति " इत्यत्रत्ययागान्तरस्य रूपाभावः, विष्ण्वादिलिङ्गकयाज्यानुवाक्यायुगलत्रयस्य यागत्रयेण लिङ्गक्रमाभ्यामन्वयात्, अतोऽन्तरालवाक्यं समुदायानुवादेनान्तरालविधायकमनुवादमात्रं वा स्यादिति चेत् न । जामित्वोपक्रमेणाजामित्वोपसंहारेण च प्रतीयमानैकवाक्यतया विधित्रयाङ्गीकारे बाधप्रसङ्गात् । उक्तोपक्रमेण पुरोडाशान्तराले किंचिद्विधित्सितमिति निर्णीते किं तदित्याकाङ्क्षायामन्तरालसम्बन्धे एव वचसि यागविध्यौचित्यात् । नच तथापि दध्यादिवाक्यप्राप्तहोमसमुदायानुवादकमग्निहोत्रवाक्यं स्यात् ऐन्द्रवायवादिवाक्यप्राप्तयागसमुदायानुवादत्वं च सोमयागवचसि स्यादिति शङ्क्यम् । मूल एवोभयेषां वचसां होमयागविधायकत्वस्य प्राङ्निरासात् ।

प्रकृतकर्मनाम्नः पर्यायत्वेन तदेकदेशत्वेन चाप्रतीयमानं वाक्यान्तरगतं नाम संज्ञेत्युच्यते । तद् धात्वर्थज्ञापनमुखेन भा-

वनाभेदं बोधयति । यथा "अथैष ज्योतिः" इत्यत्र पूर्वज्योतिष्टोमाद् ज्योतिःसंज्ञया कर्मान्तरत्वसिद्धिः । नच दर्शामावास्याशब्दयोरन्वारम्भणीयावाक्यशेषेणेव ज्योतिर्ज्योतिष्टोमशब्दयोः केनचित्पर्यायत्वं ज्ञायते, नापि "वसन्ते वसन्ते ज्योतिषा" इत्यत्र ज्योतिष्टोमप्रकरणपठिते वचसि सत इवात्रत्यस्यापि ज्योतिःशब्दस्य ज्योतिष्टोमनामैकदेशत्वम् । अधिकारार्थेनाथशब्देन ज्योतिष्टोमाधिकारनिवृत्तेः । तदधिकारानुवृत्तौ हि 'नामैकदेशे नामग्रहणम्' इति वक्तुं तत्रैव युक्तं नान्यत्र । नच "अथैष भ्रूवैश्वदेवः" इत्यत्र भ्रूवैश्वदेवशब्दयोरिवानयोरेकवाक्ये निर्देशोऽस्ति, येन सामानाधिकरण्यादेकार्थत्वं स्यात् । अनुभूयते च लोके 'देवदत्ताय घृतं देहि अथ देवाय गव्यम्' इत्यादौ संज्ञाभेदानुसार्यर्थभेदः ।

ज्ञाप्यभेदप्रतियोगिनि कर्मणि निवेशानर्हो गुणोऽपि संज्ञाभेदवत्कर्मभेदको भवति । अनर्हत्वं च द्वेधा तस्य कर्मणो विरोधिबलवद्गुणावरुद्धत्वात्, विधीयमानगुणस्यैव वाक्यभेदाद्यापादकत्वात् । आद्योदाहरणं "वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति । अत्र हि वाजमन्नमामिक्षाख्यं विद्यते येषामिति व्युत्पत्त्या सम्भवदनुवादानपि विश्वान्देवाननूद्य न पूर्वयागे वाजिननिवेशो वक्तुं शक्यते अनुवादोपजीव्यप्राप्तिकारिण्युत्पत्तिवचासि ज्ञातयाऽऽमिक्षयैव पूर्वयागस्य नैराकाङ्क्ष्यात् ।

यत्र तूत्पत्तिशिष्टद्रव्यावरुद्धाऽपि क्रिया स्वकार्यनिर्वाहाय द्रव्यान्तरमपेक्षते न तत्रोत्पन्नशिष्टमपि द्रव्यान्तरं भेदकम्, यथा "गवा क्रीणाति, वाससा क्रीणाति" इत्यादाविवेति केचित् ।

द्वितीयोदाहरणम् "यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्चशरावं निर्वपेद्" "वषट्कर्तुः प्रथमभक्षः" इति । अत्र पूर्वविनष्टद्रव्यकतया द्रव्यान्तरमभिलषत्यपि सान्नाय्ययागे पञ्चशरावो न विधीयते महेन्द्रेण सह विकल्प्यमानतया प्राप्तस्येन्द्रस्यापि वि-

धेयत्वेन वाक्यभेदापत्तेः। द्वितीये च न भक्षानुवादेन प्राथम्यविधानम् एकप्रसरताभङ्गापत्तेः।

नचैवं "दध्नेन्द्रियकामस्य जुहुयाद्" इत्यत्र प्राप्तहोमानुवादेन फलगुणसम्बन्धविधाने वाक्यभेदापत्तेः कर्मान्तरं स्यादिति शङ्क्यम्। इह गुणस्यैव फलोद्देशेन विधानाद्। उपपादितं चैतन्मूले। एतदपवादश्च रेवतीवाक्यगोचरो दर्शितः।

नन्वेवमपि "यस्य हविर्निरुप्तं पुरस्ताचन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान् विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्"इति प्राप्तदर्शानुवादेन मध्यमाद्यनेकगुणविधौ वाक्यभेदात्कर्मान्तरापत्तिः।

स्यादेतत्। "त्रेधा तण्डुलान्"इत्यत्र न मध्यमादिरूपेण विभागो विधीयते अग्रिमविनियोगवशाद् एव तत्सिद्धेः, किन्तु तण्डुलग्रहणेन प्रकृतं हविर्लक्षयित्वा विभजेदिति पूर्वदेवताभ्यो ऽपनीयते। "ये मध्यमाः"इत्यादिवचोभिश्च तण्डुलदधिपयसामपनीतपूर्वदेवताकानां पूर्वयागान्वयिनां देवतान्तरसम्बन्धो विधीयते। दात्रादिशब्दानां च यौगिकानाम् अग्न्यादिशब्दसमानाधिकरणतया एकदेवताकारकप्रतिपादकत्वान्नानेकदेवताविधिनिमित्तो दोषः। एतत्प्रकरणाम्नातेन "सह श्रपयति"इतिवचनेन सम्प्रतिपन्नदेवताकयोः सहश्रपणविधानाच्च प्राप्तं दधिपयसोरधिकरणत्वं चरुत्वं चानूद्यते तस्माद्वाक्यभेदप्रसङ्गाभावान्न कर्मान्तरविधिरिति चेद् न। तण्डुलपदस्य हविर्मात्रलक्षकत्वं तावन्न सम्भवति चमसाधिकरणविरोधापत्तेः(१) मध्यमादिसम्बद्धयच्छब्दै-

(१) यथा पू० मी० अ० ३ पा० ७ अधि० १० चमसाध्वर्यूणां 'मध्यतः कारिणां चमसाध्वर्यवः' इत्यादिविशिष्टव्यपदेशात्प्रकृतेभ्यो ऽध्वर्युप्रमुखर्त्विग्भ्यो भिन्नत्वं सिद्धान्तितमेवमत्रापि मध्यमादिसमानाधिकरणयच्छब्देन व्यपदेशाद्विशिष्टहविष्परकत्वप्राप्तावपि तदुत्सृ-

स्तण्डुलपरामर्शासम्भवापत्तेश्च । "बर्हिषि हवींषि" इत्यत्रेवाङ्गहविषामपि ग्रहणे सति तेषामपि देवतापनयापत्तेश्च । नच तेषां देवतान्तरविध्यभावान्न पूर्वदेवतापनय इति शङ्क्यम् । उपांशुयाजाज्यवद्(१) अपनयमात्रस्यैव वक्तुं शक्यत्वात् ।

कश्च विभजेदित्यस्यार्थो भवतोऽभिमतः। न तावन्मल्लयोरिव द्रव्यदेवतयोर्विभागः सम्भवति । अथ 'ताभ्यो न दद्याद्' इत्यर्थो विवक्ष्यते ततः शास्त्रप्राप्तनिषेधे विकल्पः स्याद् । व्यर्थश्चैष विधिः यन्नैमित्तिकदेवतासम्बन्धवशादेव पूर्वदेवतापनयसिद्धेः । नह्यपच्छेदवति प्रयोगे नैमित्तिकसर्वस्वदानादिशास्त्रव्यतिरेकेण द्वादशशतनिषेधो ऽभ्यर्थ्यते । "त्वाष्ट्रं पात्नीवतम्" इत्यत्र तद्धितभेदेनेव चतुर्थीभेदेन देवताकारकभेदप्रतीतेश्चावर्जनीयस्तदुभयविधिनिमित्तो वाक्यभेदः । "सह श्रपयति" इत्यत्र च सत्यपि साहित्यविशिष्टश्रपणविधाने मध्यमेषु नानेन श्रपणप्राप्तिः द्रव्यान्तरसाहित्यासम्भवात् । भवति हि श्मश्रुसाहित्याभावेन केशवपनाप्राप्तिः पत्न्याम् । न च नित्यप्रयोगगतश्रपणविधिना श्रपणप्राप्तिः । चित्रेष्टाविव देवतासम्बन्धितया निर्दिश्यमानतण्डुलेषु तेन श्रपणाप्राप्तेः । अतश्चाष्टाकपालस्य पयःश्रपणानुवादेन तत्साहित्यविशिष्टं क्षोदिष्ठश्रपणं विधेयमिति वैरूप्यापत्तिः । सत्यपि श्रपणविधौ चरुपदप्रवृत्तिनिमित्तपाकविशेषाप्राप्तिः । स्थविष्ठदध्नोरुद्देशेन देवताविधाने चोद्देश्यानेकत्वनिमित्तो

---

ज्य हविर्मात्रपरकत्वकल्पने उक्ताधिकरणविरोध इति भावः ।

(१) अभ्युदयेष्टौ पुरोडाशसान्नाय्ययोः प्राकृतदेवतापनये देवतान्तरसम्बन्धश्रवणवदुपांशुयाजाज्यद्रव्ये देवतान्तरसंयोगावचनान्न प्राकृतदेवतापनयनं तत्रेति पूर्वपक्षे तण्डुलग्रहणेन प्राकृतहविर्मात्रलक्षणात्तस्य प्राकृतदेवतापनयविधानादाज्यस्याप्यस्त्येवापनयः । तच्चाज्यं प्राकृतदेवताभ्योऽपनीतं देवतान्तरेण संयोगस्य श्रुत्याऽबोधनादसंयुक्तं प्रहीणं भवति इति उक्तम् ( पू० मी० अ० ६ पा०५–अधि० २ । ) तत्रोपांशुयाजे यथा देवतापनयनमाभिप्रेयते एवं प्रकृतेऽपीति भावः

वाक्यभेदः । अभ्युपगम्यते ऽयमिति चेत्, न । यतः को ऽस्य वाक्यभेदस्य पञ्चशरावगत(१)वाक्यभेदाद्विशेषो यदयं न कर्मभेदक आस्ते ।

यत्तु दध्यधिकरणकचरुविशिष्टयागान्तरविधाने "सह श्रपयति" इत्यस्यानर्थक्यात्तदर्थवत्त्वाय स्वीक्रियमाणो वाक्यभेदो वेदानुमतत्वान्न दोषायेति । तत्तुच्छम् । दध्नो ऽधिकरणतया प्रतीयमानच-

(१) पू० मी० अ० ६ पा० ४ अधि० ९-। दर्शपूर्णमासप्रकरणे सायंप्रातर्दोहातिक्रमप्रायश्चित्तत्वेन श्रुते "यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेद्" इति पञ्चशरावयागे-किमस्य दर्शे द्रव्यापचाराद् द्रव्यमन्तरेण यागानुत्पत्तेरवत्तनाशाधिकरणन्यायेन दर्शाङ्गतया विधानम् उत हविरार्तिनिमित्तं कर्मान्तरमिति सन्देहे दोहप्रतिनिधित्वेनास्य विधानादङ्गत्वम् । लाघवं चैवं गुणमात्रविधानात् । अन्यथा प्रकृतहानाप्रकृतकल्पनादिदोषप्रासः । तदुक्तम्—

आर्तत्वाद् द्रव्ययोरन्यत्कर्मणो द्रव्यमीप्सितम् ॥
लाघवं च विधेरेवमतो द्रव्यविधिर्भवेद् ॥

इति पूर्वपक्षे प्राप्ते "ऐन्द्रं पञ्चशरावम्" इति द्रव्यदेवतारूपस्य प्रतीत्या कर्मान्तरविधेर्वारयितुमशक्यत्वम् । नचोक्ते कर्मणि गुणमात्रविधानं सम्भवति । तथा हि सति प्राप्तकर्मोद्देशेन पञ्चशरावपरिमाणमोदनद्रव्यमिन्द्रो देवतेत्याद्यनेकगुणविधौ वाक्यभेदापत्तिः स्यात् ।

तदुक्तम्—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । इति ।

नच भवन्मते कर्मान्तरविधिस्वीकारेऽपि अनेकगुणविधिसत्त्वेनोक्तदोषो दुर्वार इति वाच्यम् । विशिष्टविधिस्वीकारात् । विशिष्टविधौ विशेषणविधेरार्थिकत्वेनादोषात् ।

तदुक्तम्—

श्रौतव्यापारनानात्वे सम्भवत्यति गौरवम् ॥
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥ इति ।

अत एवोक्तम्—

अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः । इति ।

एवंच यथा ऽत्रानेकगुणविधौ वाक्यभेदश्चोदित एवं प्रकृतेऽप्यनेकगुणविधिसत्त्वेन वाक्यभेदो दुरुद्धर इति भावः ।

रुगुणत्वमात्रत्यागेन दधिचरूभयविशिष्टयागान्तरविधाने वाक्यभेदपरिहारस्य तदर्थवत्त्वस्य च सम्भवात् ।

किञ्चास्य देवतान्तरयुक्तस्य प्रयोगस्य फलम् ? इति विवेचनीयम् । न तावद्यावज्जीवबोधितद्वैतीयीकन्यायेन(१) जीवनस्य निमित्तत्वं सिद्धम्। षाष्ठन्यायेन(२)च पौर्णमास्यादेस्तदवच्छेदकत्वे सिद्धे पर्वावच्छिन्नजीवनाभावे प्रारब्धप्रयोगस्य तदनुष्ठाप्यताया वक्तुमशक्यत्वात् । नापि "आरब्धं विहितं कर्मावश्यं समापनी-

---

(१) इदं च द्वितीयस्य चतुर्थे प्रथमाधिकरणे । तत्र हि-"यावज्जीवमग्निहोत्रं जुहोति" इत्यत्र यावजीवत्वं कर्मधर्म उत पुरुषधर्म इति सन्देहः । तदर्थं च यावज्जीवशब्दस्य कालबोधकता उत जीवनवाचिता, कालवाचित्वे कालस्य गुणान्तरवद्विधिसम्भव उत नेति विचारे प्रक्रान्ते 'देवदत्तेन यावज्जीवं दत्तं भुक्तम्' इत्यादौ मरणावधिककालबोधकत्वेन तस्य अप्राप्तत्वाद् "वसन्ते वसन्ते ज्योतिषा"इत्यादिवद्विधिसम्भवेन जुहोत्यनूदिते काम्याग्निहोत्रे कर्मणि कालविधिः । सति चैवं नित्याग्निहोत्रबोधकवाक्यान्तराभावेन वाक्यान्तरविहितः काम्यप्रयोग एवैकः पर्यवस्यति । स चोक्तविधेरावर्तनीयः । सकृत्प्रयोगस्य "अग्निहोत्रं जुहुयाद्" इत्यनेनैव सिद्धत्वेन कालविधिवैयर्थ्यापत्तिरन्यथा स्यात । तस्मात्कर्मधर्मविधिरिति प्राप्ते-

उच्यते यावज्जीवशब्दस्य शक्त्या कृत्स्नजीवनबोधकत्वम् । काले तु लक्षणा । नच जीवनं कर्मधर्मत्वेन विधातुं शक्यते तस्य पुरुषधर्मत्वात्। तं च निमित्तीकृत्याग्निहोत्रप्रयोगो विधीयते। शब्दान्तरादीनां हेतूनामत्राभावात्कर्मभेदाभावात्प्रयोगभेद एव पर्यवसानं जीवनं च तत्र निमित्तमित्युक्तमिति सिद्धान्तः।

(२) पू० मी० अ० ६ पा० २ अ० ७। "यावज्जीवमग्निहोत्रं जुहोति"इत्यादौ जीवनस्य निमित्तत्वेनोपन्यासात्सति निमित्ते नैमित्तिकस्यावश्यंभावाज्जीवतोऽनुष्ठानसातत्यम् । प्रधानलोपाद्वरमङ्गलोप इति न्यायात् श्रुतानां सायमादिकालरूपाङ्गानां लोपो न दोषायेति प्राप्ते उच्यते सायमादिकालस्यानुपादेयत्वेन न विधिः सम्भवति। किन्तु काले स्वतः प्राप्ते सति कर्मानुष्ठेतया विधीयते। कालस्य च निमित्तसंकोचकत्वेनान्वयः। तथाचोक्तकालविशिष्टस्यैव जीवनस्य निमित्तत्वमिति।

यम्'' इति कल्पितविधिबोधितम्, अकाले कर्मणो विहितत्वाभावेन तस्य प्रयोगस्य तद्विध्यविषयत्वात् । न च प्रकरणादस्य दर्शाङ्गत्वम्, सर्वप्रयोगगततदङ्गत्वे नैमित्तिकत्वविरोधात् । चिकीर्षितानन्तरं दर्शाङ्गत्वे च प्रकरणस्य अमानत्वात् । तस्माद्देवतान्तरसंयोगं विदधतैव वचसा तस्य तत्संबद्धप्रयोगस्य वा फलविशेषसम्बन्धो ऽपि बोधनीय इति तन्निमित्तोऽपि वाक्यभेदः ।

नच विशिष्टभावनाविधानेन सकलवाक्यभेदपरिहारः शङ्कनीयः । पञ्चशरावंवाक्ये ऽपि तथाऽऽपत्तेः । यथा चापनीतदेवताकानां यागानां देवतान्तरसंयुक्ताभिर्भावनाभिः सम्भवति सम्बन्ध इत्युच्यते तथैव विनष्टद्रव्यकस्यापि द्रव्यान्तरसंयुक्तभावनया सम्बन्ध उच्यताम्, अपनयविनाशयोराकाङ्क्षोत्थापकतायास्तुल्यत्वात् । सान्नाय्यतण्डुलविशिष्टायाश्च भावनाया असन्नयनं प्रति विधातुमशक्यत्वात् । विशिष्टभावनाविधिपक्षे ऽसन्नयने ऽभ्युदयनैमित्तिकाभावापत्तिः । अनादृतश्चैष पक्ष आकरे । तस्मात्कर्मान्तरमेवोचितमिति ।

अत्रोच्यते । यत एव प्रारब्धानामपि यागानां चन्द्रोदये सति त्वदुक्तरीत्या निष्फलत्वेनाकर्तव्यतापत्तिः, अत एव विभजेदित्यनेन तादृशयागाङ्गत्वेन विभागविध्यनुपपत्त्या ऽपनीतपूर्वदेवताकपूर्वयागकर्त्तव्यतापरत्वमस्यैव विधेराश्रीयते । तत्र च क्षामवत्यादिवत्फललाभः । प्रधानयागकर्तव्यतायां च तदाक्षेपेणैवाङ्गानुष्ठानासिद्धेर्नास्य विधेरङ्गयागकर्त्तव्यतापरत्वमितिकर्त्तव्यतया ज्ञाप्यमानयागेषु । विशेषणीभूतदेवतापनयस्य नाङ्गयागेषु प्रसक्तिः, यथा मिलितानां कर्तव्यतावगतप्रधानानाम् । तादृश्या एव प्रतिप्रसवकरणाच्च सर्वप्रधानविशेषणत्वेन देवतापनयज्ञापने तण्डुलग्रहणस्याप्युपलक्षणत्वसिद्धेः लक्षणयोपस्थापिते हविःसामान्ये

तण्डुलानामप्यन्तर्भावाच्च मध्यमादिपदान्वयिभिर्यच्छब्दैः संभवति तण्डुलपरामर्शः। अपगतहोतृवरणकाविध्यन्तकर्त्तव्यताया(१)मिवापगतदेवताकयागकर्त्तव्यतायां च ज्ञाप्यमानायां न विकल्पापत्तिः। अपनीतपूर्वदेवताकानां कर्त्तव्यताया देवतान्तरसम्बन्धं विनाऽनुपपत्तेरगत्योत्तरवाक्येषु वाक्यभेदमुद्देश्यभेदापातितमभ्युपेत्यापि देवताविधिराश्रीयते। नचोत्तरवाक्यसिद्धस्य मध्यमाद्यात्मना तण्डुलविभागस्य तण्डुलवाक्ये ऽनुवादमङ्गीकृत्य वाक्यभेदपरिहाराय कर्मान्तरविधिराश्रयितुं युक्तः। तथा सति फलीकृतैः तण्डुलैरुपासीतेत्यस्य विधित्वकल्पनानिमित्तवाक्यभेदापत्तेः। प्रयोगमध्ये विभागस्य नित्यवदनुष्ठानाप्राप्त्या विभागवाक्ये विधित्वस्यावश्याभ्युपेयत्वात् द्रव्योद्देश्यत्वानिर्देशेन तात्पर्यवृत्त्योद्देश्यतया विवक्षितानां प्रकृतयागानां प्रधानत्वेन तदनुरोधेनाप्राप्तस्य विधेयतया गुणभूतदेवताविधानार्थं विध्यावृत्तिलक्षणवाक्यभेदस्यौचित्येन स्वीकार्यत्वात्। पञ्चशराववाक्ये तु विधेय-

(१) दशमाध्याये प्राथमिकेऽधिकरणे महापितृयज्ञे चोदकप्राप्तवरणं प्रति श्रुते "नार्षेयं वृणीते न होतारम्" इति वाक्ये विचारः—नार्षेयमित्यादौ नञः प्रतिषेधार्थकत्वम्, उत पर्युदासकत्वमिति। तत्र प्रधानसम्बन्धलाभात् वृणीते इत्याख्यातेन सम्बन्धेन प्रतिषेधार्थकत्वमेव युक्तम्। अन्यथाऽप्रधानसम्बन्धः स्यात्स च नह्युपाधेरुपाधिर्भवतीत्यनभिमतोऽभियुक्तानाम्। इति प्राप्ते—उच्यते-प्रतिषेधार्थकत्वेन आख्यातार्थेन सम्बन्धे 'वरणं न कुर्याद्' इत्यर्थो भवति, तथा सति प्रत्यक्षश्रुतिर्वरणस्याकर्तव्यतां चोदकश्च तस्य कर्तव्यतां बोधयन्तौ परस्परप्राप्तस्यात्यन्तं बाधं कर्तुमशक्नुवन्तौ वरणतन्निषेधौ विकल्पयतः। विकल्पस्य चाष्टदोषदुष्टतयाऽन्याय्यत्वमिति पर्युदासत्वमेव युक्तम्। नञ्चोक्तदोषात्प्रत्ययार्थादवतारितो धात्वर्थेन सम्बध्य तत्प्रतिपक्षं बोधयति तद्भिन्नमर्थमब्राह्मण इत्यत्र ब्राह्मणभिन्नमिव। तथा च वरणभिन्नमङ्गजातमनुष्ठेयमित्यर्थसम्पत्त्या चोदकस्य वरणातिदेशांशे ऽप्रवृत्तिर्ज्ञाप्यते। एवं च चोदको वरणव्यतिरिक्तमङ्गजातमतिदिशन्न यथा विकल्पापादक एवमत्रापीति प्रकृतसङ्गतिः।

गुणानुरोधेन प्रधानयज्ञावृत्तेरन्याय्यत्वम् । अमुनैव चाशयेन वाक्यभेदापादकगुणस्यैव कर्मभेदकत्वं व्यवहृतमाकरे नोद्देश्यस्यापि । देवतान्तरविधितः सम्भवत्प्राप्तिकस्यापि पूर्वदेवतापनयस्य विधिमन्तरेण देवतान्तरविध्यपेक्षितायाः पूर्वयागकर्त्तव्यताया उन्नयनासम्भवात् "आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः" इति वाक्ये द्रव्यदेवतयोरिव देवतापनयस्यापि न विधिवैयर्थ्यं शङ्क्यम् । नचोत्तरवाक्येष्वेव यागविध्युन्नयनं शङ्क्यम् । वाक्यत्रये प्रत्येकं फलपदाध्याहारेण प्रयोगत्रयकल्पनेन चातिगौरवापत्तेः । ननु सत्यपि पूर्ववचसि देवतान्तरसम्बन्धाभावेनोपांशुयाजो लुप्यते तद्वत्सर्वेषामपि लोपोऽस्तु,आस्तां वा कर्मान्तरविधिरिति चेत् । न । यद्यप्युपांशुयाजे देवतापनयविशिष्टकर्त्तव्यताबुद्धिः प्रथमोदिताऽपि तद्धविषो वाक्यान्तरे देवतान्तरसम्बन्धाविधानाद् विलीयते, तथाऽपि तादृशकर्त्तव्यताबुद्धेः सम्भवति यागान्तरेषु सावकाशत्वम् । यदि तूत्तरवाक्येषु कर्मान्तरविधिमाश्रित्य केषामपि प्रकृतहविषां देवतान्तरसम्बन्धो नाश्रीयेत निर्विषयत्वमेव तदा तादृशबुद्धेरापद्येतेति सैव कर्मान्तरकल्पनं प्रतिबध्नती देवतान्तरपरत्वमुत्तरवचसामापादयतीति बोध्यम् ।

वस्तुनोऽपनीतपूर्वदेवताकयागकर्तव्यताबोधनाय प्रवृत्तो विधिरप्रकृतदेवतासम्बन्धं विना तद्बोधनासम्भवात् सामान्यत आक्षेपोपस्थापिताप्रकृतदेवताविशिष्टकर्तव्यतां बोधयन् उपांशुयाजस्याप्रकृतदेवतासम्बन्धं कृतवानिति हविरन्तरवद् व्यवस्थिततत्सम्बन्धाभावेऽपि विनिगमनाविरहेण तिस्रोऽप्यप्रकृता उद्दिश्य तदनुष्ठानमुचितम् । स्वीकृतं चेत्थमेव । मनुः पुत्रेभ्यो दायं व्यभजतद् इतिवत् । उक्तवाक्यार्थवर्णनपक्षोऽप्याकरः ।

यद्यपि च "अग्नये दात्रे" इत्यत्र चतुर्थ्यौ भिन्ने अर्थे वर्त्तेते तथाऽपि न ते तद्धितवद्देवतात्वं शक्त्या वदतः, लक्षणया तु तत्प्रतिपाद्यत्वेन

कल्प्यमानं देवतात्वं समानाधिकरणप्रकृतिद्वयोक्ताभिन्नार्थान्वयानुरोधेनाभिन्नमेव कल्प्यत इति न तद्भेदनिमित्तो दोषः। "त्वाष्ट्रं पात्नीवतम्"इत्यत्र तु तद्धिताभ्यां श्रुत्यैव देवतात्वाभिधानान्न ताव-द्देवतात्वस्य कल्प्यत्वं येन लाघवादभिन्नं कल्प्येत। नच प्रकृत्यर्थाभेदप्रतीत्यनुरोधादभिन्नदेवताकारकाभिधायित्वं तद्धितयोरिति शङ्क्यम्। प्रातिपदिकजन्यप्रतीतिगतमुख्यविशेष्यताभाजोरेवाभेदान्वययोग्यत्वेनाताहृशयोस्त्वष्टृपत्नीवतोरभेदाप्रतीतेः। न हि भवति देवदत्तीयं ब्राह्मणगृहमित्यत्र देवदत्तब्राह्मणयोरभेदान्वयबोधः। भवति तु तत्र गृहयोः। प्रकृते च हविषोस्ताहृशयोस्तद्बोधः। यथा चासति शास्त्रान्तरीयकर्मभेदप्रत्यये स्ववाक्यश्रुतं कर्म विषयीकुर्वन्विधिः शास्त्रान्तराद्भिनत्ति एवमालभेतेति विशिष्टविधिरर्थाद्विशेषणेषु व्याप्रियमाणोऽप्रतीयमानाभेदे च देवताकारके प्रत्येकं विषयीकुर्वंस्तयोर्भेदमाक्षिपतीति ध्येयम्।

यस्तु तण्डुलवाक्ये यागेभ्यो द्रव्यदेवतापनयाविधिमङ्गीकृत्योत्तरवाक्येषु विशिष्टभावनाविधिं स्वीकृत्योत्तरवाक्येषु तद्विशेषविधिरिति पक्षः सः, तत्रैवोक्तो यश्च तण्डुलवाक्ये मनुः पुत्रेभ्यो दायं व्यभजदितिवदप्रकृतदेवताभ्यः प्रकृतहविषां विभागविधिरिति, तदुभयमपि प्रौढिमात्रम्। पूर्वोक्तदोषानतिलङ्घनात्।

नच चित्रेषु तण्डुलेष्विव प्रकृतश्रपणविधितो मध्यमादिषु श्रपणाप्राप्तिः, तत्रत्यतण्डुलश्रपणस्य तण्डुलावस्थं हविरिति ज्ञापनेनैवार्थवादत्वात्। मध्यमादिश्रपणानां स्वपरित्यक्तप्रागवगतयागसम्बन्धानि हवींष्युद्दिश्य देवतान्तरसम्बन्धविधिपरत्वात् यागीयहविष्प्रकृतिभावमनुभवन्तश्च तण्डुलाः पूर्वदेवतासम्बन्धिन आसन्निति तथैवाप्रकृतदेवताभिः सम्बध्नन्तोऽनुमन्यन्त एव प्राग्विहितश्रपणम्।

एवञ्च "सह श्रपयति" इत्यत्रौषधश्रपणाङ्गत्वेन सम्प्रतिपन्नदेवताकहविःसाहित्यं विधीयत इति दध्नोऽपि साहित्यसिद्ध्यर्थं

श्रपणसिद्धिः । यागप्रयुक्तसान्नाय्योपजीवनेन तत्साहित्यं विदधानो विधिर्नासन्नयन्तं प्रति तद्विधत्त इति न तेन विना असंनयतो ऽनधिकारापत्तिः । दधिपयोभ्यां सहश्रपणस्य चोखाशमेव सम्भवात् कपालनिवृत्तौ सहश्रपणे पिण्डासम्भवाच्च संयवनपेषणादिनिवृत्तौ हविर्विनाशापादकत्वेन चात्र श्रपणनिवृत्तौ सम्भवति चरुत्वप्राप्तिः । असन्नयतश्च सत्यप्यैन्द्राग्ने तण्डुलानामपि देवतान्तरसम्बन्धे उभयेषां सहश्रपणस्य कर्त्तव्यत्वात्कपालसंख्याद्वयानुग्रहासम्भवात् मुख्योपस्थिताष्टत्वसंख्याया एवानुग्राह्यत्वेन संभवत्यष्टाकपालत्वस्य नित्यवदनुवादः ।

इयांस्तु भेदः–सन्नयतो मध्यमाष्टाकपालेनाग्नेयमात्रानुष्ठानं चरुभ्यां तु तेन सह दधिपयोयागयोः, असन्नयतस्तु त्रिभिः पुरोडाशैराग्नेयैन्द्राग्नयोस्त्रिभिः सहानुष्ठानं चरुत्वस्य च पाक्षिकानुवादत्वं वाक्यभेदवदङ्गीक्रीयत इत्यलं पल्लवितेन ।

यथा च कर्मस्वरूपानुबन्धी द्रव्यादिगुणः पूर्वकर्मण्यनिविशमानः कर्मभेदको भवति एवं प्रयोगानुबन्धी कर्त्रधिकार्यादिः पूर्वप्रयोगे ऽनिविशमानः प्रयोगभेदको बोध्यः ।

अत एव "यदि ब्राह्मणो यजेत" इत्यत्र राजसूयान्तर्गतराजकर्तृकावेष्टिप्रयोगाद्भिन्नो ब्राह्मणकर्तृको ऽवेष्टिप्रयोगो विधीयते "यावज्जीवमग्निहोत्रं जुहुयाद्" इत्यत्र च काम्यप्रयोगाद्भिन्नो नित्यप्रयोगः।

प्रकृतकर्माविपरिवृत्तिरूपं प्रकरणान्तरमपि प्रायो धात्वर्थभावनयोर्भेदकं भवति । सत्यां हि प्रकृतकर्मप्रत्याभिज्ञायां तया कर्मणि प्रतिबद्धशक्तिको विधिर्गुणे संक्रामति असत्यां तु तस्यां श्रुत्या कर्म विषयीकुर्वन् विहितविधानायोगात् प्रकृतादस्मिन् भेदमाक्षिपतीति । यथा "मासमग्निहोत्रं जुहोति" इत्यत्र अविपरिवृत्तिसंरक्षणायैव च सति नाम्नि तस्य भेदकत्वाभिमताख्यातपारतन्त्र्यं सति चोपपदे कथं चिद्विध्यन्वयार्हे

तदर्थस्यानुपादेयत्वमपेक्ष्यते, अस्ति च प्रकृते तदुभयम्, मासस्यानुपादेयत्वात् अग्निहोत्रनाम्नश्चाख्यातपरतन्त्रत्वात् । यत्र तूपपदार्थ उपादेयो भवति यथा "यदाहवनीये जुहोति" इत्यादावाहवनीयादिः । स हि स्वरूपेणाधानान्निष्पन्नो ऽपि तत्तद्धोमकाले विहरणादिव्यापारेण तत्तद्धोमानुष्ठानयोग्यात्मना सम्पादनीय इत्यनेन विधिना ऽनुष्ठाप्यते तत्र तद्विधानावधित्वेन यज्जुहोतीत्येवमात्मार्थमर्पयता धातुनैव दूरस्थहोमविपरिवृत्तेर्न प्रकरणान्तरसम्भवः । यत्र वा नाम्नो नोक्ताख्यातपारतन्त्र्यं यथा "य इष्ट्या पशुना सोमेन यजेत सो ऽमावास्यायां पौर्णमास्यां वा यजेत" इत्यत्र यच्छब्दोपबद्धपूर्वाख्यातान्वयिनामिष्ट्यादिपदानाम् । तत्रापि तदुपस्थापितान्येव कर्माणि जघन्याख्यातपदान्तर्गतधातुना ऽनूद्य पर्वसम्बन्धविधानान्न तत्सम्भवः ।

एतेन "सायमग्निहोत्रोच्छेदनात्प्रमाद्येत पुनरग्निहोत्रं जुहुयाद्" इति बोधायनीयकर्मान्तसूत्रे यज्ञस्वामिनोक्तं—हूयमानमपि तेनैवाग्निहोत्रं स्यात् तस्मादप्रगादतात्पर्यकमेवेदमिति तन्निरस्तम् । निमित्तवाक्यान्तर्गतविपरिवर्तमानाग्निहोत्रस्य संयोगपृथक्त्वन्यायेनोक्तनिमित्ते कर्माङ्गत्वेनानुष्ठापनसम्भवात् । या तु शारीरके भामत्यां च "वेद्याद्यर्थभेदाद्" इत्यधिकरणे ( उ० मी० अ० ३ पा० ३ सू० २५ ) "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्यत्र संयोगपृथक्त्वन्यायेन प्रसिद्धबृहस्पतिसवस्य वाजपेयाङ्गत्वेन विध्युक्तिः सा धात्वर्थभेदमभ्युपेत्योक्तिरिति व्याख्येया । व्याख्याता च तथा कल्पतरुकारेण–'नह्यस्य विधेः प्रसिद्धबृहस्पतिविधिसान्निध्यमस्ति, नवा तदुपस्थापकं किञ्चन वचोऽन्तरमिहाम्नाये । नच बृहस्पतिसवनाम्नैव तदुपस्थितिः । अग्निहोत्रनामवद्विधिपरतन्त्रेण तेन भिन्नप्रसरतया दूरस्थकर्मोपस्थापनासम्भवात् ॥

स्यादेतत्—पदजन्यपदार्थोपस्थितिवेलायां गृहीतसङ्गतिकेन

नाम्ना सम्भवति पूर्वकर्मविपरिवृत्तिः वाक्यार्थबोधवेलायां च शक्यं विधिपारतन्त्र्यमप्यनुभवितुमिति विपरिवर्त्तमानस्य तस्यैव कर्मणो ऽन्याङ्गत्वेन विधिरस्तु, कथमन्यथा गृहमेधीयप्रकरणाम्नाते "आज्यभागौ यजति" इतिवचसि प्रसिद्धाज्यभागप्रत्यभिज्ञानम् । नहि तत्र तत्प्रत्यभिज्ञापकं वचोऽन्तरमस्ति । नापि चोदकः प्रत्यभिज्ञापकः । चोदकलोपाङ्गीकारात् । तस्मादिह पदवेलायां प्रत्यभिज्ञानं वाक्यवेलायां विधानमङ्गीकार्यम् तथा च बृहस्पतिसववाक्ये ऽपि द्वयसंभवः ।

नचैवं मासाग्निहोत्रवाक्येऽपि कर्मान्तराभावापत्तिः । इष्टापत्तेः । दृश्यते हि शतपथे—दर्शपूर्णमासप्रकरणे गृहमेधीयप्रकरणे च समाम्नाते "यवाग्वैतां रात्रिमग्निहोत्रं जुहोति" इति वाक्ये, अश्वमेधप्रकरणाम्नाते च "वाग्यतस्यैतां रात्रिमग्निहोत्रं जुहोति" इतिवाक्ये, अग्निहोत्रशब्दस्य प्रत्यभिज्ञापकत्वम् ।

एतेन पूर्वापरीभूततया धातुना प्रतीतस्य न नाम्ना प्रत्यभिज्ञेति निरस्तम् । धात्वर्थोपस्थापकत्वाभावे ऽग्निहोत्रशब्दस्य तन्नामत्वानुपपत्तेश्च । विधिश्च प्रसिद्धबृहस्पतिसवादेरेव वाजपेयाङ्गत्वेन पुनर्विधिसंभवात् भेदाभेदोदासीनः सन्नाम्नः प्रसिद्धार्थतायां च विशेषतस्तत्परतन्त्रोऽनुमन्यतैव कर्माभेदम् । प्रकरणान्तरस्य भेदकत्वं तु भावनायामुपपन्नम् ।

या तु "उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्" ( पू० मी० अ० ७ पा० ३ सू० १ ) इत्युक्तिः सा नित्याग्निहोत्रप्रकरणे ऽग्निहोत्रपदस्य निमित्ताभिव्यक्तिं मासाग्निहोत्रवचसि च तदनभिव्यक्तिमभिप्रेत्य व्याख्येया । तस्याग्निहोत्रशब्दस्यान्यत्र श्रुतौ येन विधिना कर्मणि दृष्टप्रवृत्तिको ऽग्निहोत्रशब्दस्तेनैव विधिना ऽन्यत्र प्रदेशे ऽपि तत्प्रवृत्तिर्ज्ञेयेति, तस्मान्न बृहस्पतिसवादेर्भेद इति ।

अत्र ब्रूमः—विधिस्तावच्छ्रुत्या संनिकृष्टं कर्मैव विषयीकुर्वंस्तेनैव शब्देन कर्मणोपसारयितुं शक्यते, यो विधेः प्राक् पूर्वकर्मविपरिवृत्तौ गृहीततात्पर्यको भवति, नचाग्निहोत्रादिशब्दस्तथा, किं तर्हि प्रायणीयादिवद् विधित्सितकर्मान्तरेऽपि लब्धप्रवृत्तिनिमित्तको ऽयं नामत्वेन प्रयुक्तो भवेत्, उत "तेषु अग्निहोत्रमधिश्रयेद्"इतिवद् द्रव्यपरो भवेत्, उत प्राणाग्निहोत्रतूष्णीमग्निहोत्रादाविव स्तुत्यर्थं प्रयुक्तो भवेत्, उत 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्'इतिवदतिदेशार्थो भवेदित्यनेकधोपप्लवमानतात्पर्यकमग्निहोत्रादिपदं कथं स्वजन्यस्मृतिमात्रवशेन विधितात्पर्यमन्यथाकर्तुं शक्नुयात् । शक्नोति तु विधिरुक्तविधया कर्म विषयीकुर्वन्नाकाङ्क्षयाऽग्निहोत्रपदतात्पर्यं व्यवस्थापयितुम् । आज्यभागवाक्ये ऽपि न नामवशेन प्रकृतकर्मग्रहणं ब्रूमः, किन्तु सर्वत्राविहितेतिकर्तव्यताकेषु उपमितिलक्षितप्रापणेनेतिकर्त्तव्यता इति तावदष्टमाद्ये ऽभिहितम् । गृहमेधीयो ऽपि निर्वपत्यादिसामान्येन दर्शमुपमापयति । सच स्वविध्यन्तं लक्षयति । लक्षिते च तस्मिन् विपरिवर्त्तमानावाज्यभागावादाय गृहमेधीयाङ्गत्वेन विनियुञ्जानं प्रत्यक्षं वचो ऽतिदेशाख्यप्रापणकल्पनां प्रतिबध्नातीति ।

यत्र न यदङ्गमाम्नातं क्वचित् क्लृप्तोपकारकमपि नोपमितिलक्षितविध्यन्तान्तर्गतत्वेन विपरिवर्त्तमानतां नेतुं शक्यम्, नैव तत्र तद्विधिनिमित्तमपूर्वत्वमाश्रीयते प्रकरणान्तरन्यायेन कर्मान्तरविधिरेव तु तत्राकरे व्यवह्रियते । यथा वरुणप्रघासेषु—"अवभृथमभ्यवयन्ति" इत्यत्र, यस्मिन्हि सौमिके विध्यन्तेऽवभृथो ऽन्तर्गतस्तस्योपमितिलक्षणेन न वरुणप्रघासचोदनायां विपरिवृत्तिः शक्या वक्तुम् । परमते तु नाम्ना ऽऽज्यभागवदवभृथविपरिवृत्तेस्तुल्यत्वादैष्टिकसौमिकविध्यन्तान्तर्गतत्वेनोभयोः क्लृप्तोप-

कारतायाः साम्याच्च गृहमेधीयवद् वरुणप्रघासानामपूर्वत्वं स्यात् । नच तदभिमतं मिश्राणां सौमिकाधिकरणादौ "वारुण्या- निष्कासेन" इत्यादिवाक्यस्य प्रकरणान्तरात्प्रधानकर्मभूतयागान्तरविधिपरत्वं निरूपितवताम् । नाप्यभिमतं न्यायसुधाकृतां प्रकरणान्तराधिकरणे यजिशून्यत्वेनासनोपधिचोदनासदृशस्य तद्वाक्यस्य तद्वदेव भावनान्तरविधायित्वमङ्गीकृत्य तुषनिष्कासस्संस्कारार्थतया नाम्नोपस्थापितस्य सौमिकावभृथयागस्य विधानार्थत्वमुक्तवताम् ।

नच तन्मते संस्कारकर्मभूतावभृथात् प्राकृतोपकारलाभान्नापूर्वत्वमित्यपि शङ्क्यम् । यागांशेन प्राकृतस्यैवोपकारस्य जननात् तस्मिन्सत्येव सोमलिप्तप्रतिपत्तेरिव तुषादिप्रतिपत्तेः सम्भवात् । सोमलिप्तवैलक्षण्येन तुषादिप्रतिपत्त्यङ्गीकारे अस्यावभृथयागस्य प्रधानकर्मत्वसमर्थनार्थैकादशाध्यायस्थाधिकरणविरोधात् । यौ तु शातपथौ विधी उपन्यस्तौ तत्र यवाग्वा वाग्यमस्य चोपादेयत्वात्तद्विध्यर्थं प्रसिद्धहोमानुवादयोर्धात्वोर्विशेषणीभूतावग्निहोत्रशब्दौ प्रसिद्धं होममुपस्थापयत इति नाश्चर्यम् ।

"मासमग्निहोत्रं जुहोति" इत्यादौ तु विधिविशिष्टेन धातुना कर्त्तव्यत्वेनोपस्थाप्यमानस्य होमस्य नाग्निहोत्रशब्दादुपस्थितिस्ताद्रूप्येणेति न तद्बलेनानुवाद्यत्वम् ।

नचैवं नामत्वानुपपत्तिः, तदर्थनामता हि तद्गतप्रवृत्तिनिमित्तावगममात्रेण भवति । तदनुवादत्वप्रयोजकतदर्थोपस्थापकता तु तस्यैव सम्भवति यस्तत्प्रकारेणैव तदर्थमुपस्थापयति, यथा हि 'बालं कृष्णं ध्यायेद्' इत्यत्र बालावस्थे नामत्वेन प्रवर्त्तमानोऽपि कृष्णशब्दो न बालपदस्यानुवादत्वमापादयितुमलम्, बाल्यावस्थानुपस्थापकत्वात्, तथाऽग्निहोत्रशब्दो होममुपस्थापयन्नपि न कर्त्तव्यतयोपस्थापयति इति नाख्यातमनुवादतां नेतुमलम् । यथा वा

सत्यां प्रकृतकर्मविपरिवृत्तौ प्रापकशास्त्रान्तरालोचनसापेक्षत्वनिरपेक्षत्वाभ्यां गुणविधानधात्वर्थविधानयोर्धात्वर्थविधाने विधिः प्रवर्त्तते तथा धात्वर्थगोचरयोरपि विनियोगोत्पत्त्योस्ताभ्यामेव हेतुभ्यामुत्पत्तौ स्वारस्येन प्रवर्त्तमानो विधिर्न शक्यते भेदोदासीनत्वेन वक्तुम् ।

इदमेव हि विधेर्भेदकत्वं यदुत्पत्तिपरत्वमन्यत्र शाखान्तरात् । तत्र ह्यध्येतृभेदात्सम्भवत्येकस्यापि कर्मणः शाखाभेदेन द्विरुत्पत्तिः । नचागृहीततात्पर्यकनामपारतन्त्र्यं विधौ शक्यं वक्तुम् । नाम्ना धात्वर्थोपस्थितिवच्च धात्वर्थेन भावनोपस्थितिसम्भवान्न भावनाभेदकत्वमपि प्रकरणान्तरस्य स्यात् । समस्तं च नामातिदेशनिरूपणमसति धात्वर्थभेदे ऽनर्थकतामापद्यमानं न कुशकाशावलम्बनेन शक्यं सफलीकर्त्तुम् । तत्सिद्धं बृहस्पतिसवधर्मककर्मान्तरं वाजपेयाङ्गत्वेन विधीयत इति ।

नन्वेवं "यस्योभावग्नी अनुगतौ अभिनिम्रोचेदभ्युदियाद्वा पुनराधेयमेव तस्य प्रायश्चित्तिः" इत्यत्र प्रकरणान्तरादाधानान्तरमेव विधेयं स्यात्, तस्य च सहिताग्निजनकत्वानवगमान्न नैमित्तिकस्वभावानुरोधेन निमित्तगतोभयत्वविवक्षा षष्ठोक्ता सिद्ध्येदिति चेत्, न, अभ्यासार्थेन पुनःशब्देनानुष्ठिताधानस्यैवानुष्ठानप्रतीतेः ।

यद्यपि तस्य पुनः प्रायश्चित्तिराधेयमेवेति पुनःशब्दान्वये तस्य नाभ्यासार्थत्वं प्रतीयते, तथाऽप्येवकारस्यैवाभ्यासार्थत्वात्तेनैव कर्मान्तरत्वधीप्रतिबन्धः । दृश्यते हि तस्याभ्यासार्थत्वं 'पयसा भुक्त्वा पयसैव भुङ्क्ते' इत्यादौ ।

अथ "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इत्यत्र कथं न कर्मान्तरम्? विधिकल्पनात्प्राग् अगृहीततात्पर्यकेण नाम्ना कृताया अपि विपरिवृत्तेः प्रकरणान्तराद्विघटकत्वादिति चेत् । आस्तां तस्यास्तदविघटकत्वम्, तथाऽपि तत्सन्निधावाम्नातस्य "सर्वेभ्यः कामेभ्यो

ज्योतिष्टोमः" इत्यस्य शेषे "एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते" इत्यस्मिन् श्रुतेन यज्ञक्रतुशब्देन विधेयज्योतिष्टोमाभिन्नक्रतूपस्थापनपरतया निर्णीतेन दर्शपूर्णमासविपरिवृत्तेः । नच ज्योतिष्टोमस्य दर्शपूर्णमासयोश्च सर्वफलकत्वादेकैकस्मै कामायाह्रियमाणत्वेन न तयोर्विपरिवृत्तिः किंत्वन्येषामेवेति शङ्क्यम् । "आरब्धं वैदिकं कर्मावश्यं समापनीयम्" इति "यज्ञेन दानेन विविदिषन्ति" इति "वेदोदितानि कर्माणि कुर्यादीश्वरतुष्टये" इति च सर्वकर्मणामनेकफलत्वेन वाक्यशेषस्य निर्विषयतापत्तेः, स्तुतिमात्रतात्पर्यकत्वे च इतरेषामिवानयोरपि विपरिवृत्त्यभङ्गादित्यादि स्वयमूह्यम् ।

यत्तु भवदेव एतद्विधिशेषस्थान्यशब्दोपात्तनिरूपकत्वेन तयोर्विपरिवृत्त्या प्रकरणान्तरविघटनमाह, तन्न । विधिगतदर्शपूर्णमासपदेन यदुक्तं तद्भिन्नप्रतिपादनमर्थवादस्थेनान्यशब्देन कार्यं यद्भिन्नं वान्यशब्देन प्रतिपाद्यं तद्विधिगतेन तेन पदेन वाच्यमिति परस्पराश्रयात् ।

तदेवं सिद्धः प्रकरणान्तरप्रमापको भेदः सापवादः ।

उक्तपञ्चमानान्यतरेणोत्पत्तिपरतयाऽवधारिते वचसि प्रतीता कर्मगता तत्कल्पकदेवतागता संबन्धगता वा संख्या धात्वर्थभेदद्वारेण भावनाभेदिका भवति । यथा सांग्रहणीष्टिं प्रकृत्य श्रुते "तिस्र आहुतीर्जुहोति" इत्यत्र, वाजपेयं प्रकृत्य श्रुते "सप्तदश प्राजापत्यान् पशूनालभते" इत्यत्र च । प्रथमवाक्ये तावच्छब्दान्तरेण प्रकृतयागात्मककर्मोत्पत्तिपरतयाऽवधारिते श्रुतत्रित्वसंख्यायाः पृथग्निवेशस्वाभाव्याद् धात्वर्थभेदं बोधयन्ती तन्मुखेन भावनामपि भिन्नां बोधयति ।

नन्वेकप्रातिपदिकोपात्तानेकाग्नीषोमविशिष्टदेवताकारकवदेकधातूपात्तानेकहोमविशिष्टभावनातत्त्वमेव प्रसयेन वक्तुं युक्तम् । नच

करणताभेदो न भावनामन्तरेण सम्भवतीति शब्दान्तरविषये निर्दिष्टन्यायाद्भावनाभेदसिद्धिः । अत्रैवोत्पद्यमानानां होमानां करणताया अपि वक्तुं शक्यत्वात् । निरपेक्षोत्पन्नानां हि कर्मणां नाभिन्ना करणता फलवाक्येन बोधयितुं शक्यते । अत एव षष्ठे 'अहर्गणे कस्मिंश्चिदहन्युद्गात्रपच्छेदे तन्मात्रस्य पुनःप्रयोगः साधननिवेशित्वाद्धर्माणां तन्मात्रस्य च साधनत्वाद्' इत्युक्तम् । तस्मान्न संख्याया भावनाभेदकत्वमिति चेत् ।

न, वेदे हि "वेदिरसि' इति त्रिर्वेदिं प्रोक्षति" इति क्वचिदभ्यासार्थकसुच्प्रयोगेनैकस्यैव कर्मणोऽभ्यासो विधेयतया प्रतीयते, क्वचिच्च "तिस्र आहुतीर्जुहोति" इति कर्मत्रित्वम्, विधानगतविशेषस्य च प्रवृत्तिविशेषजननेनैव फलवत्त्वे वाच्ये प्रकृतवाक्ये होमानां प्रत्येककारणताङ्गीकारेण विना न तद् वक्तुं शक्यम् । मिलितानां करणत्वे हि साधनरूपनिवेश्यामनमस्येतिमन्त्ररूपो धर्मः सकृदेव प्रयोक्तव्यः स्यात् । वेदिप्रोक्षणेऽप्येकदेशन्यायेन सकृदेव मन्त्रः प्रयुज्यते । प्रत्येकं करणत्वे तु साधनरूपभेदात्प्रधानभेदेन मन्त्रावृत्तिः सिध्यतीति कर्मत्रयविधेः प्रवृत्तिविशेषकत्वानुरोधेन करणताभेदे सिद्धे तद्वशेन भावनाभेदो निर्दिष्टन्यायादेव सिद्धः । द्वितीयेऽपि वचसि गुणात् प्रकृतयागान्ययागोत्पत्तिपरतयाऽवधारिते तद्धितोत्तरविभक्त्या तद्धितोक्तदेवतासम्बन्धविशिष्टद्रव्यान्विततयोक्तबहुत्वसङ्ख्या तावद्देवतासम्बन्धानुपपत्त्या कल्प्यमानयागानामपि तावत्त्वं बोधयति ।

यद्यपि प्रातिपदिकार्थगतविशेष्यमात्रान्वयिन्यपि संख्या विभक्त्या क्वचिदुच्यते द्वाविति, विशिष्टान्वयिना क्वचित् शुक्लाविति, तथाऽप्यातिदेशप्राप्तायाः पशुगतैकत्वसंख्याया अबाधाय प्रतिपशु यागभेदसिद्ध्यै विशिष्टान्वयितयैव संख्याभिधानं प्रकृते आश्रीयते, सन्दिग्धार्थे विधौ वाक्यशेषभूतातिदेशानु-

रोधेन निर्णयौचित्यात् । यत्रापि "वसन्ताय कपिञ्जलानालभेत" इत्यादौ शुद्धद्रव्यान्विता संख्या विभक्त्योच्यते तत्राप्युक्तनीत्याऽतिदेशानुरोधेन प्रत्येकं देवतासम्बन्धमाश्रित्य तावत्सङ्ख्या यागाः कल्प्यन्त इति सङ्ख्ययैव भेदसिद्धिः । तदेवम् उक्तः षड्प्रमाणकः कर्मभेदः ।

एषां मानानामेकविषयोपनिपातेऽपि विरोधाभावान्न बलाबलान्वेषणं कार्यम् । एकस्मिन्नपि ह्यामनहोमे प्रकृतयागप्रतियोगिकभेदमामनहोमान्तरप्रतियोगिकभेदमतिदेशप्राप्तनारिष्टहोमप्रतियोगिकभेदं च ज्ञापयतां शब्दान्तरसङ्ख्यागुणानां सम्भवति प्रामाण्यम् । एकत्रैकप्रतियोगिकं भेदं बोधयतोरपि मानयोरेकस्य प्रामाण्यमनधिगतार्थबोधकत्वेन नापरस्येत्येतावान्भेदः, न तु विरोधः ।

बोधकत्वे तुल्ये सत्येकमेवानधिगतबोधकमित्यत्र किं विनिगमकमिति चेत् शृणु । विधिरेव तावच्छ्रुत्या धात्वर्थभावनान्वितोऽप्रवृत्तप्रवर्तनास्वभावात्तदुत्पत्तिपरः सन्कर्मभेदे मुख्यं प्रमाणम् । तस्य तु कर्मोत्पत्तेरन्यत्र शक्तिसंक्रमप्रयोजकपदान्तरसमभिव्याहारः प्रकृतकर्मसंनिधिसहकृतो भवति कर्मभेदप्रमायां प्रतिबन्धकः । अत एव "दध्ना जुहोति" "सायं जुहोति" इत्यत्र न कर्मभेदः । दधिसायङ्कालविनियोगे संक्रान्तशक्तिकाभ्यां विधिभ्यां विशिष्टविधिगौरवभिया स्वपदे सन्निधिप्राप्तहोमतद्भावनानुवादतायां अभ्यनुज्ञानात् । तादृशप्रतिबन्धकाभावसम्पादनेन चाभ्यासप्रकरणान्तरे कर्मभेदप्रमायां साहाय्यमाचरतः । तत्राप्यभ्यासोदाहरणे विशेष्याभावकृतो विशिष्टाभावः, प्रकरणान्तरोदाहरणे तु विशेषणाभावकृत इति विवेकः ।

सत्यपि विशिष्टे प्रतिबन्धके समभिव्याहृतपदार्थगतं वाक्यभेदापादकत्वं बलवद्विरोधयवरुद्धे पूर्वकर्मणि निवेशानर्हत्वं वा सं-

"अग्निहोत्रं जुहोति" इति। उत्पत्तिविधौ च कर्मणः करण-

ज्ञान्तरं वा शब्दान्तरं वा बलवद् विधेः कर्मोत्पत्तिपरतामापादयति। गुणसंज्ञाशब्दान्तराणि विधेरुत्तेजकविधया कर्मभेदप्रमायां साहाय्यमाचरन्ति। एवं चाभ्यासप्रकरणान्तरयोरेभिर्यथासम्भवं क्वचित्सान्निपाते तयोरेव भेदकत्वम्, नैतेषाम्, असति प्रतिबन्धके साधनादेवोत्तेजकानपेक्षात्कार्यसिद्धेः।

अत एव प्रकरणान्तराधिकरणे समानप्रकरणस्थानामपर्यायधातुनिष्पन्नानामाख्यातानामुदाहरणत्वमवादि सांप्रदायिकैः। "उद्भिदा यजेत पशुकामः" इत्यत्र संज्ञया कर्मभेदं स्वीकृत्याभ्यासोदाहरणसंज्ञात्वेनाङ्गीकृतानामपि समिदादीनां न भेदकत्वमाश्रितम्। "वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति" इत्यत्र च सत्यपि भेदके गुणे प्रकरणान्तरमेव भेदकमिति सप्तमे व्यवहृतम्। अभ्यासप्रकरणान्तरयोः सन्निपाते तु प्रकरणान्तरमेव भेदकं प्रकृतकर्मातिपरिवृत्तेः स्वरूपसत्या एव सहायत्वात्, अनन्यपरतात्मकाभ्यासस्य तु ज्ञातस्यैव विपक्षे आनर्थक्यप्रसञ्जनमुखेन भेदकत्वात् विप्रकर्षात्। शब्दान्तरस्य गुणसंज्ञाभ्यां सन्निपाते तु तस्यैव भेदकत्वम्। धात्वर्थभेदमुखेन भावनाभेदं प्रमापयतोस्तयोर्लोकप्रसिद्धधात्वर्थभेदप्रामाण्यकुण्ठीभावे सति भावनाभेदप्रामाण्यस्य सुतरामसम्भवात्। अत एवोक्तशब्दान्तरोदाहरणस्थले सतोरामिक्षावाजिनसमानयोगक्षेमयोरपि सोमहिरण्ययोर्न भेदकत्वव्यवहारः। गुणसंज्ञयोश्च सन्निपाते संज्ञाया एव भेदकत्वं गुणस्य वाक्यभेदाद्यालोचनसापेक्षत्वात् संज्ञायाः स्वभावत एव भेदकत्वात्। संख्यायास्तु भिन्नप्रस्थानतया न केनचित्सान्निपात इत्यलमतिविस्तरेण।

केचिदुत्पत्तिमात्रपरे विधौ फलपदाश्रयणाद्धात्वर्थस्यैव भाव्यत्वेनान्वयं मन्यन्ते तान्प्रत्याह उत्पत्तिविधाविति।

त्वेनैवान्वयः—'होमेनेष्टं भावयेद्'इति 'न तु होमं कुर्य्याद्' इति साध्यत्वेन । तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकारवाक्यावगतफलसम्बन्धो न स्यात् । करणत्वेन त्वन्वये 'होमेनेष्टं भावयेत्', 'किं तद् इष्टम्' इत्याकाङ्क्षायां फलविशेषसम्बन्धो घटते ।

न च उत्पत्तिविधाविष्टवाचकपदाभावेन 'कर्मणा इष्टं भावयेद्'इति कथं वाक्यार्थ इति वाच्यम् । विधिश्रुतेरेवेष्टबोधकत्वात् । सा हि पुरुषार्थे पुरुषं प्रवर्त्तयन्ती कर्मणः फलसम्बन्धमात्रं बोधयति । तस्माद् युक्तम् 'उत्पत्तिविधौ कर्म करणत्वेनान्वेति'इति ।

अत एव "उद्भिदा यजेत" इत्यादौ तृतीयान्त उद्भिच्छब्द उपपद्यते, 'उद्भिदा यागेन इष्टं भावयेद्'इत्यन्वयोपपत्तेः ।

---

तथाऽस्तनीति । यदि सत्यपि विध्यन्वये भावनोत्पत्तिविधौ धात्वर्थं भाव्यत्वेन स्वीकुर्यात्, स्वीकुर्य्यात्तर्हि सत्यपि कामभेदेऽधिकारवाक्यगताऽपि भावना समानपदश्रुत्या तमेव भाव्यत्वेन । भाव्यस्य च भाव्यान्तराकाङ्क्षाया असत्त्वेन पदान्तरस्य स्वर्गकामादेः षष्ठाद्यपूर्वपक्षन्यायेन कथंचिदन्वयः कल्प्येत ततश्च फलसम्बन्धो न सिद्ध्येदित्याशयः । यद्यपि स्वर्गशब्दस्य प्रीतिवाचित्वात्तस्याश्चान्यत्र शेषत्वायोगाद् अग्निहोत्राधिकारवाक्ये समानपदोपात्तमपि धात्वर्थमुल्लङ्घ्य तस्या एव भाव्यत्वमित्युच्यते, तथाऽपि पशूनां साधनत्वान्वयार्हत्वादुद्भिद्वचने यागस्यैव भाव्यत्वेनान्वयः स्यात् । ततश्च तृतीयान्तोद्भिच्छब्दानन्वयप्रसङ्ग इत्याशयेनाह अत

येषामपि इष्टसाधनत्वं लिङर्थस्तेषामपि तृतीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्न एव। न हि सम्भवति 'याग इष्टसाधनमुद्भिदा' इति। तृतीयोपात्तस्य कारकस्य लिङ्गसंख्यान्वयायोग्यस्य क्रिययैवान्वयात्।

ननु तवापि "अग्निहोत्रं जुहोति" इत्यादिषु कर्मोत्पत्तिविधिषु द्वितीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्नः। न हि सम्भवति 'होमेन भावयेदग्निहोत्रम्' इति।

---

एवेति। विधीयमानधात्वर्थस्य करणत्वान्वयस्वीकारादित्यर्थः। प्रसङ्गाल्लिङर्थेष्टसाधनताप्रकारकं धात्वर्थविशेष्यकं बोधं वदतां मतमपाकरोति येषामिति। नन्वभेदार्थां तृतीयामङ्गीकृत्य 'उद्भिदभिन्नो याग इष्टसाधनम्' इत्यर्थं ब्रूमः, काऽनुपपत्तिरत आह उद्भिदेति। तृतीयेति। न तावत्करणत्वे सम्भावनादाविवाभेदे तृतीया व्याकरणे स्मर्यते कर्माङ्गत्वेन मन्त्राणामिव वेदाङ्गत्वेन व्याकरणस्मरणाच्च तदनुसार्यर्थे वैदिकशब्दस्य सम्भवति न तदननुसार्यर्थस्वीकरणमुचितम्। ततश्चोद्भिच्छब्दस्य द्रव्ये इव यागेऽपि व्युत्पत्तेः कल्प्यत्वाविशेषाद्विभक्तौ प्रसिद्धार्थानुसरणायोद्भिच्छब्दो द्रव्यपर एव स्वीक्रियताम्, तथा च भवतां क्रियात्वाभिमते धात्वर्थे तृतीयार्थस्य विनैव मत्वर्थलक्षणयाऽन्वयोपपत्तेर्नोद्भिच्छब्दस्य नामत्वं स्यात्, नतरां भवदभिमतवाक्यार्थ इति भावः। अन्वयादिति। अन्वयसम्भवादित्यर्थः। ननु न धातूद्भिच्छब्दयोर्भवन्मतेऽपि समानविभक्त्यन्तत्वादेकार्थत्वं विभक्त्यभावात्, नापि साधनतात्मकैकार्थान्वयितयाऽनुमयाऽप्येकार्थत्वं वक्तुं शक्यम्। वैयधिकरण्यादिति चेन्न। वैयाधिकरण्यात् सामानाधिकरण्यान्वयस्य युक्तत्वान्नामत्वसिद्धिरिति शङ्कां निराकर्तुं लिङ्गेति कारकविशेषणम्।

सत्यम् । श्रूयमाणा तावद् द्वितीया ऽर्थाक्षिप्तसाध्यत्वानुवादः । होमस्य हि करणत्वेनान्वयात्, असाधितस्य च करणत्वानुपपत्तेः, तस्याश्चानन्वयोपस्थितौ सा "सक्तून् जुहोति" इतिवत् तृतीयार्थं लक्षयति—'अग्निहोत्रेण होमेनेष्टं भावयेद्' इतीत्युक्तं पार्थसारथिमिश्रैः ।

अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानुपपन्नः । तत्सिद्धम्—'उत्पत्तिविधौ कर्म करणत्वेनान्वेति' इति ।

अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः । यथा "दध्ना जुहोति" इति । स हि तृतीयाप्रति-

---

लिङभिहितसिद्धावस्थसाधनतान्वयिनो धात्वर्थस्यासिद्धावस्थकारकान्वयिना नामार्थेन न भवत्यभेदप्रत्यभिज्ञा, भवति तूभयोरेकरूपकारकान्वये सत्याशयः । परमते तृतीयान्तानामिव द्वितीयान्तानामपि अन्वयो ऽनुपपन्नः, तद्वरं द्वितीयान्तेष्वेवानुपपत्तिस्वीकरणमित्याशयेनाह सत्यमिति । वक्ष्यमाणलक्षणतः प्राक् तदुपयोगिशक्यार्थप्रतीतिरुपपद्यते इति द्योतनार्थस्तावच्छब्दः । अङ्गेतिभावप्रधानो निर्देशः । यद्गतमङ्गत्वं यो बोधयति स तस्य विनियोगविधिरित्यर्थः । अङ्गत्वं च पारार्थ्यवाचिलिङादिसमभिव्याहारात् तत्त्वेन बोधयतु तृतीयादिसमभिव्याहारात्साधनतादिसम्बन्धज्ञापनमुखेन वा नात्र भेद इति कथनाय सम्बन्धः । ननु तृतीययैव सम्बन्धप्रतीतिसिद्धेः किं विधिनाऽत आह सहीति । न तृतीयादिविभक्तीनामङ्गत्वे स्वातन्त्र्यं सत्यामपि तृतीयायां प्रयाजशेषादेर्हविरभिघारणादौ शेषत्वाभावात्, असत्यामपि त-

पन्नाङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते–'दध्ना होमं भावयेद्' इति।

एतस्य च विधेः सहकारिभूतानि षट् प्रमाणानि श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यारूपाणि। एतत्सहकृतेन विधिनाऽङ्गत्वं परोद्देशप्रवृत्तकृतिव्या-

स्यां सक्तूनां होमशेषत्वात्। भवति हि प्रधानभूतविध्यनपेक्षितत्वाच्छक्यार्थेष्वपि तात्पर्यबाधः, सिध्यति चाशक्यार्थेष्वपि तदपेक्षितेषु तात्पर्यम् अतस्तृतीयया प्रतिपन्ने ऽपि साधनत्वे विध्यन्वयो ऽपेक्ष्यत इत्यर्थः। नचैवं विधिनैव योग्यताद्यालोचनसहकृतेन विनियोगसिद्धेर्विभक्तीनामकिञ्चित्करत्वमिति शङ्क्यम्। पदयोः समभिव्याहारे फलवत्त्वादिना नैकत्र शेषत्वमवधारयितुं शक्यम्, तत्र विभक्तेरेव विनिगमकत्वात्। यथा "मैत्रावरुणाय दण्डं ददाति" इत्यत्र। अस्ति ह्यत्रोभयोर्दण्डमैत्रावरुणयोः प्रयोजनवत्त्वम्। अस्ति चैतदन्यतरार्थत्वे दृष्टप्रयोजनलाभः। चतुर्थीसामर्थ्याच्चु द्वितीयाप्राप्तमपि दण्डप्राधान्यं परित्यज्य मैत्रावरुणस्यैव तदाश्रीयते।

ननु किमेतदङ्गत्वं अविनाभावनिरूपकत्वं वा प्रयोज्यत्वं वा आधिकपरिमाणत्वं वा विध्यन्तविहितत्वं वा उपकारकत्वं वा पारार्थ्यं वा ?।

नाद्यः। आग्नेयादीनां मिथोऽङ्गत्वापत्तेः। न द्वितीयः। पुरोडाशकपाले तुषोपवापानङ्गत्वापत्तेः। न तृतीयः। कोटिहोमाङ्गानामनङ्गत्वापत्तेः। न चतुर्थः। विध्यादिविहितशाखाच्छेदनादीनामनङ्गत्वापत्तेः। न पञ्चमः। आधानाध्ययनयोः कर्माङ्गत्वापत्तेः। न षष्ठः। पारार्थ्यं हि परोद्देशप्रवृत्तकृत्याश्रयत्वं वा स्यात् तादृशकृतिकर्मत्वं वा ?। नाद्यः। यागादेरनङ्गत्वापत्तेः। न द्वितीयः। पुरुषस्यानङ्गत्वापत्तेरत आह परोद्देशेति। परोद्देशप्रवृत्तत्वं परो-

प्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते ।

तत्र निरपेक्षो रवः श्रुतिः । सा च त्रिविधा-विधात्री, अभिधात्री, विनियोक्त्री चेति ।

तत्र विधात्री लिङाद्यात्मिका। अभिधात्री व्रीह्यादि-

---

देशेनोपपादितत्वम् । तच्च कृतिव्याप्यत्वस्य विशेषणम् । व्याप्यत्वशब्देन चोद्देश्यत्वानुद्देश्यत्वसाधारणं विषयत्वमुच्यते । ततश्च विध्यन्वयिन्यां कृतौ यद्विषयत्वानुपपत्तिर्यदुद्देश्यकत्वेन परिह्रियते तत्तस्याङ्गं तदर्थं चेत्युक्तं भवति। प्रसिद्धं ह्येतत् प्रेक्षावत्कृतौ पुरुषार्थविषयत्वं तत्साध्यपुरुषार्थोद्देश्यकत्वमन्तरेणानुपपन्नमिति । भवति च वपनादेर्विषयत्वानुपपत्तिपरिहारः पुरुषोद्देश्यकत्वेन । तदुद्देश्यकत्वानुपपत्तिपरिहारश्च क्रत्वपूर्वोद्देश्यकत्वेन वपनपुरुषयोः पुरुषक्रत्वङ्गत्वसिद्धिः । इत्थं यागस्वर्गयोः स्वर्गपुरुषौ प्रति शेषत्वमूह्यम् । भवति हि 'यागः किमर्थं कर्त्तव्यः' इत्याक्षेपे स्वर्गायेति समाधिः, 'स्वर्गः स्वपरसाधारणः किमर्थमुत्पाद्यः' इत्याक्षेपे च स्वार्थमिति समाधिः ।

केचित्तु परोद्देशप्रवृत्तत्वं शेषत्वम् । प्रवृत्तिरिति च चेतनाचेतनकर्तृकव्यापारमात्रमभिधीयते । अस्ति च सर्वकारकाणां स्वव्यापारे कर्तृत्वम् । सम्भवति चोद्देश्यतात्मिका विषयता । तत्रापि प्रयोजनानां 'पाकाय काष्ठानि ज्वलन्ति, धान्याय जलं स्रवति' इत्यादिव्यवहारात् । व्यवहारश्चाचेतनशब्दकर्तृके ऽप्यभिधाव्यापारे व्यक्तीनामुद्देश्यत्वं भवदेवः, प्रकृतिकर्तृकव्यापारे च प्रपञ्चोद्देश्यकत्वं कपिलः । ततश्च यदुद्देशेन यद् व्याप्रियते तत्तदङ्गमित्याहुः ।

तत्रेति । यच्छब्दज्ञानमन्यव्यवधानमपेक्ष्य यदर्थज्ञानं जनयति स तस्मिन्नर्थे श्रुतिरित्यर्थः । नच विनियोजकमा-

श्रुतिः। यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री। सा च त्रिधा—विभक्तिरूपा, समानाभिधानरूपा, एकपदरूपा चेति।

तत्र विभक्तिश्रुत्याऽङ्गत्वम्, यथा "व्रीहिभिर्यजेत" इति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम्। न च उत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामङ्गत्वमिति वाच्यम्। पुरोडाशप्रकृतितयोपपत्तेः। पशोरिव हृदयादिरूपहविष्प्रकृतितया यागाङ्गत्वम्। न च साक्षात्पशोरेवाङ्गत्वं किन्न स्यादिति

---

नप्रस्तावे विनियोगे अभिधात्रीसाधारणलक्षणकथनं तन्निर्देशश्चासङ्गताविति शङ्क्यम्। विधितद्विनियोज्योपस्थापनेन विधिसहकारित्वस्य तयोरपि तुल्यत्वात्। तत्त्वेनैव निरूपणीयतया तेषां प्रस्तुतत्वात्साधारणोऽप्यभिधात्रीशब्दो ब्राह्मणपरिव्राजकन्यायेन विशेषपरो बोध्यः। यस्य चेति। शेषिशेषत्वाभिमतयोस्तत्तद्रूपेणोपस्थितयोः सम्बन्धबोधो व्यवधानमनपेक्ष्य यच्छब्दज्ञानेन जन्यते सा विनियोक्त्री। सम्बन्धश्चाङ्गत्वात्मना साधनत्वात्मना सम्बन्धात्मना वा प्रतीयतां न तद्विशेषो लक्षणेऽपेक्ष्यते। तेन लृट्लृट्तृतीयाषष्ठीपदश्रुत्यादीनां सङ्ग्रहसिद्धिरित्याशयः। भवतूत्पत्तिशिष्टपुरोडाशसाधनत्वानुरोधेनोत्पन्नशिष्टस्य व्रीहिसाधनत्वस्य प्राणाडिकत्वम्। उत्पत्तिशिष्टं तु पशोः साधनत्वम्। अतस्तदनुरोधेन "हृदयस्याग्रेऽवद्यति" इत्यादिवचःसु चोदकप्राप्तावदानप्रदेशत्वेन मध्यादिवद्धृदयादिविधानमुचितं न तस्य प्राणाडिकत्वमत आह न च साक्षादिति। न विशसनविशिष्टस्य हेतुत्वसं-

वाच्यम् । तस्य विशसनात् । अवदीयमानत्वाच्च हृदयादीनाम् । अवदीयमानं हि हविः, यथा पुरोडाशादि । "मध्यात्पूर्वार्द्धाच्चावद्यति" इति वाक्यात् । हृदयादीनि चावदीयमानानि न पशुः, "हृदयस्याग्रेऽवद्यति" इति वाक्यात् । अतो हृदयादीन्येव हवींषि, पशुस्तु प्रकृतिद्रव्यम् । पात्नीवतयागे तु साक्षात्पशुरेवाङ्गम् । तस्य जीवत एव "पर्यग्निकृतं पात्नीवतमुत्सृजन्ति" इत्युत्सर्गविधानात् । यत्र तु विशसनं तत्र पशुः प्रकृतिद्रव्यमित्येव सिद्धम् । एवं व्रीहयोऽपि प्रकृतिद्रव्यतया यागाङ्गं तृतीयाश्रुत्येति ।

---

भव इत्यर्थः । यद्वा "प्रशमावस्य बाहू", "श्येनमस्य वक्षः", "षड्विंशतिरस्य वंक्रयः" इत्याद्यङ्ग्रिगुणप्राशस्त्यश्येनाद्याकृतीयत्ताकथनेनाविकलतत्तदुद्धरणपर्यन्तं विशसनमुपदिश्यमानं पशोः साक्षादङ्गत्वे व्यर्थं स्यादित्याशयः । भवतु तर्हि पशावसम्भवतो देवतासम्बन्धस्याविशेषेण सर्वतदवयवेष्ववतरणं तत्राह अवदीयमानत्वादिति । प्रकृतिभूतपयोयागादतिदेशप्राप्तं हविःसंस्कारकमवदानं हृदयादिषु निर्दिश्यमानं तेषां हविष्ट्वं गमयति भक्षणमिव फलचमसस्य, तद्द्वारैव पशोः साधनतोपपत्तेर्नेतरेषां साधनत्वकल्पना युक्तेत्याशयः । इत्थं च सर्वपशुयागेषु प्रसक्तोत्सर्गापवादमाह पात्नीति । साक्षादेवेत्यन्वयः । इतिर्हेतौ । "पर्यग्निकृतम्" इतिवचसि विहितया क्लृप्तोपकारिकया पर्यग्निकरणान्ताङ्गरीत्या निराकाङ्क्षेण "त्वाष्ट्रं पात्नीवतम्" इति यागविधिना जीवत एव पशोर्देवतोद्देशेनोत्सर्गविधानादित्यर्थः । द्रव्यविनियोगं नि-

आरुण्यस्यापि क्रयाङ्गत्वन्तृतीयाश्रुत्या। न चामूर्त्तस्य तस्य कथं क्रयाङ्गत्वमिति वाच्यम्। एकहायनीरूपद्रव्यपरिच्छेदद्वारा तदुपपत्तेः।

"व्रीहीन्प्रोक्षति" इत्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या। तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम्, स्वरूपे आनर्थक्यात्, व्रीहिस्वरूपस्य प्रोक्षणं विनाऽनुपपत्त्यभावात्, किं त्वपूर्वसाधनत्वप्रयुक्तम्, यदि व्री-

---

रूप्य तदपेक्षं गुणविनियोगमाह आरुण्यस्येति। तृतीयावगतव्रीहिविनियोगोपजीवनेन द्वितीयाश्रुत्या प्रोक्षणाविनियोग इत्याह व्रीहीनिति। नन्वेवं प्रोक्षणस्य न प्रकरणात्क्रत्वङ्गत्वं सिध्येदित्याशङ्क्य श्रुतिरेवेयं प्रकरणसहकृता तदङ्गत्वे पर्यवस्यतीति वक्तुमाह तच्चेति। आधानं प्रत्यग्नीनामिव प्रयोजनवतां व्रीहीणां भवेत्प्रोक्षणं प्रति शेषत्वमत आह व्रीहिस्वरूपस्येति। अग्निगताहवनीयाद्यलौकिकरूपस्य तु शास्त्रगम्योपायकत्वान्न तत्रानर्थक्यमित्याशयः। भवतु तर्हि स्वगताङ्गादवशिष्टाकारेण व्रीहीणां शेषित्वमित्याह किंत्विति। नाहवनीयादिरूपवद्व्रीहिगतादृष्टरूपं प्रयोजनवत्तया शास्त्रान्तरादवगतं यत्तदाकारेण व्रीहयः शेषितां भजेयुः। अतः प्रकृतशास्त्रान्तरावगतमपूर्वसाधनरूपं व्रीहिपदे लक्ष्यते। तद्रूपशेषत्वेन श्रुत्या प्रोक्षणं विनियुज्यत इत्याह अपूर्वेति। ननु न स्वरूपयोग्यतात्मिकायां साधनतायां प्रोक्षणोपयोगः, तस्या लौकिकव्रीहिष्वपि सत्त्वात्, नापि फलोपधानात्मिकायां व्रीहिप्रोक्षणयोरुभयोरपि दण्डचक्रवत्सामग्र्यन्तःप्रवेशे तुल्ये ऽन्यतरफलोपधाने ऽन्यतरप्रयोज्यताया वक्तुमशक्यत्वादत आह यदिहीति। आग्नेयप्रयाजा-

हिषु प्रोक्षणं क्रियते तदा तैर्यागे अनुष्ठिते ऽपूर्वं भवति नान्यथेति । अतः प्रकरणसहकृतया द्वितीयाश्रुत्या तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनं तदङ्गत्वं प्रोक्षणस्योच्यत इति । एवं सर्वेष्वप्यङ्गेषु अपूर्वप्रयुक्तत्वं वेदितव्यम् ।

---

पूर्वयोः फलापूर्वसामग्रीप्रवेशे तुल्ये ऽपि शास्त्रवशादाग्नेयापूर्वस्य फलोपधाने यथा प्रयाजापूर्वोपयोगव्यवहारः, तथा प्रकृते व्रीहीणां फलोपधानं प्रोक्षणायत्तमिति शक्यं व्यवहर्तुम् । माऽस्तु वा द्विविधसाधनतायामपि प्रोक्षणोपयोगः, अपूर्वसाधनताया उद्देश्यतावच्छेदकत्वमहिम्नैव स्वपूर्वशेषत्वसिद्धेर्नानर्थक्यमित्याशयः । नन्वपूर्वसाधनमात्रस्योद्देश्यतायां स्रुवसान्नाय्यादिष्वपि प्रोक्षणापत्तिः, व्रीहित्वस्यापि विवक्षणे युगपद्वृत्तिद्वयविरोधो वाक्यभेदो, यवेषु प्रोक्षणाप्राप्तिश्चेति शङ्कां निराकुर्वन्नुपसंहरति अतइति । यादृशप्रणाड्या यदपूर्वं प्रति साधनत्वं "व्रीहिभिर्यजेत"इत्यत्र व्रीहित्वे कार्यसमवाय्यवगतं तादृशसाधनत्वस्यैव लक्षणतेति न सान्नाय्ये प्रसक्तिः, तस्यापूर्वान्तरासाधनत्वात्, नापि स्रुवादौ तस्य प्रणाड्यन्तरेण साधनत्वात् ।

भवति च यवेषु प्रोक्षणप्रसक्तिः, तादृशसाधनत्वासत्त्वादित्यर्थः ।

ननु विनियुक्तान् व्रीहीनुद्दिश्य विहितस्य भवत्वपूर्वार्थत्वं विनियुज्यमानविनियोक्ष्यमाणयोस्तु चमसाध्वर्युपयसोरुद्देशेन विधीयमानयोर्वरणदध्यानयनयोर्न तदर्थत्वम्, प्रागनवगतापूर्वसाधनत्वस्य लक्षयितुमशक्यत्वात्, अत आह एवमिति । वरणं तावद् 'वृतैश्चमसाध्वर्युभिरपूर्वं कुर्याद्'इतिबोधयता वचनेन चमसाध्वर्युवद् अपूर्वभावनान्वयितया बोधितं विनैव लक्षणया भवति तदर्थम्, दध्यानयनमपि "सा वैश्वदेव्यामिक्षा"इति सर्वनाम्ना संस्कारवि-

एवम् "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्रापि द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम् ।

यत्तु वाक्यीयोऽयं विनियोग इति । तन्न । तथा सति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यङ्गं भवति तावल्लिङ्गाद्रशनामात्राङ्गत्वमेव स्यात्, "स्योनं ते सदनं कृणोमि"इत्यस्येव सदनाङ्गत्वम् । श्रौतविनियोगपक्षे तु यावल्लिङ्गाद्रशनामात्राङ्गत्वं भवति तावच्छ्रुत्या "ऐन्द्र्या गार्हपत्यमुपतिष्ठते"इत्यत्र तृतीयाश्रुत्या ऐन्द्र्या ऋचो गार्हपत्योपस्थानाङ्गत्ववद् अश्वाभिधान्यां विनियोगः क्रियते इति युक्तं मन्त्रस्याश्वाभिधान्यङ्गत्वम् । तस्माच्छ्रौत एवायं विनियोगः ।

"यदाहवनीये जुहोति"इत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्येऽपि विभक्तिश्रुत्या वि-

शिष्टं पयः परामृश्यापूर्वे विनियुञ्जता ऽपूर्वे विनियुक्तं भवतीत्याशयः । विस्तरेण चापूर्वसाधनलक्षणोपपत्तिमग्रे वक्ष्यामः । इतिकरणस्याश्रुतित्वं द्वितीयायाश्च क्रियामात्रनिरूपितप्राधान्यबोधकत्वमिति "इमामगृभ्णन्"इत्यस्य वाक्येन विनियोगः कैश्चिदभ्यधायि, तन्निराकर्तुमाह इमामिति । यद्यपि नेतिकरणस्य श्रुतित्वं तथाऽपि विशिष्टक्रियाया द्वितीयया बोध्यमानो विनियोगो विशेष्यांश इव विशेषणांशे ऽपि भवति श्रौत इत्याशयः । विशिष्टविनियोजकविभक्त्या विशेषणविनियोगस्य श्रौतत्वव्यवहारमन्यत्राप्याह यदेति । एवमिति । ज्ञाप्यते हि "मैत्रावरुणाय

नियोगा ज्ञेयाः ।

"पशुना यजेत" इत्यत्रैकत्वपुंस्त्वयोः समा-

---

दण्डं प्रयच्छति" इत्यत्र चतुर्थ्या स्वप्रकृत्यर्थशेषत्वं दण्डदाने । अत एव मैत्रावरुणो ऽपि दण्डप्रयोजक इत्युक्तं चतुर्थे । ज्ञाप्यते च "वासिष्ठानां नाराशंसः" इत्यत्र षष्ठ्याऽपि द्वितीयप्रयाजाश्रितमन्त्र-नियमस्य वासिष्ठाङ्गत्वम् । अत एव 'न वासिष्ठानां सत्रे सहाधि-कारः' इत्युक्तं षष्ठे(१)। ज्ञाप्यते च पञ्चम्याऽपि स्वप्रातिपदिकार्थस्य परशेषत्वं "मध्यात्पूर्वार्द्धाच्च हविषो ऽवद्यति" इति । अत एव 'अवत्तनाशे ऽवशिष्टा न पुनरवदेयाः, अनपादानतया तच्छेषस्य तत्कर्मत्वायोगाद्' इत्युक्तं षष्ठे(२) । एवं विभक्त्यन्तरप्रमाणको वि

---

(१) षष्ठेऽध्याये षष्ठे पादे चतुर्थाधिकरणे सत्रे ब्राह्मणमात्रस्या-धिकार उत तद्विशेषाणामिति सत्राधिकारविषयकसन्देह ऋद्धि-कामस्य सत्रविधानादार्त्विज्यस्य ब्राह्मणमात्रकार्यत्वाद्ब्राह्मणमात्रस्य ऋद्धिकामत्वात्तन्मात्रस्याधिकार इत्येकस्मिन् पूर्वपक्षे प्राप्ते तन्निवा-रकतया "वासिष्ठो ब्रह्मा भवति" इति वाक्येन वासिष्ठस्य ब्रह्म-त्वविधानादवासिष्ठस्य तत्वासम्भवात्तस्य तत्राधिकारोऽवश्यं वक्तव्यः । ततश्च सत्रे समानकल्पानामधिकारस्य निर्णीतत्वेन विभिन्नकल्पत्ववारणाय वासिष्ठानामेवाधिकार इति द्वितीयपूर्वप-क्षे प्राप्ते सिद्धान्तः—वासिष्ठो ब्रह्मेति वाक्यस्य विधित्सितस्तो-मभागस्य स्तुत्यर्थत्वेन ब्रह्मत्वस्य वासिष्ठमात्रसम्बन्धित्वसाधक-प्रमाणाभावेन "विश्वामित्रो होता" इतिवाक्यविहितहोतृत्वस्य सि-द्ध्यै उक्तरीत्या विश्वामित्रस्याधिकारावश्यकत्वे तत्समानकल्पानामे-वाधिकार इति सिद्धान्तितम् ।

(२) षष्ठे चतुर्थपादे प्रथमाधिकरणेऽवत्तनाशे शिष्टाद्ग्रहणवि-षयकसन्देहे मध्यपूर्वार्द्धापादानकमवदानं "मध्यादवद्यति पूर्वा-र्द्धादवद्यति" इति श्रुत्युक्तं शिष्टेऽपि मध्यपूर्वार्द्धत्वादिसम्भवा-च्छेषतोऽपि ग्राह्यमिति पूर्वपक्षे सिद्धान्तः—

कृत्स्नपुरोडाशगतमध्यपूर्वार्द्धयोरपादानत्वेन श्रवणाच्छिष्टे कृत्स्नत्व-

नाभिधानश्रुत्या कारकाङ्गत्वम् । यजेतेत्याख्याताभिहितसङ्ख्याया भावनाङ्गत्वं समानाभिधानश्रुतेरेकपदश्रुत्या च यागाङ्गत्वम् । न चामूर्त्ताया

---

नियोगो ज्ञेय इत्यर्थः ।

यद्वा यथा विभक्त्या प्रकृत्यर्थे ऽन्यस्य प्रकृत्यर्थस्य चान्यत्र शेषत्वं बोध्यत इत्युक्तं तद्विपरीतोऽपि तत्प्रमाणको विनियोगः क्वचिद्बोध्यः । ज्ञाप्यते हि "तप्ते पयसि"इत्यत्र द्विकर्मकधातुविशिष्टविधिनाऽऽर्थिकव्याप्यमानत्वे गृहीततात्पर्यकया सप्तम्या पयसः शेषित्वम् । ज्ञाप्यते च "हिरण्यमात्रेयाय ददाति"इत्यत्र हिरण्यात्रेययोः शेषसंस्कारानर्हत्वेनेप्सितत्वरहितकारकमात्रे गृहीततात्पर्यकाभ्यां द्वितीयाचतुर्थीभ्यां प्रकृत्यर्थयोः शेषत्वम् । ज्ञाप्यते च "ऐन्द्रवायवं गृह्णाति"इत्यादौ विशिष्टार्थविधायिपदोत्तरया द्वितीयया विशेष्यगतमीप्सितत्वं प्रकरणलभ्यमावेदयन्त्या विशेषणदेवतायास्तद्द्वारकं क्रियासम्बन्धं बोधयन्त्या ग्रहणाङ्गत्वमित्याशयः ।

कारकाङ्गत्वं तत्सम्बन्धः । यदि समानाभिधानश्रुत्या संख्याया भावनाङ्गत्वं तर्हि आख्यातवाच्यः कर्त्तैवेति वदतां सङ्ख्यायाः क्रियाङ्गत्वं किं न सिध्येदत आह पदश्रुत्येति । यागेति धात्वर्थभूतक्रियोपलक्षणार्थम् । इयांस्तु भेदः–तन्मते कर्त्तृद्वारैव सङ्ख्यायाः क्रियान्वयः । स्वमते तु सा-

---

विशेषणाभावप्रयोज्यविशिष्टाभावसत्त्वेन तन्मध्यपूर्वार्द्धयोरपादनत्वेन ग्रहणासम्भवान्मुख्यहविर्नाशादाज्यं प्रति निधाय यष्टव्यमिति । अत एव "यस्य सर्वाणि हवींषि विनश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः परिसङ्ख्याय यजेत" इति श्रूयते । श्रुतौ निमित्तविशेषणत्वेन सर्वशब्दार्थस्याविवक्षणान्नाशमात्रे सर्वत्राज्यस्य विधिरिति ।

स्तस्याः कथं यागाङ्गत्वमिति वाच्यम् । कर्तृपरिच्छेदद्वारा तदुपपत्तेः। कर्त्ता चाक्षेपलभ्यः। आख्यातेन हि भावनोच्यते। सा च कर्त्तारं विनाऽनुपपन्ना तमाक्षिपति ।

ननु किमित्येवं 'वर्ण्यते आक्षेपलभ्यः कर्त्ता' इति। आख्यातवाच्य एव किन्न स्यात् आख्यातश्रवणे भावनाया इव कर्त्तुरपि प्रतिपत्तेः । नच भावनयैवाक्षेपसम्भवे किमिति तद्वाचकत्वं कल्पनीयमिति साम्प्रतम् । तथा सति आख्यातवाच्यकर्त्रैव भावनाऽऽक्षेपसम्भवे तद्वाचकत्वमपि न स्यात्। किंच भावनाया न केवलं कर्त्रैव सम्बन्धः, कारकान्तरेणापि सम्बन्धात् । अतः सा न झटिति कर्त्तारमेवाक्षिपेद् विशेषाभावात् । कर्त्ता तु भावनयैव सम्बद्धो न कारकान्तरेण, "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्याद्" इति न्यायात्। अतः स झटिति

---

क्षादिति कथममूर्त्तस्य साक्षादन्वय इति चेत्तत्राह नचेति। नन्वेवं क्रियायां विनियुक्तस्यैव कर्त्तुरेकहायन्येव परिच्छेदसम्भवादभिहितस्यैव शब्देन विनियोगसम्भवात् स्वीकार्यमाख्यातवाच्यत्वमत आह कर्त्ता चेति । सम्भवत्यनभिहितस्यापि कर्तुराक्षेपादङ्गत्वबोधो विवृद्धस्तोमकेषु क्रतुष्वागम्यमानानां मन्त्राणामिवेत्याशयः। वैयाकरणः शङ्कते नन्विति । तथासतीति । तद्वाचकत्वं न स्यादित्यपि वचः स्यादिति योज्यम् ।

तामाक्षिपेद् इति स एवाख्यातवाच्यः। भावना तु आक्षेपलभ्यैव किन्न स्यात्। किं चैवं तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात्, तेषामपि कर्तृवदाक्षेपेण लाभसम्भवात्।

किं च यदि कर्त्ता न वाच्यः स्यात्कथमेकत्वं तेनान्वियात्। न हि शाब्दमशाब्देनान्वेतीति युक्तम्। अन्यथा ऊहादिलोपप्रसङ्गः। किं च 'देवदत्तः प-

---

आक्षेपलभ्यैवेति। स्वीक्रियते हि सिद्धान्तिना यथा पक्त्वा इत्यादिकृदन्तेषु कर्तुः शक्यत्वं भावनायाश्चाक्षेपलभ्यत्वं तथैवाख्याते स्वीकर्त्तुमुचितम्, आख्यातवद्वा कृदन्तेष्वपि भावनाया एव शक्यत्वं वक्तुमुचितम्। अथ तत्र लिङ्गसङ्ख्याऽन्वयाय कर्त्तुः शक्यत्वमङ्गीक्रियते, तर्हि आख्याते ऽपि सङ्ख्यान्वयायाङ्गीक्रियताम्। अथाख्यातस्थले कारकान्वयाय भावनाभिधानस्यावश्यकत्वात् कर्त्तुराक्षेपस्तर्हि काष्ठैः पक्वमित्यादिषु कारकान्वयाय कृदन्तेष्वपि भावनाभिधानापत्तिः। अथ कृदन्तेषु कर्त्रादेराख्यातेषु भावनायाः प्राधान्यप्रतीतेरभिधेयव्यवस्थेत्युच्यते। तन्न। जातिगुणशब्दजन्यप्रतीतिष्वनभिधेयानामपि व्यक्तीनां प्राधान्यानुभवाद् इत्याशयः। तेषामपीति। शक्यते हि वक्तुं कर्तृकरणयोरित्याद्येकवाक्येन द्व्येकयोरित्यादिना कर्त्तृकरणैकत्वादौ तृतीयैकवचनादि विधीयत इति। अन्यथेति। तरसमयपुरोडाशेषु पेषणकाले प्रत्यक्षोपस्थितमांसान्विताक्रियाप्रकाशनं कुर्वता मन्त्रेण प्राकृतकार्यसिद्धेर्न मांसमसीति ऊहः स्यात्, उपमितप्रकृतिविधिलाक्षितप्राकृताङ्गोपकारविशिष्टाम्भावनां विदधतश्च विकृतिविधेर्नैरा-

चाति' इति सामानाधिकरण्यं न स्यात् । न हि केवलं भावनावाचकस्याख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते, एकार्थनिष्ठत्वाभावात् । कर्तृवाचकत्वे तूपपद्यत एव । 'लः कर्त्तरि' इति व्याकरणस्मृतिविरोधस्तु कर्तुरनभिधेयत्वे स्पष्ट एव । किं च कर्त्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगः स्यात् तृतीया हि अनभिहितयोः कर्तृकरणयोर्विहिता, आख्यातेन च कर्त्ता नाभिहित इति कर्तृवाचिनी तृतीया

---

काङ्क्ष्यसम्भवेन नातिदेशवचःकल्पना स्यादित्याशयः । सामानाधिकरण्यम् एकसंख्याभिधायकविभक्त्यन्तत्वम् । तच्च तत्संख्यान्वये कार्याभिधानव्याप्तं, देवदत्तः पक्तेत्यादावुभयदर्शनादिति भावः । उपलक्षणं चैतत्, मध्यमोत्तमादिव्यवस्थाप्रयोजकं युष्मदादिसामानाधिकरण्यमपि न स्यादिति बोध्यम् । लइति । "कर्त्तरि कृद्"इत्यस्मिन्सूत्रे हि कर्त्तरि पदं कृदभिधेयतया कर्त्तारं प्रतिपादयति इत्यविवादम्, तस्माच्च "लः कर्मणि च भावे चाकर्मकेभ्यः" इतिसूत्रे कर्त्तरीत्यनुवृत्त्या निष्पद्यमानमेव लःकर्त्तरीतिसूत्रं कर्त्तुर्लकाराभिधेयत्वं बोधयति, अबोधकत्वे वा तिङामिव शतृशानचोरपि लादेशत्वाविशेषेण तत्रापि कर्त्रनभिधानमापद्येत, ततश्च "जञ्जभ्यमानोऽनुब्रूयाद्"इति विहितजपस्य न क्रतुयुक्तपुरुषधर्मत्वं स्यादित्याशयेन । स्पष्टइति । स्मृतिनिरूपितो विरोधस्तत्कृतो वा जञ्जभ्यमानाधिकरणनिरूपितो विरोधस्तथोक्तः । नच "कर्त्तरि कृद्"इत्यनेन शत्रादेः कर्तृवाचित्वलाभसम्भवः, तस्य स्थान्यर्थे निराकाङ्क्षण्वुलादिकृद्विषयत्वात् । सत्य-

स्यादेव। कर्त्तुरभिधाने तु अभिहितत्वादेव तृतीया न प्राप्नोति, तस्या अनभिहिताधिकारत्वात्। देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव, प्रथमाया अ-

---

पि तल्लाभे भावकर्मवाचित्वालाभेन क्रीयमाण इत्यादिप्रयोगानापत्तेश्चेत्याशयेनैवकारः। तस्या इति। अनभिहिताधिकारे "कर्तृकरणयोस्तृतीया" इत्यनेन विहितत्वादित्यर्थः। अथोच्येत 'लः कर्तरि' इत्यस्य तृतीयादिविधायकसूत्रस्य च द्व्येकयोरित्याद्येकवाक्यत्वेन कर्त्रादिसङ्ख्यायामेकवचनादि तृतीयैकवचनादि च विधीयते, ततश्चाधिकारप्राप्तानभिहितत्वं सङ्ख्यायामन्वेति विशेषणानां प्रधानगामित्वात्, अतः पचतीत्यनेन कर्त्तुरनभिधाने ऽपि कर्तृसंख्याया अभिहितत्वान्न देवदत्तेनेति तद्वाचकविभक्तिप्रसक्तिरिति। तन्न। लकारस्यैकवचनाद्यनात्मकत्वेन ल इत्यस्य द्विवचनैकवचन इत्यनेन सामानाधिकरण्यान्वयायोगात्। ङसन्तेन ल इत्यनेन निरनुबन्धलकारसामान्यग्रहणमङ्गीकृत्य "वर्तमाने लट्" इत्यादिविहितस्य लस्यादेशभूते द्विवचनैकवचने इत्यन्वये ऽपि द्विवचनादिसंज्ञावतो लादेशतिबादेरेवार्थकथनापत्तेः संज्ञारहितस्य शानजादेरर्थो न कथितः स्यात्, स्याच्चादेशपदाध्याहारनिमित्तं गौरवम्। लकारवच्च तृतीयादेरपि कर्तृकरणाद्यनभिधायित्वे सत्यैन्द्व्येत्यादौ श्रुतित्वासम्भवः। अतोऽसति लादिविधौ द्व्येकयोरित्यनेनैकवाक्यत्वे कर्त्तुराख्यातानभिधेयत्ववादिना न कर्तृगतसंख्याया आख्याताभिहितत्वं नियन्तुं शक्यम्, यत्किंचित्कारकं परिच्छिन्दत्या अपि क्रियाङ्गत्वोपपत्तेः। नापि संख्यायामनभिहितत्वान्वयित्वम्, प्राधान्येनोपस्थिते कर्त्रादावेव तदन्वयात्, तेन देवदत्तेन पचतीतिप्रयोगापत्तिः। भवतु वा सङ्ख्याविशेषणमनभिहितत्वं तथाऽपि संख्यायाः कृत्तद्धितसमासा-

भिहितकारकविभक्तित्वात्, प्रातिपदिकार्थमात्रवाचित्वाद्वा। न च तदा प्रातिपदिकेनैवार्थस्योक्तत्वात्प्रथमावैयर्थ्यम्। लिङ्गसङ्ख्याप्रतिपत्त्यर्थं तस्यावश्यकत्वात्। केवलप्रातिपदिकस्य प्रयोगासाधुत्वाच्च। ततश्च यदि

---

भिहितत्वमप्रसक्तमिति तिङनभिहितत्वमेव विशेषणं स्यात्। ततश्च देवदत्तेन पक्तेति प्रयोगापत्तिः। चैत्रो मैत्रश्च गच्छत इत्यत्र च तिङाद्यनभिहितायां कर्त्रेकत्वसङ्ख्यायां चैत्रेण मैत्रेणेति तृतीयापत्तिरिति। को देवदत्तो यः शुक्लवासा इत्यादौ विनैव क्रियां प्रथमान्तयोर्नैराकाङ्क्ष्यान्न प्रथमायाः कारकविभक्तित्वमित्यस्वरसादाह प्रातिपदिकेति। यद्यपि "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इति पाणिनिना ऽनेकार्थेषु प्रथमा विहिता, तथाऽप्यलिङ्गनियतलिङ्गेभ्य उच्चैर्ज्ञानादिशब्देभ्यः परस्याः प्रथमायाः प्रातिपदिकार्थमात्रवाचित्वोपगमात्प्रकृतदेवदत्तपदस्य च नियतलिङ्गत्वात्तदभिप्रायेण तन्मात्रवाचित्वोपन्यास इति बोध्यम्। किं प्रकृतोदाहरणे प्रथमावैयर्थ्यमापाद्यत उत सर्वत्र?। नान्त्यः। अन्यत्र प्रथमायाः प्रयोजनान्तरसत्त्वादित्याशयेनाह लिङ्गेति। लिङ्गं च संख्या च प्रतिपत्तिश्चेति विग्रहः। सिंहो ऽस्तीत्यादौ लिङ्गमात्रार्था, घटावित्यादौ संख्यामात्रार्था, द्रोणो व्रीहिरित्यादौ च द्रोणपदोत्तरा परिमाणाभिधानेन व्रीह्यन्वयप्रतिपत्त्यर्था। भवति हि प्रातिपदिकार्थाभेदान्वयिनो विभक्त्यर्थपरिमाणसामान्यस्य परिच्छेदकत्वेन व्रीह्यन्वयप्रतिपत्तिः, नतु प्रातिपदिकार्थस्यैव, साक्षात् नामार्थयोरभेदेनैवान्वयात्। प्रतिपत्तिपदेन पदार्थान्तरान्वयप्रतिपत्तिरुच्यते। आद्ये आह केवलेति। प्रकृतिसाधुत्वसिद्धिरेवात्र फलमित्यर्थः। एतेन द्वौ त्रय इत्यत्रापि विभक्तिवैयर्थ्यं निरस्तम्।

नन्वेवमपि क्रियाश्रयस्य कर्त्तृत्वात्तत्साध्यस्य कर्मत्वादाकृतिन्यायेन क्रियाया एव वाच्यत्वं युक्तम्, कर्तृकर्मोभयवाचिनश्चाख्यातस्य कथं व्यवस्थयोभयबोधकत्वमिति चेत् । शृणु। क्रिया तावद्धातुनैवाभिधीयते, "भूवादयो धातवः" इति सूत्रेण भूप्रभृतयो वासदृशा इति लक्षणपरेण क्रियावाचित्वे सति गणपठितत्वस्य धातुलक्षणतयोक्तेः, किं कृतं भुक्तमित्यादिप्रयोगाच्च, स्वार्थव्यापारानधिकरणवृत्तिफलवाचित्वेन तद्वृत्तिफलवाचित्वेन धातुषु सकर्मकत्वाकर्मकत्वव्यवहारोपपत्तेश्च । अत एव फलमपि धातुवाच्यम् । आख्यातेन च निष्कृष्टशक्त्यात्मकमाश्रयत्वमात्रमभिधीयते । तथा द्वितीयातृतीयाभ्याम् । आख्यातार्थे च प्रथमान्तपदार्थस्य अभेदेन विशेषणत्वम्, आख्यातेन च शबादिगृहीततात्पर्यकेण बोधिताश्रयत्वस्य धात्वर्थव्यापारं प्रति विशेषणत्वे सति फलं प्रति द्वितीयार्थस्य विशेषणत्वेनान्वयः। यगादिगृहीततात्पर्यकेण तु बोधितस्य फलं प्रत्यन्वये व्यापारं प्रति तृतीयार्थस्यान्वयः। ततश्च देवदत्त ओदनं पचति, देवदत्तेनौदनः पच्यत इत्युभयत्रापि ओदनाश्रयकविक्लित्त्यनुकूलदेवदत्ताश्रयिका भावनेति बोधः। व्यापाराश्रयस्य च कर्तृत्वात्फलाश्रयस्य कर्मत्वात्तत्तद्विकरणवशेन व्यापाराश्रयं फलाश्रयं च बोधयतोः पचति पच्यत इत्यनयोर्भवति व्यवस्थया कर्तृकर्मबोधकत्वम्। सम्भवति चैवं सति समानाभिधानश्रुत्या संख्यान्वयव्यवस्थाऽपि । विशिष्टाभिधानाङ्गीकृतेश्च नाकृतिन्यायावतारः । नापि कृतित्वस्य शक्यतावच्छेदकत्वात्कृतीनां शक्यतावच्छेदकत्वगौरवोपन्यासावसरः। न च पक्तेत्यादिवत्पचतीत्यादावपि प्रत्ययार्थकर्तृविशेष्यक एव बोध आश्रीयतामिति वाच्यम् । भावप्रधानमाख्यातमिति विशेषस्मरणात् । ननु भावः पाकयागादिः, तदर्था क्रियाऽऽख्यातेनोच्यते इत्युक्तस्मृतेरर्थः। उक्तं हि निरुक्तव्याख्याने

"क्रियावाचकमपि सद् भावार्थत्वात् क्रियाया भावप्रधानमुच्यते" इति, अतः कथमेतत्स्मृतिवशेन प्रकृत्यर्थक्रियाया विशेष्यतारूपप्राधान्यसिद्धिरिति चेत् न । आख्यातार्थक्रियावादिभिरपि यजेत स्वर्गकामो, वेतनकामः पचेद् इत्यादौ क्रियाया भावार्थत्वानङ्गीकारात् । अमुमेव वा ऽस्वरसं मनसि निधाय व्याख्यान्तरमकारि व्याख्यातृभिः–

"एके पुनर्भावप्रधानमिति प्रकृत्यर्थप्रधानमिति मन्यन्ते । प्रकृत्यर्थविशेषणं हि प्रत्ययार्थादयः । भावः कर्म क्रिया धात्वर्थ इत्यनर्थान्तरम् । स यत्र प्रधानं गुणभूतानि साधनानि तदिदं भावप्रधानम्" इति ।

यच्च व्याख्यान्तरम्–"अपरे पुनर्भावकालकारकसंख्याश्चत्वार एवार्था आख्यातस्य तेषां भावप्रधानता भवति अतो भावप्रधानमाख्यातम्" इति, तत्रापि कर्त्तारं प्रति भावना प्राधान्येन भासत इति निर्विवादम् । तदुक्तं क्रियारूपाया भावनाया धात्वर्थभूताया आख्यातार्थं प्रति प्राधान्यम् । किञ्चाख्यातार्थस्य कर्तुः क्रियां प्रति प्राधान्ये तदभिन्नस्य प्रथमान्तार्थस्य न क्रियां प्रति गुणभावः स्यात् । भवत्वेवम्, स्वीकुर्वन्त्येव हि नैयायिका आख्यातार्थक्रियाप्रकारकप्रथमान्तार्थविशेष्यकं बोधमिति चेत् न । "तद्यत्रोभे भावप्रधाने भवतः" इति वचोविरोधात् । 'पश्य मृगो धावति' इत्यादौ धावनक्रियाविशिष्टस्य मृगस्य पश्येतिक्रियायां कर्मत्वापत्तौ मृगमिति द्वितीयां विना महाभाष्योक्ताया आख्यातद्वयैकवाक्यताया असम्भवापत्तेश्च । नामार्थानां कारकद्वारैव क्रियान्वयात् । सम्भवति तु क्रियायाः कारकव्यवधानमन्तरेणापि क्रियान्वयः, भुक्त्वा व्रजतीति दर्शनात् । तस्मादपि क्रियायां प्राधान्यम् । एवं च कर्त्तुराख्यातवाच्यत्वे प्रयाजादीनां गुणकर्मत्वापत्तिर्निरस्ता । स्वगुणत्वेन कर्त्तारं स्वीकुर्वत्याः क्रियायास्तं प्रति गुणत्वासम्भवा-

कर्त्ता न वाच्यः स्याद्देवदत्तेन पचतीति प्रयोगः स्यात्। तस्मादाख्यातवाच्यः कर्त्तेति सिद्धम्—" इति पूर्वपक्षसङ्क्षेपः।

अत्राहुः—स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते, "अनन्यलभ्यः शब्दार्थः" इति न्यायात्। अत एव न गङ्गापदस्य तीरमर्थः, लक्षणयैव प्रतिपत्तिसम्भवात्। अत एव च न वाक्यार्थे शक्तिः। एवं चाख्यातवाच्यभावना कर्त्तारं विनाऽनुपपन्ना तमाक्षिपतीत्याक्षेपादेव कर्त्तुः प्रतिपत्तिसम्भवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयम्। न च विनिगम-

---

त्। अस्तु वा गुणकर्मत्वं न तावता किंचिदनिष्टमित्येतन्मनसि निधायाह संक्षेप इति। पचतीत्युक्ते प्रतीयमानानां पाकतत्कृतितदाश्रयादीनां मध्ये यावतामभिधाविषयत्वं निर्णीतं तेष्वेवायं प्रकृत्यर्थो ऽयं प्रत्ययार्थ इति विभागः परेण कार्यः, वर्णात्मकं वर्णाभिव्यक्तं वा ऽखण्डं पदमभिधायकमिति सिद्धान्तस्मरणेन वा गवादिपदे न्यायमते गोत्वाद्यभिधायित्वमिव विशेषणविशेष्यभावापन्नं तावदर्थाभिधायित्वं तत्राङ्गीकृत्य न कार्यः। उभयथाऽपि कर्तुरभिधेयत्वं निराकर्त्तुं नाख्यातपदाभिधाविषयत्वमिति भूमिकामाह सइत्यादिना। आख्यातस्य पचतीत्यादेः पदस्य। सत्यमाक्षेपलभ्यस्य नाभिधेयत्वं कर्त्राऽपि भावनाक्षेपसम्भवेन विनिगमनाविरहात्तु कर्तृक्रिययोरभिधेयत्वं ब्रूमो ऽत आह नचेति। कर्त्तेत्यनन्तरं त्वया ऽऽख्यातपदवाच्यत्वेन स्वीकार्य इति शेषः। 'वः नः' इत्यादिपददृष्टान्तेन एऐइसादिदृष्टा-

नाविरहः। कृतिमान् हि कर्ता, एवं च कृतेरेव भावनापरपर्यायाया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसम्भवे न तद्वतः कर्त्तुर्वाच्यत्वं कल्पनीयम्, गौरव-

न्तेन च कल्पितप्रकृतिप्रत्ययविभागवर्णविभागपदगताभिधावादिना ह्युक्तन्यायेन विशिष्टाभिधाने स्वीकृते कृतिविशिष्टकर्त्रभिधानमेवाभ्युपेयं कर्त्तरि कृदित्यस्माल्लविधावनुषक्तस्य कर्तरीत्यस्य स्वोपन्यस्ततुल्यार्थत्वनिर्वाहाय तदनुरोधेन च भावप्रधानमाख्यातमित्यस्यौत्सर्गिकत्वेन प्रथमव्याख्यैवानुसर्त्तव्येत्यर्थः। ओमिति वदन्तं प्रत्याह एवंचेति। आकृतिन्यायादेव विनिगमनालाभ इत्यर्थः। अथ प्रोक्षण्यधिकरणोक्तन्यायेन(१)प्रकृतिप्रत्यययोस्तदर्थयोश्च भेदमाश्रित्य भावप्रधानमित्यस्यानुरोधेन प्रकृत्यर्थभावनाविशेष्यकमेव बोधमाख्यातपदे यदि वदामः कर्त्तरीत्यनेनच तृजर्थमात्रवाच्यत्वसमर्पणं सूत्रद्वये ऽपि तुल्यं ब्रूमः, तदा कुतो हेतोर्विनिगमनालाभ इत्यत आह गौरवेति। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येनेति पूर्वाचा-

(१) इदं प्रथमाध्यायस्य चतुर्थे नवममधिकरणम्। अस्मिन्हि दर्शपूर्णमासप्रकरणस्थप्रोक्षिणीमासादयेतिवाक्यमधिकृत्य विचारः। तत्र प्रोक्षणीशब्दस्य सर्वेषु वैदिकप्रयोगेषु संस्कृतास्वप्सु प्रयोगदर्शनेन संस्कृतेः प्रवृत्तिनिमित्तत्वं प्राप्तं तद् अन्योन्याश्रयप्रसङ्गेन, उक्तवाक्येन संस्कारविधानोत्तरं तदनुष्ठानेनान्यत्र तस्याः प्रवृत्तिनिमित्तकत्वसम्भवेऽपि उक्तवाक्ये तस्यास्तत्त्वासम्भवेन, लोकेऽसंस्कृतास्वप्यप्सु प्रोक्षणीभिरुद्वेजिताः स्म इति प्रयोगदर्शनेन चोदकत्वजातिः प्रवृत्तिनिमित्तत्वेन प्राप्ता, साऽपि वृद्धव्यवहारे प्रोक्षणीशब्दप्रवृत्तिनिमित्त्वेन पूर्वमक्लृप्तेति तदपेक्षया व्याकरणस्मृत्यनुरोधेन क्लृप्त-प्रकृष्टसेचनार्थकप्रोपसृष्टोक्षधातोः करणे ल्युट्प्रत्ययेन प्रोक्षणकरणत्वरूपं प्रवृत्तिनिमित्तमाश्रीयते। तस्मात्प्रोक्षणीशब्दो यौगिक इत्युक्तम्।

प्रसङ्गात्। न च भावना कारकान्तरेणापि सम्बद्धा तदुज्झित्वा न झटिति कर्त्तारमाक्षिपतीति वाच्यम्। सा हि यथा नियमेन कर्त्रा सम्बद्धा, न तथा करणादिकारकान्तरेण, तिष्ठतीत्यादिषु तया तदनाक्षेपात्। अतः प्रथमं सा कर्त्तारमेवाक्षिपति न कारकान्तरम्। अत एव चाख्याताभिहिता सङ्ख्या न कारकान्तरेण सम्बध्यते, तस्य प्रथममनुपस्थितेः। अत एव तृतीयादिविभक्तीनां करणादिवाचित्वम्, भावनायास्तैः सह नियतसम्बन्धाभावेन तया तेषां नि-

र्यस्मृतौ प्रकृत्यर्थप्राधान्यव्यवच्छेदप्रतीतेः प्रत्ययार्थं प्रति तस्य गुणत्वमेवेति प्रतीयते। अभ्युपगतं चैतत् प्रामाणिकत्वेन प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्"इति सूत्रे निर्दिष्टस्मृत्यर्थस्याशिष्यत्वं वदता पाणिनिनेति, एतद्बलेन च सम्भवत्परस्पराक्षेपयोः कस्य प्रत्ययार्थत्वमिति संदेहे प्रकृत्यर्थनिरूपितप्राधान्यभाज इत्यपि सिध्यति नियमः। न चैतस्य तिङन्तेषु वचनोपग्रहाद्यंशज्ञाप्यार्थोत्तरविषयत्वेनाऽन्यथासिद्धिः शङ्क्या। पाकनिरूपितप्राधान्यस्य तेषु कदाचिदप्यननुभवात्। ततश्च पचति पक्तेत्यत्र प्रकृत्यर्थतया निर्णीतपाकं प्रति कृतितदाश्रययोः प्राधान्यं स्वीकुर्वता तयोरेव प्रत्ययार्थत्वं स्वीकार्यं नाश्रयकृत्योरपि, अभिधानान्तरकल्पने ऽतिगौरवात्। प्रत्ययार्थत्वमेव च तयोः स्वीकार्यं ननु कृतेः प्रकृत्यर्थत्वम्, क्वचित्प्रकृत्यर्थप्राधान्यं क्वचित्प्रत्ययार्थप्राधान्यमिति व्युत्पत्तिभेदकल्पने स्मृतिसंकोचकल्पने गौरवादित्याशयः। तैः करणादिभिः। नन्वेवं पच्यत इत्यादावपि भावनाक्षिप्तकर्त्रा संख्यान्वयापत्तिः, तन्निवृत्त्यै कर्मा-

भिधाङ्गीकरणे ऽपसिद्धान्तः; न स्याच्च देवदत्तेनेति तृतीयया कर्त्रभिधानमिति चेत् न । यतो भवद्भिः शब्दशक्तिवैचित्र्यमहिम्ना यथा कर्तृकर्मणोरभिधानव्यवस्थाऽऽश्रीयते तुल्ये ऽप्याख्यातत्वे तथा ऽस्माभिस्तद्वशेनैव कर्तृकर्मणोर्लक्षणाव्यवस्था ऽपि शक्यत आश्रयितुम् । तुल्यश्च विकरणभेदेन शक्तिविशेषावधारणम् । आश्रीयते च शुक्लरूपशब्दयोर्गुणवाचित्वाविशेषे ऽपि शक्तिवशेनैव द्रव्यलक्षणायास्तदभावस्य व्यवस्था ।

यथाहुः—

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥ इति ।

नन्वेवं शक्त्यन्तरस्वीकारे परमतान्न विशेष इति चेत् । परिहृतमेतद्भवदेवेन अभिधानशक्तेरेवाभिधेयाविनाभावोपस्थितार्थतात्पर्यरूपाया लक्षणाशक्तिशब्दार्थत्वादिति । लक्षणाव्यवस्थातश्च संख्यान्वयव्यवस्थासिद्धिः । यथाऽऽहुः—

यथैव क्वचिदुक्त्वापि कर्मान्यत्र न वक्ष्यति ॥
तथैव तस्य संख्याऽपि शब्दशक्तेर्व्यवस्थिता ॥ इति ।

यद्वोक्तन्यायेनाख्यातजन्यप्रतीतिविशेष्यव्यापारान्वये संख्यान्वयनियमाङ्गीकरणात्तत्सिद्धिः ।

केचित्तु वत्सशोणशब्दाभ्यां गवाश्वावनभिधाय तद्गतवयोविशेषरूपाविशेषाभिधानवत्कर्तृकर्मप्रत्ययाभ्यां तद्गतसङ्ख्याभिधानमङ्गीकृत्य तन्महिम्नैव कर्तृकर्मप्रतीतिव्यवस्थामाहुः । तन्न । अनुभूयेते हि गवाश्वगतौ वत्सत्वरक्तत्वावान्तरभेदौ प्रत्यक्षेणेतिसम्भवतस्तदभिधेयौ, नानुभूयते च सङ्ख्यावान्तरभेदः कर्तृकर्मणोः ।

यथाहुः—

न शोणत्वादिवत्सङ्ख्या जातिभेदेषु भिद्यते । इति ।

नचाख्यातेन भावनाभिधाने यज्यादीनां क्रियानभिधायित्वादुक्तधातुलक्षणासम्भवः । धात्वर्थस्य कारकान्वयित्वात्मकक्रियात्वाभावे ऽपि व्यापारत्वात्मकक्रियात्वसत्त्वेन तदुपपत्तेः । स्वीकुर्मो वयं व्यापारफलोभयवाचित्वं धातूनाम् । तदाश्रययोस्तु भावनाक्षेपलभ्यत्वेन स्वीकुर्म आख्यातवाच्यताम् । इत्थं चौदनं पचतीत्यत्र धात्वर्थव्यापारविशिष्टभावनाश्रयलक्षकत्वमाख्यातस्य, धात्वर्थफलाश्रयवाचकत्वं च द्वितीयायाः । पच्यत इत्यत्र तु फलाश्रयलक्षकत्वमाख्यातस्य तादृग्व्यापाराश्रयवाचकत्वञ्च समभिव्याहृताया देवदत्तेनेति तृतीयाया इति परमतो भेदः । फलस्य च गच्छतिसंयौत्यत्रहन्तिकरोतीत्यादौ तत्तत्संयोगोत्पत्त्यादिभेदेनाभिधानात् तदाश्रयस्य प्राप्योत्पाद्यादिव्यपदेशः । ईप्सितानीप्सितभेदस्तु द्वितीयादिशक्तिगम्यो मानान्तरगम्यो वेत्यन्यदेव । तत्र सत्यपि धात्वर्थफलाश्रयवाचित्वे द्वितीयाया द्वितीयार्थस्य न धात्वर्थे ऽन्वयः, किन्त्वाख्यातार्थशरीरान्तर्गतभवनाख्यप्रयोज्यव्यापारे । एकभावनान्वयिनोः परं कर्मकरणीभूतयोरोदनपाकयोः पार्ष्ठिकान्वयदशायामोदनादेर्धात्वर्थफलाश्रयत्वप्रतिपत्तेस्तदाश्रयवाचित्वमोदनोत्तरद्वितीयायां व्यवह्रियते । इत्थं हि पाकान्वयः फूत्करणादिव्यापारेण विक्लित्तिविशिष्टात्मनौदनो भवतीति । सम्भवति च तादृशपचननिरूपिताश्रयताया ओदननिष्ठाया विक्लित्तिनिरूपितत्वम् । एतेन पच्यत इत्यत्र फलाश्रयलक्षकत्वे सत्यपि न लक्षिताश्रयस्य फले ऽन्वय इति ध्येयम् । संगच्छते चैवं सति कारकाणां क्रियान्वयनियमः । यत्र त्वधात्वर्थफलशालिनो द्वितीयान्तेन निर्देशः यथा "अग्निं चिनुते" इति तत्र न पार्ष्ठिकान्वयदशायामपि फलान्वयित्वं किन्तु फलाश्रयस्थलद्वारेण भाव्यत्वम् । सत्यपि तादृशफलशालिनि द्वितीयादिनिर्दिष्टे यत्र कामशब्दादिना भावनाभाव्यावगतिः, तत्र तु

यमेनानाक्षेपात् । आख्यातश्रवणात्प्रागपि तृतीयादिविभक्तिश्रवणे करणादिप्रतीतेर्जायमानत्वाच्च । न च शाब्दी सङ्ख्या कथमशाब्देन कर्त्राऽन्वेतीति वाच्यम् । कर्त्तुर्लक्षणाङ्गीकारात् । यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति, एवं लक्षितः कर्त्ता एकत्वेनान्वेष्यति । अत एव देवदत्तः पचतीति सामानाधिकरण्यमुपपद्यते, कर्त्तुर्लक्षणाङ्गीकारात् ।

न च मुख्ये सम्भवति किमिति लाक्षणिकत्वं

---

लक्षणया द्वितीयार्थस्य धात्वर्थे ऽन्वयः । अत एवेदृशस्थले मत्वर्थलक्षणाव्यवहारः प्राचामित्यलं पल्लवितेन ।

भावनया कर्तुरिव कारकान्तराणामाक्षेपसम्भवे ऽप्युक्तरीत्याऽऽख्याताभिहितसंख्यायाः कर्तृकर्मणोरन्वयव्यवस्थोपपत्तिमभिप्रेत्य तृतीयादिविभक्तीनां करणादिवाचित्वे हेत्वन्तरमाह आख्यातेति । अथाप्याख्यातोपक्रमवाक्यानुरोधेनाशक्ता एव विभक्तयः किं न स्युरिति चेत् । अत्राहुः—

सत्यप्यव्यापृता शक्तिः कृतार्थत्वान्न दुष्यति ।
असत्यास्तु फलं तस्याः प्रार्थितं दुर्लभं भवेद् ॥ इति ।

कथमिति । यद्यप्याक्षेपमात्रोपस्थापितकर्तृविशिष्टं संख्याभिधानं शक्यते कर्तुमाख्यातेन, यथाहुः—'विशिष्टग्रहणं नेष्टम्' इत्यादि, तथाऽपि तादृक्संख्याभावनयोर्युगपत्प्रतीत्यसम्भवमभिप्रेत्येदम् ।

यत्तु भवदेवेन युगपदभिधानाभावेऽपि सूक्ष्मकालभेदस्य दुर्लक्ष्यत्वेन गोशब्दाभिधेयसामान्यविशेषयोरिव युगपत्प्रतीत्युपपत्तिरित्युक्तम्, तत्तु शब्दस्य विरम्यव्यापारासम्भवाद् दृष्टान्ते च निरूढलक्षणया युगपत्प्रतीत्युपपत्तेरुपेक्ष्यमित्याशयः । पचतीति । प्रभृत्यर्थेनेतिकरणेन मध्यमादिव्यवस्थाप्रयोजकयु-

स्वीकार्यमिति वाच्यम्। अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात्। अन्यथा सिंहो देवदत्त इति सामानाधिकरण्यं मुख्यं स्यात्। किं च आख्यातवाच्यः कर्त्तेति वादिनोऽपि मते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम्। तन्मते आख्यातेन तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात्, शक्तिमद्द्रव्यस्याकृत्यधिकरणन्यायेनानभिधानात्। देवदत्तशब्देन च द्रव्यमात्राभिधानात्। अतश्च भिन्नार्थनिष्ठत्वात्तन्मतेऽपि न मुख्यं सामानाधिकरण्यम्, किं तु लाक्षणिकमेवेति न कश्चिद्विशेषः।

न च लः कर्त्तरीति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्त्तेति वाच्यम्। न हि वाच्यवाचकभावो, व्याकरणस्मृत्यधीनः तस्य न्यायस-

ष्मदादिसामानाधिकरण्यसंग्रहः। नहीति। उक्तं हि वैयाकरणैः—'शब्दैरर्थाभिधानं स्वाभाविकं न पारिभाषितव्यमशक्यत्वाल्लोकत एवार्थावगतेः' इति। अतश्च "कर्त्तरि कृद्" इति सूत्रे सप्तम्या वाच्यलक्ष्यसाधारणज्ञाप्यपरतामङ्गीकृत्य कर्त्तरीत्यनुषङ्गलब्धात्मना "लः कर्त्तरि" इतिसूत्रेणासत्यपि कर्तुराख्यातवाच्यत्वे शक्यत एव पूर्वसूत्रैकरूप्येण स्वार्थो ज्ञापयितुम्। कर्त्तरि ज्ञाप्ये लः साधुरिति घटाच्छिद्रत्वे ज्ञाप्ये ऽच्छिद्रोऽयमिति प्रयोज्यजलाहरणसाधनमेष इति चेति वाक्यवत्। इत्थं च स्मृत्याऽर्थे ज्ञापिते लादेशानादेशकृतां कर्त्ता वाच्योऽत्राच्यस्तु तिङामिति विवेको मानान्तरलभ्य इत्याशयः। यथाहुः—

हितान्वयव्यतिरेकगम्यत्वात् । भवतु वा स्मृतिगम्यः तथाऽपि नेयं स्मृतिः कर्त्तुराख्यातवाच्यत्वे प्रमाणम्, किं तु कर्त्तुरेकत्वे एकवचनात्मको लकारः, द्वित्वे द्विवचनात्मकः, बहुत्वे बहुवचनात्मक इत्यस्मिन्न-

---

वाच्यवाचकसम्बन्धो नाचार्यैरुपदिश्यते ।
अन्यथाऽनुपपत्त्या हि व्यवहारात्स गम्यते ॥ इति ।

यद्वा भवतु वाच्यार्थकत्वं सप्तम्याः, न तावता लोकादौ प्रसिद्धाख्यातानां कर्तृवाचित्वसिद्धिरिति द्योतनाय हिशब्दः । सम्भवति हि "वृद्धिरादैज्"इतिवत्कर्त्ता लकारवाच्य इति पारिभाषावचनम् । युक्ततरं चैतल्लादेशानामेव वाचकत्वं न लकारस्येति वदद्भिरभ्युपगन्तुम् । उपयुज्यते च देवदत्तः पचतीत्यादौ तृतीयाप्रतिबन्धः । वस्तुतोऽनभिहितेऽपि पारिभाषिकमभिहितत्वमादाय तन्निवारणात् । यथाहुः—शास्त्रेऽभिहितवदाश्रयणादनभिहिताधिकारविहिते विभक्ती न लप्स्येते इति । नचैवं वाच्यवाच्यत्वविवेकासिद्धिः, तस्य मानान्तरगम्यत्वादित्याशयः । तथापीति । इयमित्यनेन "कर्त्तरि कृद्" इत्यादिस्मृतिस्तु भवत्येव कर्त्तुर्वाच्यत्वे मानमिति सूच्यते । तेन वक्ष्यमाणरीत्या "लः कर्त्तरि"इत्यनेन शतृशानजर्थकथनाभावेऽपि न दोषः, कृत्सूत्रेणैव तयोः कर्तृवाचित्वसिद्धेः । अभ्युपगतं चेत्थं कृत्सूत्रस्य द्व्येकादिसूत्रैकवाक्यत्वासम्भवप्रदर्शनं वार्त्तिके "कृदतिङ्"इतिसूत्रोदाहरणफलं वदता न्यायसुधाकृता । यदि न कर्तुर्वाच्यत्वे प्रमाणं तर्हि किं लोहितोष्णीषादिन्यायेन कृतिवाच्यत्वे प्रमाणमिति वदसीति पृच्छति—किं त्विति । द्व्येकादिसूत्रे संख्योपसर्जनत्वेनापेक्षितसंख्येयसमर्पणाभावे साकाङ्क्षत्वप्रसङ्गान्मैवमित्याशयेन प्रामाण्यविषयान्तरमाह—कर्त्तुरिति ।

र्थे प्रमाणम्, "द्व्येकयोर्द्विवचनैकवचने", "बहुषु बहुवचनम्" इत्यनेनास्याः स्मृतेरेकवाक्यत्वात्।

उक्ते ऽर्थे तात्पर्यग्राहकमाह—द्व्येकेति । अनेनेत्यनन्तरं सूत्रद्वयेनेति शेषः। अत्र हि द्व्येकादिशब्दा भावप्रधानतया संख्यापराः, अन्यथा द्व्येकेष्वित्यापत्तेः। बहुः समुद्रो, बहुरोदन इत्यादौ प्रसिद्धवैपुल्यमहत्वात्मकबहुत्वपरिहारेण द्वित्वाधिकसंख्यात्मकबहुवचनप्राप्त्यै परं बहुत्व इत्यस्य स्थाने बहुष्विति निर्दिदिक्षुस्तदैकरूप्याय द्व्येकयोरित्युक्तवान्सूत्रकारः । कस्य द्वित्वादावित्यपेक्षायां च लकारसूत्रैकवाक्यतया उक्तविधया कल्पनाद्भवति लकारसूत्रं संख्यावाच्यत्वग्राहकमित्यर्थः। नेदं पदैकवाक्यत्व(१)मिति भ्रमितव्यम्। एकवाक्यत्वोपन्यासावसरे वार्त्तिककृद्भिः "यावज्जीवमग्निहोत्रं जुहोति" इति उत्सर्गापवादयोर्वाक्यैकवाक्यताया दृष्टान्ततयोपन्यासात् । तद्व्याख्यानं च कुर्वता न्यायसुधाकारेण प्रकृते वाक्यैकवाक्यताया एव स्पष्टीकरणात् । एतैरपि केवललकारसूत्रं संख्यावाच्यत्वे मानमिति प्रतिज्ञाकरणात् । अतो लकारसूत्रे कर्त्रादिपदोत्तरविभक्त्या कर्त्रादिगतसंख्यासामान्यं

(१) इदं पदैकवाक्यत्वमिति न भ्रमितव्यमिति योजना। एकवाक्यत्वं हि त्रिधा भवति पदैकवाक्यत्वम्, अर्थैकवाक्यत्वं, वाक्यैकवाक्यत्वमितिभेदात् । निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वे आद्यम्, यथा नीलं घटमानयेत्यत्र । नीलघटपदार्थवृत्तिविषयतयोः परस्परं निरूप्यनिरूपकभावापन्नत्वात् । उक्तविधविषयताश्रयबोधकपदघटितत्वे द्वितीयम्। यथा तत्रैव वाक्ये। नीलघटपदार्थयोरुक्तविधविषयताश्रयत्वात्, नीलघटपदयोश्च तद्बोधकत्वात् । उपजीव्योपजीवकभावापन्नविषयताप्रयोजकपदघटितत्वे त्वन्त्यम् । यथा समिदादीनां प्रयाजानां दर्शपूर्णमासाभ्यामन्वयस्थले। भवति च तत्र परस्परमुपजीव्योपजीवकभावो विषयतानामिति । तास्वत्र पदैकवाक्यत्वमिति न भ्रमितव्यमित्यर्थः।

यत्तूक्तम्—कर्त्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसङ्ग इति। तन्न। तृतीया हि कर्त्तुः प्रतिपत्त्यर्थं तद्गतसंख्याप्रतिपत्त्यर्थं वा?। तत्र कर्त्ता तु भावनाक्षेपादेव लभ्यते इति न तत्र तृतीयापेक्षा। तत्सङ्ख्या तु आख्यातेनैव प्रतीयते इति न तत्राप्यपेक्षा।

---

लक्षयित्वा कर्त्रादौ तत्संख्यायां च लकारो विधीयते। तिबादीनां शत्रादीनां मध्ये कस्य लादेशस्य का संख्या वाच्येत्यपेक्षायां साकांक्षद्व्येकादिसूत्रेण वाक्यैकवाक्यत्वं कल्प्यते, तेन च लकारे संख्यावाचित्वानुशासनमेकवचनादिसंज्ञायोगितिबादिविषयमिति निर्णीते कर्त्रादिवाचित्वानुशासनांशस्यापि तद्विषयत्वे गौरवात् तादृशसंज्ञाहीनशत्रादिविषयत्वं तस्य भवति। ततश्च भावकर्मणोरपि शत्रादिर्लभ्यते इति क्रीयमाण इत्यादिप्रयोगोपपत्तिः। अन्यथा लकारसूत्रस्य संख्यावाचित्वमात्रपरत्वे कर्त्तरि शत्रादिप्राप्तिसम्भवे ऽपि न भावकर्मणोस्तत्प्राप्तिः स्यात्। द्योतितं च लकारसूत्रस्य कर्त्तुराख्यातवाच्यत्वे प्रामाण्यप्रतिषेधोक्त्या शत्रादिवाच्यत्वे प्रमाण्यं तथाऽपीतिग्रन्थे। न चैवमपि स्थानिनो वाचकत्वमते कथमेकस्मिन्लकारे संख्यावाचित्वकर्तृवाचित्वव्यवस्था स्यादिति शङ्क्यम्। पदोपस्थापितपदार्थेभ्य एव शाब्दधीरिति नियमवदादेशविशेषेण स्थानितयोपस्थापितलकारादेरेवार्थविशेषधीरिति नियमसम्भवात्। अत एव तिबादिस्मारितलकारस्यैकत्वादिवाचित्वेनैकवचनादिव्यपदेशसम्भवाल्लकारस्य तत्तद्वचनात्मकत्वनिर्देशः संगच्छते। शक्यते च वक्तुं "तान्येकवचनद्विवचनबहुवचनान्येकशः" इतिसूत्रमादेशेषु संज्ञा अन्वर्था विदधत्तत्स्थानिष्वपि ता एवाक्षिपतीति। यत्त्विति। यद्यपि 'लकारसूत्रस्थलकारः कर्त्राद्यभिधायकः' इति परिभाषापरत्वेन व्याख्यायां नैतच्छङ्का-

यथाऽऽहुः—

"सङ्ख्यायां कारके वा धीर्विभक्त्या हि प्रवर्त्तते ।
उभयं चात्र तत्सिद्धं भावनातिङ्विभक्तितः"॥इति ।

यत्र तु नाख्यातेन तद्गता सङ्ख्योच्यते तत्र भवत्येव तृतीया । यथा देवदत्तेन ओदनः पच्यते इति । तस्मान्न कर्त्तुरनभिधाने किं चिद् दूषणमित्य-

---

कावसरः, तथाऽपीतरव्याख्ययोर्निर्दोषत्वसिद्ध्यर्थमेष उपन्यास इति बोध्यम् । ननु अनुशासनात्प्राप्नुवन्ती तृतीया न निष्प्रयोजनत्वेन निवारयितुं शक्या प्रथमाया अपि निवारणापत्तेः, । प्रातिपदिकसाधुत्वार्थस्य च प्रथमातृतीययोरविशेषाद् इत्याशङ्कानभिहिताधिकारानुवृत्तस्यानभिहितपदस्य तात्पर्येण तिङाद्यप्रतिपादितत्वमर्थः, अभिधानाख्यशब्दव्यापारवाचिना ऽभिदधातिना तदेकार्थसमवेततात्पर्याख्यशब्दव्यापारलक्षणोपपत्तेः । तच्च कर्त्रादेरेव विशेषणं न सङ्ख्यायाः । तेन देवदत्तः पचति, पक्त्वाइति वा, चैत्रोमत्रश्च गच्छत इत्यादिप्रयोगोपपत्तिरित्याशयेनोपसंहरति तस्मादिति । यदि च कर्त्ताऽऽख्यातवाच्यः स्यात्समिदादिषु सन्निपातित्वलिप्सया कर्त्रर्थत्वेन विधिः स्यात् । भवत्विति चेद्"स्थाणौ स्थाण्वाहुतिं जुहोति"इति विहिताऽऽहुतिः कर्त्तुः संस्कारिकैव स्यात्, न यूपस्य । यूपार्थत्वं हि तस्या श्रुतिबलेनोक्तं दशमे । नापि दृष्टार्थत्वलिप्सया किंतु सन्निपातित्वलिप्सयोक्तम् । वक्ष्यति चैतत् तुल्यं च सान्निपातित्वं यूपार्थत्वकर्त्रर्थत्वयोः । इयांस्तु कर्त्तरि यूपाद्विशेषो यदयं जुहोतीत्यभिहितः क्रियया च साक्षात्सम्बध्यः । नचास्तु यूपार्थत्वासिद्धान्तभङ्ग इति शङ्क्यम् । "अतस्त्वं देव वनस्पते शतवल्शो विरोह"इत्याहुतिमन्त्रे देवादिपदाभिहितयूपगतातिश-

लमतिविस्तरेण ।

प्रकृतमनुसरामः—तत्सिद्धस्त्रिविधः श्रुतिविनियोगः। सेयं श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम् । लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति, किं तु कल्प्यः । यावच्च तैर्विनियोजकः शब्दः कल्प्यते तावत्प्रत्यक्ष-

यप्रकाशनानुपपत्तेः । नच तत्र तद्देशेनैव यूपार्थत्वसिद्धिः, न्यायविरुद्धमन्त्रलिङ्गस्याकिञ्चित्करत्वात् । किञ्चोपांशुयाजस्य वाक्यान्तरेण यागान्तरसाधारणेन सिध्यतः फलसंबन्धात् "अन्तरा यजति" इतिस्वपदोपस्थितकर्तृसम्बन्धः शीघ्रं भवति इति समिदादेस्तत्कर्त्रर्थत्वमेव स्यात् । अवगतं च यजमान आज्यमवेक्षते इति कर्त्तुः प्रयोजनवत्त्वम् । आग्नेयादिवाक्येषु तु संस्कारार्हकर्त्रभिधायकाख्याताभावात्तेषां प्रधानवाक्येन फलसम्बन्धः । भवत्वेवमिति चेत्समिदादिवदुपांशुयाजस्य वैश्वदेवपर्वण्यतिदेशे सति त्रिंशदाहुतिश्रुत्यनुपपत्तेः, हृदयमुपांशुयाज इति प्रधानप्रायपाठानुपपत्तेश्च । किञ्च स्तोत्रशस्त्रादीनामपि यजमानसंस्कारकत्वे यजमानेन कर्त्तव्यताऽऽपद्येत तत्रौद्गात्रसमाख्याबाधः स्यात् । सत्रे च प्रतियजमानं शस्त्रावृत्तौ नाध्वर्योः प्रतिगरावसर इति तद्बाधः स्यात् । न च सिद्धान्तेऽपि कर्तुर्लक्षणयाऽऽक्षेपेण चोपस्थित्यवश्यम्भावात् प्रयाजादेः सन्निपातित्वप्रसक्त्योक्तदोषतादवस्थ्यमिति शंकास्पदम् । अङ्गभावनानां प्रधानकर्त्रैव नैराकाङ्क्ष्यसम्भवेन प्रधानकर्तृसंख्याया एव चाङ्गवाक्येष्वनुवाद्यत्वेन तत्र कर्तुराक्षेपलक्षणयोरनभ्युपगमादित्येवं सुधीभिरूह्यमित्याशयेनाह इत्यलमिति । विनैव शब्दकल्पनं लिङ्गादेर्विनियोजकत्वमस्त्विति शङ्कते किंत्विति । चोदनैव धर्मे प्रमाणमिति अवधारणाल्लिङ्गेन तत्कल्पनमावश्यकं प्रयोगविधिनाऽङ्गान्तरवन्मन्त्रमनुष्ठापयितुं प्रवृत्ते-

या श्रुत्या विनियोगस्य कृतत्वात् तेषां कल्पकत्व-शक्तिर्विहन्यते इति श्रुतेः प्राबल्यम् । अत एव "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इत्यत्र यावल्लिङ्गाद् ऐन्द्रया इन्द्रोपस्थानाङ्गत्वं कल्प्यते तावत् प्रत्यक्षया

---

न मन्त्रस्य स्ववाच्यार्थे प्रवेशमिच्छता तत्सिध्यैतत्कल्पनाक्षेपाल्लवनं केन स्मृत्वा कार्यमित्येवंरूपायाः शेषिविध्याकाङ्क्षायास्तमन्तरेणानुपशमाच्च भाट्टमते विशेषो नेत्याशयेनाह कल्प्यत इति । ननु श्रुतेरप्यसमर्थविनियोजकत्वासम्भवेन सामर्थ्यकल्पकत्वात्कथं प्राबल्यमित्याशङ्क्याम् । सत्यम्, तथाऽपि लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनियोक्तृता श्रुतिज्ञानं पुरोधाय लिङ्गं तु विनियोजकमिति विनियोगसन्निकर्षात् श्रुतिप्राबल्यमित्याशयेनाह-तावदिति । मन्त्रादेराकाङ्क्षोच्छेदात्कल्पकत्वशक्तिविघातः । अत एवेति । न चैन्द्री गार्हपत्याङ्गमिति बोधेऽस्य पदान्तरालोचन-लभ्यत्वाद्वाक्येनैव विनियोग इति शङ्क्याम् । अङ्गाङ्गिभावनिरूपकयोः पदान्तराधीनत्वे ऽपि तत्स्वरूपस्य श्रुतिगम्यत्वात् । नन्वेवं श्रौतस्याङ्गाङ्गिभावस्य लैङ्गिकनिरूपकान्वये ऽप्यविरोधान्न श्रुतिलिङ्गयोर्विरोधः स्यादेवं यदि प्रमेयविरोधनिबन्धनाविह मानयोर्बाधविरोधौ स्याताम् । दुर्बलमानजन्यविनियोगमूलकल्पनोच्छेदनिमित्तौ तु तौ जायेते अवगतसागान्यसम्बन्धयैन्द्या किं कार्यमित्याकाङ्क्षावलेन लैंगिकश्रुतिकल्पनायोद्यतस्य ब्राह्मणान्तर्गतमन्त्र्यत्येव प्रथमं श्रुतवत एतन्मूलकविनियोगेनैव नैराकांक्ष्यसम्भवान्न स्वबुध्या कल्पनमुचितमिति बुध्या तत्कल्पनादुपरमः । तस्मादुपपन्नः श्रुतिलिंगयोरिह विरोधः । श्रुत्या लिंगबाधं वदता च लिंगबाध्यानां वाक्यादीनां सुतरां तया बाध इति सूचितम् । तद्यथा आरुण्यस्य वाक्यादेरेकहायन्यङ्गत्वं सिध्यच्छ्रौतेन क्रयाङ्गत्वेन बाध्यते "एक-

श्रुत्या गार्हपत्योपस्थानाङ्गत्वं क्रियत इति ऐन्द्री गार्हपत्योपस्थानाङ्गम् ।

सामर्थ्यं लिङ्गम् ।

यदाहुः—

---

विंशतिमनुब्रूयाद्''इति विहितानुवचनस्य प्राकरणिकं दर्शाङ्गत्वं प्रतिष्ठाकामस्येति षष्ठीश्रुतिबोधितेन प्रतिष्ठार्थत्वेन । नच प्रकृतनित्यानुवचनाश्रितसंख्याया एवेह फले विधानं तस्याश्चाक्रियारूपाया न प्रकरणविनियोज्यत्वप्रसक्तिरिति शङ्क्यम् । सामिधेनीवदग्निप्रकाशनार्थैः ''देवेद्धः''इत्यादिनिविन्मन्त्रैर्व्यवधानेन विच्छिन्नप्रकरणस्य नित्यानुवचनस्याश्रयत्वायोगेन तत्प्रकृतिकानुवचनान्तरविधेराश्रयणात् । ''युंवं हि स्थः स्वर्पती'' इति द्वयोर्यजमानयोः प्रतिपदं कुर्याद्''इत्यत्र श्रुतिप्रतिपन्नकुलायाद्यङ्गत्वेन प्रकरणप्राप्तं ज्योतिष्टोमाङ्गत्वं बाध्यते । एकः प्रतिवसन्तं यथाशक्ति ज्योतिष्टोमं कुर्यादिति यजमानैकत्वव्यतिरिक्ताङ्गेष्वेव यथाशक्त्युपबन्धेन नित्यप्रयोगेऽपि तद्भित्त्वाभावात् । द्वादशाहीनस्येत्यत्र तु यद्यपि क्रियाङ्गसंख्याया ज्योतिष्टोमप्रकरणग्राह्यत्वं प्रसक्तं मध्योदात्तत्वेन खप्रत्ययान्तादहर्गणे रूढादहीनपदादुत्तरया षष्ठीश्रुत्या बाध्यत इति शक्यते वक्तुम्, तथाऽपि शाखान्तरीयद्वादशाहप्रकरणस्थविधिप्राप्तार्थानुवादेन ''तिस्रः सान्हस्योपसदः''इत्येतत्स्तुतिरेवेति मते नातीव श्रुत्या प्रकरणबाधोदाहरणत्वं युक्तम् । दर्भमयीत्वादिविशिष्टरशनायाः क्रमेणाग्नीषोमीयाङ्गत्वं प्राप्नुवत्या दीक्षाकालोत्पन्नत्वेन पशुत्रयसाधारणयूपार्थत्वं बोधयन्त्या श्रुत्या बाध्यते ''रशनया यूपं परिव्ययति''इति । यथाहुः—

"सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते" इति।
( तन्त्रवार्तिकम् १२५ )

तेनाङ्गत्वं यथा "बर्हिर्देवसदनं दामि" इत्यस्य लवनाङ्गत्वम्। स हि लवनं प्रकाशयितुं समर्थः।

एतद्यूपपरिव्याणशेषो हि रशना श्रुता।
सह धर्मैर्न सा याति क्रमेण पशुशेषताम्॥

याति सर्वत्र गच्छतीति साधारणार्थ एतच्छब्दः। अदृष्टैकस्वभावयूपमते हि वाङ्नियमन्यायेन साधारणतत्प्रयुक्ता रशना तद्धर्मा भवन्ति साधारणाः। मतान्तरे तु अश्वबालादिधर्मविधौ बर्हिःपदेनेव यूपपदेन स्वार्थसाध्यापूर्वत्रयलक्षणात् साधारण्यमिति बोध्यम्। एवं च यद्यपि यूपधर्माणां बर्हिर्धर्माणां चोपदेशसाधारण्यं तुल्यं तथाऽपि पश्वपूर्वैस्तन्त्रेण काष्ठमनुष्ठापयद्भिस्तद्द्वारेण तद्धर्मा अपि तथैवानुष्ठापयितुमुचिता इति तेष्वेकादशे तन्त्रव्यवहारः। उपसदग्नीषोमीयापूर्वैस्तु वचनादातिथ्याकालोत्पाद्यबर्हिर्व्यक्तिशेषितां गतैरपि तुषोपवापवत्तामनुष्ठापयद्भिस्तद्वत्तद्धर्मा अपि नानुष्ठाप्यन्त इति तेषु द्वादशे प्रसङ्गव्यवहारः। तादृशव्यक्तिनाशे ऽपि स्वपरसाधारणव्यक्त्यन्तरं प्रयोक्तुमशक्तैरपि यथातिदेशं प्रत्येकं बर्हिः प्रयुञ्जद्भिरविशेषावगतशेषत्वा धर्मास्तत्र शक्यन्ते प्रयोक्तुमिति साधारणबर्हिषि चातुर्थिकमप्रयोजकत्वम्, धर्मेषु द्वादशोक्तं प्रसङ्गित्वमिति विवेकः। प्रयुक्तिसामर्थ्यभावाभावकृतमेव ह्यप्रयोजकप्रसङ्गिनोर्भेदमभिप्रेत्योक्तं पूर्वाचार्यैः–'परार्थे त्वप्रयोजकम्। एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ' इति। दर्शपूर्णमासप्रकरणे प्रथमपठितस्य क्रियाविशेषशून्यत्वेनास्पष्टलिङ्गतया स्वतन्त्रक्रमप्रकरणानिर्णीतविनियोगस्य मन्त्रस्य तत्सहकृतसमाख्याबलेन दार्शिकप-

तच्च लिङ्गं द्विविधम्—सामान्यसंबन्धबोधकप्रमाणान्तरानपेक्षं तदपेक्षं च । तत्र यदन्तरेण यन्न सम्भवत्येव तस्य तदङ्गत्वं तदनपेक्षकेवललिङ्गादेव । यथा ऽर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम् । न हि अर्थज्ञानमन्तरेणानुष्ठानं सम्भवति । यदन्तरेण यत्सम्भवति तस्य तदर्थत्वं तदपेक्षम्, यथोक्तस्य मन्त्रस्य लवनाङ्गत्वम् । लवनं हि मन्त्रं विनाऽपि उपायान्तरेण स्मृत्वा कर्तुं शक्यम् । अतो न मन्त्रो लवनस्वरूपार्थः सम्भवति, किन्त्वपूर्वसाधनीभूतलवनप्रकाशनार्थः । तत्त्वं च न सामर्थ्यमात्रादवगम्यते, लवनप्रकाशनमात्रे सामर्थ्यात् । अतोऽवश्यं प्रकरणादि सामान्यसम्बन्धबोधकं स्वीकार्यम् । दर्शपूर्णमासप्रकरणे हि मन्त्रस्य पा-

---

थमपुरोडाशयागाङ्गत्वं प्राप्नुवत् सान्नाय्याङ्गशाखार्थत्वं बोधयन्त्या श्रुत्या बाध्यते 'इषेत्वेति शाखां छिनत्ति'इति । अत्र च यद्यपि इतेरितिहेतुप्रकरणप्रकर्षादिसमाप्तिषित्यादिकोशे तृतीयार्थवाचित्वास्मरणान्न श्रुतित्वम्, निराकृतं च तद् "हविष्कृदेहीति त्रिरवघ्नन्"इति वचसि मन्त्रस्य श्रौतहन्त्यङ्गत्वाधियं निराकुर्वद्भिः प्राचीनैः, तथाऽपि द्वितीययैव समाख्याबाधोपपत्तिः ।

तच्चेति । यद्यपि श्रुतिरपि काचित्सामान्यसम्बन्धबोधकं मानान्तरमपेक्षते अत एव एकाग्नेय्यधिकरणे प्रकृताग्नेय्यैव "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यत्र श्रुत्या विनियुज्यत इत्युक्तम्, तथाऽपि तत्सापेक्षत्वाभिमतलिङ्गस्येव तस्या अपि न तदन्तरेण विनियोगशक्तिकुण्ठी-

ठादेवमवगम्यते अनेन मन्त्रेण दर्शपूर्णमासापूर्वसम्बन्धि किञ्चित् प्रकाश्यते इति । अन्यथा प्रकरणपाठवैयर्थ्यात् । किं तदपूर्वसम्बन्धि प्रकाश्यमित्यपेक्षायां सामर्थ्याद् बर्हिर्लवनमित्यवगम्यते । तद्धि बर्हिःसंस्कारद्वाराऽपूर्वसम्बन्धीति मन्त्रस्य सामर्थ्यात्तदर्थत्वे सति नानर्थक्यं प्रसज्यते । तस्माद् "बर्हिर्देवसदनं दामि" इत्यस्य प्रकरणाद्दर्शपूर्णमाससम्बन्धितयाऽवगतस्य सामर्थ्याल्लवनाङ्गत्वमिति सिद्धम् ।

पूषानुमन्त्रणमन्त्राणां तु यागानुमन्त्रणसमाख्यया यागसामान्यसम्बन्धेऽवगते सामर्थ्यात्पूषयागसम्बन्धोऽवगम्यते ।

ननु तषां यावत्समाख्यया पूषयागेन सामान्यसम्बन्धोऽवगम्यते, तावत् प्रकरणाद्दर्शपूर्णमासाभ्यामेव सामान्यसम्बन्धोऽवगतः, समाख्यातस्तस्य बलीयस्त्वात्। अत एव पौरोडाशिकमिति समाख्याते ब्राह्मण आम्नातानामपि प्रयाजानां प्रकरणात्सान्नाय्योपांशुयागाङ्गत्वमपीत्युक्तम् । किं च यागानुमन्त्रणसमाख्ययाऽपि

---

भात्र इति अत्रेत्थमुक्तिः। प्रकरणादन्यस्यापि लिङ्गापेक्षितसामान्यसम्बन्धबोधकत्वन्दर्शयितुमाह–पूषेति । पूषानुमन्त्रणप्रभृतयो मन्त्रा इति मध्यपदलोपी समासः। उक्तम्–वार्तिके इति शेषः। ननु न दर्शपूर्णमासार्थत्वं युक्तं पूषपदस्य तद्देवताप्रकाशनसामर्थ्यादित्याशङ्क्य त-

न पूषयागेन सामान्यसम्बन्धोऽवगम्यते, किं तु यागमात्रेण, प्रकरणेन तु दशपूर्णमासाभ्यामेव विशेषसम्बन्धोऽवगम्यते अतः प्रकरणाद् झटिति तत्सम्बन्धस्यैवावगतत्वात्तदर्थत्वमेव तेषां युक्तम् । पूषेतिशब्दस्य पुष्णातीति व्युत्पत्त्या कथंचिदग्न्याद्यभिधायित्वात् ।

नैवम् । पूषानुमन्त्रणमन्त्रे हि श्रूयमाणे एवमवगम्यते—पूषाभिधानसमर्थत्वादयं मन्त्रस्तत्प्रकाशनार्थः, लवनमन्त्र इव लवनप्रकाशनार्थः । न तत्र प्रकरणाद्यपेक्षा, येन तेषामुपजीव्यत्वेन प्राबल्यं स्यात् । प्रकरणात्तु दर्शपूर्णमासार्थत्वे तस्य वाक्यलिङ्गश्रुतिकल्पनेन विनियोजकत्वाद् लिङ्गस्योपजीव्यत्वेन प्राबल्यम् । अतो लिङ्गात्पूषप्रकाशनार्थत्वेऽवगते तन्मात्रप्रकाशनमनर्थकमित्यपूर्वसाधनपूषप्रकाशनार्थत्वं वक्तव्यम् । किं तदपूर्वमित्यपेक्षायां यागानुमन्त्रणसमाख्यानुगृहीताल्लिङ्गादपूर्वसम्बन्धिदेवताप्रकाशनार्थो ऽयमित्यवगम्यते । अतो यद्यपि समा-

घटयति पूषेतीति । गौण्याऽपि तत्सम्भवाय कथंचिदिति । लिंगप्रकरणयोः स्वतो विरोधे तद्गतबलाबलमेव लिङ्गसहकारिसमाख्यायाः प्रकरणेन बलाबलाज्ज्यायः इत्यत्र प्रमाणबलाबलात्प्रमेय-

ख्यातः प्रकरणं बलीयस्तथाऽपि तस्य लिङ्गेन बाधितत्वात् समाख्याया दुर्बलाया अपि प्रबललिङ्गाश्रितत्वेन प्राबल्यात्सैव सामान्यसम्बन्धे प्रमाणं सम्भवति,दुर्बलस्य प्रबलाश्रितस्य प्राबल्यात् । अत एव श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन प्राबल्यात्पदार्थधर्मगुणभूतश्रौतक्रमत्यागेन वेदकरणानन्तरं क्षुते आचमनमेव कार्यमित्युक्तम् । यथाऽऽहुः—

"अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः" ॥ इति ।

( तन्त्रवार्तिकम् ८५३ )

यत्तु पूषेतिशब्दः कथं चिदग्न्याद्यभिधायीति । तन्न । तस्य "अदन्तको हि सः"इत्यादिवाक्यशेषेण वैदिकप्रसिद्ध्या च अर्थविशेषे रूढत्वात् । रूढेश्चावयवार्थालोचनसव्यपेक्षाद्योगाद्बलीयस्त्वात् ।

---

बलाबलज्यायस्त्वं दृष्टान्तयति अत इति । यद्यपि सकलपदार्थप्राप्त्यनुसारित्वात् क्रमप्राप्तेराचमनस्य च शुद्धिहेतुत्वेन वेदिकरणाङ्गस्य 'स्वाङ्गमव्यवधायकम्'इतिन्यायेन क्रमाविघातकत्वान्न श्रुतिस्मृत्योरिह विरोधः, तथाऽपि तमभ्युपेत्याकरे निरूपितन्यायस्यायमुपन्यासः । वर्णविशेष इति । त्रासाद्दैश्याख्यवर्णादुत्पन्नः पुंविशेष इत्यर्थः ।

अत एव "वर्षासु रथकारोऽग्नीनादधीत" इत्यत्र रथकारशब्देन सौधन्वनापरपर्य्यायो वर्णविशेष उच्यते, रूढेः प्राबल्यात्, न तु रथं करोतीति व्युत्पत्त्या द्विजातयः, योगस्य दौर्बल्यादित्युक्तं षष्ठे ।

तस्माद्युक्तं समाख्यया सामान्यसम्बन्धेऽवगते सामर्थ्यात्पूषयागसंबन्धः पूषानुमन्त्रणमन्त्राणामिति । यथाऽऽहुः—

याग[ा]नुमन्त्रणानीति समाख्या क्रतुयोजिका ।
तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्देवते क्रतौ" ॥ इति ।

( तन्त्रवार्तिकम् ७६८ )

---

ननु 'माहिष्येण करण्यां तु रथकारः प्रजायते' इतिस्मृतिप्रसिद्धस्यैव रूढ्या ग्रहणं युक्तम्, क्षत्रियवैश्यानुलोमानन्तरोत्पन्नो यो रथकारस्तस्येज्याधानोपनयनसंस्कारक्रियाश्चेति शङ्खेन विहितोपनयनस्य तस्य विद्यासम्भवात् तद्द्वारैव वैदिककर्माधिकारितया ऽपरार्काद्युक्तस्य संस्कृताग्निसाफल्यसम्भवाच्च शूद्रादौ हि तत्कर्तृकेऽग्निसाध्यकर्मणि "मस्तु शूद्रस्य" इत्यादिलिङ्गोपपत्तेश्चेति कर्कविद्यारण्यमतानुसारिनिराकरणाय सौधन्वनेति । रथकाराधाने हि "ऋभूणां त्वा" इति मन्त्रः पठ्यते "सौधन्वना ऋभव" इति मन्त्रे च सामानाधिकरण्यादृभुसौधन्वनशब्दयोः पर्यायत्वम् । प्रसिद्धश्च सौधन्वनशब्दो व्रात्यवैश्योत्पन्ने, व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव चेति स्मृतेः । अतः षष्ठान्त्यन्यायेन तदधिकारनियमे सिद्धे ऽगत्याऽग्निगुणकाधानस्य स्वर्गाय विधिराश्रीयत इति भावः । वस्तुत-

तत्सिद्धं प्रमाणान्तरसिद्धसामान्यसंबन्धस्य पदार्थस्य विनियोजकं लिङ्गमिति ।

तत्र मन्त्रविनियोजकं लिङ्गं मुख्ये एवार्थे विनियोजकं न गौणे, मुख्यार्थस्य प्रथममुपस्थितत्वेन तत्रैव विनियोगबुद्धौ पर्य्यवसन्नायां पुनर्गौणेऽर्थे विनियोगकल्पनायां गौरवप्रसङ्गात् । अत एव "बर्हिर्देवसदनं दामि" इति मन्त्रः सामर्थ्यात्कुशलवनाङ्गम्, तेषां मुख्यत्वात्, न उलपराजिलवनाङ्गमित्युक्तम् ।

तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । तेषां हि न साक्षाद्विनियोजकत्वं किं तु लिङ्गं श्रुतिं च कल्पयित्वा । न चासमर्थस्य श्रुतिं कल्पयित्वा विनियोगकल्पना

---

स्तु नानुलोमसङ्करोत्पन्ने रूढिः, रथसूत्रवास्तुविद्याध्ययनवृत्तिता चेति शङ्खवचनावगतरथकरणवृत्तिकस्य निर्मन्थ्यन्यायेन रूढ्यसंभवात् । प्रमाणेति । विनियोजकलिङ्गव्यक्तिभिन्नं मानं प्रमाणान्तरम् । भवति हि "एकविंशतिमनुब्रूयाद्" इति विवृद्धसामिधेनीकविकृतौ संख्यासामर्थ्येन चोदकप्राप्ताधिकपङ्क्त्यृचां क्रतुसम्बन्धे ऽवगते ऽग्निप्रकाशनसामर्थ्यवशेन तद्विशेषग्रहणम् । इयांस्तु भेदः—प्रकरणसमाख्याभ्यामुक्तस्थलेऽनिर्णीतद्वारविशेषो निर्णीतक्रतुविशेषश्च सम्बन्धो बोध्यते संख्यासामर्थ्येन तु अनिर्णीतशेषविशेषः । उलपमुशीरतृणं पृष्ठ्यास्तरणाङ्गम् । असमर्थस्येति । प्रकृतशेषिसम्बन्धयोग्यतया ऽनिर्णीतस्येत्यर्थः । वाक्यबाध्येषु प्रकरणस्य लि-

ङ्गेन बाधायामुदाहरणत्वं पूषमन्त्रे एतैरेव दर्शितम् । "उपहूत उपह्वयस्व" इति क्रमेण पठितयोर्मन्त्रयोर्निर्ज्ञातक्रमकानुज्ञापनानुज्ञे प्रति यथाक्रमं प्रसक्तमङ्गत्वं विपर्ययविनियोगं कुर्वता लिङ्गेन बाध्यते । नन्वेवं "त्वं ह्यग्ने प्रथमो मनोता" इति मन्त्रः क्रमप्राप्तमग्नीषोमीयपश्वङ्गत्वं विहाय लिङ्गादाग्नेयसवनीयाङ्गं स्यात् । आनर्थक्यतदङ्गन्यायसहकृतप्रकरणेन ज्योतिष्टोमीयपश्वङ्गमेष इति सामान्यसम्बन्धसम्भवात्, "मनोतायै हविषो ऽवदीयमानस्यानुब्रूहि" इति प्रैषे पशुदेवतावाचित्वेन निर्णीतस्य मनोतापदस्येह श्रवणेन सोमायागाङ्गत्वासम्भवात् । नच "यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या" इति श्रुतिर्लिङ्गप्राप्तोत्कर्षं बाधत इति शङ्क्यम् । तृतीयादिविभक्तेरिहाभावात्, वाक्यस्य च लिङ्गबाध्यत्वात् । वायव्ये पशावूहननिषेधार्थत्वेनानर्थक्यायोगात् । अन्यथा ऽऽग्नेयीनिरासार्थस्याग्नेय्येवेत्येवकारस्यानर्थक्यात् । "नर्चमूहेद्" इतिनिषेधवशेन चोदकप्राप्ताग्नेयमन्त्रप्रसक्तिरूपस्योहस्य निषेधे तु सम्भवति तस्यार्थवत्त्वम् । तस्मादुत्कर्ष एव मनोतामन्त्रस्य युक्त इति चेत् । न । कार्यैवेति व्यवहितान्वये सत्येवकारश्रुत्यैवोत्कर्षनिषेधात् । तृतीयाश्रुतिर्हि प्रकृतयागे विनियोगमुखेनोत्कर्षनिषेधं कुर्यात् इयं तूत्कर्षनिषेधमुखेन प्रकृते विनियोगं करोतीति फलतो न विशेषः । युक्ततरश्च मंत्रब्राह्मणयोर्व्यवहितप्रधानविध्यन्वयादेवकारमात्रस्य स्ववाक्ये व्यवहितान्वयः । नन्वेवं वायव्ये पशौ कथमनूहो मनोतामन्त्रस्य उक्तश्चासौ "मनोतायां तु वचनादविकारः" ( अ० १० पा० ४ अ० २२ सू० ४२) इति दाशमिकाधिकरणे । नचान्यायनिगदत्वाद्बहुवचनान्तपाशपदवदनूहसिद्धिरिति न्यायसुधोक्तं साधु । देवताधिष्ठानस्याग्नेः पाशवहुत्ववदसमवेतत्वाभावात् । नच पाशानिति शसावयवसंख्याया इवाग्निपदेन देवताया लक्षणयैव प्राकृतायाः प्रकाशनं स्यात् विकृतावित्याकूतम् । एवमपि यत्रैन्द्राग्नादौ प्रकृतिवद्देवतात्वाधिष्ठानमग्निस्तत्र

सम्भवतीति सामर्थ्यस्यापि कल्प्यत्वेनोपजीव्यत्वात्। अतस्तैर्यावत्सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते तावदेव क्लृप्तेन सामर्थ्येन श्रुतिं कल्पयित्वा विनियोगः क्रियते इति तस्य प्राबल्यम्।

अत एव—

"स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि" इत्यस्य सदनाङ्गत्वं लिङ्गात्, न तु वाक्यात्सादनाङ्गत्वम्, तस्य दौर्बल्यादिति।

---

प्राकृतलक्षणासम्भवात्सिध्येदनूहो नैवारतण्डुलेष्विव "धान्यमसि" इत्यस्य, वायव्ये तु तरसमयेष्विव न तथेति चेत्। न। आग्नेयः पशुर्न ज्योतिष्टोम इति कृत्वाचिन्तात्वाद्दाशमिकविचारस्य। उक्तंच तथा तत्रैव मिश्रैः—सम्भवति तथासत्यप्रसक्तोत्कर्षे निषेधासम्भवेनोक्तवचसो ऽनूहपरत्वमिति दिक्। भक्षानुवाके पठितानां "भक्षे हि" इति "नृचक्षसम्" इति "हिन्व मे" इत्युपक्रमकाणां "सद्यासम्" इति, "अवरुग्सेषम्" इति, "मा मे ऽवाङ्गाभिमति गाः" इत्यन्तानां वाक्यानां समाख्याप्राप्तभक्षणाङ्गत्वं लिङ्गावगतैर्ग्रहणावेक्षणसम्यग्जरणाङ्गत्वैर्बाध्यते। नचाविहितग्रहणादेरननुष्ठेयत्वात् मन्त्रप्रकाश्यत्वासंभवः। भक्षणविध्याक्षिप्ततयाऽनुष्ठेयत्वात्। तत्प्रकाशनसमर्थमन्त्रकल्पितविधिना वा नियमेन तद्विधानात्। नचैवं मन्द्रादेस्तृप्यत्वित्यन्तस्य लिङ्गात्तृप्त्यङ्गत्वं स्यान्न भक्षणाङ्गत्वमिति शङ्क्यम्। ग्रहणादिवत्तृप्तेर्भक्षणयत्नान्ययत्नापेक्षोत्पत्तिकत्वाभावेन पृथक्प्रकाशनानपेक्षत्वात्। तस्माद्युक्तः सूक्तवाकस्य दर्शपूर्णमासयोरिव भक्षानुवाकस्य ग्रहणादिषु लिङ्गाद्विभज्य विनियोगः। एवं काम्ययाज्यानुवाक्याकाण्डे आग्नेवारुणीष्टियाज्यानुवाक्यानन्तरं

समभिव्याहारो वाक्यम् । समभिव्याहारो नाम साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणम् ।

यथा—

"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति ।

अत्र हि न द्वितीयादिविभक्तिः श्रूयते, केवलं पर्णताजुह्वोः समभिव्याहारमात्रम् । तस्मादेव च पर्णताया जुह्वङ्गत्वम् । न चानर्थक्यम्, जुहूशब्देनापूर्वलक्षणात् । तदयं वाक्यार्थः—'पर्णतया अवत्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेद्' इति । एवं च पर्णतया यदि

---

सोमारौद्रीष्टियाज्यानुवाक्यातः पूर्वपठितानां मनोर्ऋचां क्रमावगतसोमारौद्र्यङ्गत्वानां समाख्याप्राप्तं याज्यात्वादि लैङ्गिकेन सामिधेनीत्वेन बाध्यते । आग्नेय्यो हि ताः शक्नुवन्ति सामिधेनीकार्यं कर्त्तुम् । अपेक्षन्ते च विवृद्धसामिधेनीका भिरिष्टिभिस्तत्कारितयेति न सामिधेन्युत्तरभाव्याज्यभागे निवेशोऽपि शङ्क्यः । नच तत्र निवेशे ऽपि समाख्योपपत्तिः । तस्याः काम्यपदाभिधेयप्रधानसम्बन्धबोधकत्वादित्यास्तां तावत् । साध्यत्वादीनि । स्वप्रकृत्यर्थनिरूपितशेषित्वबोधिकानां विभक्तीनां शेषिपदोत्तरत्वेन स्वप्रकृत्यर्थगतशेषत्वबोधिकानां च शेषपदोत्तरत्वेनाभावे सतीत्यर्थः। तेन प्रयाजशेषाभिघारणसक्तवादिविनियोजकवाक्यसङ्ग्रहः । शेषेति । तद्वाचिनोः शब्दयोरेकान्वयबोधोपयोगिसन्निधिविशेषेणोच्चारणमित्यर्थः । तेन न प्रकरणविषयेऽतिप्रसङ्गः । नचैवं देवस्यत्वा-

जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेति गम्यते इति न पर्णताया वैयर्थ्यम् ।

अवत्तहविर्धारणद्वारेति चावश्यं वक्तव्यम्, अन्यथा स्रुवादिष्वपि पर्णतापत्तेः ।

सा चेयं पर्णताऽनारभ्याधीता न सर्वक्रतुषु गच्छति, विकृतिषु चोदकेनापि प्राप्तिसम्भवेन द्विरुक्तत्वापत्तेः, किन्तु प्रकृतिषु । तदुक्तम् "प्रकृतौ वा द्विरुक्तत्वाद्" इति (पू० मी० अ० ३ पा० ६ सू० २) ।

अत्र 'विकृतिर्यतो ऽङ्गानि गृह्णाति सा प्रकृतिः' इति न प्रकृतिशब्देन विवक्षितम्, गृहमेधीये पर्णताया अप्राप्तिप्रसङ्गात्, न हि गृहमेधीयात्काचन विकृतिरङ्गानि गृह्णाति मानाभावात्, किं तु चोदकाद्यत्राङ्गाप्राप्तिस्तत्र कर्म प्रकृतिशब्देन विवक्षितम् । यथा दर्शपूर्णमासौ । तत्र हि न चोदकादङ्गप्राप्तिः, प्रकरणपठितैरेवाङ्गैर्नैराकाङ्क्ष्यात् । गृहमेधीयादिष्वपि न चोदकादङ्गप्राप्तिः । क्लृप्तोपकारैरेव आज्यभागादिभिर्नैराकाङ्क्ष्यात् ।

---

दिपदविनियोजकमन्त्रगतवाक्यस्यासङ्ग्रहापत्तिः, तेषां शेषवाचित्वाभावादिति शङ्क्यम् । तदर्थानामपि मन्त्रकार्यभूतविशिष्टनिर्वापप्रकाशनद्वारेण निर्वापशेषत्वाभ्युपगमात् । इयांस्तु विधिवाक्यान्मन्त्रवाक्ये भेदः—यद् विधिवाक्ये श्रुतिमात्रं कल्प्यं मन्त्रवाक्ये तु सश्रुतिकं वाक्यान्तरम् । मन्त्रे सत्या अपि द्वितीयादेर्विधिहीनाया विनियोजकत्वाभावात् । अत एव मन्त्रगतवाक्यलक्षणे ऽभावान्तस्य

अतो यत्र चोदकाप्रवृत्तिस्तत्रानारभ्याधीतानां सन्निवेशः।

साप्तदश्यं त्वनारभ्याधीतमपि न प्रकृतौ गच्छति प्रकृतेः पाञ्चदश्यावरोधात्, किं तु विकृतिषु गच्छति ।

---

न प्रवेशः। अप्रवृत्तिरिति । नञो व्यत्ययमङ्गीकृत्याचोदकेन चोदकभिन्नमानेन यत्र क्रतुप्रवेशद्वारस्य जुह्वादेः प्रवृत्तिः प्राप्तिरिति योज्यम् । तेन न सोमे पर्णताप्रसक्तिः। भवति च गृहमेधीये, तत्र कल्पसूत्रकारैर्जुहूपदेशात् । अधीतानामित्यनन्तरं समभिव्याहृतोद्देश्यवशेन कल्प्यक्रतुसम्बन्धानामिति शेषः। तेन "यदाहवनीये जुहोत्येष सप्तदशो यज्ञोऽन्वायत्तः"इत्यनारभ्य विहितस्याहवनीयस्याश्रावयेत्यादेश्च समभिव्याहारमात्रेणाक्लृप्तक्रतुसम्बन्धस्य जुहोतियजतिचोदनाचोदितसमस्तकर्मसु उपदेशसिद्धिः । असंभवात्परं क्वचिदाहवनीयोपदेशाभावः। यथा पवमानेष्टिषु, निषादेष्टौ, उपनयनाङ्गहोमेषु, अवकीर्णिपशौ, अक्रतुशेषेष्वतदन्तर्गतेषु चतुर्होतृहोमेषु भाष्यमते ऽग्नीषोमीयानपेक्षाग्नेयाद् वार्त्तिकमते प्रयाजापेक्षात्तस्मात्परमापूर्वानुत्पत्तेः केवलाधानादाहवनीयासम्भवात् । अत्रैवर्णिकस्य अविद्यस्य अकृतविवाहस्याधानाभावात् । "अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेद्"इति पशोः प्राग्विवाहासम्भवात् । "एषा वाऽनाहिताग्नेरिष्टिर्यच्चतुर्होतारः" इति चतुर्होतृहोमेषु अनाहिताग्न्यधिकारिकत्वात् "ग्रहान् गृहीत्वा सप्तहोतारं जुहोति यः स्वर्गकामः स्यात्स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयाद्" इत्यादिषु च तदसम्भवात् । क्वचित्तु सम्भवतो ऽप्याहवनीयस्य बाधः—यथा पदहोमे ।एवं महापितृयज्ञे आस्वधेत्याश्रवणोपदेशादाश्रावयेत्यादेर्बाधो ज्ञेयः। प्रकृतेरिति । साप्तदश्यस्य हि सामिधेनीद्वारेण क्रतुसम्बन्धः कल्प्यः, क्लृप्तश्च पाञ्चदश्यस्य प्रकरणेनेति तस्य बलवत्त्वमित्याशयः। यस्य त्वनारभ्याधीतस्यापि क्रतु-

तत्रापि न सर्वासु गच्छति, चोदकप्राप्तपाञ्चदश्यबाधप्रसङ्गात्। किन्तु प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिषु गच्छति।

यथाऽऽहुः—

एवं च प्रकृतावेतत्पाञ्चदश्यं प्रतिष्ठितम्।
विकृतौ च न यत्रास्ति साप्तदश्यपुनःश्रुतिः॥ इति।

( तन्त्रवार्तिकम् १०७८ )

न च वाक्यवैयर्थ्यम्। अनारभ्याधीतस्यैव साप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारात्।

उपसंहारो नाम सामान्यप्राप्तस्य विशेषे नियमनम्।

यथाऽऽहुः—

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः। इति।

( तन्त्रवार्तिकम् १०२० )

तत्रानारभ्यविधिः सामान्यविधिः, मित्रविन्दादि-

---

सम्बन्धः क्लृप्तः न तस्य प्राकरणिकेन बाधः। यथा "अथातोऽग्निमग्निष्टोमेनानुयजति" इति विहिताग्नेरुत्तरवेद्याः। नचैवं वाक्यविनियुक्तेनाग्निना प्रकरणविनियोज्यायास्तस्या एव बाधापत्तिः। सत्यपि तस्याः प्रकरणविनियोज्यत्वे अग्निष्टोमपदार्थमहिम्ना धातोः क्रतुविशेषपरतां निर्णीय विनियुञ्जतो वाक्यस्य विलम्बितप्रवृत्तिकत्वात्। चोदकेति। पाञ्चदश्येन बाध इति विग्रहः। बलीयो हि तत् क्लृप्तोपकारकत्वाद् इति द्योतनाय चोदकप्राप्तेति विशेषणम्। सामान्येति। सामान्यशास्त्रस्य विशेषान्वये तात्पर्यज्ञापनमित्यर्थः। तत्रेति। यद्यप्युभयत्र सामिधेनीनामुद्देश्य-

प्रकरणस्थस्तु विशेषविधिरित्यास्तां तावत् ।

प्रकृतमनुसरामः । तत्सिद्धं वाक्यादङ्गत्वम् ।

तदिदं वाक्यं प्रकरणाद्बलीयः । प्रकरणं हि न साक्षाद्विनियोजकम्, तद्ध्याकाङ्क्षारूपम् । न चाकाङ्क्षा स्वयं प्रमाणं किन्तु साकाङ्क्षं वाक्यं दृष्ट्वा भवत्येतादृशी मतिः—नूनमिदं वाक्यं केन चिद्वाक्येनै-

---

त्वश्रवणं तुल्यं तथाऽप्यपूर्वसाधनलक्षणोत्तरमेष विभाग इति बोध्यम् । यद्यपि विधिवाक्यस्य विनियोजकतां निरूप्य तत्कृतप्रकरणबाधोदाहरणं "दीर्घसोमेन संतृद्येद्धृत्यै" "न प्रथमयज्ञे प्रवृञ्ज्यात्" "पूषा प्रपिष्टभाग" इत्यादि वक्तुमुचितम् । आद्यवाक्यं हि न प्रकरणिनि ज्योतिष्टोमे ऽभिषवफलकयोः सन्तर्दनं विधत्ते इष्ट्यादिनिरूपितदैर्घ्यवतो ऽपि सोमान्तरनिरूपितदैर्घ्यशून्यस्य तस्य तद्वदभिधायिदीर्घसोमपदेनानभिधानात् । नच दीर्घस्य यजमानस्य सोम इत्यर्थे ऽयं समासः । निषादस्थपतिन्यायेन कर्मधारयस्यैव युक्तत्वात् । धृत्या इत्यर्थवादानुपपत्तेश्च । तस्मादुक्थ्यादिसंस्थास्वहर्गणेषु च तद्विधानम् । न च प्रकृतिवदुक्थ्यादिषु त्रिपर्वदशमुष्टिपरिमितसोमग्रहणादीर्घसोमत्वमिति शङ्क्यम् । प्रदानवृद्धिप्राकृतपरिमाणोभयानुरोधेन दीर्घपर्वण एव ग्रहणाश्रयणात् । नच प्रकरणिसंस्थास्वेव निवेशसम्भवान्नाहर्गणेषु सन्तर्दनविधिः, तासां प्रकरणासम्भवात् । यद्यपि "पशुकाम उक्थ्यं गृह्णीयाद्" इत्यादिवचःसूक्थ्यादिसंज्ञाभिहितास्तत्तत्स्तोत्रसम्बन्धोपरमात्मिकाः संस्थाः फलेभ्यो विविहिताः, संस्थाभिधायित्वं च तासान्तत्संस्थे क्रतावुक्थ्यो ऽयमिति प्रयोगाद्, तत्संस्थे तत्स्तोत्रतद्यागाभ्यासवत्यपि षोडशिसंस्थे तथाऽप्रयोगात्, तथाऽपि क्रत्वाश्रितानां तासां फलसाधन-

कवाक्यभूतम् इति । ततश्चाकाङ्क्षारूपं प्रकरणं वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम् ।

एवं च यावत् प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति तावद्वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवतीति प्रकरणाद्वाक्यं बलीयः ।

---

तां क्रत्वन्वयाधीनप्रतिपत्तिकामपेक्ष्य क्रतोरेव शीघ्रं साधनताप्रतीतेर्निर्णीतयागाङ्गभावसोमधर्मविधिमिश्रिता अङ्गविधयः प्रथमतरक्रतुशेषत्वं गता न पुनः संस्थाशेषत्वं प्रतिपद्यन्ते । कथं—भावोपशमस्तु ज्योतिष्टोमादतिदेशेन भवेत् । यद्यपि संस्थाज्योतिष्टोमयोर्न सारूप्यम्, तथाऽपि सारूप्यकार्याया बुद्धिस्थताया इहाश्रयत्वमहिम्ना एव सिद्धेर्नानुपपत्तिरिति प्राकृताङ्गैराकाङ्क्षापादसंबद्धव्यवायाच्च न प्रकरणेन संस्थाङ्गं सन्तर्दनम् । न चात्र संस्थासन्निधिरपि । येनानुवादस्य सन्निहितगामित्वात् "प्रयाजे कृष्णलम्" इत्यत्र प्रयाजपदेनेव दीर्घसोमपदेन संनिहितनिर्देशः स्यात् । तस्मादस्त्यहर्गणेष्वपि सन्तर्दनम्, एकाहेष्वपि । यत्र ज्योतिष्टोमाधिकग्रहविधिस्तत्र दाशमिकन्यायेन प्राकृतग्रहाबाधाद्भवतु संस्थावद्दीर्घसोमत्वम् । ज्योतिष्टोमे तु न निवेश इति प्रकरणबाधः । "न प्रथमयज्ञे" इत्यस्य प्रकरणबाधकत्वं निषेधप्रस्तावे वक्ष्यामः । पूषेतिवचश्च न प्रकरणिनि दर्शे पेषणं विधत्ते तत्र पूषयागाऽभावात्, किन्तु तदेकदेवत्ये चरौ देवताया अनुक्तत्वेनाग्नेयपदवद्भागपदस्य तद्देवत्यपरत्वात् प्रतिप्रसवेनार्थवत्त्वे लाघवाच्च । एवं किंमे प्रजया इति शंयुयाचितवरप्रदाने "यो ब्राह्मणायावगुरेत्तं शतेन यातयाद्" इत्यस्मिन्प्रकृतदार्शिकर्त्विङ्मात्रस्य ब्राह्मणपदेन निर्देशासम्भवात्प्रकरणबाधकत्वं तथाऽन्येषूदाहरणेषु विरोधस्यास्पष्टत्वान्मन्त्रवाक्यस्य प्रकरणबाधकत्वे ऽभिहिते च कैमुतिक-

अत एव "इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्" इत्यत्रेन्द्राग्नीपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे "इदं हविः" इत्यादेरपि तदेकवाक्यत्वाद्दर्शाङ्गत्वम्, न तु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम् । प्रकरणाद्वाक्यस्य बलीयस्त्वादिति ॥

उभयाकाङ्क्षा प्रकरणम् । यथा प्रयाजादिषु । "समिधो यजति" इत्यत्र हि इष्टविशेषस्यानिर्देशात्समि-

---

न्यायेन विधिवाक्यस्य तथात्वसिद्धेर्लाघवमनुसृत्य मन्त्रवाक्यकृतबाधमाह—अत एवेति । प्रकरणवाक्ययोर्मानयोर्मध्ये स्थानस्य वाक्येन बाधायाम् अग्नीषोमीयक्रमेण प्रसक्ततन्मात्राङ्गत्वानि लिङ्गावगतपशुत्रयाङ्गभावपारिवीतपदैकवाक्यत्वानि क्रियमाणपरिव्याणानुवादिमन्त्रगतानि "युवा सुवासाः" इत्यादिपदान्युदाहरणम् । वाक्येन क्रमं बाधित्वा तेषां सवनीयपरिव्याणे विनियोगसिद्धेः । समाख्याया वाक्येन बाधायां भक्षानुवाकगतानि लिङ्गावगतग्रहणाद्यङ्गभावैः सद्यासमित्यादिपदैरेकवाक्यतापन्नानि शेषपदान्युदाहरणम् । समाख्याप्राप्तभक्षणाङ्गत्वबाधेन तेषां ग्रहणादिष्वेव विनियोगात् । उभयेति । फलाकाङ्क्षाविशिष्टकथंभावाकाङ्क्षेत्यर्थः । वैशिष्ट्यं च स्वाश्रयभावनासन्निहितभावनाश्रितत्वसम्बन्धेन, न त्वेकपुरुषावगतत्वादिना । तेन न विश्वजिदादेः प्रकरणेन दर्शाङ्गत्वम्, नापि दर्शप्रकरणेन प्रयाजादेः प्रकरणित्वम् । यथा हि ज्ञानत्वं ज्ञानपदवाच्यमपि न ज्ञानं तथाऽङ्गविधिगता फलाकाङ्क्षा प्रकरणपदवाच्याऽपि न प्रकरणम् । प्रकरणोक्तसम्बन्धेन यदीयफलाकाङ्क्षाविशिष्टा ऽनिर्णीततदनङ्गत्वगता या कथंभावाकाङ्क्षा सा तद्विनियोजकं प्रकरणमिति तु निष्कर्षः । उक्तं हि—"अ-

द्यागेन भावयेत् किमित्यस्त्युपकार्य्याकाङ्क्षा । दर्शपूर्णमासवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्कथमित्यस्त्युपकारकाकाङ्क्षा । अत उभयाकाङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं सिध्यति ।

ननु यदि प्रयाजादिवाक्ये इष्टविशेषो न श्रूयते तर्हि विश्वजिन्न्यायेन स्वर्गः फलं कल्प्यताम् ।

विश्वजिदधिकरणे हि (४।३।१०–१६) "विश्वजिता यजेत" इत्यत्र फलस्याश्रवणात्, फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम् ।

तदुक्तम्-"स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वाद्" इति ।
(४।३।१५)

रात्रिसत्रन्यायेन वाऽऽर्थवादिकं फलं कल्प्यताम् ।

रात्रिसत्राधिकरणे (४।४।१७–१८) हि "प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति" इत्यत्र विध्युद्देशे फलाश्रवणात्फलमन्तरेण च विधिश्रुतेरनुप-

---

संयुक्तं प्रकरणादितिकर्तव्यतार्थित्वाद्" इति (पू० मी० अ० ३ पा० ३ अधि० ४ सू० ११)। अत्र पञ्चम्यन्तयोः सामानाधिकरण्यात्कथम्भावाकाङ्क्षैव प्रकरणमित्यवसीयते, असंयुक्तपदं च फलाकाङ्क्षोपस्थापकं नतु सन्निपातिनिवारणाद्यर्थमिति वार्त्तिकटीकायां प्रपञ्चितमेतैः। फलइति । अविवक्षितसंख्याकनिर्देशः। उपयन्तीत्यत्रेति । एतदर्थवादसम्बद्ध इत्यर्थः।

पत्तेरवश्यं फले कल्पयितव्ये आर्थवादिकं प्रतिष्ठाख्यं फलमित्युक्तम्।

विश्वजिदधिकरणन्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसम्बन्धकल्पने गौरवादर्थवादोपस्थितस्यैव प्रकृतसम्बन्धकल्पने लाघवात्।

तदुक्तम्—"फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्याद्"इति (४।३।१८)।

तस्माद्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा स्वतन्त्रफलार्थत्वे सम्भवति किमिति दर्शपूर्णमासाङ्गत्वं स्वीक्रियते इति।

मैवम्। स्वतन्त्रफलार्थत्वेऽन्यतराकाङ्क्षया सम्बन्धः स्यात्। न ह्यत्र फलस्य साधनाकाङ्क्षाऽस्ति। श्रूयमाणं हि फलं साधनमाकाङ्क्षति, न चात्र तच्छ्रूयते। एवं च फलस्याकाङ्क्षाभावात् केवलं किं भावयेदिति प्रयाजानां भाव्याकाङ्क्षयैव स्वतन्त्रफलार्थत्वं स्यात्। दर्शपूर्णमासार्थत्वे तूभयाकाङ्क्षा प्रमाणम्, प्रयाजानां भाव्याकाङ्क्षाया इतरत्र च कथम्भावाकाङ्क्षायाः सत्त्वात्। अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलीयसीति वक्ष्यते। ततश्च दर्शपूर्णमासार्थत्वमेव युक्तं न स्वतन्त्रफलार्थत्वमिति।

---

आर्थवादिकमिति। ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति

तदुक्तम्—"द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्याद्" इति (४।३।१)।

अत्र द्रव्ये फलश्रुतिः—"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्येवमाद्या। संस्कारे फलश्रुतिः—"यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्येवमाद्या। कर्मणि फलश्रुतिः—"वर्म वा एतद्यज्ञस्य क्रियते यत् प्रयाजानुयाजा इज्यन्ते" इत्याद्या।

कर्मपदं चारादुपकारककर्मपरं द्रष्टव्यम्, संस्कारकर्मणः पृथक् सङ्कीर्तनादित्यास्तां तावत्।

तदिदं प्रकरणं क्रियाया एव विनियोजकम्, न द्रव्यगुणयोः। तयोस्तु क्रियायोगाद्विनियोजकम्। कुत इति चेत्। शृणु।

"यजेत स्वर्गकामः" इत्यत्राख्यातांशेनार्थी भावना विधीयते—भावयेदिति। सा चांशत्रयमपेक्षते—'किं भावयेत्, केन भावयेत् कथं, भावयेद्' इति। तत्र भाव्याकाङ्क्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतयाऽन्वेति—स्वर्गं भावयेद्' इति। करणाकाङ्क्षायां समानपदोपात्तो यागो भावार्थाधिकरणन्यायेन (२।१।१) करणतयाऽन्वेति—'यागेन स्वर्गं भावयेद्' इति। ततः कथमिति कथम्भावाकाङ्क्षायां यत् सन्निधौ पठितमश्रूयमाणफलकं च क्रियाजातं तदेवोपकार्याकाङ्क्षयेतिकर्तव्यतात्वेनान्वयम-

नुभावितुं योग्यम्, क्रियाया एव लोके कथंभावाकाङ्क्षायामन्वयदर्शनात् । न हि कुठारेण छिन्द्यात्कथमित्याकाङ्क्षायां हस्त इति केवलमुच्चार्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति, किं तर्हि ? हस्तेनोद्यम्य निपात्येति उच्चार्यमाणे उद्यमननिपातने एव । हस्तोऽपि तद्द्वारेणैवान्वयं प्राप्नोतीति सर्वजनीनमेतत् ।

किं च कथंभावाकाङ्क्षा नाम करणगतप्रकाराकाङ्क्षा । कथमः प्रकारवाचित्वात् । सामान्यस्य भेदको विशेषः प्रकारः । सामान्यं च क्रियारूपमेवाख्यातेनोच्यते ।

"यजेत स्वर्गकामः" इत्यस्य ह्ययमर्थः—यागेन तथा कर्त्तव्यं यथा स्वर्गो भवतीति । क्रियासामान्यस्य च विशेषः क्रियैव भवति । न हि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति । एवं च करणगतक्रियाविशेषाकाङ्क्षापरनामधेयकथम्भावाकाङ्क्षायां क्रियैवान्वेतीति युक्तम् । स च करणगतः क्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्तक्रियारूप एवेति युक्तं तस्य प्रकरणेन ग्रहणम् । तस्य च करणगतत्वं तदुपकारकत्वमेव, तेन विना यागेनापूर्वाजननात् । न ह्यु-

---

विपरिणामेनेत्यर्थः । उच्चार्यमाणोऽपीति । यद्यपि शानजभिहितमुच्चारणकर्मत्वं शब्दगामि तथाऽपि शब्दकर्मीभूते ऽर्थे तद् उपचर्यते ।

घमननिपातनव्यतिरेकेण कुठारेण द्वैधीभावो जन्यते। तत् सिद्धं कथम्भावाकाङ्क्षायां क्रियैवान्वेतीति युक्तम्।

अत एव द्रव्यदेवतयोर्यागसंपादनद्वाराऽन्वयः साम्प्रदायिकैरुक्तः। विकृतौ च कथम्भावाकाङ्क्षायामुपकारसम्पादनमातिदिश्यत इत्युक्तम्। यदि च कथम्भावाकाङ्क्षायां सिद्धवस्तु अन्वययोग्यं स्यात् तदा सम्पादनपर्यन्तं धावनं ग्रन्थकृतामनर्थकं स्यात्। अतश्च क्रियाया एव इतिकर्त्तव्यतात्वम्, कथंभावाकाङ्क्षागृहीतस्येतिकर्त्तव्यतात्वात्, इतिशब्दस्य च प्रकारवाचित्वात्। कर्तव्यस्य इति प्रकार इतिकर्तव्यता। प्रकारश्च सामान्यस्य भेदको विशेष इत्युक्तम्। कर्त्तव्यस्य च विशेषः कर्त्तव्य एव भवतीति न सिद्धस्य वस्तुन इतिकर्त्तव्यतात्वम्, किन्तु क्रियाया एव। सिद्धस्य तु द्रव्यादेः केवलमङ्गत्वम्। तदपि श्रुत्यादिना न तु प्रकरणात्।

यथाहुः—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः॥ इति
(तन्त्रवार्तिके २९३)

---

एवमग्रेऽपि। सिद्धमनुष्ठेयम्। अन्यादृशासिद्धत्वस्योपकारेष्वसम्भवात्।

अत एव "बर्हिर्देवसदनं दामि" इत्यादिमन्त्राणां लिङ्गादङ्गत्वम्, न तु प्रकरणादित्युक्तम् अर्थवादाधिकरण(पू० मी० अ० १ पा० २ अ० १) पूर्वपक्षसमाप्तौ राणके। क्वचिद् द्रव्यस्येतिकर्त्तव्यतात्वाभिधानमङ्गत्वाभिप्रायं द्रष्टव्यम्, बहुग्रन्थस्वरसादुक्तयुक्तेश्चेति।

तत्सिद्धं प्रकरणं क्रियाया विनियोजकमिति।

तच्च प्रकरणं द्विविधम्। महाप्रकरणमवान्तरप्रकरणं चेति।

तत्र फलभावनायाः प्रकरणं महाप्रकरणम्।

तच्च प्रयाजादीनां ग्राहकम्। तच्च प्रकृतावेव। यत्र समग्राङ्गोपदेशः सा प्रकृतिः, यथा दर्शपूर्णमासादि। तत्र चोभयाकाङ्क्षारूपं प्रकरणं सम्भवति आकाङ्क्षानुपरमात्। विकृतौ तु न प्रकरणं सम्भवति। यत्र न समग्राङ्गोपदेशः सा विकृतिः, यथा सौर्यादिः। तत्र च यान्यपूर्वाण्यङ्गानि विद्यन्ते उपहोमादीनि तेषां न प्रकरणं विनियोजकम्। तत्र यद्यपि

---

लिङ्गादिति। प्रकरणसहकृतादिति शेषः। प्रकरणादित्यनन्तरमेवेति। लिङ्गादभिधानक्रियाऽर्थत्वेऽवगते तद्द्वारेण मन्त्राणां प्रकरणेन ग्रहणं? सम्भवति नान्यथा, प्रकरणागृहीतस्योच्चारणकर्त्तव्यताया अप्यसिद्धेरिति तदाशयः। उपहोमादिकतिपययागोपदेशवत्या विकृतेर्वारणाय समग्रेति। यत्रनेति। नच दर्विहोमेष्वतिप्रसङ्गः, तेषामङ्गसत्त्वे तस्य द्रव्याद्यात्मन औपदेशिकत्वात्, असत्त्वे ऽप्रसिध्यैव

तेषां किं भावयेदित्यस्त्याकाङ्क्षा, तथाऽपि प्रधानस्य न कथम्भावाकाङ्क्षाऽस्ति, प्राकृतैरेवाङ्गैर्निराकाङ्क्षत्वात्। न च प्राकृतानामङ्गानामत्रापठितत्वेनाप्रत्यक्षत्वाद्वैकृतानां तु पठितत्वेन प्रत्यक्षत्वात्तैरेवाकाङ्क्षोपशम" इति वाच्यम्। तेषां पठितत्वेऽपि अक्लृप्तोपकारत्वेन झटित्याकाङ्क्षोपशमनेऽसामर्थ्यात्, प्राकृतानां तु क्लृप्तोपकारत्वेन तच्छमने सामर्थ्यात्। न चात्र तेषामु-

---

लक्षणपरिहारात्। नचात्रेति। अत्र सौर्ये। यत्र ह्यग्निहोत्रादिनाम धर्मवतो नामत्वेन क्लृप्तं विधेयकर्मान्तरे वैष्णवादिपदवद्गुणविधित्वेन प्रायणीयादिवद्यौगिकत्वेनासम्भवदन्यायश्चानेकार्थत्वमिति गौण्या प्रवृत्तं विधिसमभिव्याहारादुपाशये यूपवदवत्सुरावाजिनयोः सोमपदवत्स्तुतावपर्यवस्यदमी पिष्टपिण्डाः सिंहाः क्रियन्तामितिवदतिदेशे पर्यवस्यति, तत्र चोदनायां भवतु तत्कृतोपस्थितिः प्राकृतानाम्, यत्र वा तदतिदेशकं वचनमाम्नायते यथैषावेकाहे "इषुं त्रिष्टुतिं करोति" इत्यनन्तरं "समानमितरच्छयेनेन" इति। अत्र हि यदि भाष्यमतमनुसृत्येतरपदं पूर्वोक्तेषु सदशमसंनिहितमपि श्येनवैशेषिकं कण्टकवितोदनादि विधत्त इत्युच्यते, यद्वा ऽऽचार्यमतानुसारेणेतरपदं पूर्वोक्तत्रिष्टुत्यादेरवशिष्टस्य प्राकृताङ्गस्योद्देशकं समानपदं प्रकृताङ्गसम्बन्धस्य श्येनगतलोहितोष्णीषादेर्विकारस्य विधायकमित्याश्रीयते, सर्वथाऽपि सुलभा तत्र तेषामुपस्थितिः। प्रत्यक्षं वचः कथं नोपदेश इति तु भ्रममात्रम्। अन्यत्र विहितानां धर्माणां तत्सम्बन्धापरित्यागेनान्यसम्बन्धप्राप्तिफलकस्य शास्त्रस्यातिदेशत्वात्। तद्विपरीतस्योपदेशत्वात्। एवं यत्र "एतद्ब्राह्मणान्येव पञ्च हवींषि" "एतद्ब्राह्मण एककपालः" इत्यादौ सार्थवादकसाङ्गविधिककाण्डवाचि-

पस्थापकाभावः। उपमितिलक्षणप्रमाणेन तेषामुपस्थितत्वात्। सौर्यवाक्ये हि दृष्टे औषधद्रव्यत्वेन एकदेवत्यत्वेन च सादृश्येन आग्नेयवाक्यमुपमीयते गवयदर्शनाद् गोरुपमानत्ववत्। तस्मिंश्चोपमिते तेन तदर्थो ज्ञायते। सा च त्र्यंशा भावना। तत्र सौर्यवाक्ये भावनाया भाव्यकरणयोः सत्त्वादितिकर्त्तव्याताकाङ्क्षायामुपकारपृष्ठभावेनाग्नेयेतिकर्त्तव्यताऽतिदिश्यते,'-सौ-

---

ब्राह्मणपदश्रवणादङ्गशास्त्राणामतिदेशो बोध्यते तत्र तत्कृतोपस्थितिर्ज्ञेया, अत्र तु न सम्भवति तादृशोपस्थापकाभावाद् इति शङ्कितुराशयः। तृतीयमतिदेशप्रकारमाह—उपमितीति। एकेति। "अमुमेवादित्यं स्वेन भागधेयेनोपधावति "उदुत्यम्" "अग्नये" "ध्रियस्व" "अग्निर्मूर्धा"इतिवाक्यशेषमन्त्रवर्णबलेन वैकृतप्राकृतनद्धितयोस्तथात्वे तात्पर्यादित्याशयः। भाव्येति। यद्यपि करणत्वाभिमतो यजिर्न श्रुतः देवतासम्बन्धोत्तथा च यज्याकाङ्क्षा ऽतिदेशप्राप्तयजिनैव निवर्त्ततामिति शङ्कोदेति, तथाऽपि युगपदुपस्थितयोर्विभिन्नान्वयासम्भवादितिकर्त्तव्यतातिदेशस्य न करणविषयत्वम्। अतिदेशे वाक्यान्तरकल्पनाच्च लाघवेन यजेरध्याहारो निर्वपतिना तदर्थलक्षणा वाऽङ्गीकर्त्तुमुचिता इत्याशयेनेदम्। एतेनाश्रुतफलके विश्वजिदादौ फलातिदेशोऽपि निरस्तः। एकशब्दोपस्थितयोर्विधेयोद्देश्यत्वानुपपत्तेश्च। नचैवमपि चोदकप्राप्तार्थवादेनैव फललाभात्कल्पनानुपपत्तिः। स्तुत्याख्यप्राकृतकार्यपृष्ठभावेन वा तदतिदेशाद् अप्राकृतफलप्रकाशनार्थत्वासम्भवः। उपकारेति। उक्तं ह्येतद्दशमाद्ये आकाङ्क्षायोग्यतासंनिधिवशात्प्राकृतोपकारा एव विकृत्या स्वी-

र्य्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवद् इति । तथा च तयैवाकाङ्क्षोपशमान्न विकृतेः प्रकरणमस्ति । अन्य-

---

क्रियन्ते इति । आग्नेयवदिति । एतेनान्येऽपि चोदनालिङ्गाति-देशा आख्याताः । ते यथा—

आग्नावैष्णवमारुतप्रभृतिषु औषधद्रव्यकानेकदेवत्ययागेषु अग्नीषोमीयैन्द्राग्नयोर्धर्माः। तत्रापि तद्भिन्नपदाक्षरसंख्यासामान्यं व्यवस्थापकमिति बहवो याज्ञिकाः ।

सौम्यैन्द्रचर्वोस्तयोरेव धर्माः, देवतात्वाधिष्ठानसाम्यस्य तत्संख्यासाम्याद्बलीयस्त्वात् इत्यपि केचित् ।

पश्वामिक्षयोः पयसः, साक्षात्पशुप्रभवत्वसाम्याद्, आमिक्षायाः पयस्त्वात्, मधूदकयोराज्यस्य, वर्णसाम्यात, द्रवत्वस्यापि कथंचित्तुल्यत्वात् । नतु प्राजापत्यशतकृष्णले, चरुशब्देन विशदत्वेन चौषधधर्मातिदेशस्यैव तत्रौचित्यात् । आग्नेयेऽपि पयसि नाग्नेयस्य, शब्दद्वारककर्मसमवायिदेवतासामान्यात्स्वरूपकर्मसमवायिद्रव्यसामान्यप्राबल्यात् । भवति चाध्वरकल्पायां तृतीयस्थानगतेऽपि बार्हस्पत्ये, अन्याधीनप्रतिपत्तिकस्थानसाम्यात् तद्विलक्षणदेवतादिसाम्यप्राबल्यात् । पशुयागेष्वग्नीषोमीयस्य पशोः, एकादशिनेषु सवनीयस्य सौत्यत्वसाम्यात्, सौत्रामण्यादिपशुगणेषु तेषाम्, एकाहेषु द्वादशाहे च ज्योतिष्टोमस्याव्यक्तत्वसाम्यात्, साद्यस्क्रादिसंज्ञायोगिष्वेकगणान्तर्वर्त्तिष्वेकाहेषु तु प्रथमस्य धर्मवत उत्तरेषु, गणेषु द्वादशाहान्तर्वर्त्तिदशरात्रस्य गणत्वसाम्यात्, अनन्यथासिद्धलिङ्गेभ्यश्च । तत्रापि यजतिचोदनाचोदितत्वनिमित्ताऽहीनसंज्ञासाम्यादहीनात्मकतदन्तर्वर्त्तिद्व्यहादेर्द्विरात्रादिष्वेकादशरात्रान्ते यथासम्भवम् अतिदेशः। नच जनकसप्तरात्रे"चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुख्यानि"इति विहितेष्वहः

तराकाङ्क्षारूपस्थानादेव चापूर्वाङ्गग्रहणम् । न च प्राकृताङ्गग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यम् । तेषामपि प्रकृत्युपकारकतयाऽऽकाङ्क्षोपशमात् ।

ननु प्राकृतानामङ्गानामाकाङ्क्षाभावेन तेषां विकृतौ सम्बन्धः केवलं स्थानात् स्यात्, अपूर्वाणां त्वाकाङ्क्षासत्त्वाद्विकृतेरप्याकाङ्क्षावत्त्वात्तेषां सम्बन्धः प्रकरणात्स्यात्, प्रकरणं च स्थानाज् झटिति विनियोजकमित्यपूर्वाणामेव प्रथमं सम्बन्धः स्यात्, न

---

सु त्रिवृत्त्वसाम्यात्पाष्ठिकाद्यन्ह एव विध्यन्तावृत्तिः शङ्क्या। अङ्गभूतस्तोत्रीयागतसङ्ख्यासाम्यात्प्रधानगतगणत्वसाम्यस्य बलीयस्त्वात् । आसनोपेयादिचोदनाचोदितत्वानिमित्तसत्रसंज्ञासाम्यात्सत्रात्मकतदन्तर्वर्त्तिदशरात्रस्य त्रयोदशरात्रादिषु गवामयनपर्यन्तेषु । तस्माद् इतरसम्वत्सरसत्रेषु । षट्त्रिंशद्रात्रे "षडहा भवन्ति चत्वारो भवन्ति"इत्यत्र तु षडहिकविध्यन्तावृत्तिः द्वादशाहिकमपेक्ष्य तस्य शीघ्रप्रतीतेः । यद्यप्युक्तनीत्या "शतोक्थ्यं भवति"इत्यत्रोक्थ्यपदवाच्यसंस्थया संख्यया च विशिष्टेष्वहःसु विहितेषु दशरात्रविध्यन्त आवृत्त्या प्रवर्त्तते, तथाऽपि प्रतिदशकमतिदेशप्राप्तयोरभितो ऽग्निष्टोमयोः स्थाने य उक्थ्यविनियोगः स ज्योतिष्टोमिकोक्थ्यविषय एव बोध्यः । द्वादशाहिकस्यैव गावामयनिकस्याप्युक्थ्यविनियोगस्य ज्योतिष्टोमगतां तदुत्पत्तिमपेक्ष्यैव प्रवृत्यौचित्यादित्याद्यूह्यम् । प्रकरणादिति । यद्यपि संनिधिपाठेतयोः शेषशेषित्वाभिमतयोरुभयाकाङ्क्षा प्रकरणमिति न प्राकृतानां प्रकरणविनियोज्यत्वशङ्कोदयः, तथाऽपि पाठसंपाद्यसान्निध्यरिहातिदेशेनैव

प्राकृतानामिति । उच्यते । सत्यं प्रकरणं झटिति विनियोजकम्, तथाऽपि प्रमाणबलाबलात्प्रमेयबलाबलस्य ज्यायस्त्वाद् उक्तविधयोपस्थितत्वात् प्राकृतानामेव सम्बन्धो युक्तः, क्लृप्तोपकारत्वात्, न वैकृतानाम् कल्प्योपकारत्वात् । विकृतेश्चोपकारकपदार्थाकाङ्क्षा न पदार्थमात्राणामिति युक्तः प्रथमं प्राकृताङ्गसम्बन्धः । ततश्च न विकृतौ प्रकरणं विनियोजकम् ।

यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते, यथा "औदुम्बरो यूपो भवति" इति यूपानुवादेन औदुम्बरत्वम्, तत् प्रकरणाद् गृह्यते । ननु न तत् प्रकरणाद् गृह्यते अक्रियात्वात्, क्रियाया एव प्रकरणग्राह्यत्वादिति चेत् । सत्यम् । तथाऽपि तु तावद्विधीयमानस्यौदुम्बरत्वस्यास्त्येवाकाङ्क्षा–'किं भावयेद्' इति ।

---

सिद्धिरिति अभिमानेनेयमुक्तिः, स्थानात्स्यादित्यग्रिमा च । क्लृप्तोपकारस्य बलीयस्त्वप्रयोजकत्वे बीजमाह विकृतेश्चेति । उपकारार्थं पदार्थानाकाङ्क्षन्ती विकृतिर्हि येभ्य उपकारक्लृप्तिस्तानादृत्य नान्येभ्य उपकारकल्पनां सहत इत्याशयः । स्वरूपेणौदुम्बरतायाः प्रकरणाग्राह्यत्वे ऽपि चोदकप्राप्तनियोजनविशेषणत्वेन तद्ग्राह्यत्वसम्भव इत्याशयेनाह सत्यमित्यादिना । यद्यप्याहवनीयवद्यूपः केवलादृष्टात्मा स्यात्, तथाऽपि "यदाहवनीये जुहोति" इत्याहवनीयविनियोगविधाविव न्यायसुधायुदाहृते "पालाशे बध्नाति" इति यूपविनियोगविधावदृष्टवाचिशब्दाभावेनादृष्टविशिष्टस्य क्रत्वपूर्वसम्बन्धालाभात्प्राकृतखादिराञ्जनादिविधिष्विव वैकृतोदुम्ब-

न च यूपानुवादेन तस्य विधीयमानत्वाद् यूपस्य चादृष्टरूपत्वात्तेनैवौदुम्बरत्वस्य नैराकाङ्क्ष्यम् आहवनीयेनेवाधानस्येति वाच्यम् । यूपस्य केवलादृष्टरूपत्वाभावात । तस्य हि तद्रूपत्वे खादिरत्वादिकं केवलादृष्टार्थं स्यात । न च तत् सम्भवति । तथा सति खदिराभावे प्रतिनिधित्वेन कदरोपादनं न स्यात । अदृष्टार्थस्य प्रतिनिध्यभावात् । न हि खदिरजन्यमदृष्टं कदरेण क्रियते इत्यत्र प्रमाणमस्ति । अत एव नादृष्टार्थानां प्रतिनिधिः ।

तदुक्तम्—"न देवताग्निशब्दक्रियमन्यार्थ(१)-त्वाद्"इति (पू० मी० अ० ६ पा० ३ अ० ६ सू० १८) अन्यार्थत्वादिति अदृष्टार्थत्वात । प्रतिनिधित्वेन चोपादानं कदरादेरुक्तं ग्रन्थेषु । तस्मान्न यूपस्य केव-

रतादिविधिषु क्रत्वपूर्वसम्बन्धाकाङ्क्षा वक्तुं शक्यते । वस्तुगतिमनुरुध्याह यूपस्येति । ननु "न देवता-" (पू० मी० अ० ६ पा० ३ अ० ६ सू० १८ ) इतिसूत्रे प्रयाजादिक्रियाणामाहवनीयाद्यग्नीनां च प्रतिनिध्यभावे यो न्यायो ऽभ्यधायि स भवता यूपे सञ्चार्यते देवतामन्त्रयोर्दृष्टार्थयोरपि मुख्यस्मृत्यस्मृत्योस्तत्सदृशग्रहासम्भव इत्यादिन्यायान्तरेण प्रतिनिधिनिराकरणात् । नचेह तत्साम्यम् । दृष्टान्ते साक्षाददृष्टार्थत्वात्, दार्ष्टान्तिके परिच्छेदाख्यदृष्टद्वारेण तदर्थत्वादत आह तस्मादिति । यूपशब्दवाच्य-

१ सूत्रपाठे आनन्दाश्रमीयपुस्तकानुरोधेन "न देवताऽग्निशब्दक्रियमन्यार्थसंयोगाद्"इत्यानुपूर्वी लभ्यत एतत्सूत्रस्य, तथाऽपि मूलकारकृताव्यवहितोत्तरव्याख्यानेन मूलाभिप्रायानुरोधिन्येव सूत्रानुपूर्वी स्थापिताऽत्रेत्यवधेयम् ।

लादृष्टरूपत्वम्, अपि तु दृष्टादृष्टसंस्कारगुणो यूप इति साम्प्रदायिकाः । एवं चौदुम्बरत्वस्य न यूपमात्रेण नैराकाङ्क्ष्यम् । दृष्टसंस्कारस्य प्रकारान्तरेणापि सम्भवात। अतश्चास्ति औदुम्बरत्वस्याकाङ्क्षा । विकृतेरप्यस्ति कथम्भावाकाङ्क्षा । सा च तदा शाम्यति यदोपकारास्तत्पृष्ठभावेन च पदार्था अन्वीयन्ते । न तूपकारमात्रान्वयेन शाम्यति । अतश्च यथेन्द्रियभावनायाः करणाकाङ्क्षा दध्नः करणत्वेनान्वये जाते सिद्धस्य करणत्वानुपपत्त्या होमस्याश्रयत्वेनान्वयं यावदनुवर्तते न तु दध्यन्वयमात्रेण निवर्त्तते । आश्रयत्वेन च गृह्यमाणो होमः करणाकाङ्क्षयैव गृह्यत इत्युच्यते, न त्वाश्रयाकाङ्क्षा नाम चतुर्थ्यस्ति । एवं विकृतेः कथम्भावाकाङ्क्षा नोपकारान्वयमात्रेण निवर्तते, उपकारपृष्ठभावेन यावत्पदार्थान्वयमनुवर्तते । अतश्चोपकारपृष्ठभावेन गृह्यमाणाः पदार्थाः कथम्भावाकाङ्क्षयैव गृह्यन्ते । तत्र प्राकृताः

---

त्वेनाभिमतमदृष्टं प्रति खदिरत्वाञ्जनादिद्वारत्वेनाभिमतानां दृष्टादृष्टानामेव तद्वाच्यत्वसम्भवे नाधिकादृष्टकल्पनमुचितम् । तेषां तु वाच्यत्वं प्रत्येकं स्यात्—'यश्छिद्यते स यूपः' 'यस्तक्ष्यते स यूपः' इति प्रत्येकं वचनव्यक्त्याश्रयणात् कतिपयसंस्काररहितायामपि खलेवाल्यां मन्त्रगतयूपैकत्वनिर्देशोपपत्तेः । वाच्यसंस्कारानेकत्वेऽपि तदाश्रयकाष्ठैकत्वेन गुणवचनानाश्रयतो लिङ्गवचनादिम-

पदार्थाः कथम्भावाकाङ्क्षया गृह्यमाणा अपि न प्रकरणग्राह्याः प्रकृत्युपकारकतया तेषामाकाङ्क्षाभावात् । औदुम्बरत्वादयस्तु अन्यानुपकारकतया साकाङ्क्षाः पशुनियोजनयूपपृष्ठभावेन यावत् खादिरत्वमायाति तावद्विधीयन्ते इति युक्तं तेषां प्रकरणाद् ग्रहणम्, उभयाकाङ्क्षासत्त्वात् । यदि हि यूपपृष्ठभावेन खादिरत्वं विहितं स्यात् ततो विकृतेराकाङ्क्षाभावाद् औदुम्बरत्वं न प्रकरणग्राह्यं स्यात् । न चैतदस्ति, चोदकस्य खादिरत्वाविषयत्वात् ।

ननु यदि यावत् खादिरत्वमायाति तावदेवौदुम्बरत्वं विधीयते तदा तेन खादिरत्वबाधोऽप्राप्तबाधः स्यात् तार्तीयबाधवत् ।

तथा हि बाधो द्विविधः—अप्राप्तबाधः प्राप्तबाधश्चेति । तत्र तार्तीयो बाधो ऽप्राप्तबाधः । तत्र हि यावद् दुर्बलेन प्रमाणेन विनियोगः कर्तुमारभ्यते तावदेव प्रबलप्रमाणेन विनियोगः क्रियते इति

---

न्त्रगतयूपगैकत्वनिर्देशोपपत्तेः । यद्वा समुदायात्मना स्यात् । लाघवेन सर्ववाक्यपर्यालोचनान्ते 'यश्छिद्यते यस्तक्ष्यते स यूपः' इत्येवमेकवचनव्यक्तिस्वीकरणात् । खलेवाल्यां च कतिपयसंस्कारप्रकाशकशब्दान्तराभावेनागत्या यूपशब्दप्रयोगाश्रयणाद् । अक्षशब्दवन्नानार्थस्य यूपशब्दस्य सकृत्प्रयोगे यावदर्थप्रकाशकत्वाभावापत्तेरित्यन्यदेतदित्याशयः । पश्चिन्तति । यूपपृष्ठभावेनेत्येतावतैवालं

तद्बोधितेनेतरबाधोऽप्राप्तबाधः, दुर्बलप्रमाणस्याप्रवृत्तत्वात् । प्राकृतस्य स्वङ्गस्य विकृतौ चोदकप्राप्तस्य प्रत्याम्नानाद्. अर्थलोपात, प्रतिषेधाद्वा यो बाधः स प्राप्तबाधः । यथा प्राकृतानां कुशानां प्रतिकूलशराम्नानात, यथा वा ऽवघातस्य कृष्णलेषु वैतुष्यरूपप्रयोजनलोपात, यथा वा पित्र्येष्टौ होतृवरणस्य "न होतारं वृणीते" इति प्रतिषेधात् । औदुम्बरत्वेन च खादिरत्वबाधः प्राप्तबाध एव वक्तव्यः, शरकुशन्यायेन चोदकस्य च खादिरत्वाविषयत्वे प्राप्त्यभावात, तदनुपपत्तिः स्यादिति । उच्यते । तार्तीयप्रमाणविनियुक्तेनेतरस्य बाधनं तावदप्राप्तबाधनम् । प्रकरणं च तार्तीयम् । तेन तद्विनियुक्तौदुम्बरत्वेनेतरस्य बाधनमप्राप्तबाध एव । न हि वैकृतेन प्राकृतबाधः प्राप्तबाध

---

कर्त्तव्ये नियोजनग्रहणं मूलशङ्कापरिहारार्थम् । प्रत्याम्नानादिति । आम्नानस्य प्रातिकूल्यं तत्कार्यकार्यर्थान्तरविधायकत्वम्, तादृशार्थान्तराक्षेपकत्वं वा । तेन "सप्तदशशरावश्चरुर्भवति" "वत्समालभेत" इत्यादौ मुष्टिनिर्वापाजालम्भादिप्रत्याम्नानत्वसङ्ग्रहः । अर्थलोपादिति । साध्यसाधनयोरन्यतरासम्भवादित्यर्थः । तेन पवमानेष्टिषु आहवनीयाग्निहोत्रहवण्योर्बाधस्यार्थलोपनिमित्तत्वसङ्ग्रहः । प्रतिषेधादिति । निवृत्तितात्पर्यकाच्छास्त्रादित्यर्थः । तेनैतरुदाहृतपर्युदासत्वस्य "न होतारं वृणीते" इत्यस्य "इडान्ता आतिथ्या संतिष्ठते" इत्येवंरूपशास्त्रान्तरस्य च प्रतिषेधत्वसङ्ग्रहः । नहीति । नचैवं प्रा-

एवेति कुलधर्मः।

वस्तुतस्तु प्राप्तबाध एवायम्। न च "खादिरत्वस्य चोदकाविषयत्वेन प्राप्त्यभावात् कथं तद्बाधः प्राप्तबाधः, तद्विषयत्वे वा तेनैव नैराकाङ्क्ष्यान्नौदुम्बरत्वस्य प्रकरणं विनियोजकं स्यादिति वाच्यम्। न हि प्राप्तबाधस्थले चोदकेन पदार्थाः प्राप्यन्ते। तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात्, किं तर्हि, तानेव पदार्थान्वस्तुतः प्रापयति ये विकृतौ न बाध्यन्ते। ते च पदार्थाः प्रकृतिवच्छब्देन प्राप्यन्ते इति भवति पुरुषस्य भ्रान्तिः—यथा प्रकृतौ कृतं तथा विकृतौ कर्त्तव्यमिति सर्वे पदार्थाः प्राकृताः कर्त्तव्या इति। अतश्च

---

प्तबाधत्वं क्वापि न स्यात्, बाधकवैकृतस्य सर्वत्र तार्तीयमानविनियुक्तत्वादिति शङ्क्यम्। यत्रैकत्रिकादौ प्राकृतेनैव क्रमादिना पाठप्राप्तेनापि श्रुतिप्राप्तस्यापि त्रिच्छन्दस्त्वादेः प्राकृतस्य बाधो दशमे निरूप्यते, तत्रैव प्राकृतबाधस्य प्राप्तबाधत्वेन वक्तुमौचित्यात्। नहि तत्र बाध्यबाधकयोस्तार्तीयमानेन विकृतौ विनियोगः विकृतौ तादृशमानादर्शनात्। प्राकृतमानानां च विकृताविनियोजकत्वात्। विनियोजकत्वे वा त्रिच्छन्दस्त्वेनैव क्रमबाधापत्तेः। तेन प्राप्तबाध एवेत्यवधारणस्य नानर्थक्यमिति बोध्यम्। ननु शरयुक्तविकृतावतिदेशस्य कुशेतरविषयत्वमिवैकत्रिके ऽतिदेशस्य त्रिच्छन्दस्त्वेतरविषयत्वं वाच्यम्, अन्यथा शास्त्रप्राप्तस्य बाधायोगात्, ततश्च प्राप्तबाधोक्तेराकरस्थाया निर्विषयत्वं स्यादत आह वस्तुतइति। अतश्च भ्रान्तीति। ननु प्रति-

भ्रान्तिप्राप्ताः खादिरत्वादयः शास्त्रप्रतिपन्नैरौदुम्बरत्वादिभिर्बाध्यन्ते इति भवति तद्बाधः प्राप्तबाधः। न च भ्रान्तिप्रतिपन्नेन वैधी आकाङ्क्षा निवर्तयितुं शक्यते। तस्माद्युक्तमुक्तमुभयाकाङ्क्षारूपप्रकरणसम्भवाद्विकृतौ प्राकृताङ्गानुवादेन विधीयमानानामौदुम्बरत्वादीनां प्रकरणं विनियोजकमिति।

एवं "पृषदाज्येनानुयाजान्यजति" इति प्राकृतानुयाजानुवादेन विधीयमानं पृषदाज्यमपि प्रकरणाद्विकृत्यङ्गमिति केचिदाचार्याः।

अस्मत्तातचरणास्त्वेवमाहुः—पृषदाज्यं हि अनुयाजानुवादेन विधीयते। तत्स्वरूपे चानर्थक्यप्राप्तौ तैर्न विकृत्यपूर्वं लक्षयितुं युक्तं विप्रकर्षात्, किन्तु दीक्षणीयावाह्नियमन्यायेन स्वापूर्वमेव लक्षयितुं युक्तं सन्निक-

---

पक्षशास्त्रदर्शने सत्यसति वैषा प्राप्तिः ?। नाद्यः। अनुभवविरोधात्। नहि शरशास्त्रं पश्यतः कुशकर्तव्यताबोधोऽतिदेशादुदेति। न द्वितीयः। श्रुतिमपश्यतो लिङ्गादपि भ्रान्तिसंभवेन श्रुत्या लिङ्गबाधस्यापि प्राप्तबाधापत्तेरिति चेत्। न। प्रतिपक्षं पश्यतोऽपि पुरुषस्य सर्वाङ्गसाधारणादातिदेशात्तद्वत्कार्यमिति बोधस्य कुशकर्तव्यताभ्रमोत्थापकस्य जन्ममात्रेण प्राप्तिव्यवहारोपपत्तेः। नच श्रुतिं पश्यतो लिङ्गात्तादृश्यपि प्राप्तिः शक्यते वक्तुम्। यद्वा शरशास्त्रदर्शनेऽपि कुशांशे बाधितस्यापि अतिदेशस्यावान्तरप्राप्त्यर्थं सत्त्वमभ्युपगम्यते, नाभ्युपगम्यते च विरोधिश्रुतिदर्शनेऽपि लैङ्गिकश्रुतिसत्त्वमिति बाध्यत्वाभिमतशास्त्रप्राप्त्यप्राप्तिभ्यां बाधवैचित्र्यम्।

र्षात् । अत एवोत्पवनादीनां प्रोक्षणाद्यपूर्वप्रयुक्तत्वमुक्तं नवमे । अतश्च विधीयमानस्य पृषदाज्यस्य वाक्यप्रतिपन्नेनानुयाजापूर्वेणैव नैराकाङ्क्ष्यात् न प्रकरणाद्विकृत्यपूर्वार्थत्वमिति ।

वयन्त्वङ्गीकृत्याऽपि विकृत्यर्थत्वं ब्रूमः । भवतु वा विकृत्यर्थत्वं पृषदाज्यस्य, तथाऽपि न प्रकरणं विनियोजकं भवति । यूपपृष्ठभावेन हि यावत्खादिरत्वमायाति तावदौदुम्बरत्वविधानादुभयाकाङ्क्षासम्भवाद्युक्तः प्रकरणविनियोगः । एवं यावदनुयाजपृष्ठभावेन आज्यमायाति तावदेव यदि पृषदाज्यं विधीयेत तदोभयाकाङ्क्षासम्भवात्प्रकरणविनियोगो भवेत् । न त्वेतदस्ति । न हि पृषदाज्यं नाम द्रव्यान्तरं किञ्चिदस्ति यद् आज्यस्थानापन्नं विधीयते, औदुम्बरत्वमिव खादिरत्वस्थाना-

एवं च "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवद्"(पू० मी० अ० ६ पा० ५ अ० १९ सू० ५४) इति न्यायविषये प्राप्तबाधव्यवहारोपपत्तिः ।

आह च भवदेवः—'प्राप्तशब्दोऽयं शास्त्रगोचर एव, न बाध्यविषयगोचर इत्यवधातव्यम्'इति ।

ननु पृषदाज्यस्यानुयाजापूर्वार्थत्वे यत्रतत्रस्थेनापि अनुयाजापूर्वेण तत् प्रयुज्येत, यथैव च लोके निर्ज्ञातप्रकारमवघातं प्रत्यसंभवच्छेषत्वस्योलूखलप्रोक्षणादेः क्रत्वपूर्वसम्बन्धः कल्प्यः, तथा प्रकृतौ निर्ज्ञातप्रकारमनुयाजापूर्वादि प्रत्यसंभवच्छेषत्वाया पृषात्ताया अपि, अन्यथा ऽऽहवनीयोद्देशविहितस्य संमार्गादेरपि क्रतुसम्बन्धो न सिध्येद् अत आह भवत्विति ।

पन्नम्। पृषच्छब्दस्य पृषन्मणिरित्यादौ चित्रतावाचित्वेन दृष्टत्वात्, पृषदाज्यशब्दस्य चित्राज्यवाचित्वात्। अत एव निगमेषु आज्यपानित्येव वक्तव्यं न पृषदाज्यपानित्युक्तम्।

न च यावत् प्राकृतमाज्यमायाति तावदेव चित्राज्यविधानात् प्रकरणविनियोगः सम्भवति इति वाच्यम्। न हि पृषदाज्यशब्देन चित्रतागुणविशिष्टमाज्यं विधीयते, विशिष्टविधाने गौरवापत्तेः, किं तु प्राकृताज्यानुवादेन चित्रतागुणमात्रं विधीयते, "लोहितोष्णीषा ऋत्विजः प्रचरन्ति"इतिवत्।

तदुक्तं दशमचतुर्थचरणान्ते-'न वा गुणशास्त्रत्वाद्'इति। 'प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधानम्'इति च शास्त्रदीपिका।

एवं च विकृतेः प्राकृतेनाज्येन क्लृप्तोपकारैश्चानुयाजैर्नैराकाङ्क्ष्ये पश्चाद्विधीमायनस्य चित्रतागुणस्योपहोमाद्यपूर्वाङ्गत्वत न प्रकरणं विनियोजकं

---

सूत्रे गुणशब्दस्य विशिष्टाज्यपरत्वमेव किं न स्यादिति शङ्काया व्याख्यातृवचो विरोधमाह-प्राकृतस्येति। ननूत्पवनात्वेक्षणादिविधिबलात्तु द्रव्यान्तरासंसर्गस्य प्रकृताज्याङ्गत्वेनावगतस्येह दधिसंसर्गेण बाधात्कथं नौदुम्बरतान्यायस्तत्राह यदिहीति। न ह्यत्र खादिरताया औदुम्बरतयेव द्रव्यान्तरासंसर्गस्येह दधिसंसर्गेण बाधः संभवति, दध्यन्यद्रव्यसंसर्गस्यावर्जनीयत्वापातादि-

सम्भवति । यदि हि प्राकृतस्य कस्य चिद् गुणस्य स्थाने चित्रता गुणो विधीयेत तदा स गुणो यावदायाति तावद्विकृतेर्नैराकाङ्क्ष्याभावात् चित्रतागुणस्य च तावदेव विधानादुभयाकाङ्क्षासम्भवात् प्रकरणविनियोगो भवेत् । न च तादृशः प्राकृतो गुणोऽस्ति, आज्यस्यानुयाजानां च चित्रतागुणात्प्रागेव विधानात्, तस्य तत्स्थानापन्नत्वाभावात् । न च आज्यपृष्ठभावेन यावत् प्राकृते निर्गुणत्वमायाति तावदेवास्य विधानात्प्रकरणसम्भव इति वाच्यम् । निर्गुणत्वस्याविहितत्वेन पाणिकण्डूयनवदनङ्गत्वाद् विकृतेस्तदाकाङ्क्षाभावात् ।

तथा हि—ज्योतिष्टोमे दक्षिणादानसमये विहितकृष्णविषाणात्यागस्य द्विरात्रादिषु चोदकप्राप्तस्य प्रथमेऽहनि अननुष्ठानम् । उत्तरेऽहनि दक्षिणादानपूर्वकालीनैः पदार्थैः कृष्णविषाणाकण्डूयनस्य शास्त्रविहितत्वेनापेक्षितत्वात् । ज्योतिष्टोमे च दक्षिणादानोत्तरकालं पाणिकण्डूयनं दृष्टमपि द्विरात्रादिषु प्रथमेऽहनि अनुष्ठीयमानैर्दक्षिणादानोत्तरकालीनैः पदा-

---

त्याशयः। निर्गुणत्वम्, विहितद्रव्यान्तरसंसर्गराहित्यम् । ननु प्रकृतौ पृषत्तानपेक्षानुयाजजन्यतया ऽवगतस्यापि कार्यस्य पशौ तत्सापेक्षतज्जन्यत्वाङ्गीकरणात् प्राकृतकार्यसाधनतया ऽनुयाजान्प्रापयतो

र्थैर्निरपेक्ष्यते तस्य प्रकृतावर्थसिद्धत्वेनाशास्त्रीयत्वादिति ।

एवं निर्गुणत्वस्याविहितत्वेन विकृतेस्तदपेक्षा नास्तीति । तस्मादुभयाकाङ्क्षाया असम्भवात् पृषदाज्यस्य न प्रकरणविनियोगः सम्भवतीत्यलमतिविस्तरेण ।

तत्सिद्धं महाप्रकरणं प्रकृतावेव विनियोजकम् । विकृतौ तु यत् प्राकृतदृष्टार्थाङ्गानुवादेन विधीयते तस्य विनियोजकं न तु केवलं विधीयमानस्यापूर्वाङ्गस्येति ।

यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तराले ऽपूर्वमप्यङ्गं केवलं पठ्यते तदपि प्रकरणेन विनियुज्यते । यद्यपि विकृतेः कथम्भावाकाङ्क्षा प्राकृतैरेवाङ्गैः शाम्यति, तथाऽपि यत्र प्राकृताङ्गानुवादेन धर्मविधानं तत्र तद्विधानं यावद्भवति तावत्कथम्भावाकाङ्क्षा न निवर्त्तते । अतो विकृतेराकाङ्क्षावत्त्वादन्तराले विहितस्यापूर्वाङ्गस्य भाव्याकाङ्क्षासत्त्वाद् युक्तं तस्य प्रकरणा-

ऽतिदेशस्य स्वबोध्यसाधनतानिर्वाहकपृषत्तान्वयात्प्रागपर्यवसानान्न तदन्वयात्प्राक् प्रधानविधेर्नैराकाङ्क्ष्यं सम्भवतीत्यत आह इत्यलमिति । एवं हि सर्वेषामपि प्राकृताङ्गानां वैकृतोपहोमादिनिरूपितक्रमसाहित्यादिसापेक्षतया प्राकृतोपकारसाधनत्वादुक्तरीत्योपहोमानामपि प्रकरणविनियोज्यत्वं स्यादित्याशयः ।

द्धिकृत्यर्थत्वम्। यथाऽऽमनहोमेषु। ते हि प्राकृताङ्गानुवादेन विधियमानयोरन्तराले विधीयन्ते इत्युक्तं तन्त्ररत्नादावित्यास्तां तावत्।

फलभावनाया अन्तराले यद् अङ्गभावनायाः प्रकरणं तद् अवान्तरप्रकरणम्। तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम्। तच्च सन्दंशेन ज्ञायते, तदभावेऽविशेषात् सर्वेषां फलभावनाकथम्भावेन ग्रहणात्। सन्दंशो नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम्, यथाभिक्रमणम्। तद्धि "समानयते जुह्वामुपभृत"इत्यादिना प्रयाजानुवादेन किञ्चिदङ्गं विधाय विधीयते। पश्चादपि प्रयाजानुवादेन "यो वै प्रयाजानां मिथुनं वेद"इत्यादिना किञ्चिदङ्गं विधीयते। अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं तदङ्गं भवति, तत्कथम्भावाकाङ्क्षाया अशान्तेः। यथाहुः—

---

तथापि यत्रेति। एतेन वैकृतप्रधानविधिप्राकृताङ्गधर्मविध्योरन्तराले विनियोगेऽविहितस्यापि प्रकरणविनियोगो दर्शितः। अनेकार्थेष्ववान्तरतात्पर्यवतामनेकवाक्यानामेकत्र क्वचिन्महातात्पर्यमपि प्रकरणपदेनोच्यते यद्विषयतया परे ब्रह्मणि प्रकरणित्वव्यवहार औपनिषदानाम्। एतदत्राधिकार इत्यस्याप्युच्यते, तथा फलेतिकर्त्तव्यताकाङ्क्षाभ्यामन्ये अप्याकाङ्क्षे स्वाश्रययोः संबन्धकारिण्यौ प्रकरणपदेनोच्येते यन्महिम्ना ग्रहणदेवतानां

परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः ।
ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यते ॥ इति ।
(तन्त्रवार्तिके ७५८) ।

न चाङ्गभावनायाः कथम्भावाकाङ्क्षाभावात् कथं प्रयाजभावनाकथम्भावेनाभिक्रमणं गृह्यते इति वाच्यम् । भावनासाम्येन सर्वत्र कथम्भावाकाङ्क्षायाः सत्त्वात् । प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्युक्ते यो नाम न जानाति प्रयाजैरपूर्वं कर्तुं तस्यास्त्येव कथम्भावाकाङ्क्षा–कथमेभिरपूर्वं कर्त्तव्यमिति । सा च सन्दंशपतितैर्वाचनिकैः स्मार्त्तैश्चाचमनादिभिः शाम्यति । तदभावेच स्वरूपनिष्पादनेन दर्विहोमन्यायेन निवर्तते । दर्विहोमेषु हि स्वरूपनिष्पादनातिरिक्त-

---

सोमयागसम्बन्धसिद्धिः । मूले त्वनयोः प्रकरणयोरुक्तस्थले एवाविनियोजकत्वाद्विनियोजकप्रस्तावे ऽनर्हतयोपेक्षणमिति बोध्यम् । सन्निधेस्तु स्थानत्वेन निरूपणीयतया नेह प्रकरणत्वोक्तिः । क्वचित्तद्व्यवहारस्तु भाक्तः । तैरेवेत्यनन्तरमङ्गे ज्ञाप्य इति योज्यम् । तदु अवान्तरप्रकरणम् । एवकारो भिन्नक्रमः— अङ्गएवेति । ततश्च सत्यपि सामिधेन्यङ्गसन्दंशमध्यपाते ऽनङ्गनिविन्मन्त्रैर्व्यवहितस्योपवीतस्य न सामिधेन्यङ्गत्वमिति सूचितं भवति । अथ प्रकरणस्येतिकर्त्तव्यताकाङ्क्षात्मकत्वादितिकर्त्तव्यताभूतप्रयाजादिभावनाया इतिकर्त्तव्यतान्तरसापेक्षत्वे व्यवस्थितेतिकर्त्तव्यतालाभासम्भवेनानन्ततः क्वचिदितिकर्त्तव्यताशास्त्रे साकाङ्क्षतया ऽप्रामाण्यं स्यादिति वदन्तं प्रत्याह नचेत्था-

स्तथा व्यापारो न श्रूयते, नाप्यतिदेशेन तत्प्राप्तिः। यागीयानां धर्माणां तावन्नातिदेशो, यागत्वेन होमत्वेन वैलक्षण्यात्। नापि होमीयानाम्, कस्य होमस्य धर्माः कस्मिन् होमे प्रवर्तेत इति विशेषनिर्णये प्रमाणाभावात्। अतो धर्मप्राप्त्यभावाद्दर्विहोमैरिष्टं भावयेत्कथमित्युत्पन्नाऽप्याकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति। एवं येष्वङ्गेषु सन्दंशाद्यभावस्तत्रोत्पन्नाऽप्याकाङ्क्षा तेनैव निवर्तते, न तु सर्वथा तदभावः। तस्माद्युक्तमुक्तम्—'अभिक्रमणं प्रयाजाङ्गम्' इति।

तच्चेदमवान्तरप्रकरणं महाप्रकरणाद् बलीयः, सन्दंशपतितानां धर्माणां कैमर्थ्याकाङ्क्षायां प्रधानापूर्वात्प्रयाजाद्यपूर्वस्य झटित्युपस्थितेरिति।

प्रकृतमनुसरामः। तत्सिद्धमुभयविधस्य प्रकरणस्य विनियोजकत्वम्।

तदिदं स्थानादिप्रमाणाद् बलवत्। यत्र हि स्थानादङ्गत्वं तत्रान्यतरस्य प्रकारान्तरेण निराकाङ्क्षत्वम्। न च साकाङ्क्षं निराकाङ्क्षेण सम्बन्धुं योग्यं विनाकाङ्क्षोत्थापनेन। अतश्चान्यतराकाङ्क्षया यावदुभयाकाङ्क्षारूपप्रकरणकल्पनद्वारा वाक्यादिकं क-

---

दिना। विशेषेति। अग्निहोत्रत्र्यम्बकनारिष्ठानां धर्मदत्त्वाविशेषत्वादिति भावः। तेनैव, स्वरूपनिष्पादनेनैव। तदभावः,

ल्पयितुमारभ्यते, झटिति तावत्प्रकरणेन वाक्यादिकं कल्पयित्वा विनियोगः क्रियत इति स्थानात्प्रकरणस्य बलीयस्त्वम् ।

अत एव विदेवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता अपि नाभिषेचनीयस्याङ्गम् । तेषां तदङ्गत्वं च स्थानाद्भवेत्, न तु प्रकरणाद्, अभिषेचनीयस्याव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकारत्वात् प्राकृतैरेव धर्मैर्निराकाङ्क्षत्वात्, किन्तु प्रकरणाद्राजसूयाङ्गम् ।

ननु 'राजसूयेन स्वाराज्यकामो यजेत'' इत्यत्र राजसूयशब्दस्तावन्नामधेयत्वादाख्यातपरतन्त्रो यत्राख्यातं तत्रैव प्रवर्त्तते । न च ''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'' इत्यत्र यथा दर्शपूर्णमासपदं नामधेयमपि नाख्यातपरतन्त्रम् । तत्र हि यजेतेत्याख्यातमविशेषात्सर्वानेव प्राकृतानाग्नेयादीन् प्रयाजादींश्चाभिधातुं समर्थम्, दर्शपूर्णमासपदं त्वाग्नेयादीनेव वदति न सर्वान् । अतश्च न तदाख्यातपरतन्त्रम् । तथा राजसूयपदमपि किं न स्यादिति वाच्यम् । प्रसिद्धेन हि पदेनाप्रसिद्धं निर्णीयते । यथाहुः—

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते ॥ इति ।

दर्शपूर्णमासपदं च कालनिमित्तम् । तद्योगश्चाग्नेयादिषूत्पत्तिवाक्यैरवगतः । अतस्तद्वाचित्वेन दर्शपूर्णमासपदं प्रसिद्धम् । नच आग्नेयादीनां बहुत्वाद् द्विवचनान्तत्वमस्यानुपपन्नमिति वाच्यम् । विद्वद्वाक्यद्वयसिद्धसमुदायद्वयाभिप्रायेण तदुपपत्तेः ।

एवं च दर्शपूर्णमासपदस्याग्नेयादिवाचित्वे निर्णीते यजेतेत्याख्यातमपि तानेव वदति । नहि तदुक्तौ स्वार्थत्यागो भवति । राजसूयपदं त्वनिर्णीतार्थम्, अतस्तदाख्यातपरतन्त्रमेव । तच्चाविशेषात्सर्वेषु इष्टिपशुसोमेषु विद्यते । तत्परतन्त्रत्वाद्राजसूयपदमपि तानेव वदति । न च राजसूयशब्दस्य 'राज्ञा सूयते यत्र' इति व्युत्पत्त्या सोमाभिषवनिमित्तत्वात्तस्य च "सोममभिषुणोति" इति वाक्येन सोमयागेऽवगतत्वात्तद्वाचित्वमेव, नेष्टिपशुवाचित्वमिति वा-

---

आकाङ्क्षाभावः । विद्वदिति । निरूपितमेतदधस्तादस्माभिः । राजसूयपदस्यापि योगेन सोमयागमात्रविषयत्वान्नाख्यातपारतन्त्र्येण सर्वयागवाचित्वमत आह नचेति । क्रियात्मन्यभिषवे यागनिरूपिताधेयत्वस्य मुख्यस्यासम्भवात् तत्प्रयोगमध्ये ऽनुष्ठीयमानत्वेन तदाधेयत्वं वाच्यम्, यश्च सोमयागमध्ये ऽनुष्ठीयते क्रियते एवासाविष्टिपशुसोमयागप्रयोगमध्ये ऽपीति योगसाधारण्यसम्भवेन केषांचित्प्राधान्यत्याग उचित इति सम्भवन्तमपि परिहारं स्पष्टत्वादुपेक्ष्य प्रौढ्या परिहारान्तरमाह

च्यम् । न ह्यभिषेचनीयादिसोमयागेष्वभिषवः प्रत्यक्षेण वाक्येन चोदितोऽस्ति, तद्वाक्यस्य ज्योतिष्टोमे ऽसत्त्वात् । अतिदेशात्तत्सम्बन्धोऽवगत इति चेन्न । अतिदेशस्य फलसम्बन्धोत्तरकालीनत्वेन "राजसूयेन स्वाराज्यकामो यजेत"इत्येतद्वाक्यार्थावगत्युत्तरकालीनत्वात् । अनेनहि वाक्येन फलसम्बन्धे बोधिते पश्चात्कथम्भावाकाङ्क्षायामतिदेशकल्पनात् । अतस्ततः प्रागेव एतद्वाक्यार्थो वर्णनीयः । तदा चाभिषवस्यानवगतत्वाद् राजसूयपदमप्रसिद्धार्थमेव । अत एव 'राजसूयपदमव्युत्पन्नमश्वकर्णशब्दवद्' इत्युक्तं साम्प्रदायिकैः ।

एवं चाप्रसिद्धार्थत्वेनाख्यातपरतन्त्रत्वाद्राजसूयपदेनेष्टिपशुसोमयागा उच्यन्ते । ते च तैस्तैः प्राकृतैर्धर्मैर्निराकाङ्क्षा इति न प्रकरणं विदेवनादीनां राजसूये विनियोजकम्, उभयाकाङ्क्षाया अभावात् । न च प्रातिस्विकरूपैर्नैराकाङ्क्ष्येऽपि न रा-

---

नर्हाति । प्रातिस्विकातिदेशैस्तत्तत्प्रधानापूर्वकथंभावोपशमेऽपि फलापूर्वापरपर्यायराजसूयापूर्वकथंभावानुपशमात्सम्भवति तदात्मना प्रकरणेन विदेवनादिग्रह इति वदन्तं भवदेवं प्रत्याह नचेति । भावना हीतिकर्त्तव्यतामपेक्षते नापूर्वम्, न च तत्तद्यागभावनाभ्यो राजसूयभावना ऽन्याऽस्ति, यत आकाङ्क्षाभेदः स्यात् । उत्पत्तिविध्यवगतानामेव भावनानां प्रधानविधिना फलसम्बन्धबोध-

जसूयत्वेन रूपेण नैराकाङ्क्ष्यमिति वाच्यम् । आकाङ्क्षाद्वयं प्रमाणाभावात् । किं च प्रातिस्विकरूपैर्या कथम्भावाकाङ्क्षा साऽपि फलसम्बन्धोत्तरकालम् । सच राजसूयत्वेन न तु प्रातिस्विकरूपेण । राजसूयत्वेन च फलसम्बन्धे उत्पन्नायाः कथंभावाकाङ्क्षाया विदेवनादिभिः शान्तेरतिदेशकल्पनमेव न स्यात् । यदि हि सामान्यरूपेण प्रातिस्विकरूपेण च फलसम्बन्धविधायि वाक्यद्वयं भवेत्तदा युज्येतापि आकाङ्क्षाद्वयानुसारेण विदेवनादीनामातिदेशिकानां चाङ्गानां सम्बन्धः । न तु तद-

---

नादित्याशयः । नन्वेकस्या अपि उपनयनभावनाया इतिकर्त्तव्यतात्वेन तत्तद्गृह्यसूत्रोक्तधर्माणां तत्तच्छाखाध्ययनाङ्गभूतोपनयनव्यक्तिषु व्यवस्थेति न्यायसुधायामभ्यधायि, ततश्चैकाऽपि भावना स्वकरणतावच्छेदकतत्तद्गृह्यसूत्रोक्तत्वरूपभेदेनानेककथंभावाकाङ्क्षा भवतीत्यभ्युपेयम्, अन्यथा व्यवस्थया ऽनेकेतिकर्त्तव्यतास्वीकारानुपपत्तेः, तद्वत्प्रकृते ऽपि तत्तद्यागत्वराजसूयत्वाख्यकरणतावच्छेदकरूपभेदेनाकाङ्क्षाभेदः स्यादत आह किञ्चेति । प्रातिस्विकरूपैः प्रसेकसमाप्ता । कालमित्यनन्तरं वाच्येति शेषः । च एवार्थे । सैव राजसूयत्वावच्छिन्ना फलत्वावये प्रतीयते नतु प्रातिस्विकरूपावच्छिन्ना, न त्वेतावता प्रातिस्विकरूपावच्छिन्नाकाङ्क्षातो राजसूयत्वावच्छिन्ना ऽन्याऽस्तीत्यर्थः । दृष्टान्ताद्वैषम्यं द्योतयन्व्यतिरेकमुखेनोक्तमर्थमुपपादयति यदिहीति । एकाऽपि ह्युपनयनभावना तत्तद्गृह्यविधिभिर्विधीयमाना तत्तच्छाखाध्ययनरूपाणि विभिन्नभाव्यानि

स्ति । तस्मात् प्राकृतैर्धर्मैर्नैराकाङ्क्ष्यान्न विदेवनादीनां प्रकरणं विनियोजकम्" इति चेत्—

सत्यम् । अत एव साम्प्रदायिकैर्विदेवनादीनां सन्दंशो दर्शितः । राजसूयत्वपुरस्कारेण ये धर्मा विधीयन्ते "राजसूयाय ह्येत उत्पुनाति"इत्येवमादयस्तन्मध्ये विदेवनादयः पठ्यन्ते । अतस्ते सर्वे राजसूयाङ्गं प्रयाजानुवादेन विधीयमानधर्ममध्ये पठितप्रयाजाङ्गाभिक्रमणवत् । तस्माद्युक्तमुक्तं विदे-

---

स्वीकृत्य विभिन्नभाव्यनिरूपिता विभिन्नाः करणता उपनयनगत आक्षिपन्ती विभिन्नकरणतानिर्वाहाय च विभिन्नकथंभावाकाङ्क्षाभिर्युज्यत इत्युक्तम् । नचैवं प्रकृते सामान्यविशेषरूपावच्छिन्नकरणताभेदसाधकस्तन्निरूपकफलभेदोऽवगम्यते, साम्नाय्यापूर्वभेदः शास्त्रावगतफलकरणतानिर्वाहकव्यापारकोटिनिक्षिप्तः परस्परसापेक्षाश्रयश्च न करणताभेदं कल्पयितुमलम् । अतश्च या एवोत्पत्तिवेलायां प्रत्येकगामिन्यः करणतास्ता एव संगृह्योच्यन्ते राजसूयेनेति, या एव तत्प्रयुक्ता विभिन्नाकाङ्क्षास्ता एव फलसम्बन्धोत्तरं सकृदुल्लिख्यन्ते कथमिति । उक्तं चाहर्गणे क्वचिदहन्युद्रावपच्छेदेनाहर्गणावृत्तिरिति सिद्धान्तसिद्ध्यै षष्ठे 'ईदृशे विषये साधनानां फले समुच्चयो न समुच्चितानां साधनत्वम्'इति । उक्तं चापूर्वाप्रयुक्तान्यपि सन्निपातितदितराण्यङ्गान्येकैनैव कथंभावेन गृह्यन्त इति। अतो न राजसूयत्वेनाकाङ्क्षान्तरमवलम्ब्य विदेवनादिविनियोजकप्रकरणसमर्थनं सम्भवतीत्याशयः । विनियोजकप्रकरणोन्नायक इति सन्दंश इत्यस्यादिः । निवृत्ततया ऽवगतोऽपि हि राजसूयकथंभावः पूर्वोत्तरवाचनिकाङ्गैरेवोन्नीयते । प्रकरण-

तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः ।
पाठानुष्ठानसादेश्याद्विनियोगस्य कारणम् ॥ इति ।

स्थानं क्रमश्चेत्यनर्थान्तरम् । पाठसादेश्यमपि द्विविधम् । यथासङ्ख्यपाठः सन्निधिपाठश्चेति । तत्र "ऐन्द्राग्नमेकादशकपालं निर्वपेत्" "वैश्वानरं द्वादशकपालं निर्वपेद्"इत्येवं क्रमविहितेष्टिषु "इन्द्राग्नी रोचनादिवः''इत्यादीनां याज्यानुवाक्यामन्त्राणां यवनादीनां प्रकरणाद्राजसूयाङ्गत्वमिति । तत्सिद्धं प्रकरणस्य स्थानाद्बलीयस्त्वम् इति ।

देशसामान्यं स्थानम् । तच्च द्विविधम्—पाठसादेश्यमनुष्ठानसादेश्यं चेति । यथाहुः—

---

समाख्याविरोधे तु पौरोडाशिकसमाख्यातब्राह्मणाम्नातानां प्रयाजादीनां समाख्याप्राप्तमपि केवलौषधयागाङ्गत्वं दूरीकृत्य प्रकरणेन सान्नाय्योपांशुयाजार्थत्वसिद्धिः । देशेति । प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्वमिति यावत् । तेन सामान्यशब्देन प्राथम्यादिसादृश्यविवक्षायामभिन्नदेशत्वासङ्ग्रहः, अभेदविवक्षायां सदृशदेशत्वासङ्ग्रह इति परास्तम् । वृत्तित्वं च पठितत्वानुष्ठेयत्वान्यतररूपेण विविवक्षणीयमित्याशयेनाह तच्चेति । तत्रेति पञ्चम्यन्तस्य द्विधैवेत्यनेनान्वयः । नात्र विधेये लक्षणद्वैविध्ये प्रति पञ्चमप्रमेयमुद्देश्यमिति द्योतयितुं क्रमं विशिनष्टि विनियोगस्यकारणमिति । आचार्यैः क्रमलक्षणत्वेनोक्तस्य कथं भवता स्थानलक्षणत्वं बोध्यते इत्यत आह स्थानमिति । नच याज्यानुवाक्यासमाख्यासहितलिङ्गादेवास्य विनियोगस्य सिद्धेः क्रमस्याकि-

थासङ्ख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः स यथासङ्ख्यपाठात् । प्रथमपठितमन्त्रस्य हि कैमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वात् । यानि तु वैकृतान्यङ्गानि प्राकृताङ्गाननुवादेन विहितानि सन्दंशापतितानि तेषां विकृत्यर्थत्वं सन्निधिपाठात् । तेषां हि कैमर्थ्याकाङ्क्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन सम्बध्यते उपस्थितत्वात् । अत एव न तेषु विश्वजिन्न्यायावतारः । स्वतन्त्रफलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च । पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽह्नि अग्निषोमीयः

---

ञ्चित्करत्वम् । स्वप्रकाश्यदेवतायोगिन्यक्रमपठिते यागान्तरेऽपि मन्त्राणां क्रमं विना ताभ्यामङ्गत्वप्रसङ्गात्समाख्यातः पूर्वप्रवृत्तक्रमवशेन तु निर्ज्ञातसामान्यसम्बन्धोपजीवने भवति लिङ्गादुक्तविनियोगसिद्धिः । नचैवं याज्येतिसमाख्याया अकिञ्चित्करत्वम् । आग्नेयक्रमे पठितस्याग्नेयमन्त्रद्वयस्य लिङ्गादुक्तविधात्सामिधेनीत्वे प्रधानयाज्यात्वे च तया याज्यात्वनियमनाद् अन्यदेवत्ययागक्रमे पठितानामाग्नेयमन्त्राणां तु समाख्याबाधेन लिङ्गक्रमाभ्यां सामिधेनीकार्य एव विनियोग इति बोध्यम् । प्राकृतेति । तत्कार्ये न विहितानीत्यर्थः । न्यायसुधाकृन्मते तु यथाश्रुतमेव साधु । सन्दंशेति । प्राकृताङ्गसम्बन्धयङ्गविध्योस्तादृशाङ्गप्रधानविध्योर्येनापतितमित्यर्थः । ननु "आग्नेयमजमग्निष्टोम आलभेतेत्यौपवसथ्येऽहनि सवनीयोत्पत्तेः पाठसादेश्यात्तदङ्गभूतधर्माः किमिति न स्युः

पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यन्ते। अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितं पशुपूर्वमेव भाव्यत्वेन सम्बध्यते। अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषाम्। न च पाठसादेश्यादेव तत् किं न स्यादिति वाच्यम्। अग्नीषोमीयस्य पशोः क्रयसन्निधौ पाठात्। न च क्रयसन्निधौ तस्य पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यम्। "स एष द्विदेवत्यः पशुरौपवसथ्येऽहनि आलब्धव्य" इति वचनात्तदनुपपत्तेः। न च स्थानात्प्रकरणस्य बलीयस्त्वेन पशुधर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यम्। तस्य सोमयागत्वेन पशुधर्मग्रहणेऽयोग्यत्वात्। अत "आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्" इति न्यायात् स्थानात्पशुयागार्थत्वमेव धर्माणां युक्तम्। न च तेषां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम्। अग्नी-

---

अत आह नचेति। तत्पशुत्वपूर्वार्थत्वं श्रुत्यापठितेनानुपादेयत्विधेयभूतफलसम्बन्धेन "आश्विनं ग्रहं गृहीत्वा" इति वचनेनोत्पन्नसवनीययागमनूद्यानेन वचनेन "वपया प्रातः सवने चरन्ति" इत्याद्येकवाक्यतापन्नेनोपादेयप्रचारत्रिप्रकर्षाख्यगुणविधानान्नात्रोपात्तिः सवनीयस्येत्याशयः। अग्नीषोमीयं प्रत्येव तर्हि पाठसादेश्यादङ्गत्वं स्यात्तत्राह अग्नीषोमीयस्येति। यदि सोमयागः प्रकरणेन पशुधर्मान् ग्रहीतुं न शक्नोति, तर्ह्यानर्थक्यतदङ्गन्यायेन तदीयसकलपशुयागाङ्गत्वं तेषां स्यादित्याशङ्क्याह अत इति। स्थानाख्यमानानु-

षोमीयकथंभावाकाङ्क्षायाः क्लृप्तोपकारैः प्राकृतधर्मैरेवोपशान्तत्वात् । स हि सान्नाय्ययागप्रकृतिकः, उभयोः पशुप्रभवद्रव्यत्वसामान्यात् । तदुक्तं "सान्नाय्यं वा तत्प्रभवत्वाद्" इति (पू०मी०अ० ८ पा० २ सू० १३)। सान्नाय्यं दधिपयसी । तत्र पशुयागः पयोयागप्रकृतिकः साक्षात्पशुप्रभवत्वात् । अतश्चोदकप्राप्तैस्तद्धर्मैर्निराकाङ्क्षत्वात् न पशुयागे धर्माणां प्रकरणं विनियोजकं किं तु स्थानमेव । तदेवं निरूपितः संक्षेपतः स्थानविनियोगः ।

तच्च समाख्यातः प्रबलम् । स्थानविनियोगे हि पदार्थयोर्देशसामान्यलक्षणः सम्बन्धः प्रत्यक्षः । सामाख्याविनियोगे तु सम्बन्धो न प्रत्यक्षः । पदार्थयोर्भिन्नदेशत्वात् । न च सा सम्बन्धवाचिका । यौगिकानां शब्दानां द्रव्यवाचकत्वेन सम्बन्धावाचकत्वात् ।

तथा हि समाख्या सम्बन्धसामान्यवाचिका स्यात्, तद्विशेषवाचिका वा ? । नाद्यः । तदुक्तौ प्रयो-

---

रोधेन न्यायबाध एवोचित इत्याशयः । उभयोः, प्रकृतिविकृतियागहविषोः । किमेकस्मिन्कर्मणि दधिपयसोर्विध्यन्तद्वयातिदेशं ब्रवीषि नेत्याह तत्रेति । द्रव्यवाचकत्वेनेति । विशेष्यत्वाभिमतमत्र द्रव्यशब्दार्थः । एवमुदाहरिष्यमाणवार्त्तिकेऽपि स्वतो व्यवहारायोग्यमपि सामान्यं विशेषाक्षेपेण तद्योग्यत्वात् प्रयोजनवद्भवे-

जनाभावात् । सर्वयौगिकशब्दानां पर्यायितापत्तेश्च । द्वितीये ऽवश्यं सम्बन्धिनौ वाच्यौ । तदन्तरेण सम्बन्धे विशेषाभावात्, तत्प्रतिपत्तिमन्तरेण तदप्रतिपत्तेश्च । अतश्चावश्यं सम्बन्धिवाचकत्वं समाख्याया वक्तव्यम् । तथाच न सम्बन्धवाचकत्वं सम्बन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन तत्प्रतिपत्तिसम्भवे तत्र शक्तिकल्पने गौरवात् । यथाहुः—

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
नहि संबन्धवाचित्वं संभवत्यतिगौरवात् ॥ (तन्त्रवार्तिके ६८८)

तथा—

---

तत्राह सर्वेति । गोमान् गोत्वं गव्यमित्यादीनामित्यर्थः । तदन्तरेण, सम्बन्ध्यभिधानमन्तरेण । विशेषाभावात्, अप्रतीतेः । गोमानित्यत्रैव हि मतुपा पुरुषाभिधाने भवति स्वामित्वधीः, देशाभिधाने त्वधिकरणत्वधीः, उभयानभिधाने तु न को ऽपि सम्बन्धविशेषः प्रतीयते इत्याशयः । नन्वौपगवाग्नेयगव्यगोत्वादिशब्दानां तावत्प्रतीत्यनुशासनवशेन प्रकृत्यर्थनिरूपितापत्यत्वदेवतात्वविकारत्ववृत्तित्वाख्यविशेषवाचित्वमसत्यपि सम्बन्धान्तराभिधाने शक्यत एव वक्तुम्, गोमानित्यत्रापि विशेषतात्पर्यग्राहकत्वेन पराभिमतं यच्चैत्रादिपदं तत्सहकृतेन मतुपा शक्येत एव सम्बन्धविशेषाभिधानमत आह तदिति । यथैव स्नुषादिशब्दे भार्यान्वयप्रतिपत्तिमनपेक्ष्य पुत्राद्यप्रतीतेः न तन्मात्रवाचित्वम्, तथा यौगिकशब्देभ्यो ऽपि सम्बन्धिप्रतिपत्तिमनपेक्ष्य सम्बन्धाप्रति-

पाकं तु पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः ।
पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्य चिद् ॥ इति ।

तथा च समाख्या न सम्बन्धवाचिका ।

होतृचमस इत्यादिका तु वैदिकी समाख्या निषादस्थपतिशब्दवन्न षष्ठ्यर्थसम्बन्धवाचिका, नापि वाक्यवत्तद्बोधिका, तस्याः पदत्वेनाप्रमाणत्वात् । पौरोडाशिकामित्यादिसमाख्यास्त्वतिदुर्बलाः । लौकिकत्वेन पुरुषप्रत्ययसापेक्षत्वात् । काण्डगोचरत्वेन तत्तत्पदार्थागोचरत्वाच्च । काण्डवाचकत्वमपि न काण्डत्वेन, किं तु पौरोडाशिकत्वादिनैव । न ह्येकहायनीशब्दो द्रव्यवाचकोऽपि गोत्वेन तद् वदति, किं तर्हि एकहायनीत्वेनैव । स्थानविनियोगे तु पदार्थयोर्विशेषपुरस्कारेणैव सम्बन्धः प्रत्यक्षप्रमाणप्रतिपन्नः । अतश्च समाख्यामुपलभ्य नूनमनयोः पदा-

पत्तेर्न सम्बन्धवाचित्वमित्याशयः, तर्हि तद्वदेव विशिष्टवाचित्वं नेत्याह अत इत्यादिना । एवं सर्वसमाख्यासु दौर्बल्यहेतुमभिधाय लौकिकसमाख्याया अतिदौर्बल्यं दर्शयितुं वैदिकसमाख्यादौर्बल्यं स्पष्टयति—होत्रित्यादिना । तुशब्दो वक्ष्यमाणसमाख्यावैलक्षण्यार्थः । नहीति । परमतमालम्ब्येदम् । वैश्वदेवीपदवत्तद्धितबहुव्रीह्यादेर्विशेषवाचित्वे तु पदान्तरसापेक्षार्थबोधकत्वेन दौर्बल्यं समाख्यायां बोध्यम् । अस्ति श्रुत्यादिषु सजातीयेष्वपि बलाबलं यथाऽऽज्यावेक्षणादिषु सामान्यसमाख्याप्राप्तमध्वर्युकर्तृकत्वं विशेषसमाख्याप्राप्तेन यजमानकर्तृकत्वेन बाध्यते, अस्ति चा-

र्थयोः सम्बन्धोऽस्तीति यावत् कल्प्यते, तावत् प्रत्यक्ष-प्रतिपन्नेन सम्बन्धेन परस्परमाकाङ्क्षा, तदभावे च सम्बन्धानुपपत्तेः । कल्पितसम्बन्धेन च यावद् इतरत्राकाङ्क्षादिकल्पना तावद् अन्यत्राकाङ्क्षया वाक्यादिकल्पनया विनियोगः क्रियते इति सिद्धं स्थानस्य सामाख्यातः प्राबल्यम् । अत एव शुन्धनमन्त्रः सान्नाय्यपात्राङ्गं पाठसादेश्यान्न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गमिति ।

समाख्या यौगिकः शब्दः । सा च द्विविधा वैदिकी लौकिकी च । तत्र होतुश्चमसभक्षणाङ्गत्वं 'होतृचमस' इति वैदिक्या समाख्यया । अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या 'आध्वर्यवम्' इति समाख्ययेति सङ्क्षेपः ॥

तदेवं निरूपतानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि ।

एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य "दशपूर्णमासाभ्यां यजेत" इत्येवंरूपेण या-

---

नर्थक्यप्रतिहतत्वे विपरीतमपि बलाबलं यद्वशेन मूले पशुधर्माणामग्नीषोमीयार्थत्वमुक्तम् । द्विविधबलाबलाश्रितोऽपि च प्राप्तबाधः शक्यः प्रतिप्रमाणं वक्तुम् । सन्ति चान्येऽपि प्राप्तबाधाः यथा नित्यं पाञ्चदश्यं साप्तदश्येन वैश्यत्वनिमित्तकेन, नित्यश्चमसः काम्यगोदोहनेन, पूर्वनैमित्तिकमुत्तरनैमित्तिकेनेत्यादयः । विस्तरभयादाकरप्रसिद्धत्वाच्च परं नैतन्निरूपणमत्र तन्यत इत्याह इति संक्षेप इति । एवंरूपेणेति । नचाङ्गं सत् प्रयो-

नि विनियुज्यन्ते तान्यङ्गानि ।

तानि द्विविधानि—सिद्धरूपाणि क्रियारूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसङ्ख्यादीनि । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि—गुणकर्माणि प्रधानकर्माणि चेति । एतान्येव सन्निपत्योपकारकाण्याराదुपकारकाणीति चोच्यन्ते ।

तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम् । यथावघातप्रोक्षणादि ।

---

गविधिर्गृह्णातीतिभातिस्त्रिकाविधीनामेव विनियोजकत्वं युक्तं न तदेकवाक्यतापन्नप्रधानविधेरिति वाच्यम् । तादृशवाक्यादङ्गत्वेनावधारितं प्रयोगविधिरनुष्ठापयतीति तदभिप्रायात्, अन्यथा वाक्यादिकल्पनया प्रकरणविनियोजकत्वस्योच्छेदप्रसङ्गात् । तान्यङ्गानीति । क्रत्वङ्गानीत्यर्थः । सङ्ख्यादीनीत्यादिना लिङ्गसाहित्यक्रमसंग्रहः । यद्यपि साहित्यक्रमयोर्न कारकत्वं क्रियायां द्रव्यादिवत्, तथाऽपि कारकीभूतपदार्थावच्छेदकतया ऽस्त्येवाङ्गत्वं तार्तीयमानबोध्यम्, पाञ्चमिकमानानि तु क्रमोपस्थितावुपयुज्यन्ते न विनियोगे इति बोध्यम् । तानि चेति । क्रत्वङ्गभूतानि जात्यादीनीत्यर्थः । तेन खादिरत्वगोदोहनपञ्चदशत्वप्रभृतेरदृष्टार्थत्वेऽपि न दोषः । एतान्येवेति । उक्तद्वैविध्यापन्नानि क्रत्वङ्गानीति यावत् । तेन गुणकर्मणोऽप्याधानस्य प्रधानकर्मणोऽपि दर्शादेर्वक्ष्यमाणद्वैविध्यव्यवहाराभावेन न क्षतिः । कर्माङ्गेति । द्रव्यादिगतं कर्मापूर्वसाधनत्वं यत्रोद्देश्यतावच्छेदकमित्यर्थः । तेन वपनादिवत् ज्योतिष्टोमादेः पुरुषोद्देशेन सत्यपि विधाने निराससिद्धिः । प्रतीपत्तीत्युपलक्षणं सूक्तवाकादिकृतदेवताप्रकाशनादेः ।

तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं च । दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशयागादि । तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति । इदमेव चाश्रयिकर्म इत्युच्यते ।

तच्च सान्निपत्योपकारकं द्विविधम्—उपयोक्ष्यमाणार्थमुपयुक्तार्थं चेति । तत्रावघातप्रोक्षणादि उपयोक्ष्यमाणार्थं, व्रीहीणां यागे उपयोक्ष्यमाणत्वात् । प्रतिपत्तिकर्म इडाभक्षणाद्युपयुक्तपुरोडाशसंस्कारकम् । उपयुक्तस्याकीर्णतानिवर्तकं कर्म प्रतिपत्तिकर्म । उपयुक्तसंस्कारार्थं च उपयोक्ष्यमाणसंस्कारार्थाद् दुर्बलम् । उपयुक्तापेक्षया उपयोक्ष्यमाणेऽत्यादरात् । अत एव "प्रायणीयनिष्कासे उदयनीयमनुनिर्वपति" इत्यत्र निष्कासस्य निर्वापार्थत्वं, न तु तस्य तदर्थत्वं, निष्कासस्योपयुक्तत्वात् इत्युक्तमेकादशे ।

तच्च सन्निपत्योपकारकम् आरादुपकारकाद् बलीयः ।

नन्ववघातादि भवतु बलीयः, तस्य दृष्टार्थत्वात्, आरादुपकारकस्य चादृष्टार्थत्वात् दृष्टे

---

उपयुक्तेति । अर्थान्तरपदद्वयं भावप्रधानम् । कर्मेति प्रथमान्तं च षष्ठ्यन्तत्वेन बोध्यम् । तच्चेति । कारकान्तपदद्वयमपि भावप्रधानम् । अवघातादीनि । तद्गतसन्निपत्योपकारकत्वमित्यर्थः । तस्य—अ-

सम्भवत्यदृष्टस्यान्याय्यत्वात् प्रोक्षणादि सन्निपत्योपकारकं तु कथं बलीयः, उभयोरदृष्टार्थत्वाविशेषात् । किं च आराद‍ुपकारकं साक्षात्प्रधानाङ्गं तस्यान्योद्देशेनाविधानात्, सन्निपत्योपकारकं तु अङ्गाङ्गम् कर्माङ्गव्रीह्याद्युद्देशेन विधानात् । अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः । 'अङ्गगुणविरोधे तादर्थ्याद्'' इति न्यायात् । अत एव ''य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत'' इति अविशेषविधानेऽपि पर्वानुग्रहः सोमयागस्यैव क्रियते न तु दीक्षणीयादेः । अतः कथं सन्निपत्योपकारकस्य बलीयस्त्वम् ? ।

उच्यते । सत्यप्यदृष्टार्थत्वाविशेषे सन्निपत्योपकारकमाराद‍ुपकारकाद् बलीयः । सन्निपत्योपकारके हि कर्मणि उपकार्य्योपकारकयोर्व्रीहिप्रोक्षणयोः सम्बन्धो वा-

---

वघातस्य । सन्निपत्योपकारकस्य सत इति शेषः । प्रोक्षणेति । प्रोक्षणादेः सन्निपत्योपकारकत्वमित्यर्थः । उभयोः, पक्षयोः । नचादृष्टार्थत्वे तुल्ये ऽपि द्वितीयावशेन सन्निपत्योपकारकत्वासिद्धिः । तस्या ''बलवजान्शिखण्डान् कुरु'' इत्यादिप्रयोगवशेन साधनवाचित्वात् । असत्यपि तस्मिन् ईप्सितानीप्सितसाधारणत्वेन स्वप्रकृत्यर्थप्राधान्यनियामकत्वात् । सन्निपत्योपकारकत्वे ऽवश्यंभाविप्रकृतिगतापूर्वसाधनलक्षणातो ऽसंजातविरोधन्यायेन श्रेयसीं विभक्तिगतसाधनलक्षणां स्वीकृत्याराद‍ुपकारकत्वस्य वक्तुमौचित्याच्च । य इष्ट्येति । पूर्वदलेन विपरिवर्त्तमानयागान् उत्तरदलस्थय-

कयक्लृप्तः। उपकारमात्रं तु कल्प्यम्। आराढुपकारकस्थले तु दर्शपूर्णमासयोः प्रयाजानुयाजयोः सम्बन्धः कल्प्य उपकारोऽपि।

किं च आराढुपकारकस्थले हि प्रकरणं विनियोजकम्, इतरत्र तु "व्रीहीन् प्रोक्षति" इति वाक्यमेव व्रीहिपदेनापूर्वसाधनलक्षणां कृत्वा क्रतौ विनियोजकमिति बलीयस्त्वम्।

यदुक्तम्—"अङ्गगुणविरोधे तादर्थ्याद्" इति न्यायेन दुर्बलत्वमिति। तदसत्। न हि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति, तत्स्वरूपे आनर्थक्यात्, किं तु तत्संस्कारद्वारा क्रत्वर्थमेव। सन्निप-

---

जिना ऽनूद्य समुच्चिताग्निप्रजापतिवत् विकल्पितसमयद्वयं तल्लक्षितपर्वसामान्यं चात्र विधीयते। नचैष्ट्विकातिदेशेनैव तल्लाभाद्विधिवैयर्थ्यम्। आग्नेयविकृतौ विकल्पस्य, दर्शपूर्णमासविकृत्योः क्रमेण पूर्णमास्यमावास्ययोः, सर्वविकृतिषु सद्यस्कालतायाश्चैतद्विधिमन्तरेणालभात्। क्लृप्त इति। उपकार्योपकारकभावनियामको धात्वर्थतावच्छेदकीभूतफलाश्रयत्वादिः सम्बन्धो द्वितीयाव्रीह्यादिसमभिव्याहारादुपस्थित इत्यर्थः। कल्प्य इति। तयोर्हि तादृशसम्बन्ध ऐकाधिकरण्यादिः। नच स शब्दादुपस्थित इति भावः। वाक्यमेवेति। विनाऽपि द्वितीयया स्थाण्वाहुतिवद् प्रोक्षणस्य संस्कारत्वसिद्धेः प्रकृतोदाहरणे तस्या अकिंचित्करत्वमभिप्रेत्येदम्। तदर्थमित्यनन्तरमेवेति शेषः। क्रत्वर्थमित्यनन्तरमपि भवतीति। एवमग्रे ऽपि। बलवता ऽपि हि प्रधानाङ्गत्वेन विरोध्यङ्गाङ्गत्वं बा-

त्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य च वक्ष्यमाणत्वात् । अत उभयविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः । दीक्षणीयादेः पर्वानुग्रहस्तु दीक्षणीयाद्यर्थ एव, तस्य तदपूर्वप्रयुक्तत्वात् । अतो युक्तं साक्षात्प्रधानाङ्गेन प्रधानपर्वानुग्रहेण स बाध्यत इति ।

तत्सिद्धं सन्निपत्योपकारकस्याराद्रुपकारकाद् बलीयस्त्वम् ।

अत एव स्थाणौ "स्थाण्वाहुतिं जुहोति" इति विहिता स्थाण्वाहुतिर्यूपव्रश्चनस्थाणुद्वारा यूपसंस्कारार्था, देवदत्तधारितायाः स्रजः शुचिदेशनिधानमिव देवदत्तसंस्कारार्थम् । न तु स्थाण्वाहुतिराराद्रुपकारिकेत्युक्तं दशमे इति दिक् ।

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आराद्रुपकारकम् । यथा प्रयाजादि ।

तदेवं निरूपितं द्विविधमप्यङ्गजातम् ।

तच्च न यागादिस्वरूपप्रयुक्तम्, स्वरूपे आनर्थक्यात्, तदन्तरेणापि तत्सिद्धेः, किं त्वपूर्वप्रयुक्तमेव । न हि तदन्तरेणापूर्वं भवतीत्यत्र किञ्चित्प्रमा-

---

धितुमुचितम्, नाविरोधि । नच द्वारैदमर्थ्यमपूर्वैदमर्थ्येन विरुध्यत इत्याशयः । द्रव्यादीति । स्वनिर्वर्तककारकमित्यर्थः । केवलं

फलासंयुक्तबुद्धीत्यर्थः । सन्निपत्याभिप्रायमेतत् । आरादुपकारिणां तु प्रथमं प्रधानभावनान्वितानां यद्यपि तद्वाक्यान्वयपूर्वक एव करणान्वयः, तथाऽपि न फलार्थत्वम्, क्षणिककर्मणः कालान्तरभाविफलार्थत्वनिर्वाहायापूर्वे कल्पिते ऽपूर्वे पुंव्यापारसाध्यं तदानुषङ्गिकं तु फलजन्मेत्यधिगतवतश्चेतसि तादर्थ्येनैव 'कथम्'इतीतिकर्त्तव्यताकाङ्क्षोत्थानात् अङ्गेष्वपूर्वप्रयुक्तत्वनिरूपणस्य फलमाह—अत एवेति । फलप्रयुक्तत्वस्य व्युदासायैवकारः, नोहहेतोर्न्यायान्तरस्य । अपेक्षते हि मन्त्रोहो न्यायान्तराणि । तथाहि—अतिदेशप्राप्तस्य कार्यनिमित्तोऽन्यथाभाव ऊहः । स चतुर्विधः—संस्कारोहः, सामोहः, प्रयोगोहो, मन्त्रोहश्चेति । तत्राद्यो व्रीह्यादौ दृष्टप्रोक्षणादेर्वैकृतनीवारादावनुष्ठाने, द्वितीयो, अभिवत्यामुत्पन्नरथन्तरादेः कवत्यादावतिदिष्टस्य तदीयसन्ध्यक्षराद्यनुरोधेन प्रदेशान्तरस्थायीभावादिवैशिष्ट्ये, तृतीयो द्वादशाहिकपार्ष्ठिकद्वितीयोहे, विकृतौ द्विरात्रद्वितीये ऽन्हि पत्नीसंयाजान्तत्वत्यागेन कृत्स्नानुष्ठानम् । द्वादशाहे हि अनुत्तमेष्वहःसु भाव्यह्नः साहित्याय कचित्पदार्थे ऽवस्थाने प्राप्ते "पत्नीसंयाजान्तान्यहानि संतिष्ठत" इति पत्नीसंयाजेषु तन्नियम्यते । अनुत्तमप्रकृतिकमपि च द्विरात्रद्वितीयं स्वयमुत्तममिति न पत्नीसंयाजान्तत्वं लभते । चतुर्थस्त्वष्टविधः—प्रकृतिमात्रोहः, यथा "सूर्याय जुष्टम्"इति । यथा वा द्विपशुकगणे "द्विपञ्चाशदनयोर्वङ्क्रयः"इति, यथा वा षट्त्रिंशत्संवत्सरे तरसमयपुरोडाशे पेषणार्थाधिवापमन्त्रस्य "धान्यमसि"इत्यस्य मांसमसीति । यद्यपि प्रकृतौ प्रकृतिवाचिना धान्यशब्देन लक्षणया विकारप्रकाशनमकारि, तथाऽपि विकृतौ "मृगोसि"इति लाक्षणिकप्रयोगो न कार्यः । प्रकृतौ लक्षणाया आर्थिकत्वात् । इह च स्वायत्ते शब्दप्रयोगे तस्या अन्याय्यत्वात् ।

स्यादेतत् । "तरसमयाः सवनीयाः पुरोडाशा"इत्यत्र सवनीयोद्देशेन तरसत्वं विधेयं पुरोडाशपदं तु धानादिषु लिङ्गसमवाये-

नेत्युक्तं तृतीयान्त्ये। असंभवतरसमयत्वे धानादिसाहचर्याच्च न पुरोडाशे तरसप्रकृतिकत्वविधिः, पुरोडाशकार्ये तद्विधिना पुनः पुरोडाशे निवृत्ते चराविव पेषणनिवृत्तौ नाधिवापो नतरां मन्त्र इति चेत्।

अत्राहुः–तरसमयपुरोडाशोपावृत्त्या "सर्वामृद्धिमार्ध्नोद्" इति न्यायसुधाकृच्छान्दोग्यवचसि सवनीयपदाश्रवणात् पुरोडाशमात्रप्रकृतित्वेन मांसं विधीयते। शक्यते चान्नमिश्रणेन तस्य प्रकृतित्वं संपादयितुम्। उक्तं च छन्दोगसूत्रे तरसपुरोडाशं चान्नसंरोधादिति। संभवति च तथा विधौ न पुरोडाशबाधः समुचितः, तदबाधे चोक्तमन्त्रस्य घटत एवोहोक्तिरिति।

अन्येतु मांसे पेषणस्यैवासंभवात् कृत्वाचिन्तयैषोक्तिरित्याहुः।

लिङ्गमात्रोहः। तथाच "सख्यसि रुद्रासि" इति मन्त्रस्य साण्डे क्रयार्थे विहिते "वसुरसि रुद्रोऽसि" इति। वचनमात्रोहः—यथा "छागस्य वपाया मेदस" इत्यस्य प्राजापत्येषु छागानामिति। नचैवं "पत्नीं सन्नह्य" इत्यस्य द्विपत्नीकविकृतिद्विपत्नीकप्रयोगे ऊहः स्यादिति शङ्क्यम्। प्रकृतिद्विपत्नीकप्रयोगे ऽसमवेतार्थकत्वात्। नच "व्रीहीणां मेध" इत्यस्य यवप्रयोग इव द्विपत्नीकप्रयोगे तस्य मन्त्रस्याप्रवृत्तेर्नासमवेतार्थत्वापत्तिः। गुणभूतवचनानुरोधेन प्रधानप्रकृतेः प्रवृत्त्यप्रतिबन्धात्। नचैवम् "अदितिः पाशान्" इत्यस्य द्विपशुकेऽनूहापत्तिः। बहुवचनस्य द्वयोरसाधुत्वात्। प्रकृतिलिङ्गयोरूहः, यथा–"अग्नये जुष्टम्" इत्यस्य 'अदित्यै जुष्टम्' इत्यादि। प्रकृतिवचनयोरूहः, यथा तस्यैव "विश्वेभ्यो देवेभ्यः" इति। लिङ्गवचनयोरूहः, यथा "प्रास्मा अग्निम्" इत्यस्य स्त्रीपशुगणे 'प्राभ्य' इति। क्वचित् त्रयाणामूहः, यथा 'आपो देवीरग्र" इति प्रोक्षण्याभिमन्त्रणमन्त्रस्य घृते प्रोक्षणं भवति इति विधियुक्तवि-

कृतौ 'घृत देव अग्ने' इति । क्वचित्तु सकलपदाभ्यासः, यथा पशुगणे, "एकधा ऽस्य त्वचम्" इति मन्त्रस्यैकधैकधेति । सर्वो ऽप्ययं मन्त्रोहः षड्विधन्यायमपेक्षते । 'मन्त्रा अर्थप्रकाशनार्था नोच्चारणेनादृष्टार्था' इत्येकः, 'मुख्यार्थ एव तेषां विनियोगो न गौणे' इति द्वितीयः, 'अपूर्वसाधनत्वप्रयुक्ता न त्वग्न्यादिस्वरूपप्रयुक्ता' इति तृतीयः, 'प्रकृतौ समवेतार्था नतु सवित्रादिपदवदसमवेतार्थाः' इति चतुर्थः, तथा 'स्वार्थपरा न तु' "ये यज्ञपतिं वर्धान्" इतीडानिगदस्थयजतिपदवत्परार्था" इति पञ्चमः, 'पञ्चविधमानान्यमानेन वैकृतदेवतादेः प्राकृतदेवतादिकार्यापत्तिनिर्णय' इति षष्ठः । तानि चाहुर्वृद्धाः—

प्रत्यक्षविधिना ऽभावे विधाने न विकारता ।
स्वशब्दाच्च निषेधानुवादात्तत्कार्यकारिता ॥ इति ।

तत्र "नैवारश्चरुर्बार्हस्पत्यः" इत्यत्र नीवाराणां व्रीहिकार्यापत्तिः प्रत्यक्षसहिताद्विधेरवगम्यते । दृश्यते हि नीवारेभ्यो हविर्निष्पत्तिः नतु श्रूयते नैवारमिति । तद्धितपदस्य सम्बन्धमात्राभिधायित्वात् । "सत्रायागूर्य विश्वजिता यजेत" इति । अत्र विश्वजितः सत्रकार्यापत्तिरभावे विधानात् । अस्य हि विश्वजितो वाक्यशेषात् "सर्वेभ्यो देवेभ्य आत्मानमागुरते यः सत्रायागुरते" इत्यादेः सत्रे प्रवृत्तस्य केनाचिद्धेतुना तदसम्भवे तत्कार्ये विधानं प्रतीयते । अत एवेहानुमितनिषेधानुमितशब्दात्तत्कार्यापत्तिरिति व्यवहारः । "नखावपूतानां चरुः" इत्यत्र नखानामुलूखलमुसलकार्यापत्तिः विकारलिङ्गकानुमानात् । अवघातकार्यं हि तुषविमोकाख्यं नखावपवनात्पश्यता भवत्यनुमानं नखा उलूखलमुसयोः कार्ये वर्तन्ते इति । "परिधौ पशुं नियुञ्जीत" इत्यत्र परिधेः यूपकार्यापत्तिः प्रत्यक्षात् । प्रत्यक्षकार्यवाचिनो नियुञ्जीतेतिशब्दात् । नच स्वर्गविशिष्टवैधातव्यां दीक्षणायाकार्ये विहितायामपि यथा न दीक्षणीयाधर्मलाभः, तथा परिधौ न यूपधर्मप्राप्तिरिति किं कार्यापत्त्येति वाच्यम् । दृष्टार्थत्वेन वैषम्यात् । "ऐरं कृत्वोद्गेयम्" इत्य-

णमस्ति, तस्यादृष्टत्वात् । न च एवं प्राधान्याददृष्टत्वाच्च फलप्रयुक्तमेव किं न स्यादिति वाच्यम् । फलभावनायां यागस्यैव करणत्वादङ्गानां च करणानुग्राहकत्वात्तदर्थत्वे बुद्धे तत्र चानर्थक्यप्रसक्तौ तेन स्वापूर्वमेवोपस्थाप्यते सन्निकर्षात्, दीक्षणीयादिशब्देनेव तदपूर्वम् । न तु फलमुपस्थाप्यते विप्रकर्षात् । अतो न तत्प्रयुक्तत्वमङ्गानाम् । अत एव "अगन्म सुवः सुवरगन्म" इति मन्त्रो विकृतावूहितव्य इत्युक्तम् नवमे । फलदेवतयोश्चेत्यत्र फलप्रयुक्तत्वे तु सौर्यादिविकृतिषु स्वर्गरूपफलाभावान्मन्त्रो न प्रवर्त्तेत नतरां चोहितव्यः स्यादिति । तात्सिद्धमङ्गानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वम् ।

तत्रापि सन्निपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपोपयोगादुत्पत्त्यपूर्वार्थत्वम् । अ-

---

त्र इरापदस्य गिरापदकार्यापत्तिः "न गिरागिरेति ब्रूयाद्" इतिनिषेधानुवादकल्पिताच्छब्दादिति । यागस्वरूप इति । सन्निपातविध्युद्देश्यबोधकं व्रीह्यादिपदं यागस्वरूपघटितशक्यसम्बन्धेनापूर्वलक्षणायै प्रवृत्तं सन्निकर्षादुत्पत्त्यपूर्वमेव लक्षयतीत्याशयकमेतत् । तेनोत्तरसन्निपातिनां तत्रानुपयोगे ऽपि न क्षतिः । स्वरूपग्रहणेन एकैकयागस्वरूपोपयोगिन एवोत्पत्त्यपूर्वार्थत्वं न समुदायसंस्कारार्थस्य पार्वणहोमादेरपि, तस्य तु समुदायापूर्वार्थत्वमेव युक्तमिति द्योत्यते । अथ नैवापूर्वं सप्रमाणं दूरत एव तद्विषयप्रयुक्तत्वं ध-

र्मणामिति । नैवम् । विनष्टस्य स्थायिव्यापारेणैव कालान्तरभाविफलारम्भकत्वात् । दृश्यते हि घृतपानादेर्धातुसाम्यव्यापारेण स्वास्थ्यजनकत्वम् । न च ध्वंसेनैवान्यथासिद्धिः, असत्यपि तस्य वैजात्ये कारणवैजात्यादेव फलवैजात्योपपत्तिरिति शङ्क्यम् । ध्वंसतत्प्रतियोगिनोरेकत्राजनकत्वानियमात् । 'धर्मः क्षरति कीर्त्तनाद्'' इति शास्त्रानुपपत्तेश्च । नहि नष्टक्रियाया नाशस्य वा शक्यते कीर्त्तननाश्यत्वं वक्तुम् । शक्यते त्वपूर्वस्य । एतेन अपूर्वस्थाने कृतयाग आत्मैवाभिषिच्यतामिति निरस्तम् । नच धर्मपदाभिधेयक्रियायाः कीर्त्तननाश्यत्वासम्भवेन धर्मपदे ऽपूर्वलक्षणापत्तिः, तद्वरं जघन्ये क्षरतिधातौ प्रतिबन्धलक्षणामेवाश्रित्य कीर्त्तनस्य प्रतिबन्धकत्वाश्रयणमिति शङ्क्यम् । प्रतिबन्धस्यापि व्यापारमन्तरेण कीर्त्तनेनानुदयात् । ध्वंसस्य प्रतिबन्धकत्वे भावियागादपि फलानुदयापत्तेः । यस्य कीर्तनं तदीयफलप्रतिबन्धः शास्त्रार्थ इति चेत् । न । तदीयफलाप्रसिद्धेः । कीर्त्तनेन धर्मो निष्फलो भवतीति शास्त्रेणोक्तप्रतिबन्धनिर्वाहकापूर्वान्तरकल्पनागौरवपरिजिहीर्षया ऽर्थाद्धर्मापूर्वनाशकत्वाश्रयणाच्च न धर्मपदे लक्षणापत्तिः । असति चापूर्वे पुण्यदानशास्त्रानुपपत्तिः । नहि विनष्टक्रियाया अनुत्पन्नफलस्य वा दानसम्भवः । धर्मापूर्वतुल्यन्यायत्वे धर्मापूर्वानङ्गीकारे च ''प्रायश्चित्तैरपैत्येनः'' इत्यादिशास्त्रानुपपत्तिः । पापफलप्रतिबन्धकत्वाश्रयणे चापैत्येतिपदलक्षणापत्तिः । तस्य नाशवाचित्वात् । कीर्त्तनस्य धर्मफलप्रतिबन्धकत्वे निर्दिष्टदोषस्य चेह प्रसङ्गः, तथाऽपि देवतानुग्रहनिग्रहाभ्यामेव स्वर्गनरकादिसिद्धेर्नापूर्वकल्पनोचितेति चेत् । न । नखलोमादिदेवत्ये कर्मणि तदसम्भवात् । सशरीरतदधिष्ठातृकल्पनात् यष्टृगतापूर्वकल्पनाया एवोचितत्वात् । ईश्वरीयानुग्रहादेव सर्वविहितनिषिद्धव्यापारत्वमिति चेत् । न । प्रतिविध्यत्यन्तानुपस्थितताऽसमवेतव्यापारकल्पनेऽतिगौरवात् । नन्वेवमपि परमापूर्वेणैव फलो-

त्पत्तिनिर्वाहादुत्पत्त्यपूर्वं निष्प्रमाणकम्, तादर्थ्यमङ्गानां दूरापास्तम्। नैवम्। उत्पत्तिवाक्ये ऽवगताया एकैकयागगतनिरपेक्षकरणताया उत्पत्त्यपूर्वमन्तरेणानिर्वाहात्। उत्तराङ्गसहितयागजन्यत्वेनावगतस्य परमापूर्वस्योत्पत्त्यपूर्वं विना यागादुत्पत्त्यसम्भवाच्च। असाधारणकार्यकारित्वं विना ऽसाधारणेतिकर्तव्यतास्वीकारायोगाच्च। कुतः पुनः समुदायापूर्वसिद्धिः। "पूर्णमास्यां पूर्णमास्या यजेताऽमावास्यायाममावास्यया यजेत" इतिवचनयोस्तृतीयाभिहितस्य समुदायान्तरनिरपेक्षयागत्रयगतकरणत्वस्य प्रतियोगिसापेक्षत्वात्। चतुर्होतृपार्वणवैमृधादिजन्यानुग्रहस्य यागत्रयसमुदायगोचरस्य समुदायकार्य एवोपयोगौचित्याच्च। पूर्णमास्यनुष्ठिताङ्गानां समुदायापूर्वनिष्पादनेनापवर्गे ऽमावास्यायां पुनरङ्गानुष्ठानोपपत्तेश्च। बहूनां यागानां विभिन्नसमुदायभावापत्त्यैककार्यकारित्वं विभिन्नसमुदायकार्यद्वारैवोचितम्, बहूनां वर्णानां तत्तत्पदभावापन्नानां पदार्थज्ञानद्वारेण वाक्यार्थबोधजनकत्वदर्शनादिति भावः। उत्पत्त्यपूर्वमिति च नेह शब्दान्तरादिसहकृतेन विधिनाऽभिनवयागोत्पत्तिं कुर्वता तद्भावनाभाव्यत्वेन ज्ञापितमपूर्वं विवक्षितम्, किन्तु अपूर्वलक्षणादशायां यत्र यत्सन्निकृष्टमपूर्वं तदेवेति बोध्यम्। तेन पयःश्रपणादेर्मैत्रावरुणाद्यभ्यासापूर्वार्थत्वे ऽपि प्रोक्षण्युत्पवनादेः प्रोक्षणापूर्वार्थत्वे ऽपि न क्षतिः। नन्वेवं प्रोक्षणावघातादेर्व्रीहिनियमादृष्टार्थत्वमेव स्याद्। न। तस्य नियमजन्यत्वेन व्रीह्यजन्यस्य व्रीहिपदेन लक्षणायोगात्। व्रीहिजन्यत्वे ऽपि अनुद्देश्यकार्यार्थत्वादुद्देश्यकार्यार्थत्वं युक्तमिति आग्नेयापूर्वलक्षणौचित्यात्। यत्र तूद्देश्यकार्यार्थत्वे श्रुतिविरोधः, तत्र भवतु धर्माणां नियमापूर्वार्थत्वम्। बृहद्रथन्तरसाध्यैकपृष्ठमते हि बृहद्रथन्तरयोर्व्यवस्थया विहितानां समुद्रध्याननिमीलनप्रभृतीनां धर्माणां नान्तरेण सामनियमादृष्टशेषत्वं श्रुतव्यवस्थोपपत्तिः।

केचित्तु रथन्तरादिविशिष्टापूर्वमेवेह लक्ष्यते "त्रिः प्रथमा-

त एवौषधधर्मावघातादीनामाज्ये ऽप्रवृत्तिः, तेषामन्वाह"इत्यत्र प्रथमस्थानविशिष्टापूर्वलक्षणावत्, "यदग्नये च" इत्यत्र भट्टमते सायंकालविशिष्टापूर्वलक्षणादिवदित्याहुः ।

तच्चिन्त्यम् । नन्वेवमपि "प्रयाजे कृष्णलं जुहोति"इति विहितकृष्णलहोमस्य प्रयाजापूर्वसाधनप्रयुक्तत्वात् दार्शिकप्रयाजेऽपि कृष्णलापत्तिः। आधानानुवादस्य सन्निहितगामित्वात्सौर्यप्रयाजेष्वेव तन्निवेशः, तर्हि ज्योतिष्टोमप्रकरणविहितानां ग्रहधर्माणां प्राकरणिकग्रहेष्वेव निवेशः स्यान्नानारभ्यविहितयोरंशुवदाभ्ययोः । अथ तयोरपि तैत्तिरीयशाखायां प्रकरणे विनियोगान्नाप्रकरणिकत्वम्, तथाऽपि चयनप्रकरणे विहितानां अखण्डाकृष्णत्वादीनाम् इष्टकाधर्माणां प्रकरणगतास्वेव निवेशः स्यात् नानारभ्यविहितासु चित्रिण्यादिषु । अथैकापूर्वसाधनेषु सर्वेषूपदेशेनैव धर्मप्रवृत्तिः, तर्हि दार्शिकप्रयाजेष्वपि कृष्णलहोमापत्तिः, फलचमसे ऽप्युपदेशेन सोमचमसस्तद्धर्मप्राप्तिश्च स्यात् । मैवम् । प्रयाजरूपेणेव तदपूर्वेणापि प्रकृतौ निर्ज्ञातप्रकारेण कृष्णलहोमशेषित्वं स्वरूपेणानुभवितुमशक्नुवता सौर्यापूर्वसाधनत्वोपहितेनैव तत्स्वीकरणात् । तावता च दार्शिकप्रयाजापूर्वव्यावृत्तिसिद्धेः । नचैवमंशुवदाभ्यचित्रिण्यादिव्यावर्तकं ग्रहेष्टकालक्ष्यापूर्वे सम्भवति विशेषणम् । सत्यपि सोमफलचमसयोरेकापूर्वप्रयुक्तत्वे नैमित्तिकविधेर्नित्यविध्युत्तरप्रवृत्तिकत्वान्नित्यसोमविधिशेषत्वेन पर्यवसितानां च धर्मविधीनां नैमित्तिकविधिशेषत्वेन पुनर्व्यापारायोगान्न समानविधानत्वम् । नचैवं सोमपूतीकयोरसमानविधानत्वापत्तिः । सोमशास्त्रस्यैव सकलसोमावयवाभावे पूतीकादिप्रतिनिधिगतविकलसोमावयवानुष्ठापकत्वेन पूतीकानां फलचमसवन्नैमित्तिकविध्यन्तरविधेयत्वाभावात् । "यदि सोमं न विन्देत् पूतीकानभिषुणुयात्"इत्यस्य तु प्रतिनिधिनियममात्रपरत्वात् । अवघातादीनामिति। अतद्गुणसंविज्ञान-

माग्नेयापूर्वप्रयुक्तत्वात्, आज्यस्य च तदर्थत्वाभावादित्युक्तं द्वितीये।

आरादुपकारकाणां तु स्वरूपे ऽनुपयोगात् परमापूर्वार्थत्वम्।

---

बहुव्रीहिः। परमापूर्वप्रयुक्तो ऽप्यवघातो दृष्टकार्यमहिम्ना शक्यत आज्याद्यावर्त्तयितुं न प्रोक्षणपर्य्यग्निकरणे। अनुपयोगादिति। स्वरूपोपयोगिद्रव्याद्युद्देशेनाविधानादित्यर्थः। अपूर्वसाधनलक्षणामनपेक्ष्य प्रधानभावनयेतिकर्त्तव्यतात्वेन स्वीकृतानां तद्द्वाव्यप्रधानापूर्वार्थत्वमेव युक्तमित्याशयः। कुतः पुनः परमापूर्वसिद्धिः, यावतोत्पत्त्यपूर्वैस्तदुत्पादितसमुदायापूर्वाभ्यां शक्यते फलोत्पत्तिर्वक्तुम्। एकफलोत्पत्तिनिर्वाहाय प्रथमतः कल्पितमेकमपूर्वं न पश्चात्कल्पितापूर्वान्तरवशेनापकर्त्तुं शक्यमिति चेत्। न। आदित एव षण्णां कर्मणां करणत्वनिर्वाहाय तावदपूर्वकल्पनौचित्यात्। विरुद्धश्रुत्यदर्शिना कल्पिताया लिङ्गकल्प्यश्रुतेरिव कल्पितस्यापि परमापूर्वस्य प्रकारान्तरेण कल्पनामूलाकाङ्क्षोच्छेदालोचने बाधसम्भवाच्च। प्रथमतः षडपूर्वकल्पने तेषां साङ्गप्रधानजन्यत्वनिर्वाहाय षडपूर्वान्तरकल्पनापत्तिरिति चेत्। भवतु, न तावता प्रेक्षावद्भिः क्रमभाविषड्यागव्यापारत्वेनैकमपूर्वं कल्पयितुमुचितम्। नचाङ्गानामपूर्वैदमर्थ्यमुत्पादकत्वेनैवेति नियमः सम्भवी, पराभिमतो वेति पूर्वाङ्गोत्पादितैरुत्तराङ्गस्थापितैः षड्भिरेवापूर्वैः फलोत्पत्तिनिर्वाहान्नैव वस्तुतो ऽधिककल्पना ऽपि। अतः कथमारादुपकारकेषु परमापूर्वप्रयुक्तत्वव्यवहार इति चेत्।

अत्र भवदेवः—कुविन्दादिकर्तुरुद्देश्यपटादिसिद्धिरनेकतन्त्वादिकरणसम्पाद्या कार्याव्यवहितपूर्ववृत्तिसंयोगादिव्यापारद्वारेणैव जायमाना दृष्टा अतो ऽनेकयागैरपि स्वर्गादिसिद्धिरेकापूर्व-

तत्रोत्पत्त्यपूर्वस्य यागस्वरूपानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सन्निपत्योपकारकाणां पूर्वाङ्गानां तदुत्पत्तावुपयोगः, उत्तराङ्गानां तेषां च तत्स्थितावुपयोगः । परमापूर्वस्य तु साङ्गप्रयोगानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सर्वेषामारादुपकारकाणां तदुत्पत्तौ, प्रयोगबहिर्भूतस्य तु तत्स्थितावुपयोगः । य-

---

द्वारेणैवोचितेति ।

कश्चित्तु "दर्शपूर्णमासाभ्याम्" इति षड्यागनिष्ठसाधनताप्रतीतिः षड्यागसाधारणशक्तिं विनाऽनुपपद्यमाना तादृशशक्तिकल्पनामाक्षिपति, तादृशशक्तिरेव परमापूर्वमित्याह ।

केचित्तु परमापूर्वाऽभावे समस्तारादुपकारिणां फलोत्पत्तावुपयोगो वाच्यः । यथा सिद्धान्तिमते परमापूर्वोत्पत्तौ । उत्पत्त्यपूर्वार्थत्वे चोत्तरेषां तत्स्थित्यर्थत्वे क्षणविशेषावच्छिन्नास्थित्यर्थत्वे मानाभावाद्यावत्फलोत्पत्ति तत्स्थित्यर्थत्वं वाच्यम्, तनश्च सकृत्स्वर्गीय दर्शे कृतवतः प्रकृतिद्वितीयादिप्रयोगेषु विकृतिषु चैहिकफलासु पुनरनुयाजाद्यननुष्ठानापत्तिः पूर्वकृताङ्गोपकाराणामनपवृत्तत्वेन प्रसङ्गसिद्धेः । ततश्च "पृषदाज्येनानुयाजान् यजति", "एकादशानुयाजान् यजति" इति वचनानुपपत्तिरिति परमापूर्वसिद्धिमाहुः ।

असति च परमापूर्वे समस्ताङ्गापूर्वसहितैः षड्भिरपूर्वैः फलोत्पत्त्यभ्युपगमे प्रयोगे समाप्तेऽपि यस्य कस्यचिदङ्गस्य प्रधानस्य वा कीर्त्तने तन्मात्रजन्यापूर्वनाशात् फलानुदयापत्तिः । नचैवं युक्तं संभवति फलोदये पुनः प्रयोगादृते । एतेन नित्येष्वपि परमापूर्वोपपत्तिर्ज्ञेया । पत्वादिदृष्टान्तेन पापक्षयस्य प्रयोगानन्तरभावित्वनियमासंभवात् । तत्स्थिताविति षष्ठीसमासौ । उक्तं हि प्रतिपत्तिसूत्रे वैमृधाधिकरणे

था बृहस्पतिसवस्य "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति वाजपेयोत्तरकालमङ्गत्वेन विहितस्य वाजपेयापूर्वस्थितावुपयोगः । तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे ।

तत्सिद्धं सर्वथाऽङ्गानामपूर्वार्थत्वम् ।

प्रकृतमनुसरामः । तदेवं निरूपितः सङ्क्षेपतो विनियोगविधिः ।

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव ।

---

च मिश्रैः—उत्पन्नमपि कार्यं तदभावे विपद्यत इति कल्प्यत इति । यद्वा तस्मिन् स्थितिर्यस्य परमापूर्वानुकूलातिशयस्य, फलानुकूलातिशयस्य तस्मिन् । स्वीकर्त्तव्यं च समवायेऽप्यदृष्टान्तरम् । अन्यथा पार्वणहोमे देवतोद्देश(१)नियमादृष्टस्यानाश्रयत्वापत्तेः । प्राशुभावपरप्रयोजनं सूचयन् लक्ष्यमाह सचेति । अतः प्रयोगपरिच्छेदकस्यापि "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादेरलक्ष्यत्वात्तद्व्यावृत्त्यर्थं प्राशुभावप्रयोगे भेदसिध्यर्थमदः शास्त्रम् । ननु सर्वस्यैव विधेः प्रवर्त्तनात्मनः प्रयुक्तिफलत्वसंभवात्प्रयोगविधित्वमिति तदत्र लक्षणे न कस्य चिद्विधेरव्याप्तिरुचितेत्यत आह एवेति । फलविशेषकर्मकभावनान्वयित्वेन प्रधानमिवाङ्गानि बोधयता प्रधानविधिनैव साङ्गप्रधानानुष्ठानसिद्धेः प्रधानोत्पत्तिविधयो ऽङ्गविधयो वा न स्वविषयान् प्रयुञ्जत इत्याशयः । प्रधानविधिरपि यदर्थं यद् अनुष्ठापयति तत् तस्य प्रयोजकमन्यदप्रयोजकमित्युच्यते । तद्यथा तुल्ये ऽप्यामिक्षावाजिनयोर्दध्यानयनजन्यत्वे आमिक्षार्थमेव दध्यानयनमनुष्ठाप्यते,

---

(१) द्देशानियमेति पाठः ।

नान्यार्थम् । दध्यानयनवाक्ये सप्तम्यन्तपदाभिहितस्य पयसो नयति द्वितीयकर्मतया व्याप्तस्य नयनं प्रति प्राधान्यावगतेः पयःपरामर्शिसर्वनामपदार्थाभेदान्वयित्वाच्चामिक्षायाः वाजिनप्राधान्यस्य मानशून्यत्वात् । तुल्ये ऽप्येकहायनीनयनसाध्यत्वे क्रयपदकर्मणोः क्रयार्थमेव तदनुष्ठाप्यते तत्संस्कार्याया एकहायन्याः क्रये विनियुक्तत्वात् । तुल्ये ऽपि पुरोडाशतुषोपवापयोः कपालशेषित्वे पुरोडाशार्थमेव कपालमनुष्ठाप्यते "पुरोडाशकपालेन तुषानुपवपति" इति विधिवेलायामेव तुषोपवापस्य परप्रयुक्तकपालसाध्यत्वप्रतीतेः । सत्यप्याग्नेयस्विष्टकृतोः पुरोडाशसाध्यत्वे स्विष्टकृदर्थतया न पुरोडाशो ऽनुष्ठाप्यते उत्तरार्धात्मकैकदेशसाध्यत्वेन श्रुतस्य तस्यैकदेश्याकाङ्क्षायामाग्नेयादिप्रयुक्तैकदेशिग्राहकत्वात्, प्रतिपत्तित्वाच्च । एतेन पशौ शकृल्लोहितयोर्निरसनम्, पूर्णमासे शाखायाः प्रहरणं प्रणीतानां निनयनं प्रयाजशेषस्य क्षारणम् इडादेर्भक्षणम्, सोमे कृष्णविषाणायाः प्रासनम्, अवभृथे सोमलिप्तानां नयनमप्रयोजकमिति ज्ञेयम् । प्रतिपत्तित्वसिद्ध्युपयोगिन्यायस्यैव दर्शनाय परमधिकरणभेदः । नचैवं "मैत्रावरुणाय दण्डं ददाति" इति विहितदानं द्वितीयया दण्डप्रतिपत्त्यर्थत्वाद्दण्डाप्रयोजकं स्यादिति शङ्क्यम् । चतुर्थीश्रुत्या मैत्रावरुणार्थदानं प्रति दण्डप्राधान्यायोगात् । यत्तु प्रतिपत्तेः प्रतिपाद्योत्पत्तिमिव तद्धारणप्रयोजकत्वात् प्रयाजशेषधारणाभावे क्षारणविध्यनुपपत्तिरिति । तन्न । प्रतिपाद्येन प्रयाजाज्येनैवाग्न्यधिकरणकप्रक्षेपद्वारा विरधिकरणकक्षारणात्मकप्रतिपत्तिद्वयमनुष्ठापयताऽशभेदेन तदनुभवितुं स्वधारणानुष्ठापनात् । नचैवं प्रातःसवनानुष्ठितप्रयाजशेषेण मध्यन्दिनसवने भाविनीषु प्राजापत्यवपासु स्वप्रतिपत्त्यै धारणमनुष्ठाप्येतेति शङ्क्यम् । सन्निहिते क्वचिदनियमेन प्राप्तस्य क्षारणस्य संनिहितहविःषु नियमनं कुर्वता शास्त्रेण सन्निहिततदधिकरणकक्षारणस्याविषयीकरणात् । अशास्त्रीयप्रतिपत्त्यै धारणा-

स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते । न च विलम्बवदविलम्बेऽपि प्रमाणाभाव इति वाच्यम् । विलम्बे हि अङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते । न हि विलम्बेन क्रियमाणयोः पदार्थयोः 'सह कृतम्' इति साहित्यं व्यवहरन्ति । न चैवं साहित्यानुपपत्त्या समानकालत्वमेव स्यान्न त्वविलम्बः,अव्यवधानेन पूर्वोत्तरकाले क्रियमाणपदार्थयोः 'अविलम्बेन कृतम्' इति व्यवहारादिति वाच्यम् । अनेकपदार्थानामेकस्मिन्काले-ऽनुष्ठानानुपपत्तेः । न च तावत्कर्तृसंपादनेनानुष्ठानं किं न स्यादिति वाच्यम् । "तस्यैतस्य यज्ञक्रतोश्चत्वार ऋत्विजः" इत्यादिना कर्तृणां नियतत्वात् ।

---

नुष्ठापनासंभवात् । विधेः प्राशुभावबोधकत्वमुपपादयति सहीत्यादिना । सचेत्यतः प्राक्तनेन प्राशुभावबोधकत्वोपन्यासेन चैतत्सूचितं प्रधानार्थतयांगानि प्रयोक्तुं समर्थोऽपि विधिर्यस्य प्रधानस्य परप्रयुक्तयदङ्गजन्योपकारलाभमालोचयति न, तदर्थतया तान्यनुष्ठापयति यथा पशुपुरोडाशविधिः प्रयाजम् पुरोडाशार्थतया । "अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पुरोडाशमनुनिर्वपति" इत्येवमात्मा हि सोऽग्नीषोमीयतन्त्रमध्ये पुरोडाशं विदधानः पशुकालीनत्वैकादशत्वगुणयुक्ततावैलक्षण्ययुतैरपि पाशुकप्रयाजैः कृतोपकारे प्राकृतोपकारावैजात्यं आपशुसमाप्त्यनपवर्गं चालोचयन्न पुरोडाशाय पृथक् तान् प्रयुङ्क्ते प्रयोगप्राशुभावभङ्गापत्तेः ।

तस्मादङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेकवाक्यतावगततत्साहित्यं विदधदुक्तविधया एककालानुष्ठानानुपपत्तेरविलम्बं विधत्ते इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति ।

स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति । अन्यथा हि किमेतदनन्तरमेतत्कर्त्तव्यमेतदनन्तरमेतद्वेति प्रयोगविक्षेपापत्तेः । अतः

---

यथा वा सत्यपि तन्त्रमध्यविधौ वस्तुतस्तन्त्रमध्यपातान्निशीष्टिविधिर्निशीष्टयर्थतया प्रयाजादीन् । यत्त्वङ्गं यदा तन्त्रिणा प्रयुज्यते प्रयुक्तिसामर्थ्यसत्त्वाद् ? अयमेव भेदश्चातुर्थिकात् प्रयोजकाद् द्वादशोक्तप्रसङ्गिनि । प्राशुभावबोधकत्वोक्त्यैवैतदपि सूचितम् । यदङ्गं सकृदनुष्ठापितमगृह्यमाणविशेषत्वात् बहूनां प्रधानानामुपकाराय प्रभवति न तदनुष्ठाप्यते, यथा—पूर्णमासप्रयोगे प्रयाजादि । प्राशुभावभङ्गापत्तेः । यत्र तु देशकालादिकृतो विशेषो गृह्यते इदमस्मै प्रधानाय नास्मा इति, प्रयुज्यत एव तदसकृत् । यथा त्रिकभेदे प्रयाजादि, कालकृतविशेषग्रहणात् । वरुणप्रघासेषु च तद्विहारभेदेन देशकृतविशेषग्रहणात् । वरुणप्रघासेष्वेव पत्नीसंयाजाः कर्तृकृतविशेषग्रहणात् । अध्वर्युणा हि क्रियमाणास्ते ऽष्टानामेवोत्तरवैहारिकाणामुपकुर्युः, न मारुत्याः । असत्यपि कर्तृभेदे दक्षिणाभेदप्रयुक्तकर्तृत्वभेदात्क्वचिदङ्गावृत्तिः, यथा—राजसूयान्तर्गतावेष्टिप्रयोगे । न चैवं प्राशुभावानुरोधेनानियतक्रमाश्रयणमेवोचितम्, नेत्याह—सचेति । नियत इति छेदः । यद्यपि पुरुषभेदेन नियमानियमावुभावपि प्राशुभावोपपादकत्वेन सम्भाव्येते, तथाऽपि नियमाश्रयणे पदार्थसाकल्योपपत्तेस्तदाश्रयणमेवोचितमित्याशयेनाह—अन्यथेति—विक्षेपः

प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते।

तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा।

तत्र च षट् प्रमाणानि—श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि ।

---

पदार्थलोपः। विशेषणतयेति । क्रमसाहित्यादेरकारकत्वाशयेनेदम्। अमुनैव ग्रन्थेन भिन्नप्रयोगविधिपरिगृहीतानां न क्रमनियम इति द्योत्यते, विध्यन्तरप्रयोज्यपदार्थविशेषणत्वेन विध्यन्तरेण क्रमविध्ययोगात्। अत एव काम्यक्रतुषु न पाठक्रमेण क्रमनियमः "तदादिवाऽभिसम्बन्धाद्"इति (सू० मी० अ० ५ पा० १ अ० १२ सू० २४) न्यायेनाग्निमारुतादूर्ध्वमनुयाजोत्कर्षेण सूक्तवाकोत्कर्षेऽपि पौरोडाशिकापिष्टलेपफलकरणहोमयोर्नोत्कर्षः। निबद्धक्रमत्वमेव हि पदार्थानां तदाद्युत्कर्षे तदंतापकर्षे च तन्त्रम्। यद्यपि चोक्तहोमयोः प्रकृतावनुयाजादिभिः सह निबद्धक्रमत्वान्न तथा पूर्वमिति नयगोचरत्वम्, तथाऽपि सवनीयपशौ प्राप्तैस्तैः सह पुरोडाशे प्राप्तयोस्तयोर्न निबद्धक्रमत्वमिति नानुयाजोत्कर्षे तदुत्कर्षसम्भवः। नचैवं सूक्तवाकप्रैषाद्यन्तर्गतपौरोडाशिकदेवतापदानामप्यनुत्कर्षापत्तिः, यत्पदार्थान्विततया स्वार्थ एभिर्बोधनीयः, तेषां "होता यक्षद"इत्येवमादीनां पशुप्रयुक्ततयोत्कर्षे सत्येषामप्युत्कर्षावश्यंभावात्। विततीति। अयुगपद्भाव्यनेकपदार्थानुष्ठानात्मक इत्यर्थः। अस्मिश्च मते"अध्वर्युर्गृहपतिं दीक्षयित्वा"इति वाक्ये आद्यन्तदीक्षागोचरस्यैकस्यैव विततिविशेषस्य विधेयत्वादेकवाक्यत्वं लभ्यते पूर्वपदार्थनिरूपितानन्तर्यात्मनः क्रमस्योत्तरपदार्थोपस्थितिसम्पादनेन दृष्टार्थतयाऽङ्गत्वसम्भवे विततिविशेषात्मत्वाभ्युपगमेनादृष्टार्थतया स्वाश्रययावत्पदार्थगत्वाभ्युपगमो ऽयुक्त इत्याशयेनाह

तत्र क्रमपरं वचनं श्रुतिः । तच्च द्विविधं केवलक्रमपरं, तद्विशिष्टपदार्थपरं चेति । तत्र "वेदं कृत्वा वेदिं करोति" इति केवलक्रमपरम्, वेदिकरणादेर्वचनान्तरेण विहितत्वात् । "वषट्कर्त्तुः प्रथमभक्ष" इति तु क्रमविशिष्टपदार्थपरम् । एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् ।

सेयं श्रुतिरितरप्रमाणापेक्षया बलवती । तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् । अत एवाश्विनस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तौ "आश्विनो दशमो गृह्यते" इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् ।

यत्र तु प्रयोजनवशेन (क्रम) निर्णयः स आर्थः क्रमः । यथा ऽग्निहोत्रहोमयवागूपाकयोः । अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते ।

स चायं पाठक्रमाद् बलवान् । यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधो ऽदृष्टार्थत्वं च स्यात् । न हि होमानन्तरं क्रियमाणस्य किञ्चिद्

पौर्वापर्येति । अत्रान्यत्राहितेत्यादिः । क्रमे मुख्यमानतयोक्तप्रयोगविधेरनुग्राहकाणि मानान्याह—तत्रेति । वषट्कर्तुरिति । प्राथ-

दृष्टं प्रयोजनमस्ति ।

पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः । तस्माच्च पदार्थानां क्रम आश्रीयते । येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति । यथार्थप्रत्ययं च पदार्थानामनुष्ठानात् ।

स च पाठो द्विविधः- मन्त्रपाठो ब्राह्मणपाठश्चेति । तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्याक्रमाद् यः क्रम आश्रीयते स मन्त्रपाठात् ।

स चायं मन्त्रपाठो ब्राह्मणपाठाद् बलवान् । अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगाद् बहिरेव 'इदमेवं कर्त्तव्यम्'इत्येवमवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते । मन्त्राः पुनरनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारका इति वक्ष्यामः । तेनानुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मन्त्रक्रमाधीनत्वादन्तरङ्गो मन्त्रपाठ इतरस्मादतिबलवान् । अत एवाग्नेयाग्नीषोमीययोर्ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानमित्येवं क्रमं बाधित्वा मन्त्रपाठादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्येवं क्रम इत्युक्तम् ॥

---

न्ये क्रमव्यवहारो गौणः, उक्तक्रमलक्षणानाक्रान्तत्वात्, प्रथमभक्षमात्रानुष्ठानात् क्रमानुष्ठानं वृत्तमिति व्यवहारसम्भवाच्च ।

प्रयाजानां "समिधो यजति' 'तनूनपातं यजति" इत्येवं विधायकवाक्यक्रमाद् यः क्रमः स ब्राह्मणपाठक्रमः। अत्र च यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि, तथाऽपि प्रयाजानां स्मारकान्तरस्याभावात्तान्येव स्मारकत्वेन स्वीक्रियन्ते। तथा च येन हि क्रमेण तान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीति युक्तं तेनैव क्रमेण तेषामनुष्ठानमिति। तत्सिद्धं प्रयाजानां ब्राह्मणपाठक्रमात्क्रम इति।

ननु प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृतार्थानां ब्राह्मणवाक्यानां किमिति स्वीक्रियते प्रयोगसमवेतार्थस्मारकाणां याज्यामन्त्राणामाग्नेयादिष्विवात्रापि सत्त्वात्। न च तेषां देवतास्मारकत्वात्कर्मस्मारकत्वेन ब्राह्मणवाक्यं स्वीक्रियते इति वाच्यम्। आग्नेयादिष्वपि कर्मस्मारकत्वेन तत्स्वीकारापत्तेः। न चेष्टापत्तिः। तथा सति ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वं न स्यात्। तद्बलीयस्त्वे हि मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वमितरस्य तदस्मारकत्वं हेतुः। यदि च कर्मस्मारकत्वं ब्राह्मणवाक्यस्य स्वीक्रियते तदा प्रधानस्मारकत्वेन ब्राह्मणवाक्यस्यान्तरङ्गत्वादङ्गभूतदेवतास्मारकत्वेन च मन्त्राणां बहिरङ्गत्वान्मन्त्रपाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्यात्। तथा च "मन्त्रतस्तु विरोधे स्याद्"इति(५।१।१६)पाद्यमिका-

धिकरणविरोधः । तत्र हि ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तम् । अथ–'आग्नेयादिषु याज्यामन्त्रा एव देवताप्रकाशनद्वारा कर्मप्रकाशकाः, त्यज्यमानद्रव्योद्देश्यत्वरूपत्वाद्देवतात्वस्येति' चेत्, तुल्यं प्रयाजेषु । तत्रापि हि याज्यामन्त्रा देवताप्रकाशकाः, प्रयाजेषु देवताया मान्त्रवर्णिकत्वात् । तथा च प्रयाजेषु याज्यामन्त्राणां देवताप्रकाशनद्वारा कर्मप्रकाशकत्वात्तत्क्रमो मन्त्रपाठादेव स्यान्न तु ब्राह्मणपाठात् । न च मन्त्रपाठस्यान्यादृशत्वात् प्रयाजक्रमो ब्राह्मणपाठादेवेति वाच्यम् । अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात्, मन्त्रक्रमस्य बलीयस्त्वात् । अभ्यासाधिकरणे च वार्त्तिककृता क्रमविनियुक्तैर्वलिङ्गकमन्त्रवर्णेत्यादिना प्रयाजेषु याज्यामन्त्राणां क्रमविनियोग उक्तो नवमे ॥ तन्त्ररत्ने "समिधोऽग्न आज्यस्य व्यन्तु"इत्यादिभिः क्रमप्रकरणप्राप्तैर्देवता गुणत्वेन समर्प्यन्त इत्युक्तम् । मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात्, तत्कथं प्रयाजेषु ब्राह्मणपाठक्रमात्क्रम इत्युच्यते" ॥ सत्यमेतत् । तथाऽपि यत्रार्थस्मारका मन्त्रा न सन्त्येव, यथा तूष्णीं विहितेषु कर्मसु, तेषां क्रमो ब्राह्मणपाठक्रमात् । तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात् । प्रयाजोदाहरणं तु कृत्वाचिन्तया, तत्र ब्राह्म-

णवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात् । यथाऽऽहुरर्थवादचरणे वार्त्तिककाराः—'प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोजकतां न प्रतिपद्यन्ते' इति । तस्मात्समन्त्रककर्मणां पाठक्रमो मन्त्रपाठात् । अमन्त्रकपाठक्रमस्तु ब्राह्मणपाठक्रमादेवेति दिक् ।

प्रकृतौ नानादेशस्थानां पदार्थानां विकृतौ वचनादेकस्मिन्देशे ऽनुष्ठाने कर्त्तव्ये यस्य देशे ऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमितरयोश्च पश्चात्—अयं यः क्रमः स स्थानक्रमः । स्थानं नामोपस्थितिः । यस्य हि देशे योऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम् । अत एव साद्यस्के ऽग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्त्तव्ये आदौ सवनीयपशोरनुष्ठानम्, तस्मिन्देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः, इतरयोस्तु पश्चात् । तथा हि ज्योतिष्टोमे त्रयः पशुयागाः—अग्नीषोमीयः, सवनीयः, अनुबन्ध्यश्चेति । ते च भिन्नदेशाः । अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकाले, अनुबन्ध्यस्त्वन्ते । साद्यस्को नाम सोमयागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । अतस्ते त्रयोऽपि

पशुयागाः साद्यस्के चोदकप्राप्ताः । तेषां च तत्र साहित्यं श्रुतं "सह पशूनालभेत" इति । तच्च साहित्यं सवनीये देशे, तस्य प्रधानप्रत्यासत्तेः, स्थानातिक्रमसाम्याच्च । सवनीयदेशे ह्यनुष्ठाने क्रियमाणे अग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति, अग्नीषोमीयदेशे ह्यनुष्ठाने क्रियमाणे सवनीयस्य स्वस्थानातिक्रममात्रम् अनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्यात् । एवमनुबन्ध्यदेशे ऽग्नीषोमीयस्य द्रष्टव्यः । तथा च सवनीये देशे सर्वेषामनुष्ठाने कर्त्तव्ये सवनीयस्य प्रथममनुष्ठानम् । आश्विनग्रहणानन्तरं हि सवनीयदेशः । प्रकृतौ "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इत्याश्विनग्रहणान्तरं तस्य विहितत्वात् । तथा च साद्यस्केऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्य स्थानात्प्रथममनुष्ठानमितरयोश्च पश्चादित्युक्तम् ।

प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः । येन हि क्रमेण प्रधानानि क्रियन्ते तेनैव

---

आश्रीयते । प्रयोगविधिनेति शेषः । कथमुक्तविधपाठस्य पदार्थक्रमनियामकत्वमत आह येनहीति । अधीतानीत्यस्य प्रयोगकाल इत्यादिः । तस्यप्रधानेति । तथाच तत्साहित्येनेतरयोरपि तत्प्र-

चेत्र क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वप्रधानैस्तुल्यं व्यवधानं भवति व्युत्क्रमेण त्वनुष्ठाने केषां चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानमन्येषामत्यन्तं व्यवधानं स्यात् । तच्चायुक्तम् । प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः । अत एव प्रयाजशेषेणादावाग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः, आग्नेययागैन्द्रयागयोः पौर्वापर्यात् । अत्र हि द्वयोरभिघारणयोः स्वेन स्वेन प्रधानेन तुल्यमेकान्तरितं व्यवधानं भवति, आग्नेयहविरभिघारणाग्नेययागयोरैन्द्रयागहविरभिघारणेन व्यवधानात्, ऐन्द्रयागहविरभिघारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानात् । अतश्चादावाग्नेयहविरभिघारणं, तत ऐन्द्रस्य हविषः, तत आग्नेययागः, ततश्चैन्द्रो याग इत्येवं क्रमो मुख्यक्रमात्सिद्धो भवति । यदि त्वादावैन्द्रहविषोऽभिघारणं तत आग्नेयस्य क्रियते तदा याज्यानुवाक्याक्रमवशादादावाग्नेयस्यानुष्ठानादाग्नेययागतदङ्गहविरभिघारणयोरत्यन्तमव्यवधानमैन्द्रयागतदङ्गहविरभिघारणयोरत्यन्तं व्यव-

---

त्यासत्तिलाभ इत्याशयः । अत एव प्रयाजेति । यद्यप्याकरे मुख्यक्रमोदाहरणत्वेनान्वारम्भणीयागतयोः "सारस्वतौ भवत" इति विहितयोः स्त्रीपुंदेवत्ययाज्ययोर्धर्मा निर्वापादय उदाहृताः, तथाऽपि

धानं स्यात् । तच्च न युक्तम् । अतो युक्तः प्रयाजशेषेणाभिघारणस्य मुख्यक्रमात्क्रम इति ।

स चासौ मुख्यक्रमः पाठक्रमाद् दुर्बलः । मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिः, पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान् । अत एवाग्नेयोपांशुयाजाग्नीषोमीयानां क्रमेणानुष्ठीयमानानामप्युपांशुयाजाज्यनिर्वापो मुख्यक्रमान्न पूर्वमनुष्ठीयते, तस्य दुर्बलत्वात्, पाठक्रमात्तु पश्चादनुष्ठीयते, तस्य प्रबलत्वादिति ।

स चायं मुख्यक्रमः प्रवृत्तिक्रमाद् बलवान् । प्रवृत्तिक्रमे ह्याश्रीयमाणे बहूनामङ्गानां प्रधानविप्रकर्षो भवति अस्मिँस्तु आश्रीयमाणे सन्निकर्षः । तद्यथा दर्शपूर्णमासयोरादावाग्नेयानुष्ठानं ततः सान्नाय्यस्य । तद्धर्माश्च केचित्पूर्वमनुष्ठीयन्ते । तत्र यदि प्रवृत्तिक्रममाश्रित्य तद्धर्माः सर्वे पूर्वमनुष्ठीयेरन् तत आग्नेयध-

---

तेष्विष्टक्रमस्य प्रधानाङ्गयाज्यानुवाक्यायुगुलप्रवृत्तिक्रमतोऽपि सिद्धेर्न मुख्यक्रमस्यासंकीर्णं तत्र प्रामाण्यमित्युदाहरणान्तरमेतैरुक्तम् । न च प्रथमपदार्थप्रवृत्तिरेव द्वितीयादिषु क्रमनियामिका न भाविपदार्थप्रवृत्तिरिति वक्तुं युक्तम्, न्यायसाम्यात् । तत्र यदीति । यद्यपि याज्यानुवाक्यायुगुलप्रवृत्तिक्रमानुरोधेनाग्नेयधर्मप्राथम्यमुचितम्, तथाऽपि जघन्यप्रवृत्तिक्रमान्मुख्यप्रवृत्तिक्रमो बलीयानित्याशयेनेदम् ।

र्मः तत आग्नेयानुष्ठानं ततः सान्नाय्यानुष्ठानं, तदा तद्धर्माणां स्वप्रधानेन सह द्वाभ्यामाग्नेयधर्मतदनुष्ठानाभ्यां विप्रकर्षः स्यात् । यदा तु सान्नाय्यधर्माणां केषाञ्चित्पूर्वमनुष्ठानेऽपि अन्ये सर्वे मुख्यक्रममाश्रित्याग्नेयधर्मानुष्ठानानन्तरमनुष्ठीयन्ते, तदा सर्वेषामाग्नेयधर्मसान्नाय्यधर्माणामेकैकेन विजातीयेन व्यवधानं भवति, आग्नेयधर्माणां स्वप्रधानेन सह सान्नाय्यधर्मैर्व्यवधानात् सान्नाय्यधर्माणां च स्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानादिति न विप्रकर्षः । तस्मान्मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान् ।

सहप्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्याऽनुष्ठाने कर्त्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद् यः क्रमः स प्रवृत्तिक्रमः । यथा प्राजापत्याङ्गेषु । प्राजापत्या हि "वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति" इति वाक्येन तृतीयानिर्देशात् सेतिकर्त्तव्यताकाः एककालत्वेन विहिताः । अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं सम्पादनीयम् । तत्र प्राजापत्यानां सम्प्रतिपन्नदेवताकत्वेनैकस्मिन्काले ऽनुष्ठानादुपपद्यते साहित्यम् । तदङ्गानां चैकस्मिन्काले ऽनु-

---

सङ्गेति । असन्निपातिनां प्रयाजादीनां तन्त्रानुष्ठेयसन्निपातिनामन्वाधानादीनां च प्रवृत्तिक्रमागोचरत्वं द्योतयितुं सन्निपातिनामावृत्त्ये-

ष्ठानमशक्यम्। न ह्यनेकेषां पशूनामुपाकरणमेकस्मिन्काले कर्त्तुं शक्यम्। अतस्तेषां साहित्यमव्यवधानेनानुष्ठानात्सम्पाद्यम्—एकस्योपाकरणं कृत्वा ऽपरस्योपाकरणमिति। अतः प्राजापत्येषु एकं पदार्थं सर्वत्रानुष्ठाय द्वितियः पदार्थोऽनुष्ठेयः। तत्र प्रथमपदार्थानुष्ठानं कस्माच्चित्पशोरारभ्य कर्त्तव्यम्। द्वितीयस्तु पदार्थो येन क्रमेण प्रथमोऽनुष्ठितः तेनैव क्रमेणानुष्ठेयः, प्रयोगविध्यवगतस्य मिथोऽङ्गसाहित्यस्योपपत्तये। प्रयोगविधिना हि दैक्षे तदङ्गानामुपाकरणनियोजनादीनां मिथः साहित्यमानन्तर्यापरपर्यायं विहितम्। तच्च साहित्यं सवनीयपशौ चोदकेन प्राप्तम्। तस्य प्राणिद्रव्यकत्वेन दैक्षविकृतित्वात्। सवनीयाच्चैकादशिने प्राप्तं सुत्याकालत्वसामान्यात्। तेभ्यश्च प्राजापत्येषु प्राप्तं गणत्वसामान्यात्। प्राजात्येषु च प्रतिपशु यागभेदाच्चोदका भिद्यन्ते। अतश्चोदकात्तत्तत्पश्वङ्गभूतानामुपाकरणनियोजनादीनां साहित्यमानन्तर्यापरपर्यायं प्राप्तम्। अत एकस्य पशोरुपाकरणानन्तरमेव नियोजनं चोदकबलात्कर्त्तव्यत्वेन प्राप्तम्, तत्तु न क्रियते, प्रत्यक्षवचनावगतसर्वपश्वङ्गसाहित्यानुपपत्तेः। अत एकस्मिन् पशावुपाकरणे कृते तदनन्तरमेव कर्त्तव्यत्वेन प्राप्तमपि पशुनियोजनं न क्रियते, प्रत्यक्षवचनबलात्तु पश्वन्तरेषु

षोडशसु उपाकरणमेव क्रियते । कृते तु तेषूपाकरणे प्रथमपशोर्नियोजनस्य तदीयोपाकरणेन व्यवधाने प्रमाणाभावात् प्रथमपशावेव नियोजनं कार्यम् । अतश्च येन क्रमेणोपाकरणं कृतं तेनैव क्रमेण नियोजनं कार्यम् । एवं च तत्तत्पशूपाकरणानां स्वस्वनियोजनैस्तुल्यं षोडशक्षणैर्व्यवधानं भवति । अन्यथा केषां चिदत्यन्तव्यवधानं केषां चिच्चाव्यवधानं स्यात् । तच्च न युक्तम् । तस्माद्येन क्रमेण प्रथमः पदार्थोऽनुष्ठितस्तेनैव द्वितीयोऽनुष्ठेयः । तत्सिद्धं प्रथमानुष्ठितपदार्थक्रमाद्यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति । तदेवं निरूपितः सङ्क्षेपतः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः ।

फलस्वाम्यबोधको विधिरधिकारविधिः । फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम् । स च 'यजेत स्वर्गकाम' इत्येवंरूपः । अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । 'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेत्' इत्यादिभिस्त्वग्निदाहादौ नि-

---

ति पदद्वयम् । तदीयोपाकरणेनेति । सहयोगे तृतीया । व्यवधान इत्यस्याधिकेत्यादिः । एवकारो भिन्नक्रमः । नियोजनमेवेति । षड्विधेति । अनेन क्रमनियामकमानषट्काभावे क्रमानियमः, यथा प्रधानाङ्गभूतेषु नानाशाखापठितेषु अनुमन्त्रणेष्विति दर्शितं शास्त्रे ।

मित्ते कर्म विदधद्भिर्निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते।

तच्च फलस्वाम्यं तस्यैव, योऽधिकारिविशेषणविशिष्टः। अधिकारिविशेषणं च तदेव, यत्पुरुषविशेषणत्वेन श्रुतम्। अत एव 'राजा राजसूयेन स्वाराज्यकामो यजेत'—इत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधतापि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते, किं तु राज्ञः सतस्तत्कामस्य।

किञ्चित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं भवति। यथाऽध्ययनविधिसिद्धा विद्या, अग्निसाध्येषु च कर्मसु आधानसिद्धाग्निमत्ता, सामर्थ्यं च। एतेषां पुरुषविशेषणत्वेनाश्रवणेप्यधिकारिविशेषणत्वमस्त्येव। उत्तरक्रतुविधीनां ज्ञानाक्षेपशक्तेरभावेनाध्ययनविधिसिद्धज्ञानवन्तं प्रत्येव प्रवृत्तेः, अग्निसाध्यकर्मणां चाग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः।

अत एव च शूद्रस्य न यागादावधिकारः। तस्याध्ययनविधिसिद्धज्ञानाभावात्, आधानसिद्धाग्न्यभावाच्च, अध्ययनस्योपनीताधिकारत्वात, उपनयनस्य च 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिना त्रैवर्णिकाधिकारत्वात्, आधानस्यापि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना त्रैव-

र्णिकाधिकारत्वात् ।

यद्यपि च 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेन रथकारस्य सौधन्वनापरपर्यायस्याधानं विहितं, योगाद्रूढेर्बलीयस्त्वात्, तथापि नास्योत्तरकर्मस्वधिकारः, अध्ययनविधिसिद्धज्ञानाभावात् । न च तदभावे आधानेपि कथमधिकारः, तदनुष्ठानस्य तत्साध्यत्वादिति वाच्यम् । तस्याध्ययनविधिसिद्धज्ञानाभावेपि 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेनैव विधिनाऽऽधानमात्रौपयिकज्ञानापेक्षणात् । अन्यथा एतस्यैव विधेरनुपपत्तेः । अतश्च रथकारस्याधानमात्रेऽधिकारेपि नोत्तरकर्मस्वधिकारो विद्याभावात् । एवं च तदाधानं नाग्निसंस्कारार्थम्, संस्कृतानामग्नीनामुत्तरत्रोपयोगाभावात्, किं तु तदाधानं लौकिकाग्निगुणकं विश्वजिन्न्यायेन स्वर्गफलं च स्वतन्त्रमेव प्रधानकर्म विधीयते । अग्नीनिति च द्वितीया 'सक्तून् जुहोति' इतिवत्तृतीयार्था इति ।

प्रकृतमनुसरामः । तत्सिद्धं शूद्रस्याध्ययनविधिसिद्धज्ञानाभावादाधानसिद्धाग्न्यभावाच्च नोत्तरकर्मस्वधिकार इति ।

नन्वेवं स्त्रिया अधिकारो न स्यात्, तस्या अध्ययनप्रतिषेधे तद्विधिसिद्धज्ञानाभावात् । न च नास्त्येवेति वाच्यम् । 'यजेत स्वर्गकाम' इत्यादौ स्वर्ग-

कामपदस्योद्देश्यसमर्पकत्वेन पुंस्त्वस्योद्देश्यविशेषणत्वात् ग्रहैकत्ववदविवक्षितत्वेन स्त्रिया अधिकारस्य साधितत्वादिति चेत्—सत्यम्। अधिकारः साधितो न तु स्वातन्त्र्येण, 'न स्त्री स्वातन्त्र्यमर्हति' इत्यादिना तस्य निषिद्धत्वात्।

---

न स्त्री स्वातन्त्र्यमर्हतीति ।

'रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके ।

अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियाः' ॥

इत्यस्य सङ्ग्रहायादिशब्दः ।

ननु नैतच्छास्त्रं स्त्रीणां विहिते कर्मणि स्वतन्त्राधिकारनिषेधाय, स्मरन्ति हि पूर्तव्रतादौ तासां स्वतन्त्राधिकारम् । नापि धनस्वामित्वप्रतिषेधाय, ''पत्नीदुहितर'' इत्यादिना तासामपि रिक्थग्राहित्वस्मरणात् । तन्निषेधे सहाधिकारस्याप्यसम्भवाच्च । अथ पुत्राणामिव पत्नीनामपि तुल्ये स्वत्वविभागकालेंऽशग्राहित्वं स्यात् ? अस्त्येव तत् ।

'यदि कुर्यात् समानंशान् पत्न्यः कार्याः समांशका' इति ।

अथ बहूनामविभक्तानां संसृष्टभ्रातॄणामिव तत्पत्नीनामपि तुल्ये स्वत्वे कस्याश्चिन्मृतभर्तृकायाः कथं स्वत्वनिवृत्तिः, तन्निवर्त्तकविक्रयाद्यभावे तन्निवृत्त्ययोगात् । न च नास्त्येवेति वाच्यम् ।

'यद्विभक्ते धनं किञ्चिद्दायादि विविधं स्मृतम् ।

तज्जाया स्थावरं मुक्त्वा लभते मृतभर्तृका ॥

वृत्तस्थाऽपि कृतेऽप्यंशे न स्त्री स्थावरमर्हति' । इति

बृहस्पतिना 'विभक्ते स्थावरभिन्नं लभते' इति वदता विभागाभावे तदपि न लभत इति सूचनात् । सकलनिबन्धसम्मतत्वाच्च तस्या इति चेत्, आस्तां सा, संन्यासपातित्यादिवद्भर्तृमरणादेरपि वाचनिकस्वत्वनिवर्तकत्वाभ्युपगमसम्भवात् । न च स्थावरस्वत्वनिषेधाय तच्छास्त्रम् । अत एव बृहस्पतिना विभक्तमृतभर्तृकायाः

स्वातन्त्र्येण कर्तृत्वे प्रयोगद्वयस्यापि वैगुण्यापत्तेश्च । यजमानप्रयोगे पत्नीकर्तृकाज्यावेक्षणादिलोपप्रसङ्गात् पत्नीप्रयोगे च यजमानकर्तृकाज्यावेक्षणादिलोपात् । अतो दम्पत्योः सहाधिकारः । सहाधिकारत्वेन यजमानविद्ययैव पत्न्या अपि कार्यसिद्धेर्न ज्ञानं विना तस्या अधिकारेऽनुपपत्तिः । 'पाणिग्रहणात्तु सहत्वं सर्वकर्मसु तथा पुण्यफलेषु'इति वचनेन स्त्रिया अधिकारनिर्णयाच्च । निषादस्थपतेरिवाध्ययनविधिसिद्धज्ञानविरहिणोपि 'एतया निषादस्थपतिं याजयेत्'इति वचनान्निषा-

---

स्थावरलाभनिषेधः सङ्गच्छते । ततश्च शालाया अभावे कथं कर्माधिकार इति वाच्यम् ।

'जङ्गमं स्थावरं हेम कुप्यं धान्यरसान्वितम् ।
आदाय तच्छ्राद्धकर्म कुर्यात् षाण्मासिकादिकम्' । इति

प्रजापतिना स्थावरस्वीकरणस्यापि विधानात् । न च वचसोर्विरोधः, तादृश्या रिक्थग्रहणविधायके 'पत्नीदुहितर' इत्यादौ पत्नीपदश्रवणेन बृहस्पतिवचसो जायापदोपेतस्य पत्नीभिन्नासुरादिविवाहोढाविषयत्वेन निबन्धकर्तृभिर्व्यवस्थापनात् । स्मर्यते हि—

'क्रयक्रीता तु या नारी न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः ॥' इति ।

केचित्तु दुहितृरहितपत्नीविषयत्वं बृहस्पतिवचनस्याहुः । तच्चिन्त्यम् । आस्तां वा विभक्तमृतभर्तृकाया अपुत्राया धनमात्र इव विभक्तमृतभर्तृकायाः स्थावरे ऽपि स्वत्वानिवृत्तिर्वाचनिकोपायात्, अतो ऽकार्यकरणवारणाधिकृतपित्राद्याज्ञानुल्लङ्घनमेव

देष्टव्याम्। निषादस्थपतिशब्दे हि निषादश्चासौ स्थपतिश्चेति कर्मधारयो, न तु निषादानां स्थपतिरिति षष्ठीतत्पुरुषः षष्ठ्यर्थे लक्षणापत्तेः। एतावांस्तु विशेषः निषादस्याध्ययनविधिसिद्धज्ञानाभावेन एतस्यैव विधेस्तत्कर्मौपयिकज्ञानाक्षेपकत्वम्। पत्न्यास्तु तादृशज्ञानाभावेपि यजमानेन सहाधिकारात्तस्य च तादृशज्ञानवत्त्वात्तेनैव च तस्याः कार्य्यसिद्धेर्नोत्तरक्रतुविधीनां ज्ञानाक्षेपकत्वम्। ये तु पत्नीमात्रकर्तृकाः पदार्था आज्यावेक्षणादयस्ते ज्ञानं विनाऽशक्यानुष्ठाना इति तद्विधीनां तदाक्षेपकत्वं स्वीक्रियते इति। तत्सिद्धमध्ययनविधिसिद्धज्ञानस्याधानसिद्धाग्निमत्तायाश्चोत्तरकर्मसु अधिकारिविशेषणत्वमिति।

एवं सामर्थ्यस्यापि अधिकारिविशेषणत्वम्। असमर्थं प्रति विध्यप्रवृत्तेः। आख्यातानामर्थं ब्रुवतां शक्तिः

---

स्वातन्त्र्यनिषेधशास्त्रार्थोऽत आह। स्वातन्त्र्येणेति। तत्र हेतुमाह। यजमानेति। पत्नीति। यजमानपत्नीशब्दौ हि स्वामिवचनौ यजत इत्यर्थे यजमानपदव्युत्पत्तेः। "पत्युर्नो यज्ञसंयोगे" इति स्मरणाच्च। यस्मिंश्च प्रयोगे अवेक्षणं विधीयते तत्प्रयोगनिरूपितस्वामित्वमेव तच्छब्दार्थः। यथा "पितृभ्यो दद्याद्" इत्यत्र यं प्रति दानविधिः तन्निरूपितपितृत्वं पितृपदार्थः, तथैवानुभवात्। तथा च नर्त्विग्भ्यस्कथं चिदानतेनान्यतरेणावेक्षणादपूर्वसिद्धिरित्याशयः। निषादश्चेति। षष्ठीतत्पुरुषे निषादपदार्थस्याश्रुतषष्ठ्यर्थान्वयन-

सहकारिणीति न्यायात् । तच्च सामर्थ्यं काम्ये कर्मणि अङ्गप्रधानविषयम् । न त्वङ्गासमर्थः प्रधानमात्रसमर्थश्च काम्ये कर्मण्यधिकारी । प्रधानविधेरङ्गविध्येकवाक्यतापन्नस्य साङ्गकर्मसमर्थं प्रत्येव प्रवृत्तेः यथाविनियोगमधिकारात् । यदि हि समर्थं प्रत्येव प्रवृत्तौ कया चित् श्रुत्या विरोधः स्यात् तदा ऽसमर्थस्याप्यधिकारः स्यात् । न च विरोधोऽस्ति । स्वर्गकामश्रुतेः समर्थं प्रत्येव प्रवृत्तौ विरोधाभावात् । प्रत्युतासमर्थं प्रति प्रवृत्तौ प्रधानविधेरङ्गवाक्यैकवाक्यतया प्रतिपन्नस्याङ्गसाहित्यस्य बाधापत्तेः । नित्यवत् श्रुतानामङ्गानां पाक्षिकत्वप्रसङ्गाच्च । अतः साङ्गे प्रयोगे समर्थस्यैव काम्ये कर्मण्यधिकारः ।

नित्यकर्मणां त्वङ्गेषु यथाशक्तिन्यायः । तानि हि यावज्जीवश्रुत्या यावज्जीवं कर्त्तव्यत्वेन चोदितानि । न च यावज्जीवं केनापि साङ्गः प्रयोगः कर्त्तुं शक्यते । अतो नित्यकर्मसु प्रधानमात्रसमर्थोऽधिकारी, अङ्गानि तु यावन्ति कर्त्तुं शक्यन्ते तावन्ति कार्याणी-

---

न कर्मधारयेऽन्यपदार्थस्याश्रुतविभक्त्यर्थान्वयः कल्प्यः, येन तल्लक्षणाऽऽपद्येत, श्रुतद्वितीयाया एव पदद्वयार्थान्वय इति सूचयितुं वृत्त्युत्तरभाविन्या अपि विभक्तेर्वृत्त्यर्थकथनपरे वाक्ये निर्देशः । नित्यकर्मणामिति । अवश्यकर्त्तव्यतया विहितानामित्यर्थः । तानिहीति । आद्यं तृतीयान्तं निमित्तश्रुतिमात्रोपलक्षणार्थं, द्वितीयमवश्यकर्त्तव्यतायाः । यावज्जीवमिति । प्रतिनिमि-

त्यास्तां बहूक्त्या, सूरिभिः पराक्रान्तत्वात् ।

तत्सिद्धं फलस्वाम्यबोधको विधिरधिकारविधिरिति । तदेवं निरूपितं चतुर्विधभेदनिरूपणेन विधेः प्रयोजनवदर्थपर्यवसानम् ।

मन्त्राणां च प्रयोगसमवेतार्थस्मारकतयाऽर्थवत्त्वम् न तु तदुच्चारणमदृष्टार्थम्, दृष्टे सम्भवति अदृष्टस्यान्याय्यत्वात । न च दृष्टस्य प्रकारान्तरेणापि सम्भवात् मन्त्राम्नानमनर्थकम् । मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात ।

---

त्तमित्यर्थः । यथाशक्त्युपबन्धे हि अवश्यकर्त्तव्यता बीजं, तस्यां च निमित्तश्रुतिः । यत्राप्यकरणदोषश्रुत्या यादिमहिम्ना ऽवश्यकर्त्तव्यतां स्मरन्ति तत्रापि यादृशकाले यादृशकर्त्तुर्वा विधेयविधिः तादृग्रूपविशेषस्यैव निमित्तत्वकल्पनात् न निमित्तश्रुतिं विना क्वचिदपि तत्सिद्धिः । निमित्तं च क्वचिद्यावज्जीवशब्दात् यथा 'यावज्जीवमग्निहोत्रं जुहुयात्'इत्यादौ । तथाऽन्यत्र सप्तम्यादिनाऽपि यथा 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते'इत्यादौ ॥ ० ॥

इति श्रीमदापदेवसुतानन्तदेवकृतायां
न्यायप्रकाशटीकायां पूर्वार्द्धं समाप्तम् ॥

साधनद्वयस्य पक्षे प्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः । यथाहुः ।

'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते' इति ।

---

दध्ना पूरितमात्ममूर्द्धि कलशं धृत्वा व्रजन्तीं व्रजे
कां चिद्गोपकुमारिकां क्व नु गतिर्युक्तेति संमुह्यतीम् ॥
दृष्ट्वा श्रीमुरलीधरः स्मितयुतभ्रूयुग्मभङ्ग्या यया
तस्यै सूचितवान् गतिं समुचितां पायात्तया मे मतिम् ॥

किं तन्मात्रविषयं नियमविधित्वं यन्मन्त्रैरेवेत्येवकारेण प्रकटीक्रियते ऽत आह साधनेति । द्वयशब्दो ऽनेकमानपरः । ध्यानोपदृष्टमन्त्रादीति पक्षप्राप्ताविति यावत् । अन्यतरस्य मन्त्रस्येत्यर्थः । नियमेत्यस्य मन्त्रेत्यादिः । तेन यद्यपि कश्चित्साध्यनियमविधिः सम्भाव्यते तथापि न तदव्याप्तिकृतो दोषः नियमविधिलक्षणस्येहानुपन्यासात् अनन्तरोपन्यस्तनियमविधित्वप्रपञ्चनमात्रपरत्वादस्य ग्रन्थस्य । नन्वसत्यामपि जपादृष्टसाधनत्वेन मन्त्रस्य पाक्षिकप्राप्तौ "वैष्णवीं जपेत्"इति भवत्येव नियमविधिः तस्यादृष्टसाधनताविधायकत्वात् साधनतायाश्च नियमघटितत्वात्तत्किमिति मन्त्रनियमविधित्वाय पक्षप्राप्तिरपेक्षणीयेति चेन्न । अनया दिशा सर्वस्यैव विधेर्नियमविधित्वापत्तौ विधित्रैविध्योच्छेदापत्तेः उक्तं च तद्भट्टपादैरित्याशयेनाह । यथाहुरिति ।

नन्वत्यन्ताप्राप्त इति विषयसप्तमी, सतिसप्तमी वा । आद्ये येन रूपेण विषयाप्राप्तिस्तेन रूपेण तत्प्राप्तिफलकत्वमवश्यं विवक्षणीयम्, अन्यथा ऽतिप्रसङ्गात् । तत्र स्वरूपेणात्यन्ताप्राप्तविषयत्वं विवक्षितं (१) प्रकृतोद्देश्यसम्बन्धित्वेनात्यन्ताप्राप्तविषयत्वं वा (२) प्रकृतविवक्षितोद्देश्यतावच्छेदकावच्छिन्नसम्बन्धित्वेनात्यन्ताप्राप्तविष-

यत्वं वा (३) प्रकृतान्यतरोद्देश्यसम्बन्धित्वेनात्यन्ताप्राप्तविषयत्वं वा (४) तादृशोद्देश्यसम्बन्धित्वेनात्यन्ताप्राप्तप्रापणीयरूपाविशिष्टविषयत्वं वा (५)

नाद्यः। "उलूखलं सर्वौषधस्य पूरयित्वाऽवहन्त्यथैतदुपदधाति" इत्यवघातविध्यव्याप्तेः तत्स्वरूपस्य लोकसिद्धत्वात्।

न द्वितीयः। यद्यप्युक्तावघातविधौ प्रकृतादृष्टसंस्कारकृतासम्बन्धेन प्रकृतोद्देश्यसम्बन्धितयाऽत्यन्ताप्राप्तविषयत्वसत्वान्नाव्याप्तिः तथापि द्वादशाहिकपार्ष्ठिकाद्याहर्द्वयविषये अनीकान्तर्गताग्रताविधौ गवामयनिकाद्याहर्द्वयविषये ऽनीकाबहिर्भूताग्रताविधौ चाव्याप्तेः। तथाहि उक्तपार्ष्ठिकाहनि क्रमेण रथन्तरबृहत्सामके तत्प्रकृतौ च "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यदि बृहत्सामा शुक्राग्रान्" इत्याम्नातं, द्वादशाहे च "ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहरथेतरेषां नवानामन्हामैन्द्रवायवाग्रं प्रथममहरथशुक्राग्रमथाग्रयणाग्रम्" इत्येवं ऽनीकाविधिराम्नातः तत्रोक्ताह्नो विकृतौ गर्गत्रिरात्रादौ रथन्तरादिनिमित्ताभावेऽपि तत्तदग्रतयोः प्राप्तौ अतिदेशेन सम्भवत्प्राप्तिकयोरप्यग्रतयोः पुनर्विधानान्नित्यत्वमापद्यते तथा गवामयनस्यैकषष्ट्यधिकशतत्रयस्तुत्यात्मनः पूर्वपक्षस्याशीत्युत्तरशतस्तुत्यात्मके ऽनीकाऽऽम्नाता "ऐन्द्रवायवाग्रं प्रथममहरथशुक्राग्रम्" इत्येवं, तत्र नाहर्धर्मत्वेनाग्रता विधेया, अथ शब्दवैयर्थ्यापत्तेः नापि प्राथम्यविशिष्टाहर्धर्मत्वेन, वाक्यभेदात्, किंतु प्रथमादिभागधर्मत्वेन, अहःशब्दस्तु तत्सङ्ख्यानुवादः, अतो विंशतिस्तुत्यात्मनि प्रथमभागे प्राप्तायामैन्द्रवायवाग्रतायां तदाद्यान्होः पुनस्तदग्रताविधी वर्त्तेते, तौ च तद्विकृत्येकाहयोस्तदग्रताप्राप्त्यर्थावित्युक्तमाकरे। एवंचोदाहृतेष्वग्रतापुनर्विधिषु तत्तदुद्देश्याहःसम्बन्धित्वेन तत्तदग्रतानामप्राप्त्यभावादव्याप्तिः।

न तृतीयः यद्यप्येवं नोक्ताव्याप्तिः आद्यविषये प्रातिस्विकाति-

अस्यार्थः । यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः । यथा 'यजेत

---

देशेन तत्तत्सुत्यापूर्वसाधनत्वावच्छिन्नधर्मतया प्राप्तयोरप्यग्रतयोः परमापूर्वसाधनत्वावच्छिन्नसम्बन्धित्वेनाप्राप्ते ऽपनीकाविधौ च गावामयनिकतद्विध्युक्तन्यायेन यज्ञभागधर्मतया विधेये अग्रते प्रति परमापूर्वसाधनत्वस्यैवोद्देश्यतावच्छेदकत्वेन विवक्षितत्वात् । द्वितीयविषये ऽप्युक्तन्यायेन परमापूर्वसाधनत्वावच्छिन्नसम्बन्धित्वेनाप्राप्तयोरग्रतयोस्तत्तत्सुत्यापूर्वसाधनत्वावच्छिन्नसम्बन्धित्वेनाप्राप्तेः, तत्पुनर्विध्योश्च तदपूर्वसाधनत्वस्यैवोद्देश्यतावच्छेदकत्वेन विवक्षितत्वात् । तथाप्यवघातविधावतिव्याप्तेः त्रिवक्षितोद्देश्यतावच्छेदकीभूतापूर्वसाधनत्वावच्छिन्नसम्बन्धितयैतद्विधिमन्तरेणावघाताप्राप्तेः, तथा "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्"इति विधावव्याप्तेश्च, अत्र हि देवताद्यर्था उचितशब्दैरनिर्देशात्प्राप्तत्वात्पुनर्विधाने फलाभावाच्च न विधीयन्ते, पूर्णमासीसम्बन्धस्तु विधीयते, यद्यप्यदो वाक्यं प्रकृत श्रुते "उपांशुयाजमन्तरा यजति" इतिविधिना पूर्णमासीवत्यैतराले यागं विदधताऽर्थात्तत्सम्बन्धः प्रापितः तथाऽपि विद्वद्वाक्याधिकारवाक्यगताभ्यां पूर्णमासीपदाभ्यां कालसम्बन्धं निमित्तीकृत्य कर्माभिधायिभ्यां शब्दोक्तकालसम्बन्धित्वाग्नेयादिषु सत्स्वार्थिकतत्सम्बन्ध्युपांशुयाजग्रहणायोगेन तस्य तैः सह फलसम्बन्धो न स्यात्स मा भूदित्येवमर्थं पुनर्विधीयते तत्र विवक्षितोद्देश्यतावच्छेदकीभूतपूर्णमासीत्वावच्छिन्नसम्बन्धित्वेन विषयीभूतयागस्य प्राप्तत्वादव्याप्तिः ।

अथ इत्याच्चतुर्थः तथा सत्युक्तसकलदोषोद्धृतेः, अग्रताविधिषु हि तत्तत्सुत्यात्मकप्रकृतोद्देश्यसम्बन्धित्वेन प्राप्तविषयेष्वपि सम्भवत्यप्रकृतसद्विकृत्यात्मकोद्देश्यसम्बन्धित्वेनाप्राप्तविषयप्राप्तिफल·

कत्वम्। न च तत्तत्सम्बन्धाबोधकानां विधीनां कथं तत्प्राप्तिफलकत्वमिति शङ्क्यम्। नहि विध्यबोध्यबोधो न विधेः फलमिति नियमसम्भवः गर्दभरशनानिवृत्तिबोधस्य प्रसिद्धपरिसङ्ख्याविध्यफलत्वापत्तेः। अध्ययनश्रवणविधिकृतो हि वैदिकपौराणादिवचसां फलनियमः। अध्ययनविधिश्च यथा ऽर्थवादेभ्यो ऽनन्तरोत्पन्नमपि भूतार्थप्रत्ययमुल्लङ्घ्य तत्फलत्वेन प्राणाडिकं प्राशस्त्यप्रत्ययमनुमन्यते तथा कैश्चिद्विधिभिर्जनितामप्यप्रवृत्तिविशेषकरीं प्राप्तिमुल्लङ्घ्य प्रणाड्या तत्प्रयुक्तामपि प्राप्तिं प्रवृत्तिविशेषकरीं तत्फलत्वेनानुमन्यते। यदि तु क्वचिद्व्यवहिताव्यवहितप्राप्तिद्वयमपि प्रवृत्तिविशेषपरं तत्र दीक्षणीयावाक्ल्यिमन्यायेनाव्यवहितामेव फलत्वेन स्वीकरोति, अत एवाप्राप्तदशायामवघातप्रापणमेव तद्विधेः फलं, न तु दलनादिनिवृत्तिबोधः तन्निवृत्तिबोधस्यावघातीयतद्दर्शयागप्रापणाधीनजन्मत्वात्। एवं च यत्सम्बन्धित्वेनावघातप्राप्तिर्विधेः फलं तस्मिन्प्रकृतोद्देश्येऽवघातस्य पक्षे प्राप्तत्वान्नातिव्याप्तिरपि। नचैवमपि "खादिरो यूपो भवति"इत्यत्रातिव्याप्तिः यूपस्यादृष्टात्मकत्वेन तत्सम्बन्धितया खादिरताया अत्यन्ताप्राप्तिरिति शङ्क्यम्, दृष्टादृष्टसंस्कारगणात्मकयूपे खादिरताजन्यपरिच्छेदात्मकदृष्टांशस्यैव तां प्रत्युद्देश्यत्वात्तत्र च तस्याः पक्षप्राप्तिसम्भवादिति चेत्। न। एवमपि 'वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै स जाता विश्वानेव देवान्त्स्वेन भागधेयेनोपधावति त एवास्मै सजातान्प्रयच्छंति ग्राम्येव भवति"इतिश्रुते साङ्ग्रहणीफलसम्बन्धविधावव्याप्तेः। अयं हि न तस्यास्तत्सम्बन्धप्राप्त्यर्थः अर्थवादादेव तत्सम्बन्धप्राप्तिसम्भवात्। यद्यप्यौदुम्बराधिकरणादौ केवलार्थवादस्य फलसम्बन्धप्रामाण्यं निरस्तं तथा ऽपि "सव्यं हि मनुष्याः पूर्वमाञ्जत' 'उपरि हि देवेभ्यो धारयति"इत्याद्यर्थवादोन्नीतविधेस्तदर्थप्रामाण्यं "विधिस्तु धारणेऽपूर्वत्वात्"इत्यादिन्यायेनाभ्युपगम्यत एव। एवं च यथा मन्त्रलिङ्गकल्प्यविधिनैव रशनाद्वये मं-

अप्राप्तिसम्भवाच्छ्रुतविधेर्न मन्त्ररशनासम्बन्धप्राप्तिः फलं, तथा ग्रामकामान्तोक्तविधेरभावेऽप्युक्तार्थवादोन्नीतविधिमहिम्ना वैश्वदेवयागस्य सञ्जातसङ्घातात्मकग्रामलाभसम्बन्धप्राप्तिसम्भवान्नोक्तविधेस्तत्सम्बन्धप्राप्तिः फलं, किं त्वामनहोमानां साङ्गुण्यङ्गत्वसिद्धिः उक्तरीत्या ऽर्थवादात्तस्यास्तत्सम्बन्धलाभे हि सुतरामामनहोमविधौ रात्रिसत्रवदार्थवादिकः फलसम्बन्धः स्यात् । एवं हि तद्विधिः श्रूयते "आमनहोमान् जुहोति एतावन्तो वै सजाता ये महांतो ये क्षुल्लका याः स्त्रियस्तानेवावरुन्धे त एनमवरुद्धा उपतिष्ठन्ते" इति । सति तु प्रत्यक्षविधिबोधिते तस्याः फलसम्बन्धे भवति प्रयाजवत्तेषां तदंगत्वं, अतउक्तोष्टिविधिः प्रकृते अप्रकृते चोद्देश्ये स्वविषयप्राप्तिफलकत्वाभावाद्भवति तत्राव्याप्तिः । तथा "अथातो ऽग्निमग्निष्टोमेनानुयजति" इति प्रकृसाम्नातेषु "तमुक्थेन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेण" इति वैकृताग्निविधिष्वप्यव्याप्तिः एते हि न विकृतिष्वग्निप्राप्त्यर्थाः आद्यवाक्येन प्रकृत्यङ्गतया विहितस्यातिदेशेनैव विकृतौ प्राप्तिसम्भवात्, नाप्यातिदेशेनोत्तरवेद्या सह विकल्पेन प्राप्तस्याग्नेर्नियमार्था विकृत्यन्तरेभ्यो ऽग्निपरिसंख्यार्थाः, गृहमेधीयाज्यभागविधिवदुद्देश्यविकृतिष्वङ्गान्तरपरिसंङ्ख्यार्था वा, उद्देश्यविकृतिगतानेकचोदकालोचनापेक्षायास्तद्गतविकृत्यन्तरगतानेकचोदकालोचनापेक्षाया वा फलत्वकल्पनाया स्तदुभयानपेक्षफलान्तरकल्पनासम्भवे गौरवग्रस्तत्वेनान्याय्यत्वात् अङ्गान्तरपरिसंख्यायाश्च गृहमधीयाधिकरणे पञ्चमपक्षवदङ्गीकृतौ त्रैदोष्यात् सिद्धान्तन्यायेनाभ्युपगमस्य च प्राकृताङ्गविधिनिष्पत्त्युत्तरभाविनि वैकृतविधौ वक्तुमुचितस्य प्राकृताग्निविधिसमकालं निष्पद्यमाने वैकृताग्निविधौ वक्तुमनुचितत्वात् सम्भवतित्वाष्टामिकन्यायेनातिदेशेनासम्भवव्याप्तिकानां "श्येनचितिं चिन्वीत स्वर्गकाम" इत्यादिविधिविहितानां चयनाश्रित-

काम्यगुणानां प्रकृताविव विकृतिष्वप्याश्रयोपदेशमहिम्ना प्राप्तिसिद्धिस्तेषां फलम्, उक्तं चैवं दाशमिकाकरग्रन्थे, अतश्चाऽसन्तामाप्तकाम्यगुणप्राप्तिफलतयाऽपूर्वविधित्वेन निर्णीतेष्वपि वैकृताग्निविधिष्वप्रकृतोद्देश्यसम्बन्धित्वेन स्वविषयप्राप्तिफलकत्वाभावादव्याप्तिः ।

अत्राहुः-नैषाऽव्याप्तिः सङ्गच्छते, अर्थवादाधिकरणे 'अभागिप्रतिषेध' सूत्रे वार्त्तिकन्यायसुधाकृद्भ्यां 'पशुकामश्चिन्वीत'इत्यादिवाक्यैः फलार्थत्वेनोक्तस्याग्नेरनङ्गत्वेनातिदेशतो ऽसम्भवत्प्राप्तिकत्वे सत्युक्तविधीनां काम्यगुणावाप्त्यर्थत्वासम्भवात् । नच 'य एवं विद्वानग्निं चिनुत'इत्युत्पन्नाग्नेरुक्तवाक्यैः फलार्थस्यापि संयोगपृथक्त्वन्यायेन खादिरतावदग्निष्टोमादिवाक्यैः क्रत्वर्थमपि किं न स्यादिति शङ्क्यम् । फलार्थतया विहितस्याग्नेरनारभ्याधीतस्य खादिरतावत्प्रकरणाश्रयमलभमानस्यावश्यापेक्षिताश्रयसमर्पकत्वेनैवाग्निष्टोमादिवाक्यानामभ्युपेयत्वात् । यद्यपि दीक्षणीयादिसौमिकाङ्गसङ्कीर्णसावित्रहोमाद्यङ्गवत्त्वात्तद्वैशेषिकगुणरुक्मप्रतिमोचनाद्यङ्गवत्त्वाच्च लिङ्गादग्नेः सोमयागाश्रितत्वं सम्भाव्यते, तथापि न प्रकृत्याश्रयत्वं तस्या वाचनिकोत्तरवेद्यवरुद्धाया लैङ्गिकतद्विरोध्यग्न्याश्रयत्वायोगात् । विकृत्याश्रयत्वे तु सम्भाविते ऽग्निष्टोमोक्थ्यातिरात्रवाक्यानि तस्य प्रकृत्याश्रयत्वप्रापकाणि भवेयुः अप्राप्तपक्षपातित्वाद्विधेः । तथा च सति वाचनिकाश्रयनिराकाङ्क्षस्य लैङ्गिकाश्रयकल्पनाया असम्भवे सति द्विरात्रादिवाक्यान्यप्याश्रयप्रापकाणीत्येव वस्तुस्थितिरुचितेति । ननु नैतद्युक्तं लैङ्गिकेनापि काम्यतया स्वतः प्रबलेनाग्निना वाचनिक्या अपि नित्यत्वेन स्वतो दुर्बलाया उत्तरवेद्या बाधसम्भवात् चमसगोदोहनादौ सामान्यविशेषादिन्यायतो ऽपि विवक्षितबाधसम्भवेनेदृशस्थल एव काम्यनित्यबाधन्यायासङ्कीर्णोदाहरणसम्भवात् । वस्तुतस्तु नैवोत्तरवेद्यग्न्योःपरस्परबाधकत्वं 'उत्तरवेद्या ह्यग्निश्चीयत' इति-

श्रुतिबलेनाग्निनिधाने चितस्थलोत्तरवेद्योः वेदिबर्हिषोर्हविरासादन इव समुच्चयावगमात्, अतोऽग्नेर्लिङ्गादेव प्रकृतिविकृत्याश्रितत्वे प्राप्ते ऽग्निष्टोमादिवाक्यानि क्रत्वङ्गत्वपराणीत्येवाभ्युपेयम्। नचानारभ्याधीतस्याग्नेः काम्यतया "प्रकृतौ वाऽद्विरुक्तत्वाद्"इतिन्यायाविषयस्य लिङ्गात्सकलसोमयागाश्रितत्वे प्राप्तेषु चित्पुनर्विधिश्रवणमितराश्रितत्वपरिसङ्ख्यार्थं कुतो न स्यादिति शङ्क्यम्। अत्यन्ताप्राप्तपरिसङ्ख्यातः क्रत्वङ्गत्वप्रतिप्रसवस्यैवोचितत्वात्, आधानविधिसिद्धस्य "यदाहवनीये जुहोति"इति क्रत्वङ्गतयाऽवगतस्याहवनीयस्य संस्कारकतया ऽवगम्यमाने हि चयने जुहूद्वारा पर्णतायामिवाहवनीयद्वारा क्रत्वङ्गत्वं प्रसक्तम्। नचैवमाहवनीयद्वारा तत्साध्यसकलप्रयोगस्य क्रत्वर्थत्वापत्तिः यत्क्रत्वर्थो ऽग्निः स्थण्डिले निधीयते तादर्थ्यकल्पनाया एवौचित्याभावात्वात् सोमयागसङ्कीर्णप्रयोगस्य चयनस्यानुष्ठानमादेशात्मकस्थानेन विशिष्य सोमयागाङ्गत्वनिश्चयाच। इत्थं प्रसक्तं क्रत्वङ्गत्वमग्नेः काम्यत्वबोधकवाक्यैरपोदितं, शास्त्रेण फलवत्तया बोधिते क्रत्वङ्गत्वकल्पनाया अनुत्थानात् तत्प्रतिप्रसवोऽग्निष्टोमादिवाक्यैः क्रियते लाघवात्। अतः प्रकृत्यङ्गत्वेन विहितस्यातिदेशेन सम्भवत्प्राप्तिकस्य प्रापकेषु काम्यगुणप्राप्तिफलकेषु वैकृतविधिषु भवेदव्याप्तिरिति।

मैवम्। भवन्तु क्रत्वर्थत्वबोधकान्युक्तवाक्यानि, तथापि न तावदग्निष्टोमोक्थ्याऽतिरात्रवाक्येष्वव्याप्तिः तेषां तत्तत्संस्थावत्प्रकृतावप्राप्ताग्निप्रापकत्वात्। नच प्रकृतिभूतयोरप्युक्थ्यातिरात्रयोरग्निष्टोमविकारत्वादतिदेशेनाग्निलाभः शक्यः, तयोः संस्थयोः काम्यगुणत्वेनाश्रयीभूतज्योतिष्टोमविकारत्वे ऽपि तद्विशिष्टज्योतिष्टोमस्याविकारत्वात् एकस्मिन्नेव हि ज्योतिष्टोमेऽग्निष्टोमसंस्था, दर्शे चमसवन्नित्यो गुणः, उक्थ्यषोडश्यतिरात्रसंस्थास्तु

तत्रैव गोदोहनवत्काम्या गुणाः, अतो दर्शवदेव गुणभेदमात्रेण न तस्य प्रकृतिविकृतिभावः सम्भवतीति नातिदेशेनाग्निलाभो ऽतिरात्रोक्थ्यसंस्थयोर्ज्योतिष्टोमयोः, नाप्यग्निष्टोमवाक्योपदेशमहिम्ना तत्र तल्लाभः "अप्यग्निष्टोमे राजन्यस्य गृह्णीयाद्" इतिवदन्यसंस्थयोस्तयोस्तदप्रवृत्तेः, तस्मादप्राप्ताग्निप्रापकत्वेनाग्निष्टोमादिवाक्यत्रये नाव्याप्तिः।

नन्वेवमप्यग्निष्टोमादिशब्दानां प्रकृतिविकृतिसाधारणत्वादुक्तवाक्यत्रयं प्रकृताविव विकृतिष्वप्यग्निविधायकमिति वाच्यम्। तत्र विकृतिविध्यंशे ऽतिदेशसम्भवात्प्राप्तप्रापके स्यादव्याप्तिः "अथाप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थे ग्राह्यो ऽतिरात्रे ब्राह्मणस्य" इतिषोडशविषयवचनेष्विवोक्तवचनेष्वप्यग्निष्टोमादिशब्दानां प्रकृतिमात्रपरत्वं किं न स्यात्। तथा सति प्रकृतिविकृत्योरग्नेरेकविधिविधेयत्वरूपसामानविध्यप्रतिपादकस्य "ग्रहणं समानविधानं स्यात्" इतिसूत्रस्यानुपपत्तिरिति चेन्न। गुणप्राप्त्यर्थमुपदेशरूपतयैकरूपाविधिविधेयत्वात्मनः सामानविध्यस्य तत्र सूत्रे विवक्षितत्वात् एकविधिविधेयत्वविवक्षाया निष्प्रयोजनत्वात्। अहर्गणे ऽपि "अग्निवत्समानविधानं स्यात्" इति द्वादशाहिकपार्ष्ठिकाद्याहर्द्वयविषयाग्रताविध्योः सामानविध्यफलत्वकथनपरे सूत्रे ऽग्निवदिति दृष्टांतोपन्यासेन तस्य सूत्रस्य तथा तात्पर्यसूचनाच्च। दार्ष्टांतिके हि प्रकृतौ "यदि रथंतरसामा" इति, विकृतौ "ऐन्द्रवायवाग्रं प्रथममहः" इति विधिभेदादेकरूपविधिभ्यां विधेयत्वमेव सामानाविध्यं विवक्षितं ततोदृष्टान्ते ऽग्नावपि तादृशमभिप्रेतमिति प्रतीयते तस्मात्प्रकृतिमात्रपरे ऽग्निष्टोमादिवाक्यत्रये नाव्याप्तिरिति।

नैवम्। तथा सामानविध्यव्याख्यायां प्राकृतविधिना क्लृप्तोपकारतयाऽवगतस्याग्नेर्वैकृतविधिषु गृहमेधीयाज्यभागवि-

धिप्रायेण परिसङ्ख्यार्थत्वसम्भवेन तन्त्ररत्ने प्रदर्शितस्य परिसङ्ख्यानिरासस्यासम्भवापत्तेः एकविधिविधेयत्वरूपसामानविध्ये तु वैकृतविधेः प्रागक्लृप्तोपकारकत्वेन तन्निरासोपपत्तेः । किञ्च षोडशिविषयाग्निष्टोमादिशब्दानां यथा ज्योतिष्टोमप्रकरणं सङ्कोचकमस्ति, नैवमनारभ्याधीताग्निवाक्यगताग्निष्टोमादिशब्दानां, असति संकोचके "यदाहवनीयेजुहोति"इत्यस्येवोक्तवाक्यानामपि प्रकृतिविकृतिसाधारणत्वमेवोचितं, ततश्च विकृतिविध्यन्ते भवेदव्याप्तिरिति ।

उच्यते । यत एव प्रकृतिविकृतिसाधारणा अमी विधयः अतएवैतदभावे तत्तत्संस्थाकप्रकृत्यङ्गत्वासिद्धेर्विकृतिषु नातिदेशेनाग्नेः सम्भवत्प्राप्तिकत्वमिति नाव्याप्तिरग्निष्टोमादिवाक्यगतविकृतिविध्यंशेऽपि, नापि द्विरात्रादिवाक्येषु प्रकृतिविकृतिसाधारणाग्निष्टोमादिवाक्यैरेव द्विरात्रादिगताग्निष्टोमादिसंस्थाहःस्वौपदेशिकाग्निलाभेन काम्यगुणप्रवृत्त्युपपत्तौ काम्यगुणप्रवृत्त्यर्थाग्निप्रापणस्य द्विरात्रादिवाक्यैरसम्भवात् । यद्यपि द्विरात्रादिगतत्वेन सम्पाद्यमाने षोडशसंस्थेऽह्नि नाग्नेरौपदेशिकत्वं तेभ्यो लभ्यते तथाप्येकफलसाधनाहःसु साधारणाङ्गस्याग्नेः षोडशिभिन्नसंस्थाहःस्वौपदेशिकत्वमहिम्ना तदाश्रितगुणप्रवृत्त्युपपत्तौ न तस्मिन्नौपदेशिकत्वसम्पादनस्य किञ्चित्फलम्, आश्रयस्यौपदेशिकानुष्ठानमेव हि काम्यगुणप्रवृत्तौ तन्त्रं, न त्वनौपदेशिकानुष्ठानाभावोऽपि, गौरवात्, अन्यथा दीक्षाकालोत्पन्नतया पशुत्रयसाधारण्यं गते यूपेऽपि काम्यगुणानुष्ठानानापत्तेः । वस्तुतस्तु "अग्निस्तुतिलिङ्गदर्शनात् क्रतुशब्दःप्रतीयेत"इत्यधिकरणभाष्ये तमुक्थेनेत्यनन्तरं "तमतिरात्रेण"इत्यतः पूर्वं 'तंषोडशिना"इति वाक्योदाहरणात्षोडशिसंस्थेऽप्यहनि सुलभमग्नेरौपदेशिकत्वं, अतोद्विरात्रादिवाक्यानि नाग्निविधायकानीति यथासम्भवमनन्तरपूर्वाम्नातविध्यपेक्षितस्तु-

त्याद्यर्थतया स्वीकार्येषु तेष्वपि नाव्याप्तिः ।

अथोच्येत प्रकृतिविकृतिसाधारणैरप्यग्निष्टोमादिवाक्यैः प्रत्यक्षाम्नाततत्संस्थाकास्वेव विकृतिष्वग्निप्राप्तिः स्यान्नातिदिष्टतत्संस्थासु तत्संस्थाककर्मान्वेषणकाले प्रत्यक्षाम्नाततत्संस्थाकक्रतूनां शीघ्रोपस्थितत्या तत्राग्निविधानेन निवृत्तव्यापाराणां विधीनां विलम्बोपस्थितसंस्थाकेष्वप्रवृत्तेः । "यदाहवनीये जुहोति" इति वाक्यगतस्य जुहोतेरपि "अग्नयश्च स्वकालत्वात्" इत्यधिकरणे विकृत्युपदिष्टामनहोमादिसाधारण्यमेवाभ्युपगतं, न तु वैकृतातिदिष्टहोमसाधारण्यमपि । यथाहुः—

"ततश्चाहवनीयेन सहैवास्यातिदेशनात् ।
प्रकृतौवाद्विरुक्तत्वादित्ययं निश्चयोऽभवत्" इति ।

अतश्च येषु द्विरात्रादिषु संस्थानां न प्रत्यक्षाम्नानमित्यतिदेशाद्वा दशाहिकसंस्थालाभः तेष्वग्निष्टोमादिवाक्यैरनुपदिष्टेऽग्नौ काम्यगुणप्रवृत्तिर्न स्यादिति तेषु तद्गुणप्रवृत्त्यर्थमाग्नप्रापकेषु द्विरात्रादिविधिषु स्यादव्याप्तिरिति । स्यादेवं, यदि दर्शापूर्वसाधनत्वेनोपदिष्टप्रणयनस्य गोदोहनविधाविव क्रतुविशेषापूर्वसाधनत्वेनोपदिष्टाग्नेरग्न्याश्रितगुणफलसम्बन्धविधावाश्रयत्वेनान्वयः स्यात्, इह त्वग्निष्टोमादिवाक्यैः क्रतुसम्बन्धकरणात्प्रागेवानारभ्याधीतेन "य एवं विद्वानग्निचिनुत" इति वचनेनोत्पन्नोऽग्निः शुद्ध एव श्येनाकृत्यादिगुणविधिष्वाश्रयत्वेन सम्बध्यते । ततोऽग्नेर्लैङ्गिकवाचनिकक्रतुसंबंधाद्यत्राग्निस्तत्र तदाश्रितैः गुणैर्भवितव्यमित्यार्थिकस्तेषां क्रतुसम्बन्धः अर्थात्सिध्यंश्चोपदिष्टातिदिष्टाग्निकसर्वक्रतुसाधारण्येनैव सिध्येदिति नातिदिष्टप्रणयनाश्रयणे गोदोहनवैगुण्यवदतिदिष्टाग्न्याश्रयणे श्येनाकृत्यादिगुणानां वैगुण्यं, तस्माद्द्विरात्रादिवाक्यानां काम्यगुणप्राप्त्यर्थत्वासम्भवात्पूर्वघटिताग्निविधिस्तावकत्वमहर्गणान्तरेभ्योऽग्निनिवर्त्तकत्वं वा द्विरात्रादिष्वेवाङ्गान्तरनिवर्त्तकत्वं वोत्तरवेद्या

सह विकल्पेन प्राप्ताग्नेर्नियामकत्वं वा स्वीकार्यमिति न तेष्वप्य-व्याप्तिर्वक्तुमुचितेति ।

तन्न । तथा हि यत्तावत्काम्यतया विहिताग्नेराश्रयार्प-कत्वमग्निष्टोमादिवाक्येषूक्तं, तन्न, "पशुकामश्चिन्वीत"इत्यादि-वाक्यैर्भावार्थाधिकरणन्यायेन स्थलनिर्माणात्मकचयनरूपाक्रि-याया एव फलोद्देशेन विधानात् कस्याश्रयापेक्षेत्यालोचनीयं, यत्र हि धात्वर्थः प्राप्तः उपपदार्थश्च द्रव्यादिरप्राप्तः तत्रैव फलवाक्ये भावार्थाधिकरणापवादत्वेन गुणकामाधिकरणन्यायावतारः । न तु धात्वर्थोपपदार्थयोरुभयोः प्राप्तावप्राप्तौ वा । अत एव "ऐन्द्रवायवा-ग्रान् ग्रहान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्"इतिविधा-वुभयोः प्राप्तत्वात् ग्रहाणामेव फलसम्बन्ध उक्तो दशमे । नच तत्रैव यथा धात्वर्थभूतग्रहणानां प्रकरणादाश्रयलाभः तथेह धात्वर्थचय-नस्यापि तल्लाभोवाच्य इत्यपि शङ्कास्पदम् । दृष्टान्तेपि क्रियारूपाणां तेषामाश्रयाकाङ्क्षाया असम्भवेन प्रकरणात्तल्लाभोक्तेरयुक्तत्वात् । यदि च साम्नः क्रियारूपत्वमते "सौभरेण स्तुवीत"इत्यत्र स्तो-त्रस्यैवोक्ताग्निग्रहणवाक्ययोराश्रयत्वाभिमतयागविशेषानुवादः स्या-त्ततस्तदनुपपत्त्या तन्निरूपितस्याग्निग्रहनिष्ठकारकविशेषफलसम्ब-न्धकल्पनेन तद्वद्वाश्रयाकाङ्क्षामुत्थाप्य प्रकरणादिना ऽऽश्रय-लाभ उच्येत, नचैवं, नचोभयत्राप्यप्राप्तः कश्चिद्गुणोविधेयो दृ-श्यते दध्यादिवद्यदाकांक्षयाऽऽश्रयान्वय उच्यते । नचैवं क्रतुमना-श्रित्य फलाय विहितानामग्निग्रहाणां क्रतोर्बहिरप्यनुष्ठानापत्तिः "एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य"इत्यादिवचनविहितानां का-म्यानुवचनानामिव क्रत्वङ्गैर्निबद्धक्रमत्त्वादुपन्यस्तक्रत्वङ्गसङ्कीर्णतद्वै-शेषिकगुणवत्वाच्च क्रत्वन्तःपातित्वानियमोपपत्तेः ।

एतेन लिङ्गादाश्रयलाभस्य शङ्कापरिहारावप्युक्तवान्तवद्बोध्यौ, क्रत्वन्तःपातमात्रेण तस्योपपत्तेः असत्यामाश्रयाकाङ्क्षायां लिङ्गोक्त-

कल्पनाया अनुत्थानाच्च। नच 'अभागिप्रतिषेध'सूत्रस्थात् "काम-संयोगाच्चाग्नेः"इतिवार्त्तिकादग्नेः फलसम्बन्धावगमात्तस्य च सिद्धत्वादाश्रयापेक्षोचितेति शङ्क्यम्, एवमपि आघ्रैन्द्रुतादेरिव प्रकृत क्रियायां कारकीभूतस्याऽऽहवनीयाग्नेः फलाय विधानाच्चयनस्य च प्रकृतत्वात्तस्य वाक्येऽनुवाददर्शनाच्च तदेवाश्रयः स्यात्, न तु क्रतुराश्रयत्वेनापेक्षणीयः।

वस्तुतस्तूक्तवार्त्तिकात्पूर्वग्रन्थे "न पृथिव्यामग्निश्चेतव्य"इति न निषेधः तथात्वे चयननिषेधकत्वमेव स्यान्न पृथिवीनिषेधकत्वं तत्र च चयनविधिविरोधः। नच विकल्पेन विधिनिषेधोपपत्तिः पाक्षिकबाधप्रसङ्गादित्युक्तम्। न तत्र चयनपाक्षिकत्वार्थमेव भवतु निषेध इत्याशङ्क्य तस्यापि प्रकारान्तरेण सिद्धत्वान्न तादर्थ्यमपि निषेधस्येति वक्तुमुक्तं "कामसंयोगाच्चाग्नेरस्त्येव पाक्षिकत्व"मिति। तत्र प्रकृतवचनक्रियापाक्षिकत्वस्य तस्याः कामसंयोगेनैव सिद्धेरग्निशब्दस्याऽक्रियापरत्वमेव वक्तुमुचितं "दुर्बलश्च प्रतिषेध"इत्युत्तरग्रन्थेऽपि निषेधे क्रियापाक्षिकत्वपरत्वनिराकरणात् विशेषणोपादानेन तत्परतयाऽवगतस्य निषेधस्य क्रियापरत्वेन कल्प्यत्वाद्दौर्बल्यमित्याशयेन हि तं व्याचष्टे न्यायसुधाकारः। तस्माद्वार्त्तिकपर्यालोचनेन "पशुकामश्चिन्वीत" इत्यादिवाक्येषु क्रियाया एव फलसम्बन्धप्रतीतेर्नाश्रयाकाङ्क्षोपपत्तिः। तस्माद्वार्त्तिकपर्यालोचनेन नचाग्निसंस्कारकर्मतयाऽवगतस्य चयनस्य फलसम्बन्धेन प्रधानकर्मत्वमनुपपन्नमित्यपि शङ्क्यम्। सामिधेनीसंस्कारकानुवचनस्येव सोमसंस्कारार्थग्रहणानामिव वा वचनबलेन तदुपपत्तेः तस्मान्नाग्निष्टोमादिवाक्येष्वाश्रयार्थकत्वं सम्भावयितुमुचितं, आस्तांवाऽऽश्रयाकाङ्क्षाऽग्नेः तथापि लिङ्गादेव तल्लाभसम्भवान्न तेषां तदर्थकत्वम्।

यदत्रोक्तं उत्तरवेद्यवरुद्धप्रकृतेर्लैङ्गिकाश्रयत्वाप्राप्तेस्तस्या आश्र-

यत्वप्रापणार्थान्यग्निष्टोमादिवाक्यानीति । तदप्यसाधु, लैङ्गिकवि क्रत्याश्रयसम्बन्धेनाग्नेर्नैराकांक्ष्ये सति तेषां क्रत्वङ्गत्वपरताया एव वक्तुमौचित्यात् सर्वोहि विधिः किञ्चिद्गुणमुद्दिश्य कचिच्छ्रुते प्रवृत्तिजननस्वभावः आश्रयसम्बन्धपरे च विधावनश्यं स हेयः, न ह्याश्रयमुद्दिश्य गुणे गुणमुद्दिश्याश्रये वा प्रवृत्तिजननं सम्भवति तयोः परस्परं परोद्देश्यकप्रवृत्तिविषयत्वात्मकपारार्थ्यायोगात् अग्नेराश्रयाकाङ्क्षायामगत्या तत्स्वभावहानिमङ्गीकृत्यापि स्वीक्रियेताश्रयसमर्पकत्वं विधौ लैङ्गिकाश्रयणे, तस्यां निवृत्तायां तु विधिस्वभावसंरक्षणाय क्रत्वङ्गत्वपरत्वमेवोचितं, अत एव भाट्टैर्न कचिद्वाचनिक आश्रयसम्बन्धोऽङ्गीक्रियते । नचोत्तरवेद्यपोदिताश्रयप्रतिप्रसवे लाघवादाश्रयसमर्पकत्वमुचितं त्वदुक्तरीत्या क्रत्वङ्गत्वप्रतिप्रसवेपि लाघवात् ।

अथ यदङ्गीकृत्यापि क्रत्वङ्गत्वमग्निष्टोमादिवाक्यत्रये प्रकृतिविकृतिसाधारण्येन वाऽव्याप्तिरित्युक्तं, तदप्यलीकं अग्निष्टोमवाक्यस्य प्रकृतिमात्रपरत्वात् । उक्थ्यातिरात्रवाक्ययोस्तु विकृतिमात्रपरत्वात् । तथाहि यथा खलु "आहवनीये जुहोति" इतिविधिर्होमाङ्गत्वेनाहवनीयविधानं कुर्वन् जुहोतिचोदनोपदिष्टेषु प्राकृतवैकृतेषु नारिष्टहोमामनहोमादिष्वाहनीयं विधत्ते नातिदिष्टवैकृतहोमेष्वपि, तेषां विलम्बोपस्थितत्वाद्द्विरुक्तत्वापत्तेश्च, तथा चयनकाम्यत्वबोधकवचनाभावे चयनविधिनाऽऽहवनीयसंस्कारकत्वेन चयनं विदधतोक्तानुष्ठानसादेश्यसहकृतेनाहवनीयविशिष्टसोमयागाङ्गत्वं चयनस्य प्रापयता यत्रैव सोमयागे तद्वैशिष्ट्यमुपदेशेन साक्षादगतं तत्रैव तदङ्गत्वं प्राप्येत, तत्रैव च सोमयागे तद्वैशिष्ट्यं तथाऽवगतं भवति यदङ्गत्वेन प्रक्षेपविधानाय "चतुरवत्तं जुहोति" इतिवत्प्रत्यक्षनिर्देशः । नच ज्योतिष्टोमविकृतिषु क्वापि तथा निर्देशोस्ति तासां यजेतासारित्येव(?)वि-

धानात् 'ग्रहैर्जुहोति'' इतिप्रकृतौ विहितस्य प्रक्षेपस्यातिदेशेनैव लाभोपपत्तेः अतः प्रकृतिभूतज्योतिष्टोमस्यैव ग्रहैर्जुहोतीत्यादिप्रत्यक्षजुहोतिनिर्दिष्टत्वात्तत्रैवाहवनीयवैशिष्ट्यमुपदेशेन साक्षादवगतमिति काम्यत्वबोधकवचनाभावे तदङ्गत्वमेव चयनस्य प्राप्नुयात्वदुक्तरीत्या सर्वसंस्थज्योतिष्टोमस्य प्रकृतित्वेन च सर्वसंस्थज्योतिष्टोमाङ्गत्वमेव प्राप्नुयात् तदपवादे च काम्यत्वबोधकवचनैः प्रसक्ते प्रतिप्रसवं कुर्वदग्निष्टोमवाक्यं यथाप्राप्ति प्रकृतावेव तं कुर्यादिति न तस्य विकृतिविषयत्वं सर्वसंस्थायामेव च तस्यांतं कुर्यादिति नोक्थ्यातिरात्रवाक्ययोः प्रकृतिविषयत्वम्। नचाग्निष्टोमपदोपेतवाक्येन कथमन्यसंस्थे प्रतिप्रसव इत्यपि शङ्क्यम्, प्रतिप्रसवोपजीव्यप्राप्तिसाधारण्यानुरोधेन श्रौतविधानलाघवापादितोद्देश्यताकयागविशेषणत्वेन च तदविवक्षाया औचित्यायातत्वात् ''षाड्विंशतिरित्येव ब्रूयात्'' इतिवचने षाड्विंशतिपदस्य प्रकरण्यश्वमेधाङ्गभूतेऽध्रिगावक्तव्यस्यापि प्राकृताध्रिगुवचनपरिचयार्थनिर्देशवज्ज्योतिष्टोमनैजरूपभूताग्निष्टोमसंस्थाया उद्देश्ययागविशेषपरिचयार्थं निर्देशसम्भवाच्च। अग्निष्टोमसंस्थाया ज्योतिष्टोमनैजरूपत्वानालोचने हि अग्निष्टोमादिवाक्यत्रयमध्ये कुत्र प्रतिप्रसवपरत्वमाश्रित्य श्रुतसंस्थाया अविवक्षाश्रयणायेति विनिगमनाविरहः स्यात्, आलोचिते तु वाक्यार्थानन्वयिन्या अपि तस्यास्ताद्रूप्येण तन्महिम्ना प्रथमवाक्ये ज्योतिष्टोमस्य बुद्ध्यारोहादणुरपि विशेष इति न्यायेन तत्रैव तादर्थ्यप्रतिप्रसवपरत्वमिति विनिगमनालाभः अत एवोक्थ्यातिरात्रसंस्थयोर्यत्र विकृतौ नैजरूपत्वं तद्विषयत्वं एतद्वाक्ययोः। यद्यपि नित्यकाम्ययोः संस्थयोः पाक्षिकसम्बन्धोऽविशिष्टः तथापि नित्यवद्विधिमहिम्नाऽग्निष्टोमसंस्थायां भवति स्वाभाविकत्वबुद्धिः संस्थान्तरव्यावृत्ता काचिदानुभाविकी, यन्महिम्ना ''एष वाव प्रथमोयज्ञोयज्ञानां यज्ज्योतिष्टोम'' इत्यत्राग्निष्टोमसंस्थ-

स्यैव प्राथम्यं विवक्षितमितिसिद्धान्तितं पञ्चमे । तस्मादग्निष्टोम-वाक्येन निर्ज्ञातकेवलप्रकृत्यङ्गभावस्यातिदेशेन सम्भवत्प्राप्तिकस्य केवलविकृतिसम्बन्धाप्रापकयोरुक्थातिरात्रवाक्ययोः स्यादव्याप्तिः, भवतु वाक्यत्रयस्य प्रकृतिविकृतिसाधारण्यं तथापि विकृतिविध्यं-शे भवेदेव तेष्वव्याप्तिः न हि लक्ष्यविध्यभावेऽत्यन्ताप्राप्तिर-पूर्वविधिलक्षणं विवक्षितं येन भवदुक्तरीत्याऽव्याप्तिः शक्यपरि-हारा स्यात् तथासति "सोमेन यजेत"इत्यादेः सोमाद्यंशेऽप्यपूर्व-विधित्वापत्तेः तद्विध्यभावे यागस्य स्वरूपस्यैवानवधारणेन त-त्साधनतया सोमादिप्राप्तेरसम्भवात्, तस्माद्यदुद्दिश्य यद्विधानाय लक्ष्यविध्यप्रवृत्तौ तयोः सम्बन्धाप्राप्तिस्तत्र तस्याऽपूर्वविधिरिति विशिष्य लक्षणं वाच्यं, ततश्च यथा "सोमेन यजेत"इत्यस्य विधे-र्यागविधानाय प्रवृत्तौ तदुद्देशेन सोमविधानाय च(चा) प्रवृत्तौ सोमस्य पाक्षिकप्राप्तिसम्भवात्सोमांशेनापूर्वविधित्वसम्भवस्तथो-क्ताग्निविधीनां प्रकृत्यङ्गत्वेनाग्निविधानाय प्रवृत्तौ विकृत्यङ्गत्वेन तद्विधानाय वा प्रवृत्तौ विकृत्यङ्गत्वेनातिदेशत एवाग्निप्राप्तिस-म्भवात् विकृतिविध्यंशेऽपूर्वविधित्वसम्भव इति । अस्तु वाऽग्निष्टो-मादिवाक्यत्रये त्वदुक्तरीत्याऽव्याप्तिपरिहारः द्विरात्रादिवाक्ये तु स्यादेवाव्याप्तिः अनुपदिष्टसंस्थाकेषु तेषु उक्तरीत्याऽतिदेशस-म्भवत्प्राप्तिकाग्निप्रापकत्वात्तस्य ।

यत्तु क्रत्वपूर्वसम्बन्धशून्यस्योत्पत्तिसिद्धचयनमात्रस्य श्ये-नाकृत्यादिगुणान्प्रत्याश्रयत्वात्तत्प्राप्त्यर्थं न विकृतौ चयनोपदे-शापेक्षेति । तन्न । क्रत्वपूर्वसम्बन्धाभावे चयनभावनायाः फला-काङ्क्षाशान्त्यभावेन चयनस्याश्रयत्वान्वयायोगात् । उक्तं हि संस्थाधिकरणे "पूर्वप्राप्तां कर्त्तव्यतया निर्णीतां क्रियामाश्रित्य फलाय संस्थासु विहितासु तत्कथंभावाकाङ्क्षयेतिकर्त्तव्यता-न्वयोत्राच्यः तत्तत्कर्त्तव्यतानिर्णयश्च न तद्भावनाया अंशत्र-

याऽन्वयात्प्रागिति प्रथमं ज्योतिष्टोमभावनाशेषभूतैरङ्गवाक्यैर्भवितव्यं तच्छेषत्वेन निराकाङ्क्षीकृतानां च न पश्चात्प्रवृत्तसंस्थाविधिशेषत्वं भूयः सम्भवतीति न समानविधानत्वं संस्थानाम्" इति। यदा च ज्योतिष्टोमभावनाया इतिकर्त्तव्यताकाङ्क्षोपशमाभावे ज्योतिष्टोमस्याश्रयान्वयायोग्यत्वं तदा किन्तु वक्तव्यं चयनभावनाया अभ्यर्हिततरफलाकाङ्क्षोपशमाभावे चयनस्य तदयोग्यत्वमित्यवश्यं शास्त्रोपदिष्टापूर्वविशेषसाधनत्वोपहितस्यैव प्रणयनवच्चयनस्याश्रयत्वं वाच्यम्, अन्यथाऽनवगतफलविशेषस्य चयनस्य फलवद्गुणसम्बन्धेऽङ्गत्वप्रसङ्गेनाश्रयत्वस्य दुर्निरूपत्वात्। नच क्रत्वङ्गत्वानवगमेऽपि "पशुकामश्चिन्वीत" इतिफलसम्बन्धावगमाद्वाश्रयत्वोपपत्तिः, फलक्रतुसम्बन्धबोधकविध्योस्तुल्यविनियोजकत्वेनैकस्यैव पूर्वप्रवृत्तौ नियमाभावात्। वस्तुतस्तु व्रीहीनिति द्वितीययैवोत्पत्तिवाक्यगतयाऽग्निमितिद्वितीययैव अपूर्वसाधनलक्षणासहकृतया क्रत्वङ्गत्वासिद्धिरिति तदपूर्वविशिष्टचयनस्यैवाश्रयत्वम्। नच काम्यत्वबोधकविधिना क्रत्वङ्गत्वापवादान्नैव मिति वाच्यम्। संयोगपृथक्त्वन्यायेनावाधेनापि सम्भवत्प्रवृत्तिकेन तेनोत्पत्तौ प्रतीतस्य श्रौताङ्गस्य बाधायोगात्। न चैवम् "अथातोग्निः" इत्यस्य प्रतिप्रसवत्वासम्भवाद्वैयर्थ्यमिति वाच्यम्। उपदिष्टाग्निष्टोमसंस्थेऽग्निष्टुदादौ गुणकामप्राप्त्यै तस्याप्यग्निविधायकत्वात्, तथाचाकरमर्यादात्यागे तत्राप्यव्याप्तिरिति। ततश्च विकृतिषु काम्यगुणप्राप्त्यर्थः सम्भवत्येव चयने विकृत्यपूर्वसाधनत्वोपदेश इति तत्परेषु वाक्येषु स्यादेवाव्याप्तिरिति।

भवतु तर्हि पञ्चमः पक्षः प्रायणीयरूपविशिष्टोयद्विषयः प्रकृतामकृतान्यतरोद्देश्यसम्बन्धित्वेनात्यन्ताप्राप्तस्तत्त्वमिति। तथाच नोक्ताव्याप्ती आमनहोमविशिष्टसाङ्ग्रहण्या ग्रामसाधनत्वेनाप्राप्तेः काम्यगुणविशिष्टचयनस्य विकृतिसम्बन्धाप्राप्तेस्तत्तदुत्पत्तिविधौ

तत्तज्जातिविशिष्टस्य तत्तदधिकारविधौ फलसाधनत्वविशिष्टस्याप्राप्तेः इतिचेन्न । एवमपि 'द्वे आहवनीय'इति अग्निहोत्रप्रकरणाम्नातविधावव्याप्तेः तथाहि अग्निहोत्रे श्रूयते "द्वे आहवनीये चतस्रोगार्हपत्ये चतस्रोऽन्वाहार्यपचने दशाक्षरा विराट् एवंविद्वान्विराट्संपन्नमग्निहोत्रं जुहोति"इति । तत्र 'द्वे आहवनीय' इत्यनेन नाहवनीयविधिः 'यदाहवनीये जुहोति'इत्येव प्राप्तेः, नापि विराड्वाक्योक्तानां दशाहुतीनां मध्येऽष्टास्वाहुतिषु तत्परिसंख्यातास्वग्न्यन्तरविधिबलादेव तत्सिद्धेः भवति तु तदष्टानामग्निहोत्राधिकारविधिबोध्यफलसम्बन्धाय, एतद्वाक्याभावे हि चतस्र इति वाक्ये प्राप्ते कर्मणिसङ्ख्याग्न्योर्द्विधयसम्भवात्'अग्निहोत्रं जुहोति'इत्युत्पन्नस्य कर्मण एव तदभिधेयत्वसम्भवात् ततश्च विराट्सम्पत्तिवाक्येऽग्निहोत्रसमुदाये गौणोग्निहोत्रशब्दः 'सप्तदशानि पृष्ठानि'इत्यत्र पृष्ठशब्दवदिति 'अग्निहोत्रं जुहुयात्स्वर्गकाम'इतिविधिना मुख्यस्यैव फलसम्बन्धः स्यान्नान्येषां अनेन वाक्येन विराट्सम्पत्तिवाक्यबोधितदशाभ्यासमध्ये, द्वयोराहवनीयसम्बन्धे कृते तु अवशिष्टाभ्यासानामितरवाक्याभ्यामग्निमात्रविधानं सुकरं सम स्यादिति न्यायप्राप्तसङ्ख्याया अनुवाद्यत्वसम्भवात्, ततश्च दशाग्निहोत्रवाक्योत्पन्नस्यैव होमस्याभ्यासा इति सर्वाभ्यासविशिष्टस्यैवाग्निहोत्रस्य फलसम्बन्धसिद्धिरित्यत्यन्ताप्राप्तप्रापिफलकत्वेनापूर्वविधितया लक्ष्यभूते तस्मिन् वाक्ये विषयस्याहवनीयस्य केनापि रूपेण क्वचिदप्युद्देश्ये प्राप्त्यभावादव्याप्तिरिति । अथाद्यपक्षयोर्द्वितीयः सातिसप्तमीति पक्ष आश्रीयते ? तथासति यत्किञ्चित्सम्बन्धित्वेन यस्मिन् कस्मिंश्चिदप्राप्ते सति प्रवृत्तत्वस्यापूर्वविधिलक्षणत्वान्नानन्तरोक्ताव्यव्याप्तिः अष्टानां होमानां फलसम्बन्धेऽप्राप्ते सति द्वे आहवनीय इत्यस्य प्रवृत्तेरितिचेत् ? तथाहि यस्मिन्नप्राप्ते सति प्रवृत्तत्वं लक्षणत्वेन विवक्षितं

तत्प्राप्तिफलकत्वमपि लक्षणेऽवश्यं प्रवेशनीयं अन्यथोलूखलप्रोक्षणे ऽप्राप्ते सति प्रवृत्ते हन्तिविधावतिप्रसङ्गात् ततश्च स्वाप्रवृत्तौ यत्सम्बन्धित्वेन यदप्राप्तं तत्सम्बन्धित्वेन तत्प्राप्तिफलकोऽपूर्वविधिरिति फलितं, तत्र च ज्योतिष्टोमदर्शयोः स्वर्गसाधनत्वविध्योरव्याप्तिः तदप्रवृत्तावपि सार्वकाम्यवचोभ्यामेव तयोः तत्साधनत्वप्राप्तेः तथा नानाशाखागताग्निहोत्रादिविधिषु चाव्याप्तिः एकविध्यप्रवृत्तावपि शाखान्तरीयविधितस्तत्प्राप्तेः । अथाभ्युदयशिरस्कप्राप्त्यभाव एवोक्तलक्षणेऽप्राप्तपदेन विवक्षितस्तेन ज्योतिष्टोमेनेत्यादिविधिजन्याया एव स्वर्गसाधनत्वप्राप्तेरभ्युदयजनकत्वकल्पनात् स्वाध्यायाध्ययनवशेन स्वशाखीयविधिकृताया एवाग्निहोत्रादिप्राप्तेस्तत्कल्पनात् । यथा हि साप्तदश्यविधेरनारभ्याधीतस्य मित्रविन्दादिप्रकरणगतेन तद्विधिनोपसंहारेऽङ्गीकृते प्रकरणगतेनैव सामिधेनीद्वारकक्रतुसम्बन्धसिद्धेः किमनारभ्याधीतेनेति शङ्कायामुक्तं तन्त्ररत्ने "वाक्यद्वयाम्नानवशादुभयजन्यज्ञानस्याभ्युदयकारित्वं कल्प्यत"इति ।

नन्वयुक्तोऽयं दृष्टान्तः अनारभ्याधीतविधेः सर्वविकृतिषु प्राकृतपाञ्चदश्येन सह वैकल्पिकसाप्तदश्यविधायकत्वं मित्रविन्दादिगतस्य च तन्नियामकत्वमिति द्वयोरपि प्रवृत्तिविशेषकत्वसम्भवेऽभ्युदयफलकल्पनाया अनुचितत्वात् । नचौपदेशिकेन साप्तदश्येन प्राकृतपाञ्चदश्यबाधौचित्यात्कथं विकल्पप्रसक्तिरिति वाच्यम् । मित्रविन्दादिगतस्य वैयर्थ्यं माभूदित्यनारभ्याधीतेन वचसा प्राकृतपाञ्चदश्यस्य पाक्षिकीं प्राप्तिं सोढ्वा पशौ पाक्षिकतयैव साप्तदश्यविधानात् 'नतौ पशौ करोती'ति वचसाऽतिदेशनाज्यभागप्राप्तिं सोढ्वा पाक्षिकप्रतिषेधवदिति । मैवम् । अतिदेशप्राप्तपाञ्चदश्यस्य प्राकरणिकत्वेन क्लृप्तोपकारकत्वेन च बलवत्तया तेनैवानारभ्योक्तसाप्तदश्यस्य बाधे सति विकल्पायोगाद

उक्तं हि "चित्रया यजेत पशुकाम" इत्यत्र मेषीयागानुवादेन चित्रत्वविधिशङ्कायां प्राकृतकृष्णसारङ्गवर्णविरुद्धत्वान्न चित्रत्वविधिसम्भव इति चित्राधिकरणन्यायसुधायां, तर्हि मित्रविंदादिगतवाक्यवैयर्थ्यपरिहाराय तादृशेनापि पांचदश्येन स्वस्य पाक्षिकत्वमङ्गीक्रियते इति वाच्यमिति चेत् । साधोऽनेकविकृतिगतस्यानेकचोदकप्राप्तस्य पाञ्चदश्यस्य पाक्षिकत्वकल्पनातो लघीयसीं प्रकृतिमात्रगतपाञ्चदश्यस्य पाक्षिकत्वकल्पनां किमिति न करोषि, भवति हि तथापि तद्वैयर्थ्यपरिहारः, भवतु सैव कल्पना तावताप्यभ्युदयफलत्वकल्पना तु निवृत्तेति चेन्मैवम् । अर्थवादादौ दृष्टेनाभ्युदयफलकत्वेन वैयर्थ्यपरिहारे सम्भवति आनर्थक्यप्रतिहतानां विपरीतमिति न्यायानवतारे बलवता पाञ्चदश्यादिना स्वपाक्षिकबाधानभ्युपगमात् । नन्वेवमपि 'सप्तदश वैश्यस्ये' त्यनेनैवोपसंहारसम्भवात् उक्तदृष्टान्तासम्भव इति चेन्न । पाञ्चदश्येन बाधितस्य सामान्यतः प्रकृत्यपूर्वसम्बन्धाप्राप्तौ उपसंहारायोगात् । भवतु तर्हि दर्शपौर्णमासाधिकारी सामान्यसम्बन्धित्वेन प्राप्तस्य पाञ्चदश्यापोदितस्य वैश्यसम्बन्धित्वेन प्रतिप्रसव इति चेत् एवमपि अनारभ्याधीतविधेरभ्युदयशिरस्कत्वापरिहारे बहूनां वैकृतवाक्यानां द्वारसम्बन्धापूर्वसम्बन्धात्मककार्यद्वयपरत्वनिमित्तगौरवपरिहाराय वैकृतविधिभिरुपसंहारस्यैवोचितत्वात् । तस्माद्युक्तो दृष्टान्तः । उच्यते । एवंसति व्रीहीनवहन्तीत्यत्रातिव्याप्तिः अध्ययनविधिबलेन तत्कृताया एवावघातप्राप्तेरभ्युदयकारित्वात् । आक्षेपतस्तादृशप्राप्तेरभावात् । अथ स्वाप्रवृत्तावित्यत्र विध्यन्तराप्रवृत्तिविशिष्टायां केवलायां चेति विशेष्यते ततो नोक्ताव्याप्ती, सार्वकाम्यविध्यप्रवृत्तिविशिष्टायां स्वर्गकामविध्यप्रवृत्तौ स्वर्गसाधनत्वाप्राप्तेः शाखांतरीयविध्यप्रवृत्तिविशिष्टायां स्वशाखीयविध्यप्रवृत्तौ अग्निहोत्राद्यप्राप्तेरिति चेन्न । वैकृते 'रथन्तरं

पृष्ठम्भवति'इतिपृष्ठस्तोत्रनियमविधौ 'उत्तरेऽहनि द्विरात्रस्य गृह्यत' इति वैकृते षोडशिनियमविधौ चातिव्याप्तिः अतिदेशप्रवृत्तिविशिष्टायामेतद्विध्यप्रवृत्तौ स्तोत्रषोडशिनोरत्यन्ताप्राप्तेः 'व्रीहिभिर्यजेत, इत्यत्रातिव्याप्तिश्च केवलतदप्रवृत्तौ यत्रनियमप्रयुक्ततादितरनिरासेन व्रीहीणामत्यन्तप्राप्तेः एतद्दोषपरिहाराय केवलायां चेतिविशेषणादाने "व्रीहीन् प्रोक्षति'इत्यत्रा ऽव्याप्तिः तद्विध्यप्रवृत्तिमात्रेणैव तत्र लक्षणसम्भवात् । ननूक्तलक्षणस्य वैकृतरथन्तरादिविधिषु स्थितिर्न दोषायैकस्यानेकलक्षणयोगेनानेकहेत्वाभासरूपत्ववदनेकरूपविधित्वोपपत्तेः उपधेयसंकरेऽप्युपाध्यसाङ्कर्यात् दृश्यते च 'स्वयमातृण्णामुपद-धाति'इत्यत्र विषयभेदेन लक्षणत्रयसाङ्कर्यं तथाहि 'तद्वानासामुपधानोमन्त्र इतीष्टकासु लुक्चमतोः'इतिपाणिनिस्मृतेः स्वयमातृण्णाशब्दस्येह स्वयमातृण्णापदोपेतमन्त्रोपधेयेष्टकावाचित्वेऽपि नेष्टकाविधिपर एष विधिः 'इष्टकाभिरग्निश्चिनुत' इति विधिमहिम्नैव सर्वेष्टकानां चयनसाधनत्वप्राप्तेः तासां चानुपहितानां न तत्साधनत्वं सम्भवतीतितन्माहिम्नोपधानाप्राप्तेर्न तद्विधिपरोपि । अथ प्रतिप्रधानमङ्गावृत्तिन्यायात्प्रतीष्टकमुपधानप्राप्त्यै भवेत् प्रधानविधिः अन्यथा समुदितानामपि तत्प्रसक्तेरिति चेत् । न, एकेनोपधानविधिनोक्तप्रयोजनसम्भवे 'स्वयमातृण्णामुपदधाति प्राणभृत उपदधाति'इत्याद्यनेकोपधानविधिवैयर्थ्यप्रसङ्गात् एतेष्वेकेनैव केनोपधानं विधेयमिति च निर्णेतुमशक्यत्वात् । वस्तुतः प्राजापत्यपशुष्वनेकचतुरवत्तसंस्कारकप्रक्षेपस्येवानेकेष्टकासंस्कारकोपधानस्यापि तन्त्रानुष्ठानसम्भवेन सत्यप्युपधानविधौ प्रत्येकोपधानाप्राप्तेः । अथ 'हिरण्यशकलैरग्निं प्रोक्षति'इति विहितप्रोक्षणस्येष्टकासंस्कारकत्वपक्षे प्रतीष्टकमावृत्तिवदुपधानस्याप्यावृत्तिः स्यादन्यथेष्टकातिरिक्तमवयविनां प्रसाध्यप्रोक्षणस्य संस्कारकत्वाभिधानं नावमिकं निष्फलं स्यादिति चेत् । न, यदि

हि प्रोक्षणमिह मुख्यं स्यात्तदा व्रीहिप्रोक्षणवद्राशिरूपरिक्रियमाणं तन्त्रेणैवोपकुर्यात् । यतस्तु हिरण्यशकलस्याद्रवत्वेन द्रवद्रव्यसाधनकक्रियावाचिनाप्रोक्षतिना संयोजनं लक्ष्यते अतोभवत्यावृत्तिः एकैकेष्टकासंयोजने सर्वसंयोजनासम्भवात् । वस्तुतस्तु प्रोक्षणस्य मुख्यत्वेऽपि न व्रीहिप्रोक्षणवत्सकृते सम्भवः यतः सकर्मकधात्वर्थभूतसंस्कारकर्मस्थले विवक्षितोद्देश्यतावच्छेदकविशिष्टे धात्वर्थतावच्छेदकफलोत्पत्तिरेव संस्कारोत्पत्तिनियामिका विभिन्नचितिप्रदेशाधिकरणकविभिन्नमन्त्रकरणकोपधानैः विभिन्नसाधनभावास्विष्टकासु तु व्रीहिवदेकोद्देश्यतावच्छेदकाभावः तस्मान्नोपधानप्राप्त्यर्थ उक्तविधिः नापि तदङ्गत्वेन मन्त्रप्राप्त्यर्थः प्रकरणादेव तत्प्राप्तेः । नचेतरमन्त्रपरिसंख्यार्थः चयनप्रकरणे तदाम्नातवैयर्थ्यप्रसक्तेः अत उपधाननियतलिङ्गशून्यानां 'एकयाऽस्तुवत प्रजा असृज्यंत' इत्येवमादीनां मन्त्राणामिष्टकाग्रहणादिष्वपि प्रसक्तविनियोगपरिसंख्यार्थः तेषामेव मध्यमाचिति सम्बन्धप्राप्त्यर्थश्च 'यां कां चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्या' दिति वचनेन प्रत्यक्षब्राह्मणविहितेष्टकानां मध्यमचिति निवेशोविधीयत इति पञ्चमे स्थापितत्वात् का इष्टकाः सृष्ट्यादिमन्त्रोपधेया इत्युपधानात्प्राङ्निर्णयासम्भवे तत्तद्ब्राह्मणवाक्यानामिष्टकाविशेषणीभूतमन्त्रमात्रपरत्वेनोक्तवाक्यस्य तादृशमन्त्राणां मध्यमचिति सम्बन्धपरत्वाच्च प्रत्येकोपधाननियमार्थश्च, विभिन्नमन्त्रोपधेयत्वमाहिम्नैव भिन्नोपधेयत्वस्येष्टकासु सिद्धेः एवं 'सृष्टीरुपदधाती'तिवत् वैकृतरथन्तरादिविधिषु भवत्वनेकलक्षणयोगेन विधिनियमोभयरूपत्वमिति चेन्न । यद्यपि रथन्तरादिविधिषु नैवमप्यनिष्टापत्तिः तथापि 'पुरोडाशेन माध्यंदिने सवन'इत्यत्र भवेदिदं द्विवचनं सवनीयपशावतिदेशप्राप्तपुरोडाशयागकालमुद्दिश्य विदधद्भवति कालनियमविधिः अतिदेशाप्रवृत्तौ च कालविशि-

ष्टमपूर्वं यागं विदधदपूर्वविधिः स्यात् तत्र नियमविधित्वे सतीहा ग्नेयतां गतोपि यागोऽग्नीषोमीयपशुयागे यदोत्पन्नस्तदा पूर्णमासाग्नीषोमीयविध्यन्तविशिष्ट एवागत इतीहापि तथैवानुष्ठेयः अपूर्वविधित्वे च विधीयमानयागस्येतिकर्त्तव्यताकाङ्क्षायां मन्त्रवर्णबोधिताग्नेयत्वबलेनाग्नेयविध्यन्तविशिष्ट एवानुष्ठेयः नचैतदुभयं विकल्पेनापि सम्भवति वस्तुतोऽतिदेशसत्त्वात्, तथा 'विश्वजिति सर्वस्वं ददाती'तिविधिरतिदेशाप्रवृत्तौ सर्वस्वदानापूर्वविधिः स्यात् तत्प्रवृत्तौ नियमविधिः प्रकृतौ द्वादश शतेनानमयितव्या अपि सर्वनतिसर्वस्वदानस्य पाक्षिकाम्नानात्, तत्रापूर्वविधित्वे द्वादशशतान्न्यूनस्यापि दानार्हयावत्स्वस्य दानं स्यात् । नियमविधित्वे तु यावत्स्वधनं त्रेधा विभज्य भृत्यर्थतृतीयभागात्मनोद्वादशशताधिकपरिमाणस्य देयतया तथा प्राप्तस्य सर्वस्वस्य नियमनात्तु तादृशस्यैव दानं भवेत्, नचैतदुभयं भवेत् वस्तुतोऽतिदेशसत्वात् प्रकृतावेव वा सर्वस्वं ददतीत्यत्र द्वादशशतविध्यप्रवृत्तिसहितायामेतद्विध्यप्रवृत्तौ नियमविधित्वं केवलैतदप्रवृत्तौ तु द्वादशशतनियमेन सर्वस्वाप्राप्तेरपूर्वविधित्वं स्यात् । नचोभयानुसार्यनुष्ठानं सम्भवति वस्तुतोद्वादशशतविधेः सत्वात् । नच दृष्टार्थस्य कथमपूर्वविधित्वमिति वाच्यम् । अत्यन्ताप्राप्तविषयत्वे दृष्टार्थस्याप्यपूर्वविधितया व्यवस्थापयिष्यमाणत्वात् । यद्यप्यनेकलक्ष्यसङ्ग्रहार्थलक्षणवशादापन्नस्याप्यपूर्वविधित्वादेरनुष्ठानाव्याप्यत्वान्न तद्वशेन श्रुतितात्पर्यविपरीतानुष्ठानमापादयितुं शक्यं, तथापि यस्य लक्ष्यनिवेशोऽनुष्ठानव्यवहारे प्रयुज्यते न तत्साधारण्यं लक्षणस्योचितं अतोलक्ष्यविध्यप्रवृत्तिघटितमेव लक्षणं वाच्यं न विध्यन्तराप्रवृत्तिघटितमपीति न शाखान्तरीयविधिसार्वकाम्यविधिप्रापितत्वविधिसार्वकाम्यविधिप्रापित्वनिमित्ताव्याप्त्योः परिहारासिद्धिः । किञ्च स्वाप्रवृत्तावित्याद्युक्तलक्षणं 'इमामगृभ्णन्नित्यश्वाभिधानीमादत्त

इति परिसङ्ख्याविधावतिव्याप्तिः गर्दभरशनासम्बन्धित्वेन मन्त्र-निवृत्तेरत्यन्ताप्राप्तायाः प्रापकत्वात् । अथ भावरूपं यदप्राप्तं तत्प्राप्तिफलकत्वं विवक्ष्यते ? तथासति 'दीक्षितो न जुहोती'त्याद्यपूर्वविध्यात्मकनिषेधेष्वव्याप्तिः तादृशभावप्रापकत्वाभावात् । अथ प्रतिषेधप्रतिस्पर्द्धिविधित्वमेव प्रकृते लक्ष्यतावच्छेदकं, अनुवाद-प्रतिस्पर्द्धिविधित्वेन कत्र्वधिकरणादौ व्यवहृतेपि निषेधे तदभा-वादलक्ष्यत्वम् । नचापूर्वविधित्वव्युत्पादनाय प्राप्त्यप्राप्तिविवेचन-वद्भावाभावविषयत्वव्युत्पादनादर्शनादनुवादप्रतिस्पर्द्धिविधित्वमेव प्रकृते लक्ष्यतावच्छेदकमित्यपि शङ्कास्पदं, विषयेषु भावत्वाभाव-त्वयोः स्वाभाविकयोर्विवेचनानर्हत्वात् शास्त्रान्तराधीननिर्णययोर-प्राप्तिप्राप्त्योस्तदर्हत्वात् । नच निषेधप्रतिस्पर्द्धिविधित्वं भावगोचर-मपि प्राप्तं भावं गोचरयति येन तदप्राप्तिर्नापेक्ष्येत अप्रवृत्तप्रवर्त्त-नात्मनस्तस्याप्राप्तविषयत्वनियमात्प्रदर्शितं च परिसङ्ख्यासूत्र-न्यायसुधायां निषेधानां परिसङ्ख्यात्वोक्त्याऽपूर्वविधिबहिर्भूतत्वं, एवं च नोक्तनिषेधेष्वव्याप्तिरितिचेन्न । तथासति निषेधस्यानेकत्र प्राप्तस्य क्वचिद्विषये पुनः कथनं यत्र विषयान्तरे निषेधनिवृत्त्यर्थं तत्राप्राप्तभावप्राप्तिफलके परिसङ्ख्याविधावतिव्याप्तेः तद्यथा 'न नीलीवसनं धार्यं न भूपालैरनुत्सव'इत्यत्र धार्यमित्येतेन नीली-धारणनिषेधे सामान्यतः प्राप्तेऽनुत्सवे पुनस्तत्कीर्त्तनमुत्सवे निषेधपरिसङ्ख्यया नीलीधारणप्राप्त्यर्थम् ।

यत्तु यद्भूपालैर्न धार्यमित्यनूद्य तदनुत्सव इतिपर्युदासेन काल-रूपगुणविधिरेष इति,तन्न । भूपालग्रहणस्याविवक्षापत्तेः । अनुत्सव-पदे च काललक्षणापत्तेः उत्सवभिन्नप्रयोजनमुद्दिश्य न धार्यमिति वि-नैव लक्षणयोपपत्तेः 'विवाहेऽनृतं वदे'दित्यादौ सप्तम्योद्देश्यत्वाभि-धानस्यापि दृष्टत्वात् । नचैवमपि निर्दिष्टवचनव्यत्ययाङ्गीकारेण धारण-निषेध उत्सवसम्बन्धनिवृत्तिपरमेतद्वचनं न तूत्सवे निषेधवृत्तिपरं,येन

भावप्राप्तिफलकं स्यादितिशङ्क्यं, यतोनञ्शून्ययादृशसमभिव्याहारे यमुद्दिश्य यद् विधेयं नञ्वति तादृशे समभिव्याहारे तमुद्दिश्य तन्निषेध्यमिति व्युत्पत्तिमर्यादा। तथाच नानुयाजेष्वित्यत्रानुयाजोद्देशेनागुरोर्निषेधाच्छास्त्रप्राप्तनिषेधानिमित्तः पर्युदास आश्रीयते, नाश्रीयते च 'दीक्षितोन जुहोति' 'अयज्ञिया वै माषा'इत्यत्र शास्त्रप्राप्तस्य दीक्षितस्य कर्तुर्माषद्रव्यस्य च निषेधात्। प्रकृते च यद्यनुत्सवपदं कालपरं यदि वा प्रयोजनपरं उभयथापि तदर्थमुद्दिश्य धारणप्रतिषेधोवोध्यः। असति नञि तमुद्दिश्यैव धारणस्य विध्यर्हत्वात् पूर्वनिषेधेन चोत्सवेऽनुत्सवे नित्यप्राप्तस्य धारणवर्जनस्यानुत्सवे पुनर्ज्ञापनं किमर्थमित्यपेक्षायां रशनामन्त्रस्य गर्दभरशनायामिव धारणवर्जनस्योत्सवे निवृत्त्यर्थं वक्तुमुचितं विधेयपरिसङ्ख्याख्यनिवृत्तिप्रतियोगित्वस्य श्रुतविधेयगामित्वस्वीकारे प्रतियोगित्वेनापि श्रुतविधेयस्य विधेयकोटिनिक्षेपे प्रतीतविधेयत्वनिर्वाहाच्छ्रुतोद्देश्यप्रतिस्पर्द्धिप्रतियोगित्वे तु तदनिर्वाहात्, अयमेव च शेषिपरिसंख्योदाहरणे विशेषोयच्छ्रुतशेषविधेयत्वं नाम, एवं च योऽनुत्सवस्तत्र भूपालैर्न धार्यमुत्सवे तु धार्यमिति विधेयकोटिनिक्षेपाद्भूपालविवक्षापि लभ्यते तत्सिद्धमप्राप्तभावप्राप्तिफलकेस्मिऽन्विधावतिव्याप्तिरिति।

अपि च अत्यन्तमप्राप्त इत्यत्र किं नाम प्राप्तेरात्यन्तिकत्वं विवक्षितं ? येन नियमविधिनिरासः किं सर्वोद्देश्यानुवृत्तिः ? उत क्वचिदपि उद्देश्ये व्याप्यवृत्तित्वं, ? उत त्रैकालिकत्वं, अथापाक्षिकत्वं, ? नाद्यः 'सर्वेभ्यः कामेभ्योदर्शपूर्णमासौ'इत्यत्राव्याप्तेः स्वर्गाख्य उद्देश्यैकदेशे वाक्यान्तरादेव विधेयप्राप्तेः।

यत्तु दार्शिकसर्वरुचिर्विषयतया प्रतीयमाने वस्तुत उपांशुयाजहविर्मात्रे चारितार्थ्यं भजत्विति 'त्रेधा तण्डुलान्विभजे'दित्यत्राव्याप्तिरिति, यश्च तदाक्षेपऽसिद्धान्तमर्यादात्यागेन

पञ्चशरावत्वाक्यवन्मध्यमादित्वाक्येषु वाक्यभेदभयेन कर्मान्तरविधेरुचितत्वात्त्रेधातण्डुलानितिवाक्यं मध्यमादिरूपेण विभागानुवादीति, तदुभयमप्युत्पत्तिविधिनिरूपणावसरेऽभ्युदयेष्टिवाक्यार्थतत्त्वं निरूपयद्भिरस्माभिर्निरस्तमिति नेह प्रतन्यते । न द्वितीयः यथाप्रकृति द्वादशशतजनितानत्यसम्भवविशिष्टविश्वजिद्व्यक्तौ प्रदेयतया प्राप्तस्य सर्वस्वस्य विश्वजिति नियमार्थे 'सर्वस्वं ददाती'ति वचनेऽतिव्याप्तेः । यद्यपि सार्वकाम्यविधौ स्वर्गान्यफलेषु दर्शपूर्णमासयोरिव 'व्रीहीनवहन्ती'त्यत्र केष्वपि व्रीहिषु अवघातस्य न व्याप्यवर्त्तिनी अप्राप्तिरवधारयितुं शक्यते तथापि द्वादशशतेन सम्भवदानतिके विश्वजिति शक्यत एव सर्वस्वदानाप्राप्तिरवधारयितुं, एवमन्यत्र व्यवस्थितविकल्पप्राप्तस्य नियमविधावतिव्याप्तिरूह्या ।

यत्तु 'पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य'इति गवामयनिके पृष्ठ्यषडहे द्वादशाहिकपृष्ठ्यषडहादतिदेशेन प्राप्तानां रथन्तबृहद्वैरूपवैराजशाक्वररैवताख्यानां पृष्ठस्तोत्रसाधनसाम्नां मध्येऽन्त्येषु चतुर्ष्वहःसु वैरूपादीनां बाधार्थं षडहमुद्दिश्य रथन्तरबृहतोर्विधानपरे विधावव्याप्तिराद्यान्होरातिदेशेनैव, रथन्तरबृहतोः प्राप्तेरुद्देश्यषडहव्यापकाप्राप्तेरभावादिति । तदयुक्तं, यद्यपि चोदकाबाधायास्मिन्विधावाद्येहनि रथन्तरं द्वितीये बृहदित्येवं रथन्तरबृहती विधीयेते, न त्वेकैकस्मिन्नहनि समुचिते रथन्तरबृहती, नाप्याद्ये बृहद्द्वितीये रथन्तरमित्येवं विधीयेते तथापि नास्य विधेरपूर्वविधित्वं 'हिरण्यगर्भः समवर्त्तताग्रे इति आघारयाघारयती'ति वत्प्राकृतमन्त्रकार्ये मन्त्रान्तरे विदधतोनियमाविधित्वेनैव वक्तुमुचितत्वात् ।

यच्च 'उच्चैर्ऋचाक्रियते'इत्यत्र कर्मान्वयायोग्यस्योच्चैष्ट्वस्य विधेयस्योद्देश्ये ऋग्वेदविहिते कर्मणि व्यापकाप्राप्तेः सत्वादतिव्याप्तिरिति,

तदप्यसाधु, येन सम्बन्धेन यत्र यद्विधेयं तेन सम्बन्धेन तत्र तदत्यन्ताप्राप्तेरवश्यं विवक्षणीयत्वात् अन्यथा नियमविधिमात्रे केनापि सम्बन्धेन विधेयस्यात्यन्ताप्राप्तिसम्भवेनातिप्रसङ्गापत्तेः उच्चैष्ट्वस्य च कर्माङ्गभूतमन्त्रोच्चारणनिर्वर्तकतासम्बन्धेन कर्मणि विधेयत्वं, नच तेन सम्बन्धेनोच्चैष्ट्वं न प्राप्तं येनातिप्रसङ्गापत्तिः ।

एतेन 'साम्ना स्तुवीते'त्यादावप्यतिप्रसङ्गो निरस्तः । न तृतीयः 'घृते श्रपयति' 'पूषाप्रपिष्टभाग' इत्यादावव्याप्तेः अत्र ह्याद्यवचोतिदेशेन प्राजापत्यकृष्णलयागे प्राप्तश्रपणस्य द्वारलोपात्प्रसक्तबाधस्य प्रतिप्रसवार्थं द्वितीयमपि केवलपूषदेवत्यचरुयागे प्रयोजनाभावेन प्रसक्तानिवृत्तिकस्यातिदेशप्राप्तस्य पेषणस्य प्रतिप्रसवार्थं, नच प्रतिप्रसवस्यापूर्वविधित्वादन्या गतिरिति तयोः प्राक्काले प्राप्तिसत्त्वात्त्रैकालिकाप्राप्त्यभावेनाव्याप्तिः । अथ स्वाप्रवृत्तौ स्वविषयविषयाबाधितप्राप्त्यभावस्य त्रैकालिकत्वं विवक्ष्यते प्रकृते च प्राक्तन्या अपि तस्या बाधितत्वान्नाव्याप्तिः ।

यत्त्ववभृथे आज्यभागविध्यभावे चोदकेन नियमविध्यभावे आक्षेपेणावघातस्येव प्रयाजानां सम्भवद्धविष्यत्प्राप्तिकानां विधायके-ऽपबर्हिषः प्रयाजान्यजती'तिविधावव्याप्तिरिति, तदप्येवं सति परास्तम् । विध्यन्तराप्रवृत्तिसहितप्रकृतविध्यप्रवृत्तिघटितविवक्षायामेवोक्ताव्याप्तेर्वक्तुमौचित्यात् ।

नन्वेमपि 'यदि सोमं न विंदेत पूतीकानभिषुणुया'दितिसोमप्रतिनिधितया पूतिकनियमविधिपरे विधावतिव्याप्तिः एतद्विध्यभावे हि सोमप्रतिनिधित्वेन पूतीकव्याप्तिः कालत्रयेपि न सम्भवति सोमसुसदृशानां द्रव्यान्तराणां सत्वात् । न च पूतीकानां प्रतिनिधित्वे तेषामनङ्गत्वमभ्युपेत्य सोमावयवानामेवाङ्गत्वस्याभ्युपेयत्वान्नैव विधिः, सति वा तद्विधौ विधीयमानस्याङ्ग-

त्वात्रयभावान्न प्रतिनियतत्वमितिशङ्क्यं, सोमामात्रे विकल्पान्सोमात्रयत्रान्यदुपाददीत तत्पूर्तीकागतानितिनियमाङ्गीकरणात् । यद्यपि तेऽन्यत्रापि सन्ति तथापि नियमबलात्पूतीकगताविजातीयावयवानां सोमाभावदशायां हविःसंस्कारकत्वं पयःश्रपणवत्कल्प्यते, अतएव पूतीकाभावे सोमपूतीकोभयसदृशमुपादेयं तदलाभे तु सोमसदृशमितिसिद्धान्तितमाकर इति चेन्न । सुसदृशानामभावे पूतीकानामबाधितभविष्यत्प्राप्तेः सम्भवात् ।

एतेनाप्राप्तेरपाक्षिकत्वमात्यन्तिकत्वमिति चतुर्थपक्षेऽपि पूतीकोदाहरणे ऽतिव्याप्तिर्निरस्ता, न ह्यन्यत्रस्थितप्राप्तिसमानाश्रयत्वं पाक्षिकं, येन पूतीकाप्राप्तेस्तदभावात्मकमात्यन्तिकत्वं स्यात्, किन्तु स्वभिन्नकालीनप्राप्तिसमानाश्रयत्वं, अस्ति हि तत्पाक्षिकत्वेन व्यवह्रियमाणायां नियम्यावघातसर्वस्वदानाद्यप्राप्तौ, नास्ति च तद्व्यवहारशून्यायां गावामयनिकषडहे रथन्तरबृहतोरप्राप्तौ सत्यपि भिन्नाहर्वर्त्तिन्योः प्राप्त्यप्राप्त्योर्भिन्नकालीनत्वे समानाश्रयत्वाभावात्, तथोपहव्यसंज्ञके क्रतावश्वः श्यावोदक्षिणेति दक्षिणात्वेन विहिताश्वस्य कार्त्स्न्येन ब्रह्मसम्बन्धविधिपरेण 'सब्रह्मणे देय' इतिविधिनोपजीव्या क्वचिदश्वांशे ब्रह्मणोऽप्राप्तिः तस्यामपि पाक्षिकत्वव्यवहारशून्यायां नास्त्युक्तविधपाक्षिकत्वं सत्यप्यश्वात्मकसमानाश्रयत्वे प्राप्त्यप्राप्त्योर्भिन्नकालीनत्वाभावात् ततश्च सोमाभावविशिष्टज्योतिष्टोमे सोमसुसदृशलाभदशायां पूतीकाप्राप्तेः तदलाभदशायां तु प्राप्तेः सम्भवति पूतीकानां पाक्षिकत्वमिति न तद्विधावतिव्याप्तिरिति । भवत्वेवं तथापि वायव्ये पशावतिदेशप्राप्तऐन्द्राघारे दाशमिकन्यायेन मन्त्रविधिपरे 'हिरण्यगर्भः समवर्त्तताग्रइत्याघारमाघारयती'ति विधावतिव्याप्तिः हैरण्यगर्भमन्त्रस्यैन्द्रे कर्मणि त्रैकालिकापाक्षिकाप्राप्तिसत्वात्, तथा-'इषेत्वेतिशाखां छिनत्ति''परिधौ पशुं नियुञ्जीत''उत्करे वाजिनमा-

सादयती'त्येतेष्वप्यतिव्याप्तिः इषेत्वेतिमन्त्रस्य छेदनविनियोगोत्तरं छिनत्तीतिपदाध्याहारकल्पनेन छेदने सामर्थ्यस्याऽऽपाद्यतया ततः प्राक्प्राप्त्यसम्भवात् परिधौ नियोजनार्हस्थौल्यकल्पनेन नियोजनसामर्थ्यस्योत्करे पृथग्गत्वकल्पनेनासादनसामर्थ्यस्य तत्तद्विनियोगं विना याद्दच्छिक्या अपि प्राप्तेः सम्भावयितुमशक्यत्वात् । नचैते लक्ष्या एवेति शंक्यं, नियमविधित्वमन्तरेण नियमादृष्टकल्पकत्वानुपपत्तेः ।

वस्तुतस्तूक्तहेतोरेव 'बृहद्रथन्तरसामा पृष्ठ्यः षडहः' 'म ब्रह्मणे देयः' इत्यनयोर्नियमविधित्वात्तद्व्यावृत्त्यै पाक्षिकत्वलक्षणे विशेषणदानमपाक्षिकत्वरूपेऽपूर्वविधिलक्षणेऽतिव्याप्तिकरमिति प्रापणीयसम्बन्धितावच्छेदकरूपावच्छेदेन प्राप्तिसामानाधिकरण्यमप्राप्तेः पाक्षिकत्वे वाच्यम्, अस्ति हि तादृशषडहत्वावच्छेदेन तादृशाश्वत्वावच्छेदेन च बृहद्रथन्तरप्राप्त्यप्राप्त्योर्ब्रह्मसम्बन्धप्राप्त्यप्राप्त्योश्च सामानाधिकरण्यं तथा सोमाभावविशिष्टज्योतिष्टोमत्वावच्छेदेन पूतीकप्राप्त्यप्त्योरपि सम्भवति सामानाधिकरण्यं, परन्तु तथा पाक्षिकत्वनिर्वचने निर्दिष्टानां चतमृणामाघाराविध्यादिविषयाणामतिव्याप्तीनां नपरिहारः सार्वकाम्यविधौ 'शतोक्थं भवति' इत्यत्र चाव्याप्तिदोषावधिकौ तादृशसर्वकामत्वावच्छेदेन दर्शपूर्णमासयोर्गणत्वावच्छेदेनोक्थसङ्ख्यायाश्च प्राप्त्यप्राप्तिसत्त्वात्, तस्मादात्यन्तिकत्वस्यापि निर्वचनासम्भवान्नापूर्वविधिलक्षणं सम्भवतीत्यत आह अस्येति ।

यस्य प्रापणीयत्वाभिमतस्य यदर्थत्वं यत्सम्बन्धित्वं तदर्थत्वेन, तत्सम्बन्धित्वेन, तेन प्रकृतिसामानविध्यसंपादनेन विकृतिषु काम्यगुणप्राप्तिफलके विधौ तादर्थ्यप्रापकेपि नाव्याप्तिः प्राप्तमित्यत्र प्रशब्देन वार्त्तिकस्थात्यन्तपदोक्तः प्रकृतविधिफलीभूताप्राप्तिविषयत्वाभावनिर्णायकत्वरूपः प्रमाणान्तरकरणकाप्राप्तिगतोऽभिधीयते प्रकर्षः स चनञा निषिध्यते । ए-

तेनात्यन्तपदस्यापि वार्त्तिके प्रशब्दार्थप्रकटीकरणार्थत्वान्नाप्राप्त्यन्वयित्वमिति सूचितम् । विधिपदेन प्रापकत्वं विवक्ष्यते ततश्च यस्य यत्सम्बन्धत्वं प्रकृतविधिफलीभूताप्तिविषयत्वाभावनिर्णायकप्रमाणांतरकरणकाप्त्या विषयीकृतं न भवति तस्य तत्सम्बन्धित्वप्रापक इति वाक्यार्थः सोऽपूर्वविधिरित्यनेन लक्षणान्तःपातिनोपि विधिपदस्यावृत्त्या लक्ष्यसमर्पकत्वं वार्त्तिके सूचितं,यन्निरूपितसम्बन्धवत्तया तत्प्राप्तौ स्वफलत्वाभावनिर्णायकमानान्तरफलत्वासम्भवः तत्सम्बन्धितया तत्प्राप्तिफलकस्तत्र तस्यापूर्वविधिरिति निष्कर्षः । अत्र प्रकृताऽप्रकृतविधेयोद्देश्यत्वाद्यप्रवेशान्न विषयसप्तमीपक्षोक्तपञ्चविधनिर्वचनेषु पूर्वोक्तदोषाणामापत्तिः । न च सति सप्तमीं स्वीकुर्मः तथा सति तत्प्राप्तिफलकत्वाध्याहारगौरवात्, किं तु सप्तम्याऽभिधीयमानां विषयतामेव व्यापारानुबन्धिनीं वदामः यथाहि चक्षुःफलभूतप्रमितिविषये रूपादौ चक्षुर्विषयत्वं व्यवह्रियते तथाविधिफलभूतप्राप्तिविषये विकृत्यग्रतासम्बन्धादावविधेयेपि विधिविषयत्वोक्तिः। यद्यप्यग्निहोत्रं जुहोतीत्यादावुत्पत्तिविधाविष्टसामान्यसम्बन्धप्राप्तिफलकत्वेन न लक्षणोपपत्तिः तस्यामधिकारविधिफलत्वेनैतद्विधिफलत्वाभावनिर्णयात् तथापि शब्दान्तरादिसहकृतेनामुना यो यागत्वहोमत्वाद्यवान्तरजातिसम्बन्धोज्ञाप्यते तत्सम्बन्धप्राप्तिफलकत्वेन लक्षणमुपपादनीयम् । यद्यपि तादृशजातिसम्बन्धप्राप्तावपि शाखान्तरीयविधिफलत्वं सम्भवति तथापि न तत्स्वफलत्वाभावनिर्णायकं स्वफलेत्यत्र फलपदस्योद्देश्यसाध्यपरत्वात् परफलत्वाद्वा स्वफलत्वाभावः स्वफलत्वाद्वा परफलत्वाभाव इत्यत्र च विनिगमकाभावात् । 'घृते श्रपयती'त्यादौ तु श्रपणप्राप्तौ मानान्तरफलत्वं यद्यपि प्रतिप्रसवोपजीव्यत्वात्पूर्वप्रवृत्तत्वाच्च नोक्तविधेन विनिगमनाविरहेण तदनिर्णायकं वक्तुं युक्तं तथापि बाधिततया प्रवृत्त्यनुपयोगिन्यां प्राप्तौ मानान्त-

रफलत्वमनुपपद्यमानं स्वफलत्वमपेक्ष्यते तत्कथं तद्बाधं कुर्यादिति युक्त एव विशिष्टाभावः ।

एतेन सार्वकाम्यविधिप्राप्तस्वर्गफलकत्वप्रापके विधावव्याप्तिर्निरस्ता । अध्ययनविधिर्हि सर्ववेदवाक्यानां फलव्यवस्थापकः स च विधिलभ्यां लाक्षणिकीमपि प्राशस्त्यधियमर्थवादफलत्वेन स्वीकुर्वन् स्वरूपाविधिफलत्वं निराचष्ट किमु वक्तव्यं शक्त्या क्रियमाणायां स्वर्गफलकत्वप्राप्तिमनन्यफलस्वर्गकामविधिफलत्वेनाङ्गीकृत्य सार्वकाम्यविधिफलत्वं तस्या निराचष्ट इति । तुल्यं च विधेः प्रवर्त्तनाबोधनेव सार्वकाम्यविधेः स्वर्गेतरफलसम्बन्धबोधेन चरितार्थत्वं तेन पूर्वत्र निर्णायकत्वान्तविशेषणाभावाद्विशिष्टाभावः इह तु मानान्तरफलत्वरूपविशेष्याभावात् । अध्ययनविधपर्यालोचने शक्यत्वे त्विहापि विशेषणाभावप्रयुक्तोविशिष्टाभावः यागे स्वर्गसाधनत्वप्राप्तः सार्वकाम्यविधिफलत्वात्स्वर्गकामविधिफलत्वाभावः एतत्फलत्वाद्वा तत्फलत्वाभाव इत्यत्र विनिगमनाविरहस्यापि सुवचत्वात् । नचावघातविधिना हन्तिरिव स्वर्गकामविधिना स्वर्गफलकत्वं नियम्यते येन तत्प्राप्तेः सार्वकाम्यविधिफलत्वं नाध्ययनविधिर्बाधेत न स्वीकुर्याच्च स्वर्गकामविधिफलत्वं नियमविधानेनैव फलवत्त्वोपपत्तेः । प्राकृतपदार्थानुरक्तोपकारान्दृष्टादृष्टरूपान्विकृतौ प्रापयतीत्यतिदेशस्य विषयभेदेनापूर्वविधित्वनियमविधित्वव्यवस्थापनाय लक्षणे सम्बन्धनिरूपकाभिधायियत्तच्छब्दप्रवेशः न तु 'यद्योन्यां गायति तदुत्तरयोर्गायति' 'स्रष्टीरुपदधाती'त्यादौ विषयभेदेन तदुभयरूपत्वव्यवस्थापनाय सः । रथन्तरादौ योनिविषमच्छन्दस्कयोरुत्तरयोर्वाचनिकेष्टकानां मध्यचिति सम्बन्धस्य चात्यन्ताप्राप्तत्वेपि दृष्टार्थत्वान्नियमा दृष्टाक्षेपकत्वाच्च तस्मिन्नंशेपि विधेर्नियमविधित्वमेव यतो युक्तं वक्तुं ईदृशरीत्या स्वी-

नियमविधिस्थलेषु 'हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयती'-त्यादिषु निवारणाय तत्सम्बन्धितयेत्यस्य तन्निरूपितनिरूपक-मात्रवृत्त्यपूर्वसाधनत्वाक्षेपकत्वसम्बन्धवत्तयेत्यर्थो बोद्धव्यः । निरूप-कवृत्त्यपूर्वाक्षेपकत्वे सति तदितरवृत्त्यपूर्वसाधनत्वानाक्षेपकत्वं च सम्बन्धे निरूपकमात्रवृत्त्यपूर्वसाधनत्वाक्षेपकत्वं तेन नोक्तस्थले-ऽतिप्रसङ्गः फलीभूतप्राप्तिविषयीभूतानां तत्तन्मन्त्रादिसम्बन्धानां स्वनिरूपकेतरनियमवृत्त्यपूर्वसाधनत्वाक्षेपकत्वात्, यथा च नि-यमविधौ नियमादृष्टस्य नियम्यमानाजन्यत्वं नियमजन्यत्वं च तथोपपादितमधस्तात् । नापि मन्त्रे गर्दभरशनानिवृत्ति-सम्बन्धं प्रापयति परिसङ्ख्याविधावतिप्रसङ्गः तस्य नि-रूपकवृत्त्यपूर्वसाधनत्वानाक्षेपकत्वात्, सम्बन्धस्याक्षेपकत्वं हि आक्षेप्यानुमितिजनकविधिकत्वं, परिसङ्ख्याविधिश्च यथैवो-क्तसम्बन्धनिरूपकेतरवर्तिनीमपूर्वसाधनतां नानुमापयति तथैव तन्निरूपकवर्त्तिनीमपि ताम्, उपपादयिष्यते चैतदुदाहरणाक्षे-पावसरे । यदि स्वत्रत्येवावपतीत्यादौ आवापनिवृत्तेः स्तोत्रान्त-रापूर्वसाधनत्वमाक्षिप्यते तदा तत्रावापस्यापि माध्यन्दिनार्भ-वपवमानस्तोत्रापूर्वसाधनत्वाक्षेपाद्भवति परिहारः । नचैवं 'दी-क्षितो न जुहोती'त्यादावप्रसङ्गः दीक्षितकर्तृकहोमक्रियाभाव-सम्बन्धं प्रकरणात् ज्योतिष्टोमे प्रापयताऽनेन विधिना सम्बन्ध-निरूपकाभाववृत्त्यपूर्वसाधनताया एवानुमानात् । न च न्यायसुधो-क्तरीत्या सर्वे निषेधाः परिसङ्ख्याविधय एवेति युक्तं, अपूर्वविध्या-दिविवेकोपायस्यात्यन्तिकत्वपाक्षिकत्वरूपप्राप्तिवैचित्र्यस्य तद्विवेको-पायफलस्य गौरवलाघवविवेकस्य च निषेधेष्वपि तुल्यत्वेन तद्विवे-कस्याऽप्यौचित्यापातत्वात् । न चैवं क्रत्वर्थे 'नानृतं वदे'दितिनिषेधे पक्षप्राप्तस्यानृतवर्जनस्य नियमं कुर्वत्यतिव्याप्तिः नियमादृष्टस्य तत्राकल्प्यत्वात्, स्थायिन्यनृतवर्जन एव प्रकृतापूर्वसाधनतायाः

कल्प्यत्वादिति वाच्यम् । क्रतुनिरूपितसम्बन्धवत्तयाऽनृतवर्जनप्राप्तौ स्वफलत्वाभावनिर्णायिकाया मानान्तरफलतायाः सत्त्वात् । सम्भवति हि क्रतूपकारकतयाऽनृतस्येवानृतवर्जनस्यापि कदाचित्प्राप्तिः ।

एतेनातिदेशप्राप्तैत्रकल्पिकादृष्टार्थाङ्गस्य नियमार्थे विधावतिव्याप्तिः तत्रहि न नियमस्यादृष्टजनकत्वं कल्प्यते, किंतु यथा प्रकृतावनभ्यस्तप्रयाजजन्यतयाऽदृष्टोपकारः 'स पशावभ्यस्तप्रयाजैर्जायेत' इतिवचनात् स्वीक्रियते तथा प्रकृतावुपायान्तरेण जातमप्यदृष्टं विकृतावेकेनैवोपायेन जायत इति स्वीक्रियते, तद्यथा 'उत्तरेहन्द्विरात्रस्य गृह्यत' इति । यथावा मिश्रमते विकृतौ 'रथंतरं पृष्ठं भवति' इत्यपि परास्तम् ।

तत्रापि तादृशप्राप्तौ तादृशस्यातिदेशाख्यमानान्तरफलत्वस्य सत्वात्, तथैव ह्यवघातविध्यभावेऽपि पाक्षिकावघातप्राप्तिमाक्षेपतः सम्भाविताामालोच्य वदन्ति न्यायाविदः नास्य विधेरवघातप्राप्तिः फलमपितु तन्नियमः, शक्यत एव तथाऽतिदेशतः षोडश्यादिप्राप्तिमालोच्य सुतरां वक्तुं नास्य विधेः षोडश्यादिप्राप्तिः फलमिति । नच 'न भूपालैरनुत्सव' इत्यादौ निषेधमुखपरिसङ्ख्यास्थलेऽतिप्रसङ्गः भूपालैरुत्सवे धार्यमित्यभ्यनुज्ञारूपेण विधिना विधेयसम्बन्धानिरूपकेऽपूर्वसाधनताया अनाक्षेपात् । नापि निषेधापवादत्वसाम्येपि 'पूषा प्रपिष्टभागो' 'घृते श्रपयती'त्यादावप्रसङ्गः तयोर्निरूपकत्रव्यपूर्वसाधनताक्षेपकत्वात् 'विवाहेऽनृतं वदे'दित्यभ्यनुज्ञाविधौ परमप्रसङ्गोस्ति,युक्तश्च सः, तस्यालक्ष्यत्वात् असत्यपि ह्यस्मिन्विधौ निषेधातिक्रमभयशून्यस्य प्राप्नोत्येवानृतवदनं विवाहार्थं तद्भयवतस्तत्प्राप्त्यर्थं परमेषविधिः अतोऽत्यन्ताप्राप्तविषयत्वाभावे कथमपूर्वविधित्वं स्यात् । यदि त्वदृष्टार्थपदार्थकर्त्तव्यताप्रापकोनिषेधमुखप्रवृत्तपरिसङ्ख्याविधिः कश्चित्सम्भाव्यते यथा 'इडान्ताऽऽतिथ्या सन्तिष्ठते' 'न ह्यत्रानुयाजान्यक्ष्यन्भवतीत्यत्र'

दाशमिकाधिकरणपूर्वपक्षी मन्यते, तदा तत्रातिप्रसङ्गवारणाय निरूपकवृत्तीत्यस्य स्थाने निरूपकतावच्छेदकावच्छिन्नत्वं साधनताविशेषणं बोध्यम् । यद्यपि पूर्वपक्षानुसारेण 'न ह्यत्रानुयाजान्यक्ष्यन्भवति' इतिविधिरातिथ्यायां पत्नीसंयाजानिषेधनिवृत्तिसम्बन्धं बोधयंस्तन्निरूपकनिवृत्त्यात्मकपत्नीसंयाजेष्वातिथ्यापूर्वसाधनत्वमाक्षिपति तथापि न तत्तादृशनिवृत्तित्वावच्छिन्नं, किं तु पत्नीसंयाजत्वावच्छिन्नमेवेत्यूह्यम् । निरूपकतावच्छेदकत्वं च निरूपके विशेषणतया फलीभूतप्राप्तिवेलायां भासमानत्वं, न तु यद्धर्मविशिष्टं निरूपकत्वेनान्वेति तत्त्वम्, तेन शब्दान्तरादिमानकजात्यवच्छिन्नां विजातीयापूर्वसाधनतां यागादिवर्तिनीमाक्षिपत्युत्पत्तिविधौ नाव्याप्तिः । यद्यपि हि प्रापणीयसम्बन्धे तादृशजातियागयोर्निरूपकत्वान्नैव जातिविशिष्टस्य निरूपकत्वेनान्वयः तथापि निरूपकयागे तादृशजातेर्विशेषणतया भावात्सम्भवत्येव तस्या निरूपकतावच्छेदकत्वम्, 'ऋतौ भार्यामुपेयात्' 'प्राङ्मुखोऽन्नानि भुञ्जीत' 'साधून्प्रयुञ्जीत' इतिशास्त्रेषु च ऋतुगमनयोः प्राङ्मुखत्वभोजनयोः साधुतत्प्रयोगयोः सम्बन्धप्राप्तिरेव फलत्वेन यद्याश्रीयते तदा नियमविधय एवैते । न च तेऽत्रातिव्याप्तिः शङ्क्या । यद्यपि भार्यागमनप्राङ्मुखत्वसाधुशब्दात्मकनिरूपकमात्रवृत्त्यपूर्वसाधनत्वाक्षेपकत्वमेतत्प्रापणीयसम्बन्धेष्वस्ति 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति' इत्यादि शास्त्रान्तरेषु शब्दादिगामिन्या एवापूर्वसाधनताज्ञापनात्, तथापि तत्तत्सम्बन्धप्राप्तिषु स्वफलत्वाभावनिर्णायकमानान्तरफलत्वसत्त्वात् । यदि तु 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः' । 'आयुष्यं प्राङ्मुखो भुङ्क्ते' 'एकः शब्दः सम्यक् ज्ञात' इत्यादिशास्त्रान्तरैकवाक्यतया ऋतुगमनादेर्भ्रूणहत्यानिवृत्तिहेतुत्वमाप्तेर्भोजनाश्रितप्राङ्मुखतायां आयुर्हेतुत्वप्राप्तेः प्रयोगाश्रितसाधु-

शब्दे च स्वर्गादिहेतुत्वप्राप्तेः प्रकृतविधिफलत्वमाश्रीयते, तदाऽपूर्वविधय एवैते, न चाऽव्याप्तिः तत्तद्धेतुतात्मकसम्बन्धानां मानान्तरादप्राप्तत्वात् निरूपकमात्रवृत्त्यपूर्वसाधनताक्षेपकत्वाच्च, तस्मात्तन्निरूपितसम्बन्धवत्तया यत्प्राप्तौ स्वफलत्वाभावनिर्णायकमानान्तरफलत्वाभावस्तन्निरूपितनिरूपकतावच्छेदकावच्छिन्नापूर्वसाधनत्वाक्षेपकानिरूपकेतरवृत्त्यपूर्वसाधनत्वानाक्षेपकसम्बन्धवत्तया तत्प्राप्तिफलकस्तेन रूपेण तस्यापूर्वविधिरितिलक्षणं सिद्धम् ।

ये तु नियमादृष्टं नियम्यमानक्रियाजन्यमेव अनुद्देश्यं परं तां प्रतीत्याहुः तन्मते निरूपकेतरवृत्तीत्यक्षरस्थाने निरूपकानुद्देश्येत्यपूर्वान्वयि द्रष्टव्यम् । ये तु नियमविधौ नियम्यमानस्योद्देश्यगतसाधनतावच्छेदकत्वं कल्पयन्तोनास्त्येव नियमादृष्टमित्याहुः तन्मते निरूपकतावच्छेदकावच्छिन्नेत्यनन्तरं निरूपकवृत्तीति साधनतान्वयि बोध्यम् । न वाच्यं च निरूपकेतरेत्यादि सम्बन्धस्य विशेषणान्तरम् ।

केचित्तु 'परिधौ पशुं नियुञ्जीत' इत्यादावत्यन्ताप्राप्तविषये दृष्टार्थविधौ नियमविधिलक्षणाव्याप्तिं च परिहर्तुं दृष्टार्थः सर्वोपि नियमविधिरिति वदन्तोऽपूर्वविधिमदृष्टार्थं मन्यन्ते, ते कथं 'उत्तरेहन्द्विरात्रस्य गृह्यत' इत्यादावुक्तलक्षणाव्याप्त्यतिव्याप्ती परिहरेयुः । अपूर्वविधिरेवायमिति चेन्न । पाक्षिकप्राप्तिमानप्ययमपूर्वविधिः, आत्यन्तिकाप्राप्तिमानपि परिधावित्यादिर्नियमविधिरिति कल्पनाया निर्बीजत्वात् । नियमादृष्टसदसद्भावावेव बीजमिति चेत् । न । अपूर्वविधिनियमविधिविवेकफलभूतगौरवलाघवोपयोगिनः प्राप्तिवैचित्र्यस्यैव तद्विवेकबीजत्वेन स्वीकर्तुमुचितत्वान्नियमादृष्टसदसद्भावयोश्च गौरवलाघवाप्रयोजकत्वात् । किञ्च निगदाधिकरणे निगदेष्वत्यन्ताप्राप्तोपांशुत्वविधानेऽपूर्वविधित्वं तद्भिन्नमन्त्रेषु चोपांशुत्वविधाने नियमविधित्व 'मुपांशु य-

जुषा'इत्यस्य स्यादिति प्राचामुक्तिर्न भवन्मते सङ्गच्छते उभयत्रापि विधेयोपांशुत्वगतदृष्टार्थत्वस्य तुल्यत्वात् नियमादृष्टकल्पनायाश्च तुल्यत्वात् 'अत्यन्तमप्राप्ते पाक्षिके सती'तिभट्टपादोक्तिश्च न सुसङ्गतेत्यपि प्रलपितमेतुमुचिता ।

किञ्च दृष्टार्थोविधिर्नियमविधिरित्यत्र विधिविषयदृष्टार्थत्वेन विधेर्दृष्टार्थत्वं विवक्षितं ? विधिफलभूतप्राप्तिविषयदृष्टार्थत्वेन वा ? आद्ये मन्त्रपरिसङ्ख्याविधावतिव्याप्तिः विधिविषयमन्त्रस्य दृष्टार्थत्वात् । द्वितीयेऽसम्भवः परिसङ्ख्याविधावितरनिवृत्तेरिव नियमविधौ नियमस्यैव फलभूतप्राप्तिविषयत्वात् तस्य च दृष्टार्थत्वासम्भवात् । 'न भूपालैरनुत्सव'इत्यादौ निषेधमुखप्रवृत्तपरिसङ्ख्याविधावतिप्रसङ्गश्च । फलभूतप्राप्तिविषयस्य निषेधनिवृत्त्यात्मनोनीलीधारणस्य दृष्टार्थत्वात् ।

वस्तुतस्तु भट्टपादोक्तिमनुसृत्य परिधावित्यादेरपूर्वविधित्वमुत्तरेहन्नित्यादेर्नियमविधित्वमिति स्वीकर्तुमुचितं, तथासति चास्मदुक्तलक्षणे निरूपकतावच्छेदकावच्छिन्नापूर्वसाधनताक्षेपकत्वमात्रस्य सम्बन्धविशेषणतया प्रवेशोज्ञेयः तावतैव वारणीयपरिसङ्ख्यावारणोपपत्तेः अवघातादिनियमविधिवारणस्य चोद्देश्यबलेनोपपत्तेः । न चैवमत्यन्ताप्राप्तविषये पूतीकविधावपूर्वविधित्वेन स्वीकार्ये सौत्रोनियमव्यवहारोन स्यादिति साम्प्रतम्, तदभावे पूतीकानां पाक्षिकप्राप्तेः प्रागुपपादितत्वात् । नन्वेवमपि 'पत्नीसंयाजान्यहानि सन्तिष्ठन्त'इत्यत्र नावमिकोनियमव्यवहारो न स्यात् अस्यात्यन्ताप्राप्तविषयत्वात् तथाहि उपांश्वादिहारियोजनपर्यन्तं कर्माहःशब्दवाच्यमिति तावत्तन्त्ररत्नादौ प्रसिद्धं, ततश्च द्वादशानां तादृशाह्नां सहत्वसिद्ध्यै हारियोजनानन्तरमवस्थानं प्राप्नुयात्, 'यद्वा भेदस्तु तद्भेदा' दित्येकादशोक्तन्यायेन सुत्याकालीनानामैष्टिकपाशुकानामहर्गणे प्रत्यह-

मावृत्तेर्निर्णयात्कृत्स्नपाशुकैष्टिकप्रयोगसमाप्त्यनन्तरमेव तत्प्राप्नुयात् नतु पत्नीसंयाजान्तान्यहानि प्रकृते वचनाभावे पक्षेऽपि प्राप्नुयुरिति। नैवम्। आस्तां तावत्ताद‍ृशसोमयागस्य अहःशब्दवाच्यत्वं, तावता हारियोजनानन्तरमेवावस्थानप्राप्तिस्तु कथं ? भवति हि ततः प्रागपि यत्र क्वचिदवस्थाने साहित्यसिद्धिर्योगद्वादशत्वं च, तथोत्तरकालीनपदार्थावस्थानेपि सुतरां तत्सिद्धिः। यस्त्वैकादशेन्यायः स यावता तन्त्रत्वं साहित्यसिद्ध्यर्थमपेक्ष्यते तावतो विहायान्यानेव पदार्थान् विषयीकुर्यात्, न तु साहित्यबाधायाल मिति सुधीभिरूह्यम्।

परे तु स्वाऽप्रवृत्तौ अपूर्वीयत्वान्यस्वोद्देश्यतावच्छेदकरूपेणातिदेशभिन्नस्वसमानशाखीयविधिना सम्भवत्सर्वोद्देश्यानुवृत्तप्राप्तिकभावविषयोविधिरपूर्वविधिरिति अपूर्वीयत्वेन रूपेण व्रीहिष्वत्यन्ताप्राप्तमवघातं विदधत्यवघातविधावतिप्रसङ्गवारणायापूर्वीयत्वान्येति, तदन्यदुद्देश्यतावच्छेदकं व्रीहीन्प्रोक्षति' 'व्रीहीनवहन्ती'-त्यत्र व्रीहित्वं, तेन च रूपेण ताद‍ृशपुरोडाशविधिनाऽवघातस्य सम्भवत्प्राप्तिकत्वात्प्रोक्षणस्यासम्भवत्प्राप्तिकत्वाच्च नातिप्रसक्त्यप्रसक्ती। ताद‍ृशोद्देश्यतावच्छेदकरूपेणेतिविवक्षणेनैव गावामयनिकाद्याहर्द्वयगतयोरैन्द्रवायवाग्रताविध्योर्दार्शिकस्वर्गकामविधौ 'त्रेधा तण्डुला' निति देवताचयनविधौ च नाव्याप्तिः त्र्यनीकाविधितः प्रथमभागत्वरूपेणैन्द्रवायवाग्रतायाः प्राप्तिसम्भवेपि स्वोद्देश्यतावच्छेदकाहस्त्वरूपेण प्राप्त्यसम्भवात् सार्वकाम्यविधितः काम्यभावत्वरूपेण दर्शप्राप्तिसम्भवेपि स्वर्गत्वरूपेण तदभावात् देवतान्तरसंयोगविधितोमध्यमत्वादिरूपेण पूर्वदेवतापनयप्राप्तावपि संयुक्तहविष्ट्वरूपेण तत्प्राप्तेरभावात्। अथ किमेतदुद्देश्यतावच्छेदकत्वं व्रीहित्वादिगामि ? न तावदुद्देश्यतानतिरिक्तवृत्तित्वं प्रोक्षणभावनानुद्देश्यलौकिकव्रीहिसमवेतस्य व्रीहि-

त्वस्यानवच्छेदकत्वापत्तेः, नापि तदन्यूनवृत्तित्वं प्रोक्षणभावनोद्देश्येष्वपि यवेष्वसतो व्रीहित्वस्यानवच्छेदकत्वापत्तेः । न च पराभिमतः स्वरूपसम्बन्धविशेषः यथा हि कार्यकारणसम्बन्धबोधकप्रमाणेन यद्धर्मावच्छिन्ने. कार्यतामभा जन्यते तस्मिन्नेव स्वरूपसम्बन्धात्मिका कार्यतावच्छेदकता सिद्ध्यति तथोद्देश्यविधेयसम्बन्धबोधकेन विधिना यद्धर्मावच्छिन्नं उद्देश्यं प्रतीयते तस्मिन्नेव धर्मे तादृश्युद्देश्यतावच्छेदकता सिद्ध्यन्ती सिद्ध्येत्, तच्च व्रीहित्वावच्छिन्नोद्देश्यताविधिना प्रतीयते तदवच्छिन्नोद्देश्यताबाधेन लाक्षणिकापूर्वीयत्वावच्छिन्नोद्देश्यताकल्पनात् । अथापूर्वसाधनत्वलक्षकरूपमेवोद्देश्यतावच्छेदकत्वेन विवक्षितमिति चेत् । न, अपूर्वीयत्वान्येसस्य वैयर्थ्यापत्तेः'स्वर्गकामोयजेते'त्यादौ स्वर्गत्वादेरतथात्वेनाऽव्याप्त्यापत्तेश्च । अथोद्देश्यविशेषणत्वेन श्रुतमेव तथात्वेन विवक्षितमिति चेत् । न, 'विश्वजिता यजेते' त्यादौ स्वर्गत्वादेरतथात्वेनाऽव्याप्त्यापत्तेरिति चेत् । उद्देश्यविशेषणतया प्रकृतविधौ प्रतीयमानमेव तथात्वेन विवक्षितमिति ब्रूमः । अतिदेशभिन्नेतिविशेषणाद्विकृतेष्वग्न्यातिग्राह्यविधिषु द्वादशाहिकत्र्यनीकान्तर्गताग्रताविधयोश्च नाऽव्याप्तिः तत्र तत्राग्न्यतिग्राह्याग्रताविशेषाणामतिदेशत एव सम्भवत्प्राप्तिकत्वात् समानशाखीयेतिविशेषणात् शाखान्तरीयविधितः सम्भवत्प्राप्तिकान्यग्निहोत्रादिकर्माणि विदधत्स्वपूर्वविधिषु नाऽव्याप्तिः । स्वसमानशाखीयत्वं च यत्र स्वाम्नानं तस्यां शाखायामाम्नातत्वं न विवक्षितं 'कुमारा विशिखा इव' 'धन्वान्निव प्रपा असि' इत्यादिमन्त्राद्युन्नेयेष्वपूर्वविधिष्वव्याप्तेः स्वसमानशाखीयत्वाप्रसिद्धेः आदेशान्येत्यस्य वैयर्थ्यापत्तेश्च आनाम्नातस्य तस्याम्नातत्वेनैव निराकरणसिद्धेः, किन्तु स्वप्रतीतिप्रयोजकं यच्छाखीयाम्नातप्रयोज्यप्रतीतिविषयत्वं, स्वप्रतीतिप्रयोजकत्वं च स्वीयाम्नातवत्परकीयाम्नातस्यापि सम्भवतीति नोक्तदोषः । न च

तच्छाखाम्नातत्वमेवास्तु तत एवातिदेशनिवारणसिद्धेरतिदेशान्येति विशेषणमपि मास्त्विति शङ्कयम्, समानशाखीयमन्त्राणुक्षेपविधितः सम्भवत्प्राप्तिकाविषयत्वेन परिहार्ये विधावतिव्याप्तेः। न च दृष्टादृष्टसमूहात्मकयूपत्वावच्छेदेनाप्राप्तखादिरतां वि(१)दधति विधावतिव्याप्तिः तत्संस्कारविधिषु प्रत्येकं श्रुतस्य यूपशब्दस्य प्रत्येकं संस्कारवाचित्वेन खादिरताविधौ दृष्टसंस्कारस्यैवोद्देश्यतावच्छेदकत्वात् तदवच्छेदेन च खादिरतायाः सम्प्राप्तेः उक्तविधत्वात्। न च 'तावब्रूता'मितिविधावव्याप्तिः प्रकृतोद्देश्यतावच्छेदकपौर्णमासीत्वावच्छेदेनोपांशुयाजस्याप्राप्तिसम्भवात्, अन्तरावाक्येन पौर्णमास्यां प्राप्नुवन्नपि ह्युपांशुयाजोनैव पौर्णमासीत्वेन रूपेण प्राप्यते अन्तरालत्वेनैव तत्र कालस्योद्देश्यत्वात्। यद्वोक्तविधिप्रक्रमवशेनान्तरालवाक्यं पौर्णमासीप्रापकं भवेत् तदप्रवृत्तौ तु न तत्प्रापकत्वशङ्कावसरः।

वस्तुतस्त्वन्तरालवाक्यं सम्भवति पौर्णमास्यमावास्ययोः प्रापकमिति तावब्रूतामितिवाक्यस्य नैव लक्ष्यत्वं पूर्णमासीनियमार्थत्वादिति। 'द्वे आहवनीय'इत्यत्र तु द्व्यावृत्तेरपूर्वाया विधेयत्वान्नाव्याप्तिः एवमापराशिकवाक्ये अपि चतुरावृत्तिविधायके अग्न्योन्यायसुधोदाहृताभ्यां 'गार्हपत्येजुहोति' 'अन्वाहार्यपचने जुहोती'तिवाक्याभ्यामेव प्राप्तिसम्भवात् विराट्सम्पत्तिवाक्यं तु दृष्टार्थतया प्रसक्तविकल्पाधीननूद्य विहितसङ्ख्यायां विकल्पप्रसक्तिवारणायेतिस्फुटं वार्तिके। न च साङ्ग्रहायणीविधावव्याप्तिः तदभावेऽर्थवादमात्रादौदुम्बराधिकरणन्यायेन फलसम्बन्धासिद्धेः भावपदग्रहणाच्चात्यन्ताप्राप्तनिवृत्तिप्रापके परिसङ्ख्याविधौ नातिव्याप्तिः नापि निषेधमुखप्रवृत्ते भावप्राप्तिफलके परि-

(१) धौदृष्टसंस्कारस्यैवोद्देश्यतावच्छेदकत्वात् तदवच्छेदेन इति पुस्तकान्तरेऽधिकम्।

सङ्ख्याविधौ तादृशस्थिरोदाहरणाभावात् ।

यत्तु कैश्चिदुदाहृतं–'सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च । त्रिःसप्तमार्जनाच्छुद्धिर्न तु कांस्यस्य तापन'मितिशङ्खवचनम्, अत्र हि कांस्यस्यैव तापनं न कार्यमन्यस्य तु कार्यमिति व्याख्यातमपरार्केणेति ।

तदसत्, अत्र पर्युदासाश्रयणेन कांस्यभिन्नस्य तापनं कार्यमिति विधिस्वीकारात् अप्राप्तस्य तापनस्य निषेधपरिसङ्ख्ययोरसम्भवात् 'नभूपालैरनुत्सव' इत्यत्रापि यद्भूपालैर्न धार्यमित्यनूद्य तदनुत्सव इति कालो विधीयते । अन्यत्रापि विशेषनिषेधा यदि दृश्यन्ते तदा क्वचिद्दोषाधिक्य(१)ज्ञापनं प्रयोजनं, क्वचित्तु सामान्योपसंहारः । आत्यन्तिकत्वं च सर्वोद्देश्यानुवृत्तत्वं प्राप्तिविशेषणम् । नचैवमग्रताविध्यादिष्वव्याप्तिः, उक्तरीत्या लक्षणस्य तत्रोपपत्तेः । नचैवं 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्'इत्यत्र वायव्यपशुगते 'हिरण्यगर्भः समवर्त्तताग्र इत्याघारमाघारयति'इतिविधौ चातिव्याप्तिः सुसदृशद्रव्यान्तरसम्भवेन पूतीकानामत्यन्ताप्राप्तेरिन्द्रदैवत्ये च कर्मणि हिरण्यगर्भमन्त्रस्यात्यन्ताप्राप्तेरिति वाच्यम् । यत्र यदुपकारजनकतया यद्विधित्सितं तत्र तदुपकारजनकतया तस्य यादृच्छिक्या अपि अनुष्ठानयोग्यतारूपप्रसक्त्यपरपर्यायाः प्राप्तेरभावस्य विवक्षितत्वात् अधिकावयवालिप्सया सुसदृशद्रव्यस्यैवोपादानं प्रापयता च शास्त्रेण यादृच्छिक्यास्तादृशप्राप्तेः पूतीकविषयाया अनिवार्यत्वात् लौकिकवाक्यवत् ध्यानादिवच्च हैरण्यगर्भस्यापि मन्त्रस्यैन्द्राघारे गौण्यादिना देवतां प्रकाशयितुं समर्थस्य तादृश्याः प्राप्तेरनिवार्यत्वादित्याहुः ।

तन्न । सार्वकाम्यविधौ काम्यमानत्वेन फलानामुद्देश्यतायामपि स्वर्गकामाविधावव्याप्तेरवश्यम्भावात् । तथा हि–तादृशविधि-

(१) धिक्याज्ञापनमिति पु० पा० ।

तोऽसम्भवत्प्राप्तिकाविषयत्वरूपोक्तलक्षणे यादृच्छिकप्राप्त्यभावस्तावत्पृथगेव विषयविशेषणतया निवेशनीयः अनाम्नातलौकिकमानमूलायां यादृच्छिकप्राप्तावुक्तविधविधिमूलत्वस्य सर्वथाऽसम्भवात् योगसिद्धिन्यायेन च स्वर्गकामविधिमनपेक्ष्यैव सार्वकाम्यविधिबलादवगतरूपं स्वर्गत्वेन स्वर्गमुद्दिश्य यागे पुरुषः प्रवर्त्तते तत्वेनोद्देश्यस्यैव तदुत्पत्तिनियामकत्वात् ततश्च भवदुक्तप्रकारात्तादृशानुष्ठानयोग्यताप्राप्तिः प्रकृताविधिमन्तरेण पूतीकाविधिवत्प्रकृते सुतरां भवन्ती यादृच्छिकी वोच्यतां वैधी वा, सर्वथापि नाव्याप्तिविमोक्षः, कथं चोक्तविधप्रभवमोक्षणे मिश्रमते वैकृते 'रथन्तरं पृष्ठं भवती'त्यादौ नियमविधौ प्रवत्यतिव्याप्तिपरिहार इत्यादि समाहितचेतोभिरवलोक्यताम् ।

वस्तुतस्त्वष्टाकपालादिविधिः प्रकृतिद्रव्यवैतुष्यं विनाऽनुपपद्यमानोलौकिकव्रीहिपारिजिहीर्षयाऽऽक्षेपविषयतावच्छेदकगौरवस्य यवेष्वाक्षेपान्तरगौरवस्य च परिजिहीर्षया पुरोडाशप्रकृतिद्रव्यत्वावच्छेदेनैवावघातमाक्षेपेण प्रापयेत्, 'व्रीहीनवहन्ती'तिविधिस्तु व्रीहित्वावच्छेदेनैव प्रापयतीति प्रसिद्धोदाहरण एवातिव्याप्तेरपरिहार इत्यलं विस्तरेण ।

कश्चित्तूद्देश्यतावच्छेदकावच्छिन्ने विधेयतावच्छेदकावच्छिन्नस्यात्यन्ताप्राप्तस्य प्रापकोविधिरपूर्वविधिः उद्देश्यतावच्छेदकशब्देन साध्यत्वघटकोत्तिकारादिपदवाच्योवैतुष्यादिरुच्यते, वैतुष्यविशिष्टं प्रति चावघातस्य प्राप्तेः संस्कारविशिष्टं प्रति च प्रोक्षणस्याप्राप्तेर्नातिव्याप्त्यव्याप्ती, अपूर्वसाधनत्वाकारेण व्रीहिष्ववघाताप्राप्तिमादाय प्राप्तामतिव्याप्तिं वारयितुमुक्तोद्देश्यतावच्छेदकग्रहणम् । स्वर्गोविहितक्रियाजन्यः असाधारणसुखत्वादित्यनुमानेन विहितक्रियात्वेन रूपेण दर्शादेः स्वर्गहेतुत्वप्राप्तिमादाय सम्भवन्तीमव्याप्तिं परिहर्तुं विधेयतावच्छेदकेति । अत्यन्ताप्राप्त-

शब्देन स्वप्रवृत्तेः पूर्वं वस्तुतः प्राप्त्यभाववत्त्वमभिप्रेतं तथा चाति-देशतः सामान्यविधितः परशाखीयविधितो वा सम्भवत्प्राप्तिकविष-येष्ववघाताविधिस्वर्गकामविधिस्वशाखीयविधिषु नाव्याप्तिः आनुमानि-कत्वसामान्यप्रकृतत्वपराधीनत्वैर्हेतुभिर्विलम्बितप्रवृत्तिकेभ्योऽतिदे-शादिभ्यस्तद्विपरीता अवघातादिविधयः पूर्वं प्रवर्त्तन्ते, ततः प्रवर्त्तमानौ चातिदेशसामान्यविधी शरशास्त्रानुरोधेन कुशेष्विव प्रत्यक्षावघातादि-विध्यधिगतत्वानुरोधेनावघातादिषु नैव प्रापणभावं भजत इति त-दतिरिक्तविषयावेवावतिष्ठेते, अबाधितत्ववदनधिगतत्त्वमपि हि प्रामाण्यसिद्ध्यै विषयस्यावश्यकमिति स्फुटीकृतमौत्पत्तिकसूत्रैकदे-शे जैमिनिना 'अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाण'मिति । य-द्यप्यवघाताद्यधिगमप्रयोजनं नित्यत्वप्राप्त्याद्यन्यदस्ति तथापि न तद् 'दध्नाजुहोती'त्यत्र दध्नोहोमाङ्गत्वमिव क्रियानुवादलभ्यम्, अतः शीघ्रप्रवृत्तविधिनाऽवश्यविधेयस्य पुनर्विधानवैयर्थ्याददतिदेशादेर-वघाताव्यतिरिक्तविषयत्वमवश्यं वाच्यम्, तत्तच्छाखीयविधेश्च तत्तत्पु-रुषविषयत्वम्, एवं च केनापि प्रत्यक्षशास्त्रार्थालोचनात्पूर्वमालोचि-तादतिदेशादेर्यद्यप्यवघातादिप्राप्तिरनुभूयते तथापि नासौ वस्तुत इति भवत्युक्ताव्याप्तिनिरासः । नन्वेवमाक्षेपात्प्रागवघातविधानादवघा-तविधेरपूर्वविधित्वापातः । नैवम् । यदर्थात्प्राप्नोति न तच्छास्त्रार्थ इति न्यायेनाक्षेपेण सम्भवत्प्राप्तिकावघातस्य प्रत्यक्षशास्त्रेण प्रापणसम्भवात् नियमलक्षणया श्रुतविधेरवघातनियमपरत्वमेव ब्रूमः अवघातेनैव वितुषीकुर्यादिति, उचितं चैतव नियम-तज्जन्यादृष्टयोर्जन्यजनकभावस्य शास्त्रैकसमधिगम्यत्वे सति क-ल्प्यशास्त्रविषयत्वापेक्षया श्रुतशास्त्रविषयत्वस्वीकारे लाघवात्, अ-नयैव दिशा पूतीकविधावाघाराङ्गभूतहैरण्यगर्भमन्त्रविधौ च नि-यमविषयतया विधेयप्रापकत्वाभावान्नातिव्याप्तिः । नचाप्राप्तनियम-प्रापकत्वेनैव तदापत्तिः श्रुतशब्दात्स्वरसतोविध्यन्वयितया प्रती-

स्वर्गकाम'इत्यादिः । यागस्यहि स्वर्गार्थत्वं न प्रमाणा-

---

तस्यैव विधेयशब्दार्थत्वात् आकरे नियमस्यार्थात्सिद्ध्युक्तिस्तु प्रौढिमात्रमुक्तन्यायात् 'ऋतौ भार्यामुपेयादि'त्याद्यव्यापकत्वाच्च । न ह्याक्षेपात्पूर्वं हन्तिविधिरिव रागात्पूर्वमसौ विधिः प्रवृत्त इति शक्यनिरूपणमित्याह ।

तत्तुच्छम्, तथासति नियमविधेरपि श्रुतहान्यादिदोषत्रययुक्तत्वेनाक्लृप्तादृष्टसाधनताप्रापकत्वेन चापरविधिद्वयाद्दौर्बल्यापत्तेः विध्यन्तराविवेकेन नियमविधिनिरूपणफलस्याकरस्थनियमविधिमावल्यव्यवहारस्योच्छेदापत्तेरित्यलं पल्लवितेन ।

ननु किमुक्तापूर्वविधिलक्षणोदाहरणम् ? उदाहृतमेव वार्त्तिके 'व्रीहीन्प्रोक्षती'तिचेत् ? न, 'अग्नये जुष्टं प्रोक्षामि'इत्येवंरूपस्य मन्त्रस्य प्रकृतदेवतासम्बन्धद्रव्यकर्मप्रोक्षणप्रकाशकस्य प्रकरणावगतक्रत्वङ्गभावस्य लिङ्गात्प्रोक्षणार्थत्वावगतौ सत्यां प्रोक्षणकर्त्तव्यतामन्तरेण तादर्थ्यानुपपत्त्यैव प्रोक्षणप्राप्तेरुक्तविधिवैयर्थ्यादिति शङ्कां तुच्छत्वेनानिराकृत्याभ्युपेत्यैव तावदुदाहरणान्तरमाह । यथेति । अत्यन्तापूर्वसाध्यसाधनभावस्य पदद्वयज्ञाप्यत्वमभिप्रेत्य दर्शादिनामोपेक्षणम् ।

ननु विश्वजिन्न्यायात् 'अगन्मस्वः सुव'रिति मन्त्रादुक्तन्यायसहिताद्वा स्वर्गार्थत्वस्यापि प्राप्तेः कथं तद्विधेरप्यपूर्वविधित्वमित्यत आह । यागस्यहीति । नहि विश्वजिन्न्याय उक्तमन्त्रो वा स्वयं स्वर्गार्थत्वे प्रमाणम्, प्रकृतविधौ स्वर्गकामपदकल्पने परं प्रमाणं स्यात् ततश्चैतद्विधिव्यतिरेकेण स्वर्गार्थत्वाप्राप्तिरविहितेत्यर्थः । ननूक्तन्यायमन्त्राभ्यां स्वर्गकामपदं यदाग्नेयाद्युत्पत्तिवाक्येष्वेव कल्प्येत नोदाहृताधिकारवाक्ये, ततश्चोदाहृतविध्यभावे तैरेव स्वर्गार्थत्वप्राप्तिः, सम्भवति च सार्वकाम्यवाक्याद-

न्तरेण ज्ञायते किन्त्वनेनैव विधिनेति भवत्ययमपूर्व-

---

प्यसावित्याशयेन शङ्कते । किन्त्विति । परिहरति । अनेनैवेति । यदत्र प्रयाजादिपरिहारेण मिलितानां षण्णां स्वर्गसाधनत्वं विधित्सितं न तदुत्पत्तिवाक्ये स्वर्गकामपदाध्याहारेऽपि सिध्येत् प्रत्युत्पत्तिवाक्यं तदध्याहारे सति एकैकस्यैव यागस्य स्वर्गार्थत्वापत्तेः आग्नेयादिवाक्येष्विव प्रयाजादिवाक्येष्वपि फलाकाङ्क्षासाम्येन तदध्याहारापत्त्या प्रयाजादीनामपि स्वर्गार्थत्वापाताच्च । नापि सार्वकाम्यवाक्यात्तत्सिद्धिः स्वर्गकामवाक्यस्याप्यध्ययनकर्त्तव्यतां बोधयताऽध्ययनविधिना स्वर्गेतरफलसाधनत्वप्राप्तेरेव सार्वकाम्यविधिफलत्वाङ्गीकरणादित्याशयः ।

अथ 'नियमः पाक्षिके सती'त्यत्र कस्य पाक्षिकत्वं विवक्षितं ? विध्युपात्तस्यानुपात्तस्य यस्य कस्यचिद्वा ? आद्ये विधेयस्योद्देश्यस्योभयस्य वा ? न द्वितीयतृतीयौ 'व्रीहीनवहन्ति' इतिविधेयावघातस्यैव पाक्षिकत्वेन केवलविधेयनियमविधावव्याप्तेः । नाद्यः केवलकार्यनियमे विधेयनियमसहिते च कार्यानियमेऽव्याप्तेः तथाहि 'यद्योन्यां तदुत्तरयोर्गायती'त्यस्य विधेरस्ति त्रिरूपत्वं यस्य स्तोत्रीयसाम्न उत्तराग्रन्थे योनिविषमच्छन्दस्के उत्तरे पठिते तयोस्तावदयमपूर्वविधिः एतदभावे हि समच्छन्दस्क एव के अप्यृचौ नावमिकच्छन्दस्कन्यायसहकृतात् 'एकं सामतृचे क्रियत' इति शास्त्रात्प्राप्नुयात्, यस्य तु स्तोत्रीयसाम्नस्तत्रैव योनिसमच्छन्दस्के ते पठिते, प्रकरणादिनावगतस्तोत्राङ्गभावे वा तत्रोभयनियमः यथैव हि स्तोत्रीयसाम्नस्तृचगेयत्वनिर्वाहाय योनिभिन्नद्वयस्यानियमेन प्राप्तौ उत्तरयोर्नियमः क्रियते तथा स्तोत्राङ्गत्वेनावगतयोरप्रगीतयोः स्तोत्राङ्गत्वायोगादनियमेन सामप्राप्तौ सम्भवति योनिसाम्ना नियमः । यत्र तु वैकृते 'वामदेव्यं पृष्ठं भवती'त्या-

द्विविधौ साम्नः स्तोत्राङ्गत्वादेश्च तद्योनेः स्तोत्रसम्बन्धः कल्प्यते तत्रोत्तरयोः स्तोत्राङ्गत्वं न प्रमाणसिद्धमस्तीति न तन्निर्वाहाया-नियता सामप्राप्तिरस्तीति सामसंस्कार्ययोः केवलयोरेव नियमाद्भ-वति कार्यमात्रनियमः तदैव मन्त्रकेवलकार्यनियमे साम नियमसहि-ते च कार्यनियमे पाक्षिकविधेयप्रापणात्मनोनियमलक्षणस्याव्या-प्तिः एवं समप्राधान्येन कार्योपायनियमद्वयफलकाः सन्त्यन्येऽप्य-व्याप्त्युदाहरणीभूता विधयः 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्त'दिति, एतदभावे हि प्रयाजानामप्यनियताज्यद्रव्यकत्वं स्यात् जौह-वाज्यस्याप्यनियतप्रयोजनकत्वं स्यादिति भवत्यस्मादुभयनियम-सिद्धिः। तथा वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति' इत्येतद्विध्य-भावे यजुर्युक्तरथस्यानियतर्त्विक्सम्बन्धः प्राप्नुयादध्वर्योश्चानिय-तरथसम्बन्धः प्राप्नुयात्। तथा सौभरं प्रकृत्याम्नाते'हीषितिवृष्टि-कामाय निधनं कुर्यात्'इतिविधेरभावे हीषितिनिधनस्य स्वर्गादि-फलकसौभरसम्बन्धोपि प्राप्नुयात् वृष्ट्यर्थसौभरस्य चोर्गादिनि-धनान्तरसम्बन्धोपि प्राप्नुयादिति भवत्येताभ्यामपि विधिभ्यां प्रत्येकमुक्तनियमद्वयसिद्धिः यथा ब्राह्मणस्य याजनादिषु कृष्या-दिषु वाऽर्जनोपायेषु प्राप्तेषु याजनाद्युपायनियमस्तावच्छ्रूयते 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजना-ध्यापने चैव विशुद्धाच्च प्रतिग्रह' इति। उक्तनियमाच्च ब्राह्मणादी-नामेव याजनादय इत्यस्यापि नियमस्य भवति सिद्धिः यज्ञादि-विधयोहि याजकादिसाकाङ्क्षा उक्तविध्यभावे कानपि समर्थान्या-जकादीनाक्षिपेरन्, उक्तविधिसत्वे तु तद्वशेन याजनादिषु प्रवृत्ता-न्ब्राह्मणान्निरीक्ष्य तैरेव निराकाङ्क्षाः सन्तोनाक्षिपन्तीति, एवंचात्रा-पि पूर्ववदव्याप्तिः। ननु विधेयगतपाक्षिकत्वविवक्षाया नोक्तव्या-प्तयः सङ्गच्छन्ते यद्योन्यामित्ययं विधिस्ताव'देकं साम तृचे क्रियते स्तोत्रीय'मितिविधिविहितत्रित्वपूरणाय योनिभिन्नर्ग्द्वयापेक्षायां प्र-

वर्त्तते इत्यविवादं एकंसामेतिविधिना च स्तोत्राङ्गत्वेनैव त्रित्व-विधानं न सामाङ्गत्वेनेति निरूपितं नवमे प्रत्यृचसामगाना-धिकरणे । एवं च स्तोत्राङ्गत्रित्वपूरणाय स्तोत्राङ्गभूतर्ग्द्वयापेक्षायां प्रवर्त्तमाने यद्योन्यामितिविधिनोत्तराद्वयं स्तोत्राङ्गत्वेनैव विधेयं, सामसम्बन्धस्तु तद्वशेनैव सम्भवत्प्रासिकत्वादनुवदितव्यः पूतीके-ष्वभिषवसम्बन्धवत् फलचमसे भक्षसम्बन्धवच्च । स्तोत्रेचर्चो-रुपायत्वेनैव नियमइति यद्योन्यामित्येनदुपायनियमपरमेव न कार्यनियमपरम्, आस्तां वा तदुदाहृते 'वामदेव्यं पृष्ठं भवति'इ-त्यादौ कार्यनियमः, उभयनियमस्तु न सम्भवति नदुदाहरणेऽरु-णैकहायनीन्यायेनैवोभयनियमसम्भवे विधिवैयर्थ्यात् प्रपाञ्चितं चैतत्कुलसाङ्कर्यखण्डने । भवतु वा विधिमूला नियमद्वयसिद्धिः तथापि कार्यनियमस्य न विधिफलत्वं सङ्गच्छते यथैव हि दल-नादिनिवृत्तिर्व्रीहीन्विधिना जायमानापि न तत्फलं अविधेयगा-मित्वाद्विप्रकृष्टत्वाच्च, तथा कार्यनियम उक्तविधिभ्यः सिध्यन्नपि न तेषां फलं ताभ्यामेव हेतुभ्यां अप्राप्ततादशायां साधनविधानं कुर्वतैव विधिना बोधितसाध्यसम्बन्धेन निराकाङ्क्षेण साधनेन साध्यान्तरानाक्षेपाद्भवन् हि साध्यनियमः साधननियमोत्तरमे-वात्मानं लभते । नच श्रुतत्वविधेयसम्बन्धनिरूपकत्वाविशेषेण विधेयोद्देश्ययोरन्द्वामित्वाभ्यां फलत्वाफलत्वविवेकासम्भवः सा-ध्यसाधनसम्बन्धं बोधयतोविधेस्तत्सहकारिणां वा श्रुत्यादीनां साधनांश एव प्रामाण्यात् साध्यांशस्य तु नान्तरीयकत्वात् । अत एवा हुर्भट्टाः 'श्रुत्यादिभिः प्रमाणैश्च शेषत्वस्यैव निर्णयः । शेषी तद्विषयत्वेन लक्ष्यते नान्तरीयक'इति ।

अतएव 'अथातःशेषलक्षण'मित्येव सूत्रितं न शेषिलक्षणमिति । प्रमाणफलस्य च प्रामाण्यविषयगामित्वे सम्भवति नान्यगामित्वमु-चितमिति नोक्तविधीनां कार्यनियमफलत्वांशेनाप्यप्युदाहरणत्वं

सङ्गच्छते । यस्तु प्रतिग्रहादिनियमविधावव्याप्त्युपन्यासः सोऽतितुच्छः स्वोक्तिविरुद्धश्च। यथाहि प्रतिग्रहादिविधिबलात्प्रतिग्रहादिषु प्रवृत्तान्ब्राह्मणानुपलभ्य निराकाङ्क्षा दानादिविधयो नान्यान्प्रतिग्रहीत्रादीनाक्षिपन्तीति ब्राह्मणानां दानादौ प्रतिगृहीतत्वादिनियमो लभ्यते तथा तैरेव विधिभिः प्रवृत्तब्राह्मणादिभिः प्रतिग्रहार्जितधनान्युपलभ्य निराकाङ्क्षैः क्रतुविधिभिर्नान्यानि धनान्याक्षिप्येरन्निति प्रतिग्रहाद्युपायार्जितधननियमः क्रतुषु सिद्ध्येत् । अस्त्वेवमिति चेत् तथा सत्यध्ययनस्याक्रत्वर्थत्वेपि तन्नियमस्य क्रतूपयोगसम्भवादध्यायस्य क्रत्वर्थत्वपुरुषार्थत्वेऽनभ्युपगम्य यथाऽर्थज्ञानार्थत्वं स्वीक्रियते तथा द्रव्यार्जननियमस्याप्युक्तरीत्या क्रतूपयोगसम्भवाद्द्रव्यार्जनं केवलद्रव्यार्थमेव स्यान्न तु पुरुषार्थं तथासति नियमादृष्टकल्पनोपन्यासो द्रव्यार्जनाधिकरणे भाष्यकारीयोन सम्भवेत् ।

यच्च द्वेधा तद्व्याख्यानं शिलोञ्छदायाद्यभावे प्रतिग्रहाद्यनुष्ठानादभ्युदयः प्रतिग्रहादिभिन्नोपायानुष्ठानात्प्रत्यवायोवा कल्प्यत इति तदपि न घटेत । अथोच्येत द्रव्यार्जनस्य द्रव्यस्वरूपार्थत्वं तट्टीकायां द्रव्यार्जनाधिकरण एव 'न चाधानवद्भवितुमर्हती'तिभाष्यव्याख्यानावसरे निराकृतं, यथा ह्यग्नित्रिचयोराधानाध्ययनाविध्यभावेऽनन्याक्षेप्यत्वेन क्रतुविधिभिर्नियताक्षेपे प्रसक्तेऽग्निविद्यामात्रार्थत्वेनाधानाध्ययने विदधद्भ्यां विधिभ्यामग्निविद्यागोचरनियताक्षेपप्रतिबन्धात्तत्सिद्धाग्निविद्यानियमः क्रतुषु सिध्यति एवं प्रतिग्रहादिविध्यभावे यदि क्रतुविधिकर्तृको धनाक्षेपोनियमेन प्रसज्येत स च प्रतिग्रहादिविधिभिः प्रतिबध्येत तदा प्रतिग्रहादिविधेरक्रत्वर्थत्वेपि तत्सिद्धधनानियमः क्रतुषु सिध्येत् । नचैवमस्ति प्रतिग्रहादिविध्यभावेऽपि जीवनार्थमनियमार्जितधनोपादानेनोपपन्नैः क्रतुविधिभिरनाक्षेपसम्भ-

तु, अतोद्रव्यार्थत्वे नियमानर्थक्यात् क्रियार्थत्वे च मानाभावात् पुरुषार्थमेव द्रव्यार्जनमितीति। तर्हि रागतः प्रतिग्रहादिषु प्रवृत्तैरेव प्रतिग्रहीत्रादिभिरुपपन्नाः क्रतुविधयोनोक्तविध्यभावे प्रतिग्रहीत्रादीनाक्षिपेयुरिति नोक्तविधिभिस्तदाक्षेपप्रतिबन्धमुखेन ब्राह्मणानां प्रतिग्रहीतृत्वादिनियमोपि सिद्ध्येत्। किञ्च शास्त्रांसेऽधिकरणे ब्राह्मणं प्रति याजनादिनियमशास्त्रस्य क्षत्रियवैश्यौ प्रति निषेधस्य वा पुरुषार्थत्वाद्येन केनाप्यार्त्विज्ये क्रियमाणे क्रतुवैगुण्याभावान्नार्त्विज्यं ब्राह्मणैरेव कर्त्तव्यं, किन्तु त्रिभिरपि वर्णैरिति पूर्वपक्षं प्रदर्श्य सिद्धान्तितं 'स्यादेवं यदि त्वदुक्तद्विप्रकारमेव शास्त्रं स्यात्, अस्ति त्वन्यदपि क्रत्वर्थं ब्राह्मणानामेवार्त्विज्यमिति 'राजयाजकयाज्यस्य यथादत्तं हविर्नशे'दिति च, तद्वशाद्ब्राह्मणान्येनार्त्विज्ये क्रतुवैगुण्यं निर्णीयते इति। यदि प्रतिग्रहादिशास्त्रात्पुरुषार्थादपि ब्राह्मणानामार्त्विज्यनियमः क्रत्वर्थः सिद्ध्येत् तदा तत्रोक्तप्रकारावुभावपि पूर्वपक्षसिद्धान्तावनुपपन्नौ स्याताम्। अस्तु वा तत एव शास्त्राद्ब्राह्मणानामार्त्विज्यादिनियमसिद्धिः तथापि त्वदुक्तरीत्यैव तस्या अविधेयगामित्वाद्विप्रकृष्टत्वाच्च दलनादिनिवृत्तेर्हन्तिविधिफलत्वाभाववत् प्रकृतविधिफलत्वासम्भव इति कथं तत्फलत्वांशेनाव्याप्त्युदाहरणत्वं सङ्गच्छते प्रतिग्रहादिविधीनाम्, अतोविधेययागपाक्षिकत्वाविवक्षा निर्दोषेति चेन्न।

यतोविधेयमप्यत्र विध्युपात्तं विवक्षितं? अनुपात्तं वा? नाद्यः, अनुपात्तनियमपरे विधावव्याप्तेः, दृश्यते हि 'पुरोडाशं प्रथयति'इत्यनुपात्तकर्तृनियमपरोविधिः, न ह्यत्र प्रथमं विधेयं पुरोडाशाक्षेपादेव तत्प्राप्तेः, अध्वर्युकर्तृकत्वनियमार्थं तु तद्विधीयते, तथा 'व्रीहिभिर्यजेत'इतियवेष्वनुपात्तेषु अनुपात्तहन्तिनियमपरोविधिः अत्र हि साक्षाद्यागाङ्गत्वेन प्रतीयमाना अपि व्रीहयो न तथा विधेयाः आग्नेयादीनामुत्पत्तिशिष्टपुरो-

डाशावरोधात् उपांशुयाजस्यापि 'तावब्रूता'मिति वाक्ये नित्यवदाज्यावरोधप्रतीतेः, अतः पुरोडाशप्रकृतित्वेन विधेयाः, तत्त्वेन च तन्नियमो निर्वापादिविधिभ्योऽपि प्राप्नोति, तेषु हविर्निर्वापादिसंस्कार्यत्वेन व्रीहयः श्रुताः प्रयोजनमपेक्षन्ते 'कपालेषु श्रपयति'इति प्रयोगान्तर्गतश्रपणविधिना च सामान्यतः प्रकृतिद्रव्योपादानाक्षेपात्किञ्जातीयं पुरोडाशप्रकृतिद्रव्यमुपादेयमिति भवत्याकाङ्क्षा, उभयाकाङ्क्षया परस्परान्वये भवत्येव व्रीहीणां प्रतिनिधिनियमः। यद्वोक्तरीत्या प्रकृतिद्रव्यविशेषाकाङ्क्षायां षष्ठान्त्यन्यायेन 'व्रीहीणां मेध सुमनस्यमान' इति मन्त्रादेव व्रीहिनियमसिद्धिः, अतो न व्रीहिनियमार्थमपि तच्छास्त्रम्, किं त्ववघातप्रोक्षणशास्त्रयोर्यवविषयत्वज्ञापनार्थं, तेन व्रीहीणामपूर्वसाधनत्वे ज्ञापिते हि (दाति) हन्तिप्रोक्षणशास्त्रयोर्व्रीहिपदेन पूर्वावधृतापूर्वसाधनत्वलक्षणासम्भवात् भवति तयोर्यवसाधारण्यम्, इतरथा तस्या असम्भवान्न तत्सिद्ध्येत् ।

ननु व्रीहिशास्त्राभावेऽपि श्रपणविध्युत्थां प्रकृतिद्रव्याकाङ्क्षां प्रोक्षणादिविध्युत्थां च प्रोक्षणादिसंस्कृतव्रीहीणां कैमर्थ्याकाङ्क्षामालोच्य यदा तादृशव्रीहीणां प्रकृतिद्रव्यतयाऽन्वयः कल्प्यते तदा प्रोक्षणादिसाध्यत्वमपि तेषां न व्रीहित्वाकारेण सम्भवतीत्यालोच्य कल्पितप्रकृतिद्रव्यत्वमूलकापूर्वसाधनत्वाकारेणैव तेषां तत्साध्यत्वमित्यपि कल्प्येतैवेति भवेदेव प्रोक्षणादेर्यवसाधारण्यमिति चेत् । न, व्रीहिशास्त्रबोधितापूर्वसाधनत्वलक्षणायां सत्यां स्रुवादिव्यावृत्त्यर्थमपूर्वसाधनत्वस्य व्रीहित्वेन विशेषणे युगपद्वृत्तिद्वयविरोधात्तण्डुलप्रणाडिकयैव तद्विशेषणीयं, तादृशापूर्वसाधनत्वं च यवेष्वस्तीति भवति प्रोक्षणादेस्तत्साधारण्यं 'व्रीहिशास्त्राभावेनापूर्वसाधनलक्षणाया अभावात्कल्पितप्रकृतिद्रव्यत्वलभ्यापूर्वसाधनत्वाकारेण प्रोक्षणादिसाध्यत्वं कल्प्यं, तत्र च स्रुवादिव्यावृत्तिरुपस्थि-

तद्व्रीहित्वेनैव शक्यते कर्तुं, शब्दानां रूढकल्पनायां वृत्तिद्वयविरोधप्रसक्तेस्तस्य च यवव्यावृत्तत्वान्न यवसाधारण्यं प्रोक्षणादेः स्यादिति ।

नन्वेवं सत्यपि व्रीहिशास्त्रेणैव तस्य तत्साधारण्यसिद्धिः अपूर्वसाधनलक्षणाया असम्भवेन व्रीहिविवक्षायामपि वृत्तिद्वयाप्रसक्तेः । कथं तदसम्भव इति चेत् ? शृणु, आनर्थक्यपरिहारार्थं सा स्वीक्रियते, शक्यते तु तां विनापि तत्परिहर्तुम् । 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यत्र हि रागतः प्राप्तभोजनानुवादेन विहितमपि प्राङ्मुखत्वं न श्रुतेन लक्ष्येण वा रूपेण भोजनार्थं स्वीक्रियते, कल्प्यादृष्टफलार्थं तूच्यते, एवं व्रीह्यनुवादेन विहितस्य प्रोक्षणादेस्तादर्थ्यापरित्यागेन क्लृप्तप्राकरणिकक्रत्वपूर्वार्थत्वं कुतो लक्षणां विनैव नोच्येत । अथ द्वितीयाश्रुत्यवगतव्रीह्यर्थत्वानिर्वाहाय व्रीहिपदस्यापूर्वीयव्रीहिपरत्वमावश्यकं, तन्न, व्रीहित्वस्योद्देश्यविशेषणतया विवक्षायां वाक्यभेदात्तदविवक्षितमित्युच्येत अपूर्वीयत्वेन व्रीहित्वविवक्षायां नैवं, वाक्यभेदाभावात्, प्रधानविधेः कथंभावापेक्षायां प्रोक्षणावघातविध्योः फलाकाङ्क्षायामेकवाक्यता तावदवश्यं कल्प्या प्रोक्षणेनावघातेन व्रीहिद्वारा प्रधानापूर्वं कुर्यादिति । नचापूर्वीयव्रीहिद्वारेणापूर्वार्थत्वं सम्भवतीति भवत्यर्थादपूर्वीयव्रीहिविषयत्वानियमलाभः । नचापूर्वीयत्वेनोपस्थितिं विना लौकिकव्रीहित्वाकारेण संस्कार्यत्वबोधो न सम्भवतीत्यपि शङ्कास्पदम् । 'तप्ते पयसि दध्यानयति' इत्यत्र तादृशपयस्त्वेनैव दध्यानयनसंस्कार्यत्वस्यावश्याभ्युपेयत्वात् एतद्वाक्योपस्थितसंस्कृतपयःपरामर्शिसर्वनामयुक्तेन एतदुत्तरपठितेन 'सा वैश्वदेव्यामिक्षा' इतिवचनेन द्रव्यदेवतासम्बन्धोपस्थापनमुखेन ज्ञाप्ययागापूर्वसाधनत्वं पयःसमवायिन एतद्वाक्यप्रवृत्तिवेलायां सम्भवदुपस्थितिकं स्यात्पयःपदेन लक्षणाया असम्भवात् । आस्तां

वा प्रधानविध्येकवाक्यत्वं, व्रीहिमात्रोद्देशेन प्रोक्षणादिविधिमात्रपर्यालोचने तात्पर्यात् प्रोक्षणादेरपूर्वीयविषयत्वलाभः शक्यत एव निरूपयितुं, यथा हि 'यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रिति। अत्र कृत्वाचिन्तात्मकहविरुभयत्वन्यायेन शाब्दबोधवेलायां निमित्तविशेषणोभयत्वाविवक्षयाऽन्यतराग्न्यनुगमस्य निमित्तत्वप्रसक्तावपि नैमित्तिकाधानस्य सहिताग्निद्वयजनकस्वभावानुरोधेन उभयाग्न्यनुगम एव निमित्तमिति कल्प्यते, तथा व्रीहिसंस्कारत्वेन विहितप्रोक्षणस्य लौकिकव्रीहिविषयत्वे सत्यानर्थक्यात् अपूर्वीयव्रीहिविषयत्वयोग्यतामालोच्य तदनुरोधेन शक्यत एव कल्पयितुं अपूर्वीयव्रीहय एवात्रोद्देश्या इति किमपूर्वसाधनलक्षणया? स्वस्यां वा तस्यां स्रुवादिष्वपि हन्तिप्रोक्षणापत्तिः ततश्च तत्र हन्तेरदृष्टार्थत्वं व्रीहिषु दृष्टार्थत्वमिति वैरूप्यापत्तिः च, तद्वारणाय तण्डुलनिर्वृत्तिगमनाद्व्योद्देश्यापूर्वसाधनविशेषणत्वे वाक्यभेदापत्तिः। यदि च व्रीहिपदेऽपूर्वसाधनलक्षणा स्यात्तदा 'सोममभिषुणोति' इत्यादिवाक्येषु सोमपदेनापूर्वसाधनलक्षणा स्यात् तदा प्रोक्षणादीनां यवसाधारण्यवत्सोमधर्माणां फलचमससाधारण्यं स्यात्। फलचमसस्य नैमित्तिकत्वाद्यवैलक्षण्यमस्तीति चेत्? किं ततः, नहि व्रीहिसोमफलचमससाधारणाकारेणापूर्वसाधनत्वेनोद्दिश्य नित्यवत्प्रोक्षणादिविधाने नित्यानित्यसंयोगविरोधोऽस्ति, फलचमससाधारण्याभावे वा प्रतिनिधिभूतनीवारपूतीकादिसाधारण्यमपि प्रोक्षणाभिषवादीनां न स्यात्। नच मुख्यव्रीह्याद्यवयवलिप्सया गृह्यमाणा नीवारादयो न नैमित्तिकद्रव्यान्तरत्वेन गृह्यन्ते येन फलचमसतुल्यता स्यात्, किन्तु व्रीहितदवयववत् व्रीहिशास्त्रार्थत्वेनैव गृह्यन्त इति अपि शङ्क्यम्, व्रीहिनीवारयोस्तुल्यत्वप्रसङ्गात् व्रीहिषु सकलशास्त्रार्थसम्भवोनीवारेषु तदेकदेशत्वात्

व्रीह्यसम्भव एव नीवाराणां शास्त्रार्थत्वमिति चेत् ? तर्हि सिद्धं स्वद्वचसैव नैमित्तिकत्वं, एवं च व्रीहिनीवारगतावयवानां प्रातिस्विकरूपेण नित्यत्वानित्यत्वभेदे सत्यप्यपूर्वसाधनत्वात्मकानित्यरूपक्रोडीकृतानां नित्यप्रोक्षणादिसम्बन्ध उपपादनीयः तदा तेनैव रूपेण सम्भवत्सङ्ग्रहः फलचमसः किमित्युपेक्षणीयः । यदि त्वपूर्वसाधनलक्षणां परित्यज्य संस्कारवाक्येषु व्रीह्यादिपदं मुख्यार्थमङ्गीक्रियते तदा प्रतिनिधिभूतनीवारादेर्नैमित्तिकफलचमसादेश्च नित्यप्रोक्षणादिसम्बन्धाऽसम्बन्धौ सम्भवतः व्रीहिगतानामिव नीवारगतानामप्यवयवानां व्रीहिपदेन विषयीकरणेपि सोमपदेन फलचमसस्याविषयीकरणात्, तस्मात्फलचमसस्य नित्यधर्मालाभः प्रतिनिधेस्तु तल्लाभ इति सिद्धान्तानुरोधेनाप्यपूर्वसाधने लक्षणा नाङ्गीकार्या ।

ननु सत्यामपि तस्यां शक्यत एवासौ रक्षितुं, नैमित्तिकं हि नित्यापवादत्वेन विधीयमानं न तत्समकालं विधीयते धर्माश्च नित्यवद्विधीयमानाः स्वविधिसमकालप्रवृत्तनित्यविधिशेषत्वेन निराकाङ्क्षा न पुनर्नैमित्तिकविशेषत्वं प्रतिपद्यन्ते, प्रतिपद्यन्ते च प्रतिनिधिशेषत्वं नित्यविधेरेव तत्प्रापकत्वात् । नच व्रीहिविधेः प्रोक्षणादिविधेश्च नित्यत्वेन युगपत्प्रवृत्तत्वात्प्रोक्षणादिविधेः प्रागवगतमपूर्वसाधनत्वं व्रीहिष्विति प्रोक्षणादिविधिगतेन व्रीहिपदेन तल्लक्षणेत्यपि शङ्क्यं, यवेषु धर्माकाङ्क्षोपशमार्थापूर्वसाधनत्वलक्षणार्थमेव स्वतुल्यप्रवृत्तिकतया प्रतीयमानमपि व्रीहिशास्त्रं प्रतीक्ष्यैव प्रोक्षणादिविधिप्रवृत्त्यभ्युपगमात् । एवं च व्रीहिशास्त्रोपस्थापितसाधनत्वं लक्षणया तद्विषयीकृतत्वाविशेषेण व्रीहीणामिव नीवाराणां तत्तुल्यप्रवृत्तिकशास्त्रबोधितसाधनत्वानां च यवानामपि सङ्ग्रहाद्भवति धर्मसम्बन्ध उभये-

षां, नैमित्तिकविधेस्त्वपवादतया धर्मविधिवाश्रितद्रव्यान्तरविधिं प्रतीक्ष्य तत्समकालप्रवृत्तेन तेन धर्मविधेः प्रागपूर्वसाधनताया अज्ञापनान्न धर्मविधिषु लक्षणया तत्सङ्ग्रह इति न नैमित्तिकस्य धर्मलाभ इति ।

मैवम् । यवानामिव फलचमस्यापि धर्माकाङ्क्षोपशमार्थं फलचमसविधिमपि प्रतीक्ष्य तत्साधारणापूर्वसाधनलक्षणया प्रवृत्तैर्धर्मविधिभिस्तत्रापि धर्मप्रापणस्यानिवार्यत्वात् । न च व्रीहिशास्त्रेण वस्तुतो नीवारा विषयीक्रियन्ते व्रीहिशब्देन व्रीहित्वावच्छेद्यानामिव तदनवच्छेद्यानां तदवच्छेद्यत्वयोग्यानामपि नीवारगतावयवानां निर्देशासम्भवात् । तत्सिद्धं सत्यामपूर्वसाधनलक्षणायां न नैमित्तिकप्रतिनिध्योर्धर्मलाभालाभव्यवस्थेति । शक्यते तु तस्यामसत्यां सोपपादयितुम् । यद्यपि 'व्रीहिभिर्यजेत'इत्यत्र व्रीहिपदवत्प्रोक्षणादिविधिगतव्रीहिपदमपि न स्वरसतोनीवारगतावयवान्निर्दिशति तथापि व्रीहीणामिव तेषामप्यपूर्वसाधनत्वान्नियमे सम्भवत्यनियमस्यान्याय्यत्वेन हन्तिनियमाद्याकाङ्क्षत्वात्स्वाभिधेयव्रीहित्वावच्छेद्यस्वरूपसम्बन्धानादरेण तदवच्छेद्यत्वयोग्यतामेव लक्षणानिमित्तसम्बन्धमभ्युपेत्यैकमेव लक्षणया व्रीहिनीवारगतावयवान्प्रतिपादयति । नच व्रीहिशास्त्रेण पूर्वोक्तरीत्या नीवाराणामविषयीकरणे केन तेषामपूर्वसाधनत्वसिद्धिरिति वाच्यम् । अवश्यकर्त्तव्यताबोधकेन प्रधानविधिना व्रीह्यभावे द्रव्यान्तरमाक्षिपता व्रीहित्वावच्छेदयोग्यतया मुख्यसन्निकृष्टानां तदवयवानां सम्भवे विप्रकृष्टानां तदनर्हत्वेन तदवयवाः क्षिप्यंत इति प्रधानविधिबलादेव प्रतिनिधीनामपूर्वसाधनसिद्धेः । नचैवं प्रथमप्राप्तव्रीहिसम्बन्धेन निराकाङ्क्षा धर्मा न पाश्चात्यनीवारैः सम्बन्ध्येरन्निति शङ्क्यं, प्रकृतिसम्बन्धनिराकाङ्क्षाणामपि धर्माणां पाश्चात्यविकृत्याकाङ्क्षानुरोधेन विकृतिसम्बन्धवत् नीवाराणामप्युक्ताकाङ्क्षानुरोधेन हन्त्यादिधर्माणां तत्स-

म्बन्धोपपत्तेः ।

नन्वेवं फलचमसस्यापि तदाकाङ्क्षत्वान्नीवाररीत्या सोमधर्मसम्बन्धः स्यादि चेत् ? न, व्रीहिनीवारसाधारणलक्षणाहेतोः व्रीहित्वावच्छेद्यत्वयोग्यतासम्बन्धस्यैव सोमफलचमससाधारणलक्षणाहेतोः प्रसिद्धसम्बन्धस्याभावात् । नचैवं यवानामपि प्रोक्षणादिसम्बन्धो न स्यादिति शङ्क्यं, इष्टापत्तेः । इत्यादिनियमलाभायाप्रसिद्धेनापि सम्बन्धेन व्रीहिसोमपदाभ्यां यवफलचमसलक्षणा स्यादिति चेत् ? न, तादृशलक्षणाकल्पनाद्नियमस्यैव न्याय्यत्वात्, अन्यथा यवप्रयोगे पुरोडाशसाधनस्य स्मारकानियमनिवारणाय तस्मिन्सीदेतिमन्त्रगतव्रीहिपदस्य नीवारेष्विव यवेष्वपि कथञ्चित्प्रवृत्तिमुपपाद्य यवप्रयोगेपि तस्य मन्त्रस्य प्रवृत्त्यापत्तेः । तरक्षमयपुरोडाशेषु च 'धान्यमसी'ति मन्त्रे चोदकप्राप्ते धान्यपदोद्धारे देवतावद्द्रव्यस्य विधिगतशब्दानियमाभावेन प्रसज्यमानस्य 'मांसमसि पलमसि तरसमसी'त्यनियतपदप्रयोगस्य निवारणाय प्राकृतलक्षणानिमित्तसम्बन्धासम्भवेपि धान्यपदस्याप्रसिद्धसम्बन्धेन मांसे प्रवृत्तिमुपपाद्य प्रयोगापत्तेः । तस्मान्नैमित्तिकप्रतिनिध्योर्धर्मलाभालाभव्यवस्थायै नापूर्वसाधनलक्षणा स्वीकर्त्तुमुचिता । किञ्च यदि व्रीहिपदेऽपूर्वसाधनलक्षणामङ्गीकृत्य व्रीहित्वमविवक्षितमुच्यते तर्हि 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयया यजेते' त्यत्रारम्भस्य पृथगपूर्वाभावेन दर्शपूर्णमासापूर्वसाधनरूपमेवारम्भपदेन लक्ष्यमिति व्रीहित्ववदारम्भत्वस्याप्यविवक्षा स्यात् विवक्षायां वा कथं निवृत्तिद्वयापत्तिर्वाक्यभेदोवा । अस्त्वविवक्षेति चेत् ? यवेषु प्रोक्षणादीनामिव द्वितीयादिप्रवृत्तिष्वप्यन्वारम्भणीयाया अङ्गत्वापत्तेः तथा सति द्वितीयादिप्रयोगेषु सा न कार्येति नावमिकसिद्धान्तस्य दीक्षणीयादिषु प्रधानारम्भात् पृथगारम्भाभावेन राजसूयान्तर्गतेष्टिषु च निरपेक्षा-

रम्भाभावेन सा न कार्येतिदाशमिकसिद्धान्तयोरुच्छेदापत्तिः। किञ्च 'त्रिःप्रथमामन्वाह त्रिरुत्तमा'मितिविहितास्त्रिरभ्यासोन पृथग्धर्मः, किन्तु प्रथमोत्तमस्थानधर्मस्ततश्च यत्रतत्रस्था प्रयाजीया न त्रिरभ्यासं लभते, प्रथमस्थाने विद्यमाना तु या काचिदृक्त्रिरभ्यासं लभत इति नवमे सिद्धांतितं, तत्कथं सङ्गच्छते, यदि प्रथमादिशब्दा अपूर्वसाधनलक्षणार्थाः स्युः। न हि प्रथमस्थाने किञ्चिदपूर्वं क्लृप्तमस्ति यत्साधनलक्षणया स्वच्छन्दव्यवस्थितानुष्ठानसिद्धिः स्यात्। सर्वा अपि हि सामिधेन्यः समिद्धाग्निप्रकाशनेन दृष्टार्था एव। तस्मात्समिद्धाग्निप्रकाशननिवृत्तिप्रणाडिकया प्रधानापूर्वसाधनत्वलक्षणामङ्गीकृत्य व्रीहित्वं तावत्प्राथम्याद्यविवक्षितं वाच्यं तथासति सामिधेनीमात्रे त्रिरभ्यासापत्तिः। किंच 'रथन्तरे प्रस्तूयमाने निमीलयेत् बृहति प्रस्तूयमाने समुद्रं मनसा ध्याये' दितिविहितानां बृहद्रथन्तरधर्माणां 'निर्देशाद्व्यवस्थे'तिसूत्रकृता नवमे सिद्धान्तितम्। तत्र निर्देशशब्देनोद्देश्यतावच्छेदकयोर्बृहत्त्वरथंतरत्वयोर्भेदेन निर्देशोऽभिप्रेत'इति भाष्ये व्याख्यातम्। यदि लाक्षणिकमपूर्वसाधनत्वं प्रोक्षणादिविधाविव निमीलनादिविधावुद्देश्यतावच्छेदकं स्यात् तदा बृहद्रथन्तरयोरेकं माहेन्द्रस्तोत्रमनूद्य 'रथन्तरं पृष्ठं भवती' तिवत् 'बृहत्पृष्ठं भवती' तिवचनाभ्यां विधीयमानयोरेकस्तोत्रापूर्वसाधनत्वमवगतमिति तदुद्देश्यतावच्छेदकीकृत्य व्रीहित्वन्यायेन रथंतरत्वादेरविवक्षां च स्वीकृत्य निमीलनादीनां विधानादव्यवस्थैव प्रसज्येत। नचोक्तवचनयोः स्तोत्रोत्पत्तिपरत्त्वादामिक्षावाजिनाभ्यामिव सामभ्यां स्तोत्रभेदाद्भिन्नापूर्वसाधनत्वमेव तयोरिति शङ्क्यं, अनयोः स्तौतिधात्वश्रवणाद्गुणसङ्क्रान्तशक्तिकत्वाच्च तद्धातुयुक्तस्य गुणासङ्क्रान्तशक्तिकस्य च 'पृष्ठैः स्तुवत'इतिवचनस्यैव पशुसोमाधिकरणन्यायेनाघाराग्निहोत्राधिकरणन्यायेन च स्तोत्रोत्पत्तिपरताया वक्तुमुचितत्वात्। तस्मान्नैवापूर्वसाधनलक्षणाङ्गीकारः क-

चिदपि युक्त इति नैवं 'व्रीहिभिर्यजेत' इत्यस्य विधेर्हन्तिविधिः । अथ व्रीहिपदेऽपूर्वसाधनलक्षणापादनमुखेनानुपात्तयवेष्वनुपात्तं हन्तिनियमार्थत्वं घटते, अत उपात्तविधेयपाक्षिकत्वविवक्षायामपि न नियमविधिलक्षणस्य 'व्रीहिभिर्यजेत'इतिविधावव्याप्तिः सम्भवति इति चेत् ?

अत्र ब्रूमः । न तावत्प्रोक्षणादिविधावपूर्वसाधनत्वलक्षणामन्तरेणानर्थक्यपरिहारः सम्भवति, यस्तावत्तत्प्रकारः प्राङ्मुखत्वनियमदृष्टान्तेनोक्तः सोऽतितुच्छः, यत उक्तविधौ यद्यपि व्रीहीनिति द्वितीया न श्रूयते तथापि व्रीहीणां मानान्तरेणापूर्वीयताया उपस्थितेः प्रोक्षणस्य तादर्थ्यमेव स्वीक्रियते, न तु साक्षात्क्रत्वङ्गत्वम्, संनिपातितायाः प्रधानकर्मत्वापेक्षया ज्यायस्त्वात्, उपपादितं ह्येतदधस्तात् 'स्थाणौ स्थाण्वाहुतिं जुहोति'इत्युदाहरणे । प्राङ्मुखत्वोदाहरणेऽपि हि यद्यशनस्य केनापि प्रमाणेनापूर्वीयतयोपस्थितिः स्यात् नैव प्राङ्मुखत्वं तादर्थ्यं जह्यात्, ईदृशमानर्थक्यपरिहारं विश्वजिन्न्यायेनापि सम्भवन्तमप्रसिद्धदृष्टान्तेन किमित्युक्तवान्भवानित्याश्चर्यम् ।

यदपि प्रधानविध्येकवाक्यत्वबलेन प्रकारान्तरं, तदप्ययुक्तम्, अपूर्वसाधनलक्षणामनङ्गीकृत्योक्तोभयाकाङ्क्षावशात्किमियं पदैकवाक्यतोच्येत वाक्यैकवाक्यता वा ? नाद्यः परिपूर्णान्वयबोधजनकत्वेन विभज्यमानसाकाङ्क्षत्वशून्यस्याप्रतीयमानप्रधानविधिसान्निध्यस्य क्वचित्पदे लक्षणाभयेन तत्कल्पनानुपपत्तेः । अन्यथा 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाजायत'इति वाक्ये ब्राह्मणपदस्य विवक्षितार्थत्वलाभाय ज्योतिष्टोमादिविध्येकवाक्यत्वकल्पनया ज्योतिष्टोमादौ ब्राह्मणानामेवाधिकारापत्तेः । न द्वितीयः द्वयोः पदसमुदाययोः प्रत्येकमबाधितान्वयबोधजननेन तल्लब्धवाक्यव्यपदेशयोरुभयाकाङ्क्षालोचनेन न पदैकवाक्यत्वं, तद्धि

वाक्यैकवाक्यतः तथैव प्रयाजादिवाक्येषु दर्शनात्, तत्र प्रोक्षणादिवाक्याज्जातोव्रीह्यर्थत्वबोधोयद्यबाधितस्तदा कैमर्थ्याकाङ्क्षैव न स्यात् बाधितत्वे वा कथमुक्तविधवाक्यैकवाक्यत्वम् ।

किंच यदि प्रोक्षणादिविधिगतस्य व्रीहिपदस्यापूर्वीयव्यक्तिविषयत्वं प्रधानविध्येकवाक्यतालभ्यव्रीहिद्वारकप्रोक्षणादिविधिगतस्य व्रीहिप्रधानसम्बन्धलभ्यं न तु तस्याः प्राग्लभ्यते, तद्येकवाक्यताकल्पकप्रकरणस्य षड्भागसाधारणत्वात् कल्पितैकवाक्यताबलेन षडपि यागान्प्रति प्रोक्षणस्य व्रीहिद्वारेण तादर्थ्यमवगम्येत अपूर्वसाधनीभूतानामेव च द्वारत्वसम्भवाद्यथाऽपूर्वसाधनव्रीहिपरत्वं व्रीहिपदस्यावधार्यते तथा यावत् प्राकरणिकयागसाधनीभूतानामेव तान्प्रति द्वारत्वसम्भवात्पुरोडाशप्रकृतिभूतानामतथात्वान्न द्वारत्वं स्यात्, सम्भवति च तादृक्षमन्वाहार्यप्रकृतिभूतानामिति तेषामेव द्वारत्वं स्यात् । अस्तिच 'दाक्षिणाग्नावन्वाहार्यं श्रपयति'इति विधिबलेनान्तः प्रयोगमुपादेयानां धर्माकाङ्क्षा । नच तेषामपूर्वार्थत्वाभावात्पाक्षिकत्वाच्च कथं प्रोक्षणादिवद्द्वारत्वमिति शङ्क्यम् । नावमिकन्यायेन श्रपणार्थयोरपि दधिपयसोः श्रपणसाधनत्वमात्रेण श्रपणार्थधर्मान्वयवदपूर्वोपयोगमात्रेण तेषां तदन्वयोपपत्तेः पाक्षिकत्वस्य च पौरोडाशिकव्रीहिष्वपि समत्वात् । शक्यते चान्वाहार्यद्वारापि व्रीहीणामपूर्वार्थत्वं वक्तुम् । तुल्यन्यायेन 'व्रीहिभिर्यजेत' इत्यत्रापि अपूर्वार्थसाधनलक्षणाङ्गीकारे अधिकारविध्येकवाक्यतया षड्यागापूर्वाङ्गत्वेन व्रीहिविनियोगोत्तरं द्वारस्य षड्यागग्रहणस्य निर्वाहाया ऽन्वाहार्यप्रकृतिभूतानां व्रीहीणां षड्यागापूर्वार्थत्वेन व्रीहिनियमः शास्त्रसिद्धः स्यात् । कथं ? यदा 'व्रीहीन्प्रोक्षति'इत्यत्र प्रोक्षणेन व्रीहिद्वारा क्रत्वपूर्वं भावयेत् तदा तद्द्वारा'व्रीहिभिर्यजेत'इत्यत्र व्रीहिभिर्यागद्वाराऽपूर्वं कुर्यादित्युच्यमाने प्रकरणात् षड्यागापूर्वार्थत्वावगमात् पुरोडाशप्रकृतिभूतानां व्रीही-

णां तदर्थत्वं, किं तु अन्वाहार्यप्रकृतिभूतानां व्रीहीणां तदर्थत्वान्नियमः शास्त्रीयः स्यात्। नच 'अग्नये वोजुष्टं प्रोक्षामि'इति मन्त्रस्यान्वाहार्यव्रीहिप्रोक्षणेऽसम्भव इति वाच्यम्। तादृशमन्त्राणामतिरिक्तहविःप्रोक्षणादिविषयविधिकल्पनेनार्थवत्त्वात् । अस्तु वायऽमेव विधिर्द्विविधव्रीहिद्वारे प्रोक्षणादेरपूर्वार्थत्वबोधकः मन्त्रस्तु प्रधानहविःप्रोक्षणविषयोभविष्यति एकविधिविहितेऽपि सकलप्रदानार्थसोमयमाने यथैन्द्रोमन्त्र ऐन्द्रप्रदानविषयोभवति, तथाच समन्त्रकं प्रधानव्रीहिप्रोक्षणादि अमन्त्रकमन्वाहार्यव्रीहीणां तदितित्वऽदृष्टकल्पना स्यात् । तद्वरं व्रीहिपदेऽपूर्वसाधनलक्षणाङ्गीकृता। अङ्गीक्रियते हि प्रतिपदाधिकरणे बह्वदृष्टकल्पनाभयेन मत्वर्थलक्षणा । कथमपूर्वसाधनलक्षणायां तत्कल्पनापरिहार इति चेत् ? शृणु 'व्रीहीन् प्रोक्षति'इतिप्रोक्षणविधिपरे वाक्ये प्रतीयमानव्रीह्यनुवादसिद्ध्यै कुतः प्राप्तिरित्याकाङ्क्षायामनुवादस्य शब्दसन्निहितगामित्वोत्सर्गात् 'व्रीहिभिर्यजते'इतिविधेरिति बुद्धिर्भवति ततो व्रीहित्वाकारेण प्राधान्ये सत्यानर्थक्याद्यदाऽपूर्वसाधनलक्षणाऽऽरभ्यते तदाऽनुवाद्यव्रीहिगामियदपूर्वसाधनत्वं प्रापकशास्त्रादवधृतं तदपूर्वसाधनत्वमेव लक्षयितुमुचितं शक्यसम्बन्धात्। न चेतः पूर्वं केनापि मानेन सर्वयागाङ्गत्वमवधारितं प्रोक्षणादेः येन श्रुतव्रीहीननादृत्य सर्वयागसाधारणं व्रीह्यन्वेषणं क्रियेत। न चोक्तलक्षणोत्तरं कल्पितेनापि प्रधानविध्येकवाक्यत्वेन सर्वापूर्वार्थत्वमापादयितुं शक्यते अतो नान्वाहार्यव्रीहिषु कृतिपयापूर्वार्थत्वेनावधारितस्य प्रोक्षणादिप्रसक्तिः। नच यागमात्राङ्गत्वेन व्रीहीन् विदधद्व्रीहिवाक्यं पुराडाशान्वाहार्ययोर्यागाङ्गत्वाविशेषादुभयप्रकृतित्वेनैव कुतो न विदध्यादिति शङ्क्यम्, यतो यदाग्नेयादिवाक्यकृतप्राप्तिमालोच्यैवात्रत्यानुवादः प्रवर्त्तते तत्र च ये यागा यादृक्त्केन व्रीह्याकाङ्क्षाः प्रतीयन्ते तदङ्गत्वेन तादृक्केनैव व्रीहिनियमः कर्तुमुचितः आग्नेयाग्नीषोमीयैन्द्राग्ना एव च स्व-

वाक्ये पुरोडाशसाधनत्वेनैवावगताः सन्तस्तत्प्रकृतित्वेनैव व्रीहीनाकाङ्क्षन्त इति पुरोडाशद्वारैव तद्यागत्रयाङ्गत्वेनैव व्रीहिनियमार्थमदः शास्त्रं भवतीति ।

किञ्च यद्यपूर्वसाधनलक्षणामनङ्गीकृत्य प्रकरणकल्प्यैकवाक्यताबलेन सर्वसंस्काराणामपूर्वविनियोगः ? तर्हि सर्वप्रोक्षणादिवाक्येषु विधिप्रत्यया अनर्थकाः स्युः, किं हि तद्बोधिता विधयः कुर्युः, नोत्पत्तिम्, प्रोक्षणादेर्लोकसिद्धत्वात्, नाधिकारप्रयोगौ अङ्गानां प्रधानीयाभ्यामेव ताभ्यां तद्वत्त्वसिद्धेः । नापि व्रीहिषु विनियोगं तस्य बाधितत्वेनाफलत्वात्, अबाधितत्वे वा गोदोहनवन्निराकाङ्क्षस्य प्रकरणेन ग्रहणासम्भवात् । नापि तद्द्वारा प्रधानापूर्वे विनियोग एतद्वाक्यैकवाक्यतापन्नप्रधानविधिबलेन तत्प्रतीतिसिद्धेः । नचोत्पत्त्यादिकार्यचतुष्टयादन्यद्विधिकार्यमस्ति, नचोपपदे क्वचिल्लक्षणाभयेन प्रधानभूतस्य विधेरविवक्षोचिता । प्रयाजादिविधीनां किं कार्यमिति चेत् ? । इष्टसामान्यात्मना क्रतौ विनियोगः । नचासौ बाध्यते । अतएवाहुः 'अङ्गं सत्प्रयोगविधिर्गृह्णाति'इति । सङ्गच्छते चेयमुक्तिः सत्यामेवापूर्वसाधनलक्षणायां प्रोक्षणादौ ।

यदपि पुनराधेयदृष्टान्तेनानर्थक्यपरिहारान्तरं, तदप्यसत्, निमित्तगतविशेषावगमात्प्राक् नैमित्तिकविधेरेव संस्कार्यगतापूर्वीयत्वावगमात्प्राक्संस्कारविधेरपर्यवसानात् । अत एव नैमित्तिकेष्टेर्वैदिकत्वेन वैदिकाग्न्यदाननिमित्तत्वेन निर्णीयते च संस्कारधारणस्य वैदिकत्वेन संस्कार्यहिरण्यस्य वैदिकत्वम् । अथ हिरण्यधारणाद्व्रीहिप्रोक्षणोपकरणकृतापूर्वीयत्वोपस्थित्याऽस्ति विशेष इति चेत् ? तदाऽनुवादस्य प्रकृतगामित्वेनैवापूर्वीयत्वलाभः पुनराधेयदृष्टान्तेनार्थापत्त्युपन्यासोऽनर्थ एव स्यात् । अस्तु वा सार्थकः, तथापि यथा 'स्रुवेणावद्यति'

इत्यत्रोद्देश्यावदानेऽर्थापत्त्या लभ्योद्रवविषयत्वाख्योविशेषो न तद्वाचकशब्दाध्याहारमन्तरेण लभ्यते, तथा व्रीहिष्वपूर्वीयत्वला-भोपि नाध्याहारमन्तरेण स्यात् । अस्तु तर्ह्यपूर्वीयशब्दा-ध्याहार इति चेत् ? तद्वरमपूर्वसाधनलक्षणैवाङ्गीकृता, ध-र्मिकल्पनातोधर्मकल्पनाया लघीयस्त्वात् । नचैवं 'स्रुवेणावद्यति'-इत्यत्रापि द्रवमित्यध्याहारोन स्यात् द्रवविषयत्वस्य लक्षणयैव प्रतीतिसम्भवात्, न वा तल्लक्षणयापि प्रयोजनं, अवश्यभाव्यपूर्व-साधनलक्षणासमये प्रणाडिकाविशेषणद्रवद्रव्यकयागापूर्वसाधनल-क्षणयैवाभिप्रेतव्यवस्थालाभसम्भवादिति चेत् ? न, लक्षणयापि द्रवादाववृष्टप्रवृत्तिकस्य नित्यं कर्मकारकान्वयसापेक्षस्यावद्यते रनुरोधेन योग्यपदाध्याहारस्यापूर्वसाधनलक्षणातः प्रागवश्यम्भा-वात्, तया जायमानोहि तात्पर्यार्थबोधो यथाश्रुतवाक्यार्थबो-धात्प्राङ्नोदेति । यागेन स्वर्गं भावयेदिति स्वर्गकामोपेतवाक्येषु तात्पर्यार्थं वर्णयद्भिरपि हि भाट्टैर्विश्वजिद्विधौ न स्वर्गमित्यध्याह्रि-यते यजतेरकर्मकत्वेन स्वर्गकामपदेनैव यथाश्रुतवाक्यार्थबोध-निर्वाहात् । 'व्रीहीन्प्रोक्षति' इत्यादौ तु नैव यथाश्रुतबोधाय कस्य-चिदपेक्षा, तात्पर्यार्थबोधायापेक्ष्यमाणा स्वपूर्वीयविशेषोपस्थि-तिः सामान्यवाचिना व्रीहिपदेन लक्षणया सुलभेति सैवाश्री-यते । स्याद्वा विनैव लक्षणाध्याहाराभ्यामपूर्वीयव्रीहीणामुद्देश्यत्वं श्रुतव्रीहित्वाकारेणैव तु तत्स्यान्नापूर्वीयत्वाकारेण । ततः किमि-ति चेत् । वस्तुतोऽपूर्वीयानेव तेनाकारेणानुपस्थितानग्नीनाहव-नीयत्वादिरूपेणोद्दिश्य विहिताधानस्याक्रत्वर्थत्ववत्प्रोक्षणादेरक्रत्व-र्थत्वेनानर्थक्यापत्तिरिति स्पष्टमाकर एव । नच येन च लक्षिता-पूर्वसाधनत्वस्य स्रुवादिसाम्येन हन्तिविधेर्दृष्टार्थत्ववैरूप्यापत्तिः 'उपांशु यजुषा'इत्यस्य निगदेभ्य इव पत्नीसंयाजान्ततातिविधेर-न्त्याङ्ग इव सामान्यप्रवृत्तस्यापि हन्तिविधेः प्रयोजनवशेनैव स्रु-

वादिभ्योनिवृत्तिसम्भवात् ।

किञ्च हन्तिविधौ यद्यपि व्रीहिपदं न श्रूयते तथापि दृष्टप्रयोजनानुरोधेनौषधमात्रविषय एवासौ भवन्न प्रकृतप्रधानहविष्यविशेषेपि सान्नाय्यादिविषय इत्युक्तं तृतीये 'तेषामर्थेन सम्बन्ध' इत्यधिकरणे । यथाहुः—

'क्वचिद्दृष्टनिराकाङ्क्षः क्षीणार्थापत्तिशक्तिकः । नादृष्टार्थोपि सोऽन्यत्र शक्यः कल्पयितुं विधि'रिति। तत्कथमाकरज्ञैर्व्रीहिपदश्रवणेपि स्रुवादिषु हन्तिरापाद्यत इत्याश्चर्यम्। यद्यपि तदापादनं तेष्वनिवार्यं स्यात् तथापि 'पत्नीं संनह्यति'इत्येकवचनवत्सर्वत्र हन्तेरदृष्टार्थत्वमेव स्यादिति कथं वैरूप्यापत्तिः । नचैवमपि प्रोक्षणं तेषु स्यादिति चेत् ? न, लक्ष्यसाधनतायाः प्रणाडिकाविशेषेण वैशिष्ट्यात् । विशिष्टोद्देशे वाक्यभेद इति चेत् ? भ्रान्तोसि, नहि वयं प्रोक्षणादिवाक्ये प्रणाडिकामुद्देश्यविशेषणतया निवेशयामः, किन्तु व्रीहिपदेन व्रीहित्वैकार्थसमवायितया लक्ष्यो यः साधनताविशेषस्तत्परिचयोपायतया निर्दिशामः योहि व्रीहिशास्त्रस्थतृतीयावगतसाधनताविशेषो निष्कृष्टशक्त्यात्मकः प्रोक्षणवाक्यस्थव्रीहिपदेन लक्ष्यतेऽसौ स्वेनैवात्मना स्रुवादिभ्योऽव्यावृत्तः, व्यापारभेदेन तु परिचीयते । दृश्यते ह्यनेकव्यापारैः कार्यं कुर्वतां काष्ठस्थाल्यादीनां भिन्नसामर्थ्यव्यवहारः काष्ठस्थाल्योरन्यतरेण पाकसिद्धिं भ्रान्त्या योमन्यते, वदन्ति तं प्रत्येवं, भिन्नसामर्थ्यतयोभयमप्यावश्यकमिति । परंतु भिन्नजातीयमपि स्थालीद्वयमेकक्रियायामावश्यकं मन्येत तं प्रति तुल्यमनयोः सामर्थ्यमेकयैवालमित्येव वदन्ति । अत एव व्यापारैक्येन व्रीहिपदलक्षितनिष्कृष्टशक्त्यात्मनः साधनत्वस्य यवसाधारण्यात्प्रोक्षणादीनां तत्साधारण्यसिद्धेः अन्यथाऽथ यावत्सकलमीमांसकानां प्रणाडिकाविशेषविवक्षणेन स्रुवादिपरिहारं वदतां श्रुतव्रीहित्वस्य

वाक्यभेदवशेनाविवक्षिततत्वमापाद्य यवसाधारण्योक्तिर्मनोरथाविष्ट-प्रलापितरूपत्वापद्येत । अथ पूर्वक्षणवृत्तित्वादिरूपसाधनत्वमेव तृतीयार्थः शक्तिस्तु तदवच्छेदकेत्येव मतमाश्रीयते, तथापि तादृशसाधनत्वशरीरे सम्बन्धत्वेन प्रणाडिकाप्रवेशस्यावश्यकत्वात् सम्भवति प्रणाडिकायाः स्रुवादिव्यावृत्ततत्परिचायकत्वं प्रणाडिकात्मकसम्बन्धविशेषेण पूर्वक्षणवृत्तित्वरूपसाधनतायाश्च यवसाधारण्याद्भवति धर्माणां तत्साधारण्यम् । नच व्रीहित्वाद्यवच्छेदकभेदेन साधनताभेदः, एकजातीयापूर्वे व्यभिचारवारणाय साधारणशक्तेरेव तदवच्छेदकत्वकल्पनात् तृणारणिजवह्नयोर्वैजात्याभ्युपगमेपि सर्वथाऽनुभवानारूढस्याऽपूर्ववैजात्यस्य गौरवग्रस्तत्वेन तत्कल्पनया व्यभिचारपरिहारायोगात् ।

अत एव पयःश्रपणस्य मैत्रावरुणान्यग्रहेष्विव व्रीहिधर्माणां यवेषु न सम्भव इत्यपि परास्तम् । अभ्यासापूर्वाणामिव व्रीहियवापूर्ववैजात्ये मानाभावात् । तस्मान्न प्रणाडिकाविवक्षायां वाक्यभेदः ।

यत्तु सत्यामपूर्वसाधनलक्षणायां यवन्यायेन फलचमसे धर्मापादनं,तदनभ्युपगच्छन्तं प्रति प्रतिनिधौ तदभावापादनं च, तदप्यलीकम् । व्रीहियवशास्त्रयोस्तुल्यप्रवृत्तित्ववत्सोमफलचमसशास्त्रयोस्तुल्यप्रवृत्तित्वाभावाच्छीघ्रावगतसाधनत्वसोमसम्बन्धज्ञापनेन निवृत्तानां विधीनां विलम्बावगतसाधनत्वफलचमसम्बन्धेऽसामर्थ्यात् । प्रोक्षणादिशास्त्रं हि नित्यवत् पठितत्वेन व्रीहिशास्त्रतुल्यकालप्रवृत्तितया प्रतीयमानमपि व्रीह्यनुवादेन प्रोक्षणादिविधानं कुर्वत्संस्काराहर्व्रीहिप्राप्तिमन्तरेण तदयोगात्तत्प्राप्त्यै व्रीहिशास्त्रं तावत्प्रतीक्ष्यैव प्रवर्त्तते तस्मिंश्च प्रतीक्ष्यमाणे नान्तरीयकतया यवशास्त्रमपि प्रतीक्षितमेव भवति, व्रीहियवशास्त्रप्रवृत्त्योः पौर्वापर्ये सर्वथैव हेतोरदर्शनात्, प्रतीक्षिते च तस्मिन्नुभयमपि व्रीहियवशास्त्रद्वयेनैकया प्रणाडिकयै-

कापूर्वसाधनतया युगपदुपस्थितं भवति ततोव्रीहिपदेन लक्षणया तादृशसाधनरूपमुद्दिश्य विधीयमानं प्रोक्षणादि यवसाधारण्यं भजत इति नाश्चर्यम्। पूर्वाविगतेन साधनतारूपेणोद्देश्यतावच्छेदके क्रोडीकृतानां प्रोक्षणादिभावनां प्रत्युद्देश्यत्वप्रतीतेरवर्जनीयत्वात्, एवं यदि सोमफलचमसशास्त्रे युगपत्प्रवर्त्तेतां ततः सोमशास्त्रं प्रतीक्ष्यमाणैरभिषवादिशास्त्रैः फलचमसशास्त्रमपि प्रतीक्ष्य तस्यापि धर्मसम्बन्धः क्रियेत, नचैवमस्ति, धर्मविधीनां स्वगतसोमानुवादायैव फलचमसविधेः स्वकार्यसोमापवादाय सोमशास्त्रप्रतीक्षित्वेन धर्मविधीनां फलचमसविधेश्च तुल्यप्रवृत्तित्वात्। किंच यथा पर्णताविधिः स्वोद्देश्यजुह्वाः प्रकृताविव विकृतावपि प्राप्तिसत्वेपि न विकृत्यङ्गत्वेन पर्णतां विधत्ते विकृतौ तस्या अतिदेशेन सम्भवत्प्राप्तिकत्वात् तथाऽभिषवादिविधिः स्वोद्देश्यतावच्छेदकीभूतापूर्वसाधनतायाः सोमफलचमसयोस्तुल्यप्राप्तिकत्वेन फलचमसाङ्गत्वेन धर्मान्विधत्ते कार्यापत्त्यैव धर्माणां तत्र प्राप्तिसम्भवात्। नचैवमवयवेष्वपि तत्र प्राप्तिसम्भवस्तुल्य इति शङ्क्यम्, सधर्मकत्वेन क्लृप्तसोमकार्योद्देशेन फलचमसस्येव क्लृप्तव्रीहिकार्योद्देशेन यवाविधानात्, फलचमसोहि नान्ययागसाधनत्वेन श्रुतः 'तमस्मै भक्षं प्रयच्छेत्' इति भक्ष्यत्वेनैव श्रवणात् प्रदेयतयाऽपूर्वीयद्रव्यरूपसोमसंस्कारस्य भक्षणस्यान्वयस्तादृग्रूप एव फलचमसे सम्भवतीति भक्षणान्वयाद्यागसाधनत्वासिद्धिर्वाच्या सोमस्य यागसाधनत्वे धर्मसम्बन्धे चाक्लृप्ते भक्षणान्वयस्य नैव यागसाधनत्वसाधकत्वं सम्भवतीत्यवश्यं तदुभयसिध्युत्तरमेव फलचमसः सोमकार्ये विधेयः धर्माणां कार्यप्रयुक्तत्वाल्लुप्तधर्मककार्यान्वयेनैव तथासति सकलसोमधर्मलाभोपपत्तेर्नाभिषवादिविधिः फलचमसेपि व्याप्रियते। नचैवं यवविधेः प्राक् व्रीहीणां सधर्मककार्यसम्बन्धक्लृप्तौ कश्चिद्धेतुरस्ति 'यवैर्यजेत'इतिस्पष्टयजिसम्बन्धश्रवणात्।

यदि च त्वदुक्तरीत्या व्रीह्यभावे व्रीहिसन्निकृष्टत्वमात्रेण व्रीहिशास्त्रेणाविषयीकृतानपि नीवारान्प्रधानविधिरुपादापयेत् तदोक्तफलचमसन्यायेन कार्योत्पत्त्या लब्धहन्त्यादिनियमतया नीवाराणां निराकाङ्क्षतया नैव हन्त्यादिविधेर्नीवारसाधारण्यं भवदुक्तं स्यात् लुप्तव्रीहिकार्ये हि प्रधानविधिबलात्साधनतां प्रतिपद्यमाना नीवारास्तत्कार्यान्वयमहिम्ना धर्मान् लभेयुरेवेति किमित्यवघातादिविधौ व्रीहिपदस्य व्रीहित्वावच्छेद्यत्वयोग्यतासम्बन्धेनाप्रसिद्धनीवारादिसाधारणलक्षणाश्रयणादि। अस्तु वा हन्त्यादिविधौ तदाश्रयणं, प्रोक्षणादिविधौ तु न तद्बीजं, हन्त्यादिनियमवत्प्रोक्षणे नीवारापेक्षितत्वस्य वक्तुमशक्यत्वात्। नच हन्त्यादिविधिप्रायपाठ एव तद्बीजं प्रायपाठस्य सन्दिग्धनिर्णायकत्वेन निर्णीतवैपरीत्यापादनाशक्तेः।

यच्च प्रसिद्धसम्बन्धेन यवफलचमसलक्षणाया असम्भवेन तयोर्धर्माभावाभिधानं, तदप्यसत्, सुसदृशप्रतिनिध्यलाभे सतीषत्सदृशत्वेन प्रतिनिधिबुद्ध्या गृह्यमाणयोरपि यवफलचमसयोर्धर्माभावापत्तेः।

अथ तदवयवानामपि लक्षणायै व्रीहित्वसोमत्वपरिच्छेद्यत्वयोग्यतारूपः प्रसिद्धसम्बन्धोऽस्त्येवेति वाच्यम्? तदा वैकल्पिकनैमित्तिकयोरपि तयोः सम्बन्धः केन वार्यते? कथं च प्रधानविधिना नीवारप्राप्तिः, नहि व्रीहिशास्त्रस्य व्रीहिमात्रप्रापकत्वे तत्सन्निकृष्टद्रव्यग्रहणेन काचिच्छास्त्रार्थसिद्धिरस्ति यस्यै प्रधानविधिर्नीवारानेवाक्षिपेत्, एकादशे हि 'उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति' इत्यत्र प्राकृतकालप्रत्यासत्तिलाभाय शस्त्रवतां सोमानामुपरिष्टात्प्राजापत्यप्रचारो विधीयते इति पूर्वपक्षं प्रदर्श्य न कालप्रत्यासत्तिमात्रेण चोदकानुग्रहो भवति येनैवं स्यादतः सर्वसोमानामुपरिष्टात्स विधेय इति सिद्धान्तितं, यथा च विहितकालसन्नि-

कर्षेण न विहितकालानुग्रहः तथा विहितद्रव्यसन्निकर्षेणापि न विहितद्रव्यानुग्रहः। कथं भवतापि व्रीहिशास्त्रान्नीवारप्राप्तिः कथ्यते, कथं वा सत्यामपि तस्यां मुख्यत्वेन प्रतिनिधित्वेन च गृह्यमाणयवादेर्धर्मलाभालाभव्यवस्था।

उच्यते। अस्ति तावन्मन्त्राणामिव विधीनामपि प्रकरणपाठात् क्रत्वर्थत्वम् अर्थवादाधिकरणे वार्त्तिककृता तदुपपादनात्। अन्यथोपकारपदार्थपृष्ठभावेन शास्त्रातिदेशोक्तेराकरस्थाया उच्छेदापत्तेः। तत्र च सामर्थ्यान्मन्त्राणां प्रयोगसमवेतस्मरणमिव विधीनां प्रधानविध्यपेक्षिताङ्गाताङ्गसमर्पणमेव द्वारत्वेनाध्यवसीयते। समर्पणं च क्वचित्प्राप्तिः काचिन्नियम इत्यपि तत एव हेतोर्लभ्यते। एवं चानेन मन्त्रेणैतदर्थप्रकाशनद्वारेण कृतावुपकर्त्तव्यमितिशास्त्रार्थवत् 'व्रीहिभिर्यजेत' इति विधिना प्रकृतिद्रव्यनियमेन कृतोरुपकर्त्तव्यमित्यपि शास्त्रार्थोऽध्ययनविधिमूलक एव सर्वैरभ्युपेयः, नियमश्चाग्नेययागत्वावच्छिन्ने हविःप्रकृतित्वेन व्रीहय एवोपादेया इत्येवंरूपस्तदैवानेन विधिना सिध्यति। यद्यत्र स व्रीहित्वाकृत्या लोकदृष्टव्यक्तिलक्षणावेलायां स्वपरिच्छेद्यत्वयोग्यतासम्बन्धेन तदवयवा अपि लक्ष्यन्ते सन्निहितेपि प्रयोगा, येषु व्रीहितन्दुला एव तत्पिष्टमेव वा लभ्यते नतु व्रीहयः। नच तत्प्रयोगस्थानामाग्नेययागव्यक्तीनां यवप्रयोगस्थानामिव परिहारेणैव नियम इत्यत्र किञ्चिद्धेतुभूतं शास्त्रमस्ति, अतस्तासु व्रीहिनियमासम्भवादवयवनियमसम्भवात्तन्नियमेन तास्वपि व्रीहिविधेरुपकारकत्वाय व्रीहिपदं लक्षणयाऽवयवपरं कल्पयितुमुचितं प्रकरणावगतशेषिभावानां तासामनुरोधेन नियमात्मककार्यानुरोधेन क्लृप्तलक्षणाकल्पने समर्थस्य 'गुणे त्वन्याय्यकल्पना' इति न्यायस्य हि क्लृप्तलक्षणायां विषयाधिक्यकल्पकत्वे नाश्चर्यम्, आग्नेयादिप्रधानविधिरपि

पुरोडाशप्रकृतित्वेनावयवानेव साक्षादपेक्षते तत्सिद्ध्यै परं जातिव्यक्तीश्चापेक्षेत। नच साक्षात्तदपेक्षितसमर्पणे सम्भवत्यन्यथाभाव उचितः, अतो व्रीहित्वावच्छेदेनावयवनियमपरं व्रीहिशास्त्रम्। नच तन्मात्रपरमपि, व्रीहितत्तण्डुलतत्पिष्टानामेव यत्र लाभसम्भवस्तत्र प्रयोगेऽनन्यलभ्यव्रीहिनियमेनैव व्रीहिविधेः क्रतूपकारित्वस्य वक्तुमुचितत्वात्। अस्तु वा तन्मात्रनियमपरं, उभयथापि नियम्यावयवेषु नियम्यतावच्छेदकत्वेन व्रीहित्वादन्यत्किञ्चिद्रूपमवश्यमभ्युपेयं, न हि निरूढलक्षणया प्रतीयमानव्यक्तेरिव साम्प्रतिकलक्षणया प्रतीयमानावयवानां शक्याकृत्यैवावच्छेदक इति शक्यं वक्तुम्, केनापि रूपेण बुद्ध्यारूढस्यैव साम्प्रतिकलक्षणासम्भवात् युगपच्छक्यलक्ष्ययोर्जातिव्यक्त्योरुपस्थापिकाया निरूढलक्षणायास्तदा बुद्ध्यारोहानपेक्षत्वात्। तच्चावयवगामि रूपं सकलव्रीह्यारम्भकावयवेष्वनुवृत्तं यवावयवेभ्यो व्यावृत्तं जातिगुणसंस्थानाद्यात्मकं केषु चिन्नीवारावयवेषु सम्भवद्वृत्तिकमिति नियम्यतावच्छेदकावच्छिन्नसकलावयवालाभदशायां सम्भवति व्रीहिशास्त्रस्य नीवारगतविकलतदवच्छिन्नावयवनियामकत्वं, एवं च सति पूर्वोक्तन्यायेन व्रीहियवशास्त्रबोधितमपूर्वसाधनं स्वगतव्रीहिपदलक्षितमुद्दिश्य धर्मान्विदधद्भिर्विधिभिः व्रीहिगतावयवानामिव नीवारगतावयवानामपि कथं न धर्माः प्राप्नुयुः। नीवारगतावयवानामप्यलाभे च व्रीहिशास्त्रं यदि यवगतविकलत एव यवानप्युपादापयेत् तदा श्रुतिविनियोज्याः प्रोक्षणादयो लिङ्गविनियोज्या व्रीहीणांमेधेतिमन्त्रादयो नीवारावयवेष्विव यवावयवेष्वपि भवेयुरेवं यवशास्त्रोपादापितेषु श्रुतिविनियोज्यानां सम्भवेपि लिङ्गविनियोज्यानामसम्भवः तथापि (यवशास्त्रोपादापितेषु यवेषु लिङ्गविनियोज्यानामसम्भवः) यच्छास्त्रगतापूर्वसाधनत्वं हि यद्धर्मविधिषूद्देश्यतावच्छेदकत्वेनाभिमतं

तत्प्रापकविधिविधेयत्वमेव तद्धर्मविधिपूद्देश्यत्वे नियामकं व्यापकतया व्याप्तिधीविषयत्वमिव विधेयतया ऽनुमितिविषयत्वे शास्त्रावगतलिङ्गकल्प्यश्रुतौ प्रोक्षणादिविधाविवापूर्वसाधनलक्षणाया अभ्युपगमात्। सा हि न प्रोक्षणादिशास्त्रवद्व्रीहिपदयुक्ता श्रुता। नच बलात्तद्युक्तां कल्पयित्वा लक्षणाङ्गीकरणमुचितं, शक्यते चैतन्मन्त्रप्रकाशितैरपूर्वं कुर्यादिति कल्पितश्रुतेर्व्रीहिशास्त्रेणैकवाक्यतया लिङ्गेन कल्पितायां विनैव लक्षणया मन्त्रस्यापूर्वसम्बन्धलाभोद्ध्यानयनस्येव।

अस्तु वा मुख्य एव कुशलवने लवनमन्त्रविनियोगो न गौणेऽप्युलपाख्यतृणलवनादाविति तार्तीयन्यायसहकृतेन समानप्रकरणस्थोपजीव्यव्रीहिशास्त्रे मन्त्रे च व्रीहिपदार्थैक्यौचित्यालोचनसहकृतं तल्लिङ्गेन च व्रीहिशास्त्रविषयीकृतप्रयोगेष्वेव विनियुज्यमानस्य व्रीहीणांमेधेतिमन्त्रस्य कल्पितविधौ व्रीहिशास्त्रबोधितमेवापूर्वसाधनत्वमुद्देश्यतावच्छेदकमिति तद्विहितानां व्रीहीणां तत्प्रतिनिधिभूतानां नीवारयवादीनां भवति तन्मन्त्रशेषित्वं, न भवति च यवशास्त्रप्रापितानां यवानां तत्प्रतिनिधिभूतानां वा व्रीहीणामपि।

एतेन सामप्रतिनिधिभूतेषु नैमित्तिकत्वेनोपात्तेषु न्यग्रोधस्तिभिन्यादिषु सोमधर्माणां तद्विधिभ्यः प्राप्त्यप्राप्ती बोध्ये, उक्तन्यायेन हि सोमस्य तत्प्रतिनिधेश्च सोमविधिप्रापितापूर्वसाधनत्वमुद्देश्यतावच्छेदकीकृत्य धर्मविधयः प्रवर्त्तन्ते न नैमित्तिकविधिबोधितं, तत्सिद्धं सत्यामप्यपूर्वसाधनलक्षणायां नैमित्तिकप्रतिनिध्योर्धर्मलाभव्यवस्था सम्भवतीति।

यत्त्वन्वारम्भणीयाविधावनिष्टापादनं, तदप्यसत्, आरम्भयोग्यतासम्पादनद्वारेण दर्शपूर्णमासौ भावयेदिति तयोरेव मुख्योद्देश्यत्वाङ्गीकारेण दर्शादिपद एवापूर्वसाधनलक्षणाङ्गीकरणात्। न-

च तयोरारम्भनिरूपकत्वेनाप्यन्वयादावृत्त्यापत्तिः 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'इत्यत्रोत्तरकालताविशिष्टेन बृहस्पतिसवेन वाजपेयं भावयेदिति शेषित्वेनान्वितस्यापि वाजपेयस्य त्रिनैवावृत्त्योत्तरकालतानिरूपकत्ववत्तयोरप्यारम्भनिरूपकत्वोपपत्तेः उत्तरकालतावदारम्भस्यापि ससम्बन्धिकत्वेनान्यार्थोपस्थितसम्बन्धिनमादाय पर्यवसानात् अन्यारम्भस्य दर्शपूर्णमासौ प्रति द्वारत्वायोगेनापि तन्निरूपितत्वालाभाच्च ।

यच्च 'त्रिः प्रथमामन्वाहे'त्यत्रोक्तं, तदपि न, या एव सामिधेन्योऽदृष्टार्थाः प्रधानापूर्वलक्षणायां च प्रथमामुत्तमामितिव्यवस्थितनिर्देशस्यानर्थक्यं प्रसज्यते अतएवानर्थक्यतदङ्गन्यायेन प्रथमोत्तमद्वितीयसाध्यनियमापूर्वयोरेव प्रथमोत्तमशब्दानां लक्षणां ब्रूमः । नच प्रत्यृचं नियमादृष्टभेदाभावः इयमेव प्रथमेयमेवद्वितीयेत्यादिविभिन्ननियमानां हन्तिपिषिनियमवद्विभिन्नापूर्वजनकताया एवौचित्यात्, समुदायापूर्वभेदे अवदेशोक्तन्यायेन धर्मभेदस्यैव तद्भेदे कल्पकत्वौचित्याच्च । नापि नियमादृष्टस्य धर्मप्रयोजकत्वासम्भवः तस्याप्युद्देश्यतायाः प्रागुपपादनात तदसत्वे ऽप्यनिर्ज्ञातप्रकारतया धर्मग्राहित्वोपपत्तेः सूक्तवाकाधिकरणवार्त्तिके तन्न्यायसुधायां सूक्तवाकस्य दृष्टार्थप्रहरणार्थत्वप्रयुक्तानर्थक्यपरिहाराय नियमादृष्टार्थत्वोपन्यासाच्च । नचैवं प्रोक्षणादिविधावपि सन्निकृष्टव्रीहिनियमादृष्टसाधनत्वस्यैव लक्षणा स्यादिति वाच्यम् । व्रीहिशास्त्रजशाब्दधीविषयीकृतस्य प्रधानापूर्वसाधनत्वस्यैवासति बाधके लक्षणौचित्यात् ।

यच्चैकस्तोत्रापूर्वसाधत्वेन बृहद्रथन्तरयोर्धर्मसाङ्कर्यं स्यादिति, तत्र ब्रूमः आस्तां बृहद्रथन्तरयोरेकस्तोत्रसाधनत्वं, यद्यपि च तदपूर्वसाधनत्वमेव बृहद्रथन्तरशब्दाभ्यां लक्ष्यते, तथाप्यन्वारम्भणीयाया आरम्भद्वारा दर्शपूर्वार्थत्ववत् प्रस्तूयमानपदसमि-

भिव्याहारेण प्रस्तावाख्यरथन्तरभक्तिद्वारैव निमीलनादीनां स्तोत्रापूर्वार्थत्वप्रतीतेर्न बृहति प्रसक्तिः, एवं बृहद्धर्माणां रथन्तरेपि।

ननु रथन्तरशब्दस्यापूर्वसाधनलक्षणया सामद्वयसाधारण्ये प्रस्तावोप्युभयनिरूपित एव द्वारं स्यात्। मैवम्। प्रथमबोधवेलायां रथन्तरीयभक्तिविशेषस्य द्वारत्वे निर्णीते पश्चादानर्थक्यपरिहाराय सत्यपि रथन्तरशब्दस्य लाक्षणिकत्वे बाधकाभावेन पूर्वावगतद्वारविशेषबाधायोगात् नैमित्तिकानुरोधेन निमित्तस्येव द्वारविशेषानुरोधेन द्वारिशेषिणोपि सङ्कोचसम्भवात्, अन्यथा नित्यकाम्यविधिभेदेन नित्यकाम्यापूर्वयोर्भेदावश्यम्भावेनान्वारम्भणीयाविधौ दर्शपूर्णमासपदलक्षितद्विविधापूर्वसाधननिरूपितारम्भाङ्गत्वेन विहितायास्तस्या नित्यापूर्वसाधनारम्भचिकीर्षयाऽनुष्ठितायाः काम्यापूर्वसाधनतदारम्भचिकीर्षायामावृत्तिः स्यात्। नच पूर्णमासारम्भवेलायां दर्शारम्भस्येव नित्यापूर्वसाधनारम्भवेलायां काम्यापूर्वसाधनारम्भस्य चिकीर्षानियमोनास्ति, येनोभयोद्देशेन तन्त्रेणान्वारम्भणीयानुष्ठानं स्यात्, अतस्तत्र दर्शपूर्णमासारम्भत्वेन यद्यारम्भस्य द्वारतोच्यते? तदैव काम्यारम्भाय पुनरनावृत्तिः सिध्यतीति तत्सिद्ध्यै दर्शपूर्णमासारम्भत्वेनारम्भस्य द्वारतामिच्छद्भिरवश्यमपूर्वसाधनलक्षणातः पूर्वोपस्थितिरेव शरणीकरणीया, तथा च तेनैव न्यायेन रथन्तरीयप्रस्तावस्य द्वारत्वान्न बृहति रथन्तरधर्माणां प्रसक्तिः। यद्वा यथैव त्रिःप्रथमामित्यादौ व्यवस्थितनिर्देशानर्थक्यभयात् प्रधानापूर्वसाधनलक्षणां परित्यज्य नियमापूर्वलक्षणाऽङ्गीक्रियते तथेहापि 'रथन्तरे प्रस्तूयमाने बृहति प्रस्तूयमान' इति व्यवस्थितनिर्देशबलाद्भिन्ननियमापूर्वलक्षणया धर्मव्यवस्थोपपादनीया। यद्यपि वैकल्पिकव्रीहियवयोर्नियमापूर्वमेकमेवेत्याकरे विकल्पनिरूपणस्य प्रसङ्गचिन्तासङ्गतिसिद्ध्यै स्थापितं, तथापि प्रकृते व्यवस्थितधर्मविध्यन्यथानुपपत्त्या भिन्नमेव तत्कल्प्यते। तस्मादपूर्वसाधनलक्षणा

निर्द्दोषेति हन्तिविधौ तदापादनमुखेन व्रीहिविधिना यवेषु हन्तिनियमापादनात्तस्मिंश्च यवानामनुपातत्वादुपात्तनियम्यगतपाक्षिकत्वस्य नियमविधिलक्षणाघटकत्वेऽनुपात्तनियमफलके व्रीहिविधावव्याप्तिरिति सिद्धम् । नचैवमनुपात्तनियम्यस्यैव पाक्षिकत्वं लक्षणघटकं स्यादिति शङ्क्यं, हन्तिविधावव्याप्तेः ।

नन्वस्तु तावदुपात्तविधेयगतपाक्षिकत्वविवक्षा । नच प्रथमविधावव्याप्तिः उपात्तविधेयप्रथमस्यैव नियम्यत्वसम्भवात् द्रवीभूतस्य पिष्टस्य स्वयमेव प्रसरणसम्भवेन तदनुकूलव्यापारात्मनः अध्वर्युकर्तृकप्रथनस्य नित्यप्राप्त्यभावात् । उपपादितं चैतत्फलसाङ्कर्यखण्डने । नापि व्रीहिविधावव्याप्तिः तस्याप्युपात्तव्रीहिनियमपरत्वात् । तथा हि—आस्तां व्रीहिविषयभावे संस्कारवाक्यानां मन्त्रवर्णस्य वा व्रीहिप्रापणसामर्थ्यं, आस्तां च तदभावे प्रोक्षणहन्त्यादेर्यवसाधारण्याभावः, तथापि प्रत्यक्षश्रुतिविनियुक्तयवावरुद्धे कर्मणि कथमिव संस्कारवाक्येभ्योमन्त्रवर्णाद्वा व्रीहिप्राप्तिः कल्पयितुं शक्यते । न च यवानामपि साक्षाद्यागाङ्गत्वानुपपत्त्यालोचनेन पुरोडाशद्वारकयागाङ्गत्वं कल्प्यमेवेति कथं तैः संस्कारवाक्यादिहेतुकव्रीहिप्राप्तिकल्पनाप्रतिबन्ध इतिशङ्क्यं, यत ऐन्द्रीविनियोजकश्रुतिलिङ्गयोर्लिङ्गश्रुतिकल्पकत्वे लिङ्गेनेव श्रुत्या कल्प्यविनियोगासिद्ध्यैकस्यापि कल्पनाया अनपेक्षणाद्यथा श्रुतेः प्राबल्यं तथा संस्कारविधिमन्त्रवर्णाभ्यामिव यवश्रुत्यादिविनियोगासिद्ध्यै न कापि कल्पनाऽपेक्ष्यते इति स्वीकार्यमेव परश्रुतेः प्राबल्यं, विनियोगोत्तरं तु समापतन्ती कल्पना न विनियोजकस्य दौर्बल्यमावहति ऐन्द्र्येति श्रुतेर्गौणसामर्थ्यकल्पकत्वेन दौर्बल्यापत्तेः, अतः प्रबलयवशास्त्रप्रतिबद्धाभ्यां संस्कारविधिमन्त्राभ्यां व्रीहिनियमाप्राप्तेः व्रीहिशास्त्रं स्वविषयानियमफलकमेवं सम्भवतीति कथं हन्त्यादिनियमफलत्वेन वक्तुमुचितम् । किञ्च केनापि हेतुना

क्वचिदपि प्रयोगविशेषेऽप्राप्तस्य प्रापणं कुर्वन्विधिर्नियमविधिरित्युच्यते, यस्मिंश्च प्रयोगे सकलसंस्कारसहितप्रधानपर्याप्ता नीवारा भवेयुः व्रीहयश्च प्रधानमात्रपर्याप्ता भवेयुस्तत्र संस्कारविधिमन्त्राभ्यां नैव व्रीह्युपादानं प्राप्नुयात् व्रीहिविध्यभावे हि ताभ्यां प्राप्नुवन्तोपि व्रीहयः पुरोडाशार्थत्वेनैव प्राप्नुयुः तदर्थत्वेनैवापेक्षणात् । ततश्च व्रीहीणां शेषकार्याणां च पुरोडाशार्थत्वे तुल्ये सति बहूनां शेषकार्याणामनुरोधेनोक्तप्रयोगे नीवाराणामेवोपादानं प्राप्नुयात् । सति तु व्रीहिविधौ तेन यागाङ्गत्वेन विहितव्रीहयोयद्यप्यर्थात्पुरोडाशद्वारैव यागाङ्गं भवन्ति नैतावता पुरोडाशस्य शेषाः एकहायना इवारुण्यं, अतः प्रधानाङ्गस्यैव व्रीहीणां बहुभ्योपि संस्कारेभ्योबलवत्त्वेन संस्काराननादृत्य व्रीहीणामेव ग्रहणं प्राप्नोति, तस्माद्विधेयव्रीहीणामुक्तप्रयोगे प्रापणमन्यलभ्यं व्रीहिविधेः फलं सम्भवतीति न विध्यन्तरविषयीभूतहन्तेर्यवेषु नियमनं व्रीहिविधेः फलत्वेन वक्तुमुचितं, एवं सति कथं व्रीहिविधावव्याप्तिः ।

वस्तुतस्तु 'नियमः पाक्षिके सती'ति वार्तिकोक्तलक्षणेऽनुपात्तमतिव्याप्त्याद्यवारकतया निष्फलमुपात्तादिपदं प्रक्षिप्याव्याप्त्युपन्यासः केवलमुपहासायैव भवति । तस्मात्पक्षे प्राप्तं येन नियम्यते स नियमविधिरिति लक्षणमदुष्टमिति चेत् ? न, पूतीकानां प्रतिनिधित्वेन नियमार्थविधावव्याप्तेः सुसदृशेषु द्रव्यान्तरेषु सत्सु ईषत्सदृशानां पूतीकानामत्यन्ताप्राप्तेः । यद्यप्यपूर्वविधिलक्षणावसरोक्तन्यायेन पूतीकानां पाक्षिकत्वमुपपाद्येत तथापि 'हिरण्यगर्भः समवर्त्तताग्र इत्याघारमाघारयति' 'इषेत्वेति शाखांछिनत्ति' 'परिधौ पशुंनियुञ्जति, 'उत्क्रकेरश्वाजिनमासादयति' इति नियमविधिष्वव्याप्तिः तत्र तत्र कार्ये विनियोगबलेनैव कल्प्यसामर्थ्यानामेताद्विधिविधेयानां विनियोगात्प्रागप्राप्तेः । अलक्ष्या एवैत इति चेत्सन्तु, तथापि येन नियम्यते स नियमविधिरित्येतावतैव लक्षणनिर्वाह सति शेषवैयर्थ्या-

विधिः । पक्षे ऽप्राप्तस्य तु यो विधिः स नियमविधिः ।

---

पत्तिः । अथैतद्विधया यद्विषयः पाक्षिकः स नियमविधिरित्युच्येत ? तथापि 'तसुक्थेन' इत्यादिषु वैकृताग्निविधिष्वतिव्याप्तिः उत्तरवेदिवशेन प्रकृतावप्यग्नेः पाक्षिकत्वावश्यम्भावात् । अथ येन नियम्यत इत्येव लक्षणं, वार्तिकस्था च पाक्षिकत्वोक्तिस्तत्तात्पर्यिकैवेति चेत् ? किं तन्नियमनम् ? यद्विधिकर्तृत्वेन व्यपादिश्यते । अप्राप्तांशपूरणमिति चेत् ? हन्त 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' 'बृहद्रथन्तरसामा पृष्ठ्यः षडह'इत्यत्रातिव्याप्तिः आद्यस्य स्वर्गेतरफलांशपूरणार्थत्वात्, द्वितीयस्य तृतीयादिष्वहःसु वैरूप्याद्यवरुद्धेष्वप्राप्तांशपूरणार्थत्वात् । अथानिर्द्धारितत्वेन प्राप्तोंऽशो विशेष्यते? सर्वकामवाक्ये च स्वर्गः प्राप्तः फलान्तरमप्राप्तमिति निर्द्धारणान्नातिव्याप्तिः षडहवाक्येपि पाडहिकयोराद्याह्नोर्बृहद्रथन्तरे प्राप्ते तृतीयादिष्वप्राप्ते इति निर्द्धारणान्नातिव्याप्तिः हन्तेस्तु केषु व्रीहिषु व्याप्तिः केषु नेति निर्द्धारणाभावाद्धन्तिविधौ लक्षणं सम्भवतीति चेत् ? एवमपि 'अश्वः श्यावोदक्षिणा'इत्यत्र विधौ प्राकृतदक्षिणाकार्ये विहितस्याश्वस्य सर्वर्त्विग्भ्योदेयतया प्राप्तस्येतरर्त्विग्भ्य आच्छिद्य ब्रह्मसम्बन्धं विदधाति 'स ब्रह्मणे देय' इतिविधावतिव्याप्तिः प्रागस्माद्विधेः कश्चिदश्वांशोब्रह्मणे देयः कश्चिन्नेतिप्राप्त्यप्राप्त्योरनिर्द्धारणात् । ननु षडहवाक्ये 'स ब्रह्मणे देय' इति च वाक्ये दृष्टार्थत्वादौदुम्बरताविधिवन्नियमविधित्वमेवास्तीति कथमतिव्याप्तिविषयत्वमिति चेत् ? तर्हि तुल्यन्यायतया पूर्वोदाहृतानामाघारमन्त्रादिविधीनां नियमविधित्वमेवोचितमिति तेषु पक्षप्राप्तविषयत्वाभावादव्याप्तिः न हि तदुदाहरणेषु विषयपाक्षिकत्वं केनाप्युपपादयितुं शक्यम्, अतः कथं नियमविधिलक्षणमिति चे-

तत्राह । पक्ष इति ।

पक्षे —क्वचिदुद्देश्यसम्पादनसमये यादृग्रूपं विधिपर्यवसानं तादृग्रूपं प्रशब्दार्थः । आप्तिः—कर्त्तव्यताप्रतीतिः । अनाप्तिरकर्त्तव्यताप्रतीतिः विशिष्य मानान्तरानधिगतसाधनतारूपं विदधासाक्षिपतीतिविधिः स्वपर्यवसानगोचरीभूतरूपविशिष्टविषयस्य क्वचिदुद्देश्यसमये कर्त्तव्यत्वाङ्गीकारेण क्वचिदुद्देश्यसमये कर्त्तव्यत्वशङ्कायामज्ञातसाधनताक्षेपकोनियमविधिरिति वाक्यार्थः । उक्तविधपाक्षिकाकर्त्तव्यत्वशङ्कायां यत्कर्तृक आक्षेप आपतति स नियमविधिरितितु निष्कर्षः, हन्तिविधिना हि हन्तेरपूर्वीयवितुषीभावार्थत्वेन कर्त्तव्यत्वे बोधिते जायते एव प्रेक्षावतामीदृशी शङ्का, हन्तिं विनापि वितुषीभावसम्भवे क्वचित्प्रयोगे हन्तेरकरणं किं न स्यादिति तद्वशेन नियमादृष्टहेतुतामेष आक्षिपतीति हन्तिविधेर्नियमविधित्वमुपपन्नम् । यद्यपि स्वर्गकामोयजेतेत्यादिविधिनाऽपूर्वाक्षेपः क्रियते यद्यपि तद्विषये शक्यत्वे सन्देहात्पाक्षिकाकर्त्तव्यत्वशङ्कापि सम्भवति तथापि न तस्यां स आपतति इति नचातिप्रसङ्गः । यद्यपि 'इषेत्वेति छिनत्ती'इत्यादौ विधौ दृष्टेपि विधेयमन्त्रादेः स्वरूपेण समवेतार्थप्रकाशनादिदृष्टकार्यासमर्थत्वेन तादर्थ्याप्रतीतेर्न पाक्षिकाकर्त्तव्यत्वशङ्कास्पदत्वं तथापि यादृग्रूपे छिनद्मीत्यध्याहारादिविशिष्टे विधेये विधेः पर्यवसानं तादृग्रूपस्य तस्य तादर्थ्यप्रतीतौ भवत्येव तादृशशङ्कास्पदत्वमिति तत्र लक्षणाप्रसङ्गशङ्कां वारयितुमुक्तार्थप्रशब्दग्रहणम् ।

नन्वेवमपि नियमादृष्टमनाक्षिपत्सु केषुचिन्नियमविधिषु तदाक्षेपघटितस्योक्तलक्षणस्याव्याप्तिः स्यादेव, तथाहि 'औदुम्बरोयूपोभवति'इति वैकृतेन विधिना नैव नियमापूर्वमाक्षिप्यते खादिरताजन्यत्वेन क्लृप्तनियमादृष्टं प्रति हेतुत्वाक्षेपादुपपत्तेः, 'खादिरोयूपोभवति'इति वैकृतविधिना तु न तत्तत्साधनत्वमप्या-

क्षिप्यते क्लृप्तसाधनताकस्य तस्यैव सर्वप्रयोगेषु फलोपधानमित्याक्षेपमात्रेण तदुपपत्तेः, 'उत्तरेद्युः द्विरात्रस्य गृह्यते' इत्यत्र नैव नियमादृष्टसम्बन्धाक्षेपोपि, ग्रहणस्यैव क्रतुपूर्वफलोपधानमित्याक्षेपमात्रेण तदुपपत्तेः । एवं मिश्रमते वैकृते 'रथन्तरं पृष्ठं भवति' इति विधावपि तत्सम्बन्धाक्षेपाभावोबोध्यः 'ऋतौभार्यामुपेयात्' इत्यत्र विधेयस्यादृष्टसामान्यमपि प्रति हेतुत्वं नाक्षिप्यते नतरां नियमादृष्टं प्रति अकरणस्य प्रत्यवायहेतुत्वाक्षेपपूर्वकं तत्परिहारार्थत्वाक्षेपमात्रेण तदुपपत्तेः, ब्राह्मणं ,प्रति वृत्त्यर्थयाजनादिनियमविधौ तु विधेयस्य न कं चित्प्रति पारार्थ्यमप्याक्षिप्येत उपायान्तरस्यैव प्रत्यवायहेतुत्वाक्षेपेण तदुपपत्तेः 'प्रतिग्रहसमर्थोपि प्रसङ्गं तत्र वर्जयेत्'इति शास्त्रवशेनाकरणस्य प्रत्यवायहेतुत्वायोगात् ।

यत्त्वाकरोक्तपक्षान्तरमुक्तं रिक्थादिधनाभावेनावश्यकर्त्तव्यं धनार्जनं यदा भवति तदा क्रियमाणप्रतिग्रहोऽभ्युदयायेति । तत्प्रौढिमात्रम् । बहुधनसम्पन्नस्यानियतोपायैरर्जने प्रवृत्तस्य प्रत्यवायाभावापत्तेः 'व्यत्यये कर्मणां साम्यम्'इत्यादिशास्त्रेण च तादृशार्जनस्य स्वसन्ततिगामिहीनजातित्वापादकप्रत्यवायहेतुत्वात्र गतेः एवं निषेधानां विध्यादित्रैविध्याङ्गीकारे 'नानृतं वदेत्'इत्यादिषु क्रत्वर्थपुरुषार्थनिषेधेषु नियमात्मकेषु नियमादृष्टाक्षेपघटितलक्षणासम्भवोदर्शयितव्यः । क्रत्वर्थेषु स्थायिनोवर्जनस्य क्रत्वपूर्वहेतुत्वाक्षेपेण पुरुषार्थेषु च निषिध्यस्य प्रत्यवायहेतुत्वाक्षेपेण तदुभयोपपत्तेः, अतोनियमादृष्टाक्षेपघटितलक्षणानुपपत्तिरिति चेत् ? सत्यम्, न सूक्तलक्षणे नियमादृष्टप्रवेशोस्ति, आक्षेपसामान्यघटितंस्यापि तस्य प्रसिद्धोदाहरणे वृत्तिं दर्शयितुं परं तत्र सम्भवन्नियमादृष्टाक्षेपोऽस्माभिरुदाहृतः । भवदुदाहृतनियमोदाहरणेषु तु भवदुक्तरीत्यैवास्ति तावत्कश्चिदाक्षेपः स चोक्तविधपाक्षिकाकर्त्तव्यत्व-

शङ्कानिमित्त एवेति सम्भवत्येव तेषु लक्षणानुगमः अतएव 'खादिरो यूपो भवति' इत्यादिवैकृतविधिविधेयस्य खादिरतादेर्निर्ज्ञातनियमापूर्वसाधनभावस्यापि यादृश एव तत्सम्बन्धः प्रागज्ञातस्तादृशाक्षेपेण लक्षणं तत्रोपपादनीयमिति सूचनार्थं मूले ज्ञानार्थोविधि शब्दः। ननु यथाऽन्वयव्यतिरेकसिद्धत्वाद्वैतुष्यार्थत्वबोधो न हन्तिविधेः फलं तथा हन्तिनियमोपि तत्फलं, हन्तिप्रकाशनसमर्थस्य 'अवरक्षो दिवः सपत्नं वध्यासम्' इति मन्त्रस्य लिङ्गप्रकरणावगतक्रत्वर्थत्वानुपपत्तिकल्पितविधिनैव तत्प्राप्तिसम्भवात्। उक्तं हि तृतीयेऽध्याये ग्रहणावेक्षणसम्यग्जरणप्रकाशकमन्त्राणां भक्षानुवाकसमाख्यासहकृतलिङ्गावगतस्य भक्षणोपयोगिग्रहणादिप्रकाशनार्थत्वस्य निर्वाहाय ग्रहणादिनियमकल्पना। यद्वा 'वारणो यज्ञावचरो वैकंकतो यज्ञावचर' इति शास्त्रेण दर्शादियागसाधनत्वेनावगतोलूखलमुसलयोरुत्पत्तिशिष्टद्रव्यान्तरावरुद्धेष्वाग्नेयादिषु साक्षादसम्भवत्साधनत्वयोः केन द्वारेण तन्निर्वाह इत्याकाङ्क्षायां पुरोडाशप्रकृतितया विहितव्रीहीणां वैतुष्योपायाकाङ्क्षामालोचयतो हन्तिमात्रसामर्थ्यं चानयोरालोचयतो भवत्येवं बुद्धिः उलूखलमुसलाभ्यां हन्तिद्वारेण क्रतावुपकुर्यादिति। नच हन्तेरनियतत्वे तद्द्वारेण ताभ्यां नियतवदुपकर्तुं शक्यते इति तद्बलेनैव भवति हन्तिनियमसिद्धिरिति न हन्तिविधेर्नियमफलकत्वसम्भवः। किं तर्हि तत्प्रयोजनमिति चेत्! रशनामन्त्रविधिना गर्दभरशनाया इवामुनापि यवपरिसङ्ख्यैव भवतु। नच प्राप्तस्यापि नियमस्याभ्युदयशिरस्कं पुनर्विधानमेवोचितं अनारभ्याधीतसाप्तदश्यविधिवत् न तु परिसङ्ख्याफलकत्वमिति शङ्कास्पदम्। रशनामन्त्रविधेरपि तथैवाभ्युदयशिरस्कपुनर्विध्यर्थत्वापत्तेः। नचैवमपि हन्तिस्वरूपस्य तन्नियमस्य वा यवेभ्यः परिसङ्ख्यानं क्रियत इत्यत्र किं नियामकमित्यपि शङ्कास्पदं, यत्कृतां प्राप्तिमालोच्य विधिः परिसङ्ख्याफलत्वं प्रतिपद्यते तस्य स्वरूप-

प्रापकत्वे स्यादयं स्वरूपपरिसङ्ख्याविधिः । नचैवमस्ति, लौकिकप्रमाणमेव हि हन्तिस्वरूपप्रापकं, यदि तन्मात्रालोचनेनायं विधिः प्रवर्त्तेत तेनानियतप्राप्तस्य नियमपर एव स्यात, यतस्तु मन्त्रलिङ्गकल्प्यविधिना नियमप्राप्तिमालोच्य प्रवर्त्तते, अत एव परिसङ्ख्याफलोभवति, ततश्च परिसङ्ख्याफलत्वापादिकां प्राप्तिं कुर्वता शास्त्रेण नियमप्राप्तिमालोच्य क्रियमाणा परिसङ्ख्या रशनामन्त्रविधाविव हन्तिविधावपि नियमगोचरैव भवितुमर्हतीति । स्यादेतत्—नियमप्राप्तिमालोच्य क्रियमाणा परिसङ्ख्या रशनामन्त्रविधाविव परिसङ्ख्याविधित्वं प्रतिपद्यते आलोचयेदेवासौ स्वरूपप्राप्तिं तत्पूर्वभाविनीमपि तदानीं, अन्यथा नियमस्यैव बुद्ध्यनारोहात्,तुल्ये चालोचने शब्दोपात्तस्वरूपस्यैव परिसङ्ख्या युक्ता, नाशब्दोपात्तस्य नियमस्येति । मैवम् । स्वरूपपरिसङ्ख्यायां हि निवृत्तिनियमान्नियमाऽदृष्टान्तरकल्पनमापद्यते, नियमपरिसङ्ख्यायां तु नियमादृष्टस्याक्लृप्तस्याङ्गत्वमात्रमिति लाघवात् स्वरूपपरिसङ्ख्यायामापद्यमानस्वरूपनियमोभयप्रापकमानबाधान्नियमपरिसङ्ख्यायामापद्यमानस्य नियमप्रापकमानमात्रबाधस्यौचित्याच्च । अत एवाङ्गिरसां द्विरात्रे 'षोडश्युत्तर'इति वाक्ये वृत्तिकारमतेन परिसङ्ख्याङ्गीकारेपि तत्तच्चोदकप्राप्तवैकल्पिकषोडशिस्वरूपपरिसङ्ख्यामनङ्गीकृत्य 'उत्तरेऽहन्द्विरात्रस्य गृह्यत' इत्यनारभ्यवादप्राप्तनियमपरिसङ्ख्यैवाङ्गीक्रियते, न तु हन्तिविधेर्यत्रपरिसङ्ख्यार्थत्वे प्रोक्षणविधेरपि तदर्थत्वमेव स्यात्तुल्यन्यायत्वात्, तथा सति 'व्रीहिभिर्यजेत'इत्यस्य वैयर्थ्यापातः, इदं हि शास्त्रं न व्रीहिनियमपरं तस्यान्यलभ्यत्वात्, किन्तु प्रोक्षणहन्तिशास्त्रगतव्रीहिपदयोरपूर्वसाधनलक्षणोपादानेन यवेषु प्रोक्षणहन्त्योः प्राप्तिनियमफलं, उपपादिता चाऽपूर्वसाधनलक्षणा ऽधस्तात् । अतो न हन्तिविधेः परिसङ्ख्यार्थत्वम् । भवतु तर्हि समाख्यागोचरत्वापादनेन हन्तावध्वर्युकर्तृकत्वप्रापकशास्त्रार्थत्वमस्येत्यपि न शङ्क्यं, मन्त्र-

यथा 'व्रीहीनवहन्ति' इत्यादिः। अनेन हि विधिनाऽव-

समाख्ययाऽध्वर्युकर्तृकत्वे निर्णीते हन्तिमन्त्रेऽवध्यासमित्युत्तमपुरुषप्रयोगेणैव मन्त्रोच्चारयितृकर्तृकत्वावगत्या तल्लाभात्। नच याजमानकाण्डेपि हन्तिवाक्याम्नातमहिम्ना प्राप्तेन यजमानकर्तृकत्वेनाध्वर्युकर्तृकत्वस्य बाधः स्यादिति शङ्क्यं, तत्राम्नातस्य द्वन्द्वतासंपादनात्मकगुणविधानेन चरितार्थस्य मानान्तरबाधावहार्थप्रापकत्वादिति व्यर्थ एव हन्तिविधिरितिचेन्न। व्रीहिविधेर्व्रीहिनियमपरत्वसम्भवस्याऽपि प्रागुपपादितत्वात्, अतोनैव हंतिविधेर्नियमपरत्वमित्याशयेनाह। किंत्विति।

समाधत्ते। नियमइति। तमेव विवृणोति। सचेति। अयमाशयः 'व्रीहीनवहन्ति' इत्यस्य न तावत्फलतः परिसङ्ख्यात्वं सम्भवति यवसाधारण्येन हंतिप्रापकश्रुतिकल्पनामूलभूताया अवक्षर इत्यादिमन्त्रस्य प्रकरणे नित्यवदाम्नानं किमर्थमित्याकाङ्क्षाया व्रीहिहन्तिसम्बन्धबोधकश्रुतिदर्शनेऽप्यनुच्छेदात्। यदि ह्यश्वाभिधानीवद्व्रीहयोऽपि सर्वप्रयोगेष्वनुवर्तेरन् तदा 'इमामगृभ्णन्' इतिमन्त्रीयनित्यवदाम्नानकैमर्थ्याकाङ्क्षाया अश्वाभिधानीसम्बन्धबोधकश्रुत्यैवावरक्ष इति मन्त्रीयनित्यवदाम्नानकैमर्थ्याकाङ्क्षायाः व्रीहिहन्तिसम्बन्धबोधकश्रुत्या भवेदुच्छेदः, स्याच्च गर्दभाभिधान्या इव यवानामर्थान्निवृत्तिः। नचैवमस्ति। अथ पाक्षिकेपि व्रीहिहन्तौ प्रकाश्यत्वेन लब्धे मन्त्रः किमर्थ इत्याकाङ्क्षानिवृत्तेर्नित्यवदाम्नातस्यापि विशेषस्य पाक्षिकशेष्यनुरोधेन पाक्षिकत्वस्योचितत्वात्सम्भवत्येव यवसाधारणहन्तिप्रापकश्रुतिकल्पनोच्छेदेन फलतः परिसङ्ख्येत्युच्यते? तद्यसत्यपि हन्तिविधावाक्षेपतः पक्षप्राप्तोहन्तिप्रकाश्यत्वेनवाऽवरक्ष इति मन्त्रस्योलूखलमुसलयोश्च कैमर्थ्याकाङ्क्षोपशमान्नैव हन्तिनियामकश्रुति-

घातस्य न वैतुष्यार्थत्वं बोध्यते, अन्वयव्यतिरेकसिद्धत्वात् । किन्तु नियमः । स चाप्राप्तांशपूरणम्, वैतुष्यस्य हि नानोपायसाध्यत्वात् यस्यां दशायामवघातं परिहृत्योपायान्तरं ग्रहीतुमारभते तस्यां दशायामवघातस्याऽप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन वि-

---

कल्पनोत्थानामिति हन्तिविधेरप्राप्तनियमविधित्वमेव स्यात्, नहि विधितः पक्षप्राप्तस्यैव द्वारत्वं नापेक्षत इत्यत्र नियामकमस्ति, अभ्युदयेष्टिगतदधिपयसोः प्रणीताधर्मप्रापकन्यायेन कुतोपि प्रमाणादवगतापूर्वसाधनभावस्य द्वारत्वौचित्यात् । अथ मन्त्रस्य निसवदाम्नानान्यथानुपपत्त्या यवसाधारण्येन हन्तिप्रापकश्रुतिकल्पनामभ्युपेत्य हन्तिविधौ शाब्दपरिसङ्ख्यैवोच्येत ? तत्र दोषत्रयापत्तिः ततोवरमभ्युदयशिरस्कनियमाङ्गीकरणमिति प्रकारान्तरेणाक्षेपपरिहारद्योतनार्थ एवकारः भिन्नक्रमश्च अनेनैवेति । अयमाशयः यद्यपि मन्त्रस्योलूखलमुसलयोऽर्वाङ्गत्वानुपपत्त्या हन्तिनियमविधिरनुमीयते तथापि श्रुतहन्तिविधिनैव हन्तिनियमः क्रियते इति शक्यत एव वक्तुं, अनुमितविधिः श्रुताद्भिन्न इत्यत्र मानाभावात् योमन्त्रबलादनुमितः स एवायमिति प्रत्यभिज्ञासम्भवाच्च । कोहि प्रेक्षावान्धूमेन पर्वते वन्हिमनुमाय ततः पर्वते स्वदृष्टधूमजननसमर्थवन्हिं प्रत्यक्षेणानुभवन्नेवाऽनुमितोयःस एवायमिति न प्रत्यभिजानीयात् । नन्वेवं मन्त्राधिकरणे 'तदर्थशास्त्रा'दिति पूर्वपक्षसूत्रावयवेन मन्त्रलिङ्गप्राप्यविनियोगार्थानां शास्त्राणां सिद्धान्तिनं प्रति यदानर्थक्यापादनं कृतं यच्च सिद्धान्तिना तेषां परिसङ्ख्याद्यर्थतयाऽर्थवत्वमुक्तं तदुभयमप्यनुपपन्नं मन्त्रलिङ्गानुमितैः सह श्रुतानां भेदाभावेनाऽप्राप्ततत्तद्विनियोगपरत्वस्यैव सम्भवादिति चेन्न । लिङ्गा-

ष्यनुमेयानां लिङ्गादिविनियोज्यमन्त्रादिगोचराणां श्रुत्यभेदायोगात्, नहि अगुरुसौरभेण धूमेन वह्निमनुमाय ततः पर्वतेऽतद्विन्धनं वह्निं पश्यन्नपि कश्चित्प्रेक्षावान् प्रत्यभिजानीयादनुमितः सोयमिति । नचैवमवरक्ष इति मन्त्रानुमेयो हन्तिविधिरपि नित्यानुमेयतच्छ्रुना-ह्निम इति शङ्क्यं, लिङ्गादिविनियोज्यमन्त्रादिशेषिभूतहन्त्यादिविषयाणां क्वचिदाम्नातानामेव मन्त्राम्नानाद्यनुपपत्तिकल्पकत्वस्य वक्तुमुचितत्वात् । ननु मन्त्रसामर्थ्येन मन्त्रविषयिणी श्रुतिर्नित्यानुमेयैवानुमीयते तच्छेषिणी तु क्वचिदाम्नातेवेत्यत्र किं नियामकमिति चेत् ? शृणु, लिङ्गादिकल्प्यास्तद्विनियोज्यमन्त्रादिविषयास्तावच्छ्रुतयोलाघवान्नित्यानुमेया एव स्वीक्रियन्ते आम्नातानां स्वरूपसत्त्वमनादिकालीनानेककर्तृकाध्ययनविषयत्वं च कल्प्यमितिगौरवं, नित्यानुमेयानां तु सत्वमात्रमित्यतिलाघवं, प्रतिप्रकरणं चाम्नातविधिविहिताङ्गेभ्योऽधिकसङ्ख्यानां लिङ्गादिविनियोज्याङ्गानां विधायिकाः श्रुतयोऽनुपलभ्यमानानाम्नातत्वेन सम्भावयितुमपि शक्यन्ते ईदृशवेदप्रस्थानमाहिम्नैव बलाबलाधिकरणादौ लिङ्गादिभिर्नित्यानुमेयश्रुत्यनुमानकथनं मन्त्राधिकरणे तदर्थशास्त्राणां परिसङ्ख्याद्यर्थत्ववर्णनं च सङ्गच्छते । यद्यप्युक्तरीत्या लिङ्गादिविनियोज्यमन्त्रादिशेषिहन्तिविषयश्रुतेरपि नित्यानुमेयत्वे लाघवं तुल्यं तथापीदृशश्रुतेराम्नाताया एव कल्पनमुचितं तथाहि मन्त्रगतलिङ्गादिना प्रथमं मन्त्रस्यैव विनियोजिका श्रुतिरनुमीयते अनेन मन्त्रेण हन्ति कुर्यादिति, ततोमानान्तरानवगतविनियोगस्य हन्तेरुद्देश्यत्वानुपपत्त्या हन्तिविधिः कल्प्यते । स च यदि नित्यानुमेयः स्यान्नैव मानान्तरं स्यात् स्वानपेक्षप्रमाजनकमेव हि स्वमानान्तरम् । नच नित्यानुमापकमनपेक्ष्य मानत्वमपि सम्भाव्यते अतो हेतोर्मन्त्रविनियोगस्य लिङ्गप्रमेयत्ववत् हन्तिविनियोगस्य मन्त्रविधिप्रमेयत्वमापद्येत हन्तिविधेर्नित्यानुमेयत्वे । नच यद्विधिप्र-

मेयविनियोगं यत् तस्य तद्विधिविशेषभावनायामुद्देश्यत्वं सम्भवति, अतो यथोद्देश्यत्वानुपपत्त्या हन्तिविधिः कल्प्यते नित्यानुमेयहन्तिविध्यनुमाने तस्यास्तादवस्थ्यात्कचिदाम्नातस्यैव तस्यानुमानमुचितं,- दृश्यते प्रतिप्रकरणं मन्त्राद्याम्नातान्यथानुपपत्तिमहिम्ना सम्भवत्प्राप्तिकाविनियोगानां मन्त्रादिविशेषाणां विषयः तथाहि दर्शपूर्णमासयोस्तावद्दृषदुपलयोरासादनान्यथानुपपत्त्या 'असंवपन्तीपिंषाणि कुरुतात्' इति मन्त्रबलेन च सम्भवत्प्राप्तिकेपि पेषणे विधिराम्नातः 'तण्डुलान्पिनष्टी'ति 'जनयत्यै त्वा संयौमी' तिमन्त्रबलेन सम्भवत्प्राप्तिके च संयवने 'पिष्टानि संयौति' इति 'देवस्त्वा सविता श्रपयतु' 'अविदहन्तः श्रपयत' इतिमन्त्राभ्यां सम्भवत्प्राप्तिके श्रपणे 'कपालेषु श्रपयति' इति। नचैषां यत्रपरिसङ्ख्यार्थत्वं सम्भवति, एषु त्रीह्यश्रवणात्। नाप्यध्वर्युसम्बन्धप्राप्त्यर्थत्वं, संयौमीत्युत्तमपुरुषेण संयवने तत्प्राप्तेः, पेषणश्रपणयोस्तु प्रैषाद्वगतान्यकर्तृकत्वयोः समाख्ययाऽध्वर्युकर्तृकत्वकल्पनायोगात् प्रयोजककर्तृत्वस्य तु प्रैषमहिम्नैव सिद्धेः। नच श्रपणविधेश्चित्रेष्टितण्डुलेषु त्रैहत्वनियमनिवृत्तिफलत्वमपि, श्रुतविधिन्यायेन मन्त्रकल्प्यश्रपणविधिनापि तत्सिद्धेः, तथा पशौ 'परिवीरसि' 'युवा सुवासाः परिवीत' इति करणक्रियमाणानुवादिमन्त्रबलेन सम्भवत्प्राप्तिके परिव्याणेऽग्निगुप्रैषबलेन सम्भवत्प्राप्तिकयोः संज्ञपनविशसनयोः 'छागस्य च वपया' इति मन्त्रबलेन सम्भवत्प्राप्तिकेपि पश्वेकत्वे विधयोऽनन्यप्रयोजना आम्नायन्ते तथा सोमेपि 'गवा ते क्रीणामि सोमन्ते क्रीणाम्यूर्जस्वन्तम्' इति मन्त्राभ्यां क्रये 'उपयामगृहीतोसीन्द्रवायुभ्यां त्वा जुष्टं गृह्णामि उपयामगृहीतोसि मित्रावरुणाभ्यां त्वा जुष्टं' इत्यादिमन्त्रैः सम्भवत्प्राप्तिकेषु ग्रहणेषु च विधयः श्रूयन्ते। नच प्रतिप्रकरणमाम्नातानामीदृशानेकविधीनां वैयर्थ्यं शक्यं वक्तुम्। नच प्रत्येकमभ्युदयशिरस्क-

प्राप्तिकत्वमपि युक्तं अनेकादृष्टकल्पनागौरवात् प्राप्तस्याप्यभ्युदयशिरस्कविधिसम्भवे च विहितस्य विधानायोगेन कर्मान्तरकल्पनायाः कामन्युदयापत्तेः ।

ईदृशत्वेदमस्थानमहिम्नैव चाकरे तत्र तत्सम्भवत्प्रयोजनान्तराणामपि विधीनां मन्त्राद्याम्नानान्यथानुपपत्तिलभ्यविधिकार्यविधित्वमङ्गीकृत्य सिद्धान्तवर्णनं दृश्यते 'चतुरश्चतुरो मुष्टीन्निर्वपति' इत्यत्र तावत् 'अग्नये जुष्टं निर्वपामि' इति मन्त्रेण सम्भवत्प्राप्तिकस्यापि निर्वापस्य विधिमङ्गीकृत्य चतुर्मुष्टिनिर्वापस्य यदर्थत्वात्तेनैवानुसमय इति सिद्धान्तितं पञ्चमे । चतुःसङ्ख्यामुष्टिपरिमाणयोश्च निर्वापाङ्गत्वसाम्यात्सप्तदशशरावे चरौ प्रथमोपस्थितचतुःसङ्ख्ययानुग्रहः कार्य इत्युक्तं दशमे ।

शक्यते चात्र वक्तुं मुष्ट्यनुवादेन चतुःसङ्ख्या विधीयत इति । नहि मन्त्रेण सम्भवत्प्राप्तिकस्य निर्वापस्य प्रापणे समुद्भूता वैयर्थ्यशङ्काऽभ्युदयशिरस्कत्वकल्पनापर्यन्तं व्याप्रियते न तु मुष्ट्यनुवादेन चतुःसङ्ख्याविधिवाक्यप्रयोजनत्वेन स्वीकरोतीति सङ्गच्छते इति मन्त्रानुमितानित्यानुमेयश्रुत्या निर्वापप्राप्त्यभ्युपगमे सिद्धान्तद्वयमप्यनुपपन्नं स्यात् । नचाप्राप्तमुष्ट्यनुवादासम्भव इत्यपि शङ्कास्पदं, पक्षप्राप्तानुवादेनापि गुणविधिसम्भवात् सामान्यशास्त्रप्रापितदक्षिणहस्तगतपरस्परसहितपञ्चाङ्गुलिकर्तृकव्यापारप्रकाशकेन 'यच्छन्तां पञ्च' इति मन्त्रेण निर्वापाङ्गतयाऽवधारितेन मुष्टेर्नित्यप्राप्तिसम्भवाच्च । तथा क्रमावगताङ्गभावाभिः 'वार्त्रघ्नी पूर्णमास्या'-मितिवचोभ्यां व्यवस्थापिताभिरनुवाक्याभिः सम्भवत्प्राप्तिकयोरपि देवतयोः 'अग्नीषोमाभ्यामाज्यभागौ यजति' इतिवाक्ये विधिमङ्गीकृत्य दशमे सिद्धान्तितं प्रथमाज्यभागेन प्रधानदेवतासंस्कारकारकोद्दन्द्वोपात्तसारूप्यबाधप्रसङ्गात् । शक्यते चात्र वक्तुं इतरेतरयुक्तयोर्देवतात्वं विधीयते इति । नहि तादृशेपि प्रयोजने सम्भवत्यभ्यु-

दयशिरस्कत्वं वक्तुमुचितं, ततश्च द्वयोरप्याज्यभागयोः संस्कारकर्मत्वं स्यादिति सिद्धान्तहानिः । एवमन्यत्राप्यूह्यम् । अत ईदृशसिद्धान्तवर्णनं कुर्वतामाचार्याणामेष एवाभिप्रायो लक्ष्यते यन्मन्त्राम्नातान्यथानुपपत्त्या मन्त्रशेषिविषयत्वेन कल्प्यमानश्रुतिर्न नित्यानुमेया, किन्तु क्वचिदाम्नातैव, तथैव वेदप्रस्थानदर्शनादिति । उचितं च वेदार्थनिर्णयाय प्रवृत्तैर्वेदप्रस्थानमनुसृत्यैव वेदार्थनिरूपणं कर्त्तुम् ।

अतएव स्मृतिपादे वार्त्तिककारैः सर्वाचारप्रामाण्यनिर्वाहार्थमाचाराः प्रमाणमित्येकैव श्रुतिः कल्प्येतिपक्षे ह्युपपादितेपि न्यायसुधायामुक्तं कतिपयाचारमूलश्रुतीनामुपलम्भात्प्रत्येकाचारमूलानेकश्रुतिकल्पनमेवाभिप्रेतमिति । तथा विध्यन्ताधिकरणे सौर्यादिषु लौकिकस्थालीपाकादिविध्यन्तप्राप्तिमाशङ्क्योक्तं सत्यपि स्मार्त्तकर्मणामपि प्रत्यक्षवेदविहितत्वेन चोदकत्वे त्रय्या वैतानिककर्मनिरूपणोद्देशेन प्रवृत्तेस्त्रयीप्रवृत्त्युद्देश्यनिरूपणत्वेन सुसदृशत्वाद्दर्शादिविध्यन्तस्यैवातिदेश इति । अतः सिद्धमेतन्मन्त्राम्नानाद्यनुपपत्त्या हन्तिविध्यनुमानेपि न श्रुतविधेर्हन्तिनियमार्थत्वव्याघातः क्वचिदाम्नानं विषयीकुर्वताऽनुमानेनास्यैव विषयीकरणसम्भवादिति ।

एतेनाकरणनिमित्तप्रायश्चित्तविध्योर्यथाक्रमं विधिनिषेधानुमापकत्वसम्भवेपि सन्ध्यावन्दनादिविधिब्रह्महत्यादिनिषेधानां वैयर्थ्यनिरासो बोध्यः । यस्मिन्नेव हि तार्तीयेऽधिकरणे ग्रहणावेक्षणसम्यग्जरणमन्त्रबलाद्ग्रहणादिकर्त्तव्यतानुमानमुक्तं तत्रैवमनेन सम्यक्जरणाभावे प्रायश्चित्ताम्नानबलादपि सम्यग्जरणकर्त्तव्यतानुमानमुक्तं, तत्र यदि लिङ्गादिभिर्मन्त्रादिश्रुतय इव प्रायश्चित्तविधिभिर्नित्यानुमेया विधिनिषेधा अनुमीयेरन् तदा तैरेव प्रतिपन्नार्थाः श्रुतिविधिनिषेधाः समस्ता व्यर्था एव भवेयुः । न च तेषां कुशकाशा-

वलम्बनेनापि प्रयोजनान्तरं वक्तुं शक्यम्, अतोऽत्रानुमीयमाना अपि विधिनिषेधा न प्रत्यक्षेभ्योभिन्ना अनुमीयन्त इत्यङ्गीकृत्यैवार्थवत्त्वमुपपादनीयमिति ।

अथ परिसङ्ख्यालक्षणे तत्रान्यत्रेति पदाभ्यां शेषिणौ विवक्षितौ ? उत शेषौ ? उतशेषशेषिभावनिरूपकौ कौचित् ? उत निमित्तभूतौ ? उताश्रयभूतौ ? अथ विध्युपात्तानुपात्तौ ? अथ ग्राह्यव्यावर्त्तनीयौ ? नाद्यः 'शम्यन्ता प्रायणीया सन्तिष्ठत' इति शेषपरिसङ्ख्यायामव्याप्तेः अनेकस्मिन् शेषिण्येकशेषप्राप्तिमपेक्ष्य प्रवृत्तो विधिः परिसङ्ख्येति हि लक्षणं तादृशीं प्राप्तिमपेक्ष्य प्रवृत्ते विधावेव सम्भवति। नचोक्तविधिस्तादृशः एकस्मिन् प्रायणीयारूपशेषिण्यनेकशेषप्राप्तिमपेक्ष्यैव प्रवृत्तत्वात् । न द्वितीयः तयैव दिशा सिद्धलक्षणस्य 'इत्यश्वाभिधानीमादत्ते' 'दण्डी प्रैषानन्वाह'इति शेष्यन्तरपरिसङ्ख्यायामव्याप्तेः । न तृतीयः तथा सति हि शेषशेषिभावसम्बन्धेनानेकस्मिन्नेकप्राप्तिमपेक्ष्य प्रवृत्तत्वं लक्षणमुक्तं स्यात् तत्र च 'सायं जुहोति'इति 'प्रातर्जुहोति'इति निमित्तपरिसङ्ख्यायामव्याप्तिः एकस्मिन्नग्निहोत्रेऽनेकजीवनानां यावज्जीववाक्यान्निमित्तत्वेन प्राप्तिमपेक्ष्य ह्ययं विधिः सायंप्रातःकालानवच्छिन्नजीवनानां निमित्ततां परिसञ्चष्टे न शेषशेषिभावसम्बन्धेन तथा, 'वाग्वा एषा यदैन्द्रवायवाग्राग्रहा गृह्यन्त' इत्याश्रयान्तरपरिसङ्ख्यायामव्याप्तिः अयं विधिर्हि शुक्राग्रतादिकाम्यगुणं प्रति धाराग्रहाणामाश्रयत्वेन प्राप्तिमपेक्ष्याधाराग्रहनिवृत्तिं करोति, न शेषशेषिभावेन। न चतुर्थपञ्चमौ शेषान्तरशेष्यन्तरपरिसङ्ख्यास्वव्याप्त्यापत्तेः । स्यात्तर्हि षष्ठस्तथासति सर्वोक्तोदाहरणानां सङ्ग्रहसम्भवादिति चेत्, सत्यं, तथापि 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इति परिसङ्ख्यायामव्याप्तिः अनेन हि विधिना यासु रथन्तरसामकासु अतादृशीषु च विकृतिष्वैन्द्रवायवाग्रतायाः प्राप्तिमपेक्ष्य रथ-

न्तरसामकविकृतिभ्यस्तस्या निवृत्तिं कुर्वता परिसङ्ख्यात्वमनुभवित-व्यं तासां मध्ये नैतद्विध्युपात्ता काचित्, एवं 'दीक्षाः सोमस्य दक्षिणाः सोमस्य' इति परिसङ्ख्याविध्योरप्यव्याप्तिः ज्योतिष्टोमविकृतिषु तदङ्गविकृतिषु च दीक्षादक्षिणस्य प्राप्तिमालोच्य ह्ययं विधिरङ्गविकृतिभ्यः तत्परिसङ्ख्यां कुर्वन्नचासां मध्ये काचिदेतद्विध्युपात्ता ।

अथोच्येत परिसङ्ख्यालक्षणवार्त्तिकगताभ्यां तदन्यशब्दाभ्यां सर्वनामत्वेन निर्दिष्टप्रतिनिर्देशस्वभावाभ्यामपि न निर्दिष्टप्रतिनिर्देशः सम्भवति स्वनिर्देशार्हस्याश्वाभिधान्यादेः सामान्यतोविशेषतो वा प्रागनिर्देशात्, किं तु यथा 'सास्य देवता' इति सूत्रे सेतिसर्वनाम्ना प्रागनिर्दिष्टस्याप्यग्न्यादेर्विधित्सिततद्धितप्रकृतिशब्दार्थत्वेन बुद्धिस्थस्य तत्तद्धितान्तशब्दनिष्पत्तिकाले प्रत्येकरूपेण परामर्शः तथा निरूपणीयपरिसङ्ख्यालक्षणघटकप्राप्तिविषयतावच्छेदकीभूतग्राह्यत्वव्यावर्त्तनीयत्वाभ्यां बुद्धिस्थानामश्वाभिधाधान्यादीनां गर्दभाभिधान्यादीनां च तत्तदुदाहरणे परिसङ्ख्यात्वोपपादनकाले प्रत्येकरूपेण ताभ्यां परामर्शः ततश्च ग्राह्ये व्यावर्त्तनीये प्राप्तिमपेक्ष्य प्रवृत्तत्वं परिसङ्ख्यालक्षणं भवेदिति समप्रपक्षोयुक्त इतिचेत् न, एवमपि 'अत्रह्येवावपन्ति' इति परिङ्ख्यायामव्याप्तेः अनेन हि विधिना पवमानगतगायत्र्यादिभ्योऽन्यत्रावापपरिसङ्ख्या क्रियते, एतद्विध्यभावे च ग्राह्यासूक्तगायत्र्यादिष्वावापो नैव प्राप्नुयात्, किंतु तद्भिन्नस्तोत्रीयर्क्ष्वेव प्राप्नुयात् तथाहि ऋक्षु तावत्साम्नामेवावापप्राप्तिर्वक्तव्या नर्चाम्, अयोग्यत्वात्, त्रिवृद्धस्तोमकक्रतुषु चमससामकगानयनेनैव स्तोमविवृद्धेः सामञ्जस्यात्सामावाप्तेरेव न प्रसक्तिर्नितरां गायत्र्यादिषु, येष्वप्यप्राकृतसाम्नां प्रकरणादङ्गत्वमवगतं तत्रापि तदीयानां योन्युत्तरर्चां प्रकरणादङ्गत्वेऽवगते नैव प्राकृतर्क्षु तेषां साम्नामावापप्रसक्तिर्नितरां गायत्र्यादिषु, यक्रत्वङ्गभूतानां त्वप्राकृतसाम्नां योन्युत्तरर्चामतउत्तराग्रन्थ-

गतप्रकरणयागक्रत्वङ्गत्वेनावगताः तत्रातिदेशावगताङ्गभावप्राकृतर्क्ष्वेव प्राकृतसामप्रसक्तावपि न गायत्र्यादिषु तत्प्रसक्तिः 'अन्ते तु बादरायण' इति न्यायेन माध्यन्दिनार्भवपवमानान्त्यतृचयोरेव त्रैष्टुभजागतयोस्तत्प्रसक्तेः 'अत्रह्येवावपन्ति' इति विधिना तु गायत्र्यादिभ्योन्यत्रावापपरिसङ्ख्यायां कृतायां लिङ्गाद्यवगतस्तोत्राङ्गभावनिर्वाहायावश्यकर्तव्यस्यावापस्य परिशेषादेव गायत्र्यादिषु प्राप्तिरिति ग्राह्यव्यावर्तनीयसाधारणीभावाय प्रसक्तिमपेक्ष्य प्रवृत्तत्वाभावादुक्तविधाव्याप्तिः ।

ननु नोक्तलक्षणेपूक्तदूषणानि सङ्गच्छन्ते, तथाहि 'शंय्वन्ता प्रायणीया सन्तिष्ठत' इत्यत्र तावत्कीदृशी परिसङ्ख्या भवतोऽभिप्रेता ? यस्याः प्रथमलक्षणाव्याप्तिरुपन्यस्ता, न तावत्तदन्ताङ्गरीतिविधिमङ्गीकृत्य गृहमेधीयाज्यभागविधिवत्फलतः परिसङ्ख्या दाशमिकाधिकरणविरोधात् तत्र हि नैतद्विधिना तदन्ताङ्गरीतिर्विधीयते वाक्यीयविधेरन्याय्यत्वात्, किन्तु शंयुवाकानन्तरकालीनः संपूर्वकतिष्ठत्यर्थोविधीयत इति सिद्धान्तितम्, अत एव न शाब्दपरिसङ्ख्यापि वाक्यीयविध्यपेक्षया दोषत्रयाङ्गीकारस्यायुक्ततमत्वाच्च । नच संपूर्वकतिष्ठतिरेवाङ्गान्तरत्यागवाचीतिश्रौत्यैवैषा परिसङ्ख्या 'अत्रह्येवावपन्ति' इतिवदित्यपि शङ्क्यं, उदवसाय संस्थाप्येत्यनयोस्तुल्यार्थत्वे पृष्ठशमनीयवदैमृधस्याप्यनङ्गत्वापत्तेः 'संस्थिते संस्थितेऽहनि' त्यादौ 'पशुकाम उक्थ्यं गृह्णीयात् पोडशिना वीर्यकाम' इति वचोमूलके उक्थसंस्थोज्योतिष्टोम इत्यादिव्यवहारे च सम्पूर्वकतिष्ठतेः समाप्तिवाचित्वेन प्रसिद्धत्वाच्च, समाप्तिस्तु परमापूर्वोत्पत्त्यै यावत्स्वेतराङ्गं प्रतीक्ष्य पदार्थात्मिकावाऽऽरम्भवत्संकल्पविशेषात्मिका वेत्यन्यदेतत्सर्वथापि तावदत्यन्ताप्राप्तायाः शंयुवाककालीनसमाप्तेर्विधिरपूर्वविधिरेव वक्तुमुचितो न परिसङ्ख्यया, हन्तिविधौ

दलनादिनिवृत्तेरिवेहाङ्गान्तरानिवृत्तेरानुषाङ्गिकत्वादतः कथमत्राव्याप्तिः । किंच रशनादण्डविध्योः शेषान्तरपरिसङ्ख्योक्तिः साप्ययुक्ता यथैव हि अपूर्वविधिनियमविधिविधिभ्यां कयोरप्युद्देश्यविधेययोः सम्बन्धं बोधयद्भ्यामपि विधेयव्याप्तिनियमावेव फलत्वेन स्वीक्रियेते, उपपादितश्चैतत् तथा परिसङ्ख्याविधिनोद्देश्यविधेययोः सम्बन्धं निवर्त्तयतापि विधेयनिवृत्तिरेव फलत्वेन स्वीकर्तुमुचितेति गर्दभाभिधान्यादेर्मन्त्रादिनिवृत्तिरेव विधिफलत्वेनैव वक्तुमुचिता । न चेह द्वितीयलक्षणाव्याप्तिरपि एकस्मिन् गर्दभाभिधान्यादानादाने शेषिणि मन्त्रस्याचमनादेश्चानेकशेषस्य प्राप्तिसत्वेन यथाश्रुतलक्षणस्य सम्भवात् । याच 'सायंजुहोति वाग्वाएषे'तिविध्योरव्याप्तिः सापि न, काम्याग्निहोत्रे नियमार्थत्वेन सम्भवतोविधेः परिसङ्ख्यार्थत्वायोगात् हन्तिविधिना दलनादिनिवृत्तेरिव निमित्तान्तरानिवृत्तेरमुना ऽऽनुषाङ्गिकत्वेन सम्भवात् 'अश्वया धारया गृह्णाति'इति विधिनैव सन्निहितेनाग्रताकाम्यविशिष्टधाराग्रहयोराश्रयत्वनिवृत्तिसम्भवेन वाग्वैत्यादेरपि सङ्ख्यार्थत्वासम्भवात् । यथाच नैवानयोः परिसङ्ख्यात्वं तथोपपादितं फलसाङ्कर्यखण्डने । नापि 'यदि रथन्तरसामा सोमः स्यादिति दीक्षाः सोमस्येति'विध्योरव्याप्तिः प्रकृतावेव सम्भवत्प्रयोजनयोस्तयोर्विकृतिपरिसङ्ख्यार्थत्वकल्पनायोगात् विकृतिपरिसङ्ख्याया आनुषाङ्गिकत्वसम्भवात् । तथाहि कश्चिद्वसन्ते दैवाद्बृहद्रथन्तराभिज्ञर्त्विग्लाभे स्तोत्रविध्याक्षिप्तयत्किञ्चित्सामक एष विशिष्टं नित्यज्योतिष्टोमप्रयोगं यदि कश्चित्कुर्यात् तस्मात्प्रयोगात्प्रागप्राप्ताया ऐन्द्रवायवाग्रतयाः परिसङ्ख्यार्थं यदि रथन्तरेत्यादिविधिर्नैमित्तिकतां बोधयति, अस्ति च तत्प्रयोगगतज्योतिष्टमव्यक्ताविव विध्युपात्तायां रथन्तरसामकतद्व्यक्तावपि पाठादैन्द्रवायवाग्रताप्राप्तिरिति कथमव्याप्तिः तथा दीक्षादक्षिणस्याङ्गप-

धानार्थत्वे कस्य चिद्दाराद्युपकारिणः सोमाङ्गस्य दीक्षाकाले कर्त्तव्यस्य दैवादवभृथपर्यन्तं विस्मृतस्यावभृथान्तरमनुष्ठानायाग्नावैष्णवेष्ट्यादिविधिना दीक्षा सम्पादनीया स्यात् औपवसथ्ये चाहनि दैवादपगतानां सोमर्त्विजां स्तुतारम्भसमये सन्निध्यवश्यम्भावितानिर्णये सति दैक्षप्रयोज्यानां स्वतन्त्रर्त्विजामानत्यै द्वादशशतं देयं स्यात् तदुभयनिवृत्त्यै दीक्षादक्षिणस्याङ्गार्थत्वानिवृत्तिः क्रियते दीक्षासोमस्य दक्षिणाः सोमस्येति । उपपादितं चैतत्फलसाङ्कर्यखण्डने । अस्ति च सोमाङ्गेष्विव सोमाख्ये विध्युपात्तेऽपि शेषिणि तत्प्राप्तिरितिकथमव्याप्तिः नाप्यत्रह्योरावपन्तीत्यत्राव्याप्तिः । यद्यपि त्रिष्टुब्जगतीछन्दस्कयोन्युत्पन्नसाम्नां माध्यन्दिनार्भवपवमानगतच्छन्दोन्यतरभिन्नछन्दस्कयोन्युत्पन्नसाम्नां चान्ते तु बादरायण' इति न्यायेनांत्यतृचयोरेव स्यात्प्राप्तिः तथापि गायत्रीबृहत्यनुष्टुप्छंदस्कयोन्यु पन्नसाम्नां वैकृतानां क्वचित्प्राकृतर्क्ष्वभावे माप्तेऽन्त्यतृचयोर्न प्राप्तिः यथाम्नातसाम्नोयथाप्राप्तस्तोत्रसाधनभावस्य शास्त्रावगतस्य न्यायवशेनान्यथात्वकल्पनाया अनौचित्यात् योनिभिन्नच्छदस्कर्क्षु च संशयविकल्पवशेन तदन्यथाभावस्यावश्यम्भावात् । संति च द्वादशाहान्तर्गतदशरात्रस्य दशमेऽहनि तादृशसाम्नां विधयः 'आजिगं भवत्याभीकं भवत्युत्सेध्रोभवति उत्सेधेन वै देवाः पशूनुदशेपन्निषेधेन पर्यगृण्हन्नंतरोत्सेधनिषेधौ यज्ञायज्ञिय' मिति, तत्राजिगस्य स्वादिष्ठयेति गायत्री योनिः आभीकस्य 'उच्चातेजात'मिति गायत्र्येव, उत्सेधनिषेधयोस्तु बृहती योनिः 'पवस्वदेववीतय' इति । नचैषां योनयउत्तराग्रंथेऽस्यान्हः प्रकरणे पठिताः अतएवोहग्रंथे आजिगाभीकयोः प्राकृतगायत्रतृचे उत्सेधनिषेधयोश्च प्राकृतबार्हततृच एवोहोदर्शितः नचेदृशसाम्नामसत्यपि व्यवस्थापके कस्मिंश्चिद्वचने त्रैष्टुभजागततृचयोः प्राप्तिः संभावयितुं शक्यते ।

अथोच्येत संशरविश्लेषाङ्गीकारेणापि साम्नः स्तोत्रसाधनताया नात्यन्तं शास्त्रबाधः अन्त्यतृचयोर्निवेशाभावे तु तत्प्रापकन्यायस्यात्यन्तबाधः स्यात् । नचैषद्बाधेनोपपत्तावत्यन्तबाधः स्वीकर्त्तुमुचितः, अतः सत्यपि संशरविश्लेषप्रसक्तोऽन्त्यतृचयोरेवागातुं साम्नां निवेशः स्यादिति चेन्नैतत्, न्यायवशेन शास्त्रगोचरेषद्बाधस्याप्यन्याय्यत्वात् । अतएव पञ्चमे 'प्राकृतलोकम्पृणायास्तस्याः संपूरणार्थत्वा'दित्यधिकरणे 'लोकंपृणा छिद्रंपृणे'तिमन्त्रानुमेयस्यापि चित्यन्तरे सावकाशस्यापि लोकंपृणेष्टकापूरणार्थत्वविधेरनुरोधेन 'अन्ते तु बादरायण' इतिन्यायं बाधित्वा याज्यानुवाक्याकाण्डपठितप्रत्यक्षब्राह्मणविहितानां चित्रिण्यादीनां मध्यमायां चितौ प्राग्लोकंपृणाया निवेश उक्तः । नच मध्यमचितिमात्रे लोकंपृणान्ते ताः प्रापयतोन्यायस्यानुरोधेन पूरणार्थत्वविधिं चित्यन्तरविषयं स्वीकृत्य लोकंपृणान्ते तन्निवेशः स्वीकृतः, अतोग्राह्यत्वमानगतगायत्र्यादिष्वप्यस्त्येव कदाचिदावापप्राप्तिरित्यनारभ्याधीतेन 'अन्यत्र्येवावपन्ति' इति विधिनोक्तगायत्र्यादिषु स्तोत्रान्तरीयर्क्षु चावापप्राप्तिमात्रमालोच्य सम्भवत्येव स्तोत्रान्तरीयर्क्परिसङ्ख्या श्वादिभक्षणपरिसङ्ख्यावत्. एवं च सकलोक्तदोषपरिहारेपि षट्सु लक्षणेषु सम्भावितोदाहरणान्तराव्यापकत्वभिया यदि सप्तममेवाङ्गीक्रियते न तु तत्रापि कश्चिद्दोष इति चेत् ।

नैवम् । ग्राह्ये व्यावर्त्तनीये च प्राप्ते सति प्रवृत्तमात्रं लक्षणं विवक्षितं ? उत प्राप्तिविशेषणत्वेन नित्यत्वमपि लक्षणे निवेश्यते ! अथ वा समुच्चितत्वं तद्विशेषणत्वेन तत्र निवेश्यते ! नाद्यः ग्राह्यइन्तेव्यावर्त्यदलनादेश्च प्राप्तिमपेक्ष्य प्रवृत्ते हन्तिविधावतिव्याप्तेः । न द्वितीयः 'पञ्च पञ्च नखा भक्ष्या'इत्यत्राव्याप्तेः शशादीनां श्वादीनां भक्षणस्य नित्यप्राप्त्यभावात् । तृतीये तु यद्यपि नोक्तदोषोहन्तिविधौ ग्राह्यव्यावर्त्तनीययोः परस्परविरोधेन समुच्चित्य प्राप्त्य-

भावात् शशादिश्वादिभक्षणयोश्च समुच्चित्य प्राप्तिसम्भवात्, तथापि 'षडहा भवंति चत्वारो भवंति शतोक्थ्यं भवति सर्वस्त्रिवृत' इतिविधिष्वतिव्याप्तिः केषु चिदहःसु षडहाविध्यन्तः, परेषु छंदोमविध्यन्त इत्येवंविध्यन्तद्वये समुच्चित्यप्राप्तिच्छन्दोमविध्यन्तविषयेपि षाडहिकविध्यन्तप्रापणमाद्यवाक्यद्वयेन क्रियते शतसङ्ख्याहर्गणप्रतिदशकमाद्योत्तमाह्नोराग्निष्टोमसंस्थामध्यवर्त्तिष्वष्टसु तूक्थ्यसंस्थेत्येवं संस्थाद्वये समुच्चित्य प्राप्तेऽग्निष्टोमविषयेऽप्युक्थ्यसंस्थाप्रापणं मध्यमेन क्रियते, अग्निष्टुदाद्येकाहे बहिष्पवमाने त्रिवृत्स्तोमस्तोत्रान्तरेषु तु स्तोमान्तराणीत्येवमनेकस्तोमेषु समुच्चित्य प्राप्तेषु स्तोमान्तरविषयेपि त्रिवृत्स्तोमप्रापणमन्त्येन क्रियते, अतोऽप्राप्तप्रापकेष्वपि लक्षणगमनादतिव्याप्तिः । नच विकल्पवत्समुच्चयस्याप्यवान्तरकार्यैक्य एव वक्तुमुचितत्वात्प्रकृतोदाहरणेषु चाहर्भेदेन स्तोत्रभेदेनावान्तरकार्यभेदात् कथं समुच्चित्य प्राप्तिर्व्यवहर्तुं शक्येत्यपि शङ्क्यम् । अवान्तरकार्यभेदेऽपि परमकार्यैक्यमात्रेण समुच्चयोपपत्तेरत्रश्यवक्तव्यत्वात् । अन्यथाऽऽज्यभागप्रयाजादीनामवान्तरकार्यभेदेन 'आज्यभागौ यजति'इति गृहमेधीयास्थपरिसङ्ख्याविधावव्याप्तेः एवमनेकशेषाणां समुच्चित्य प्राप्त्यातिव्याप्तिर्दर्शिता, अस्ति चानेकशेषिणामपि तादृशप्राप्त्याऽतिव्याप्तिः तथा 'स ब्रह्मणे देयः सर्वं ब्रह्मणे परिहरति'इति श्यावाश्वसोमचमसहविःशेषेषु ब्रह्मतदितरर्त्विजां समुच्चित्य प्राप्तौ सत्यामृत्विगन्तरविषयस्यापि ब्रह्मसम्बन्धप्रापणार्थत्वादेषाम् । एवमप्राप्तप्रापकेष्वतिव्याप्तिर्दर्शिता, अस्ति पक्षप्राप्तविषयेष्वपि सा, यथा 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्त'इति 'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इति च, आद्यविध्यभावे पत्नीसंयाजान्तानां तदुपरितनानां च कदाचित्समुच्चित्य प्राप्तिसत्वात्, द्वितीयविध्यभावे प्रयाजानामितरेषां च जौहवाज्ये कदाचित्सत्वात् । अथ निवृत्तिफलकत्वमुक्तलक्षणेऽधिकं योज्यते अत उक्तविधिषु

केषां चित्प्राप्तिफलकत्वात्परेषां नियमफलकत्वान्नातिव्याप्तिः ग्राह्य-व्यावर्त्ययोश्चैकजातीयेन सम्बन्धेन प्राप्तत्वं विवक्षणीयं, तथासति 'दीक्षितो न जुहोति' इत्यत्र सत्यपि निवृत्तिफलत्वे सत्यामप्यग्निहोत्रहोमस्य क्रत्वर्थहोमैः सहैकसोमप्रयोगान्तर्भावप्राप्तौ नातिव्याप्तिरिति तद्वारणार्थत्वान्न शेषवैयर्थ्यम् । यद्यप्येवमपि 'न हिंस्यात्सर्वा भूतानि' इत्यादौ नातिव्याप्तिनिवारणं पुरुषार्थहिंसादेः पुरुषार्थ-भोजनादिभिः सह समुच्चित्य प्राप्तौ सत्यां हिंसादिनिवृत्त्यर्थत्वात्, तथापि निवृत्तावत्यन्ताऽप्राप्तेतिविशेषणात्तन्निवृत्तिः घटते हि रागतो हिंसाया इव हिंसानिवृत्तेरपि पक्षे प्राप्तिः 'न तौ पशौ करोति नातिरात्रे षोडशिनं गृह्णाति' इत्यादेस्तु निवारणासम्भवाल्लक्ष्यान्तर्भाव एव स्वीक्रियते इति चेन्न । एवमपि पुरुषार्थसन्ध्यावन्दनादिभिः सहाग्निहोत्रस्य समुच्चित्य प्राप्तिसम्भवेन 'दीक्षितो न जुहोती'त्यत्रातिव्याप्तितादवस्थ्यात् सम्भवत्कादाचित्कप्राप्तिकां श्वादिभक्षणनिवृत्तिं कुर्वति विधावव्याप्तेश्च ।

अथ निवृत्तिफलकत्वमेव लक्षणं ? तदुपलक्षणार्थं 'तत्र चान्यत्र च' इतिवार्त्तिकम्, निषेधास्तु सर्वे परिसङ्ख्या एवेति न तेष्वतिव्याप्तिरिति चेत् ? न, अग्निहोत्राद्यकरणनिवृत्तिफलके 'अग्निहोत्रं जुहोति' इत्यादिविधावतिव्याप्तेः । नच तत्र चान्यत्र प्राप्त इति श्रुतांशेनापि तत्परिहारः ग्रामगमनाद्यकरणेन सहाग्निहोत्राद्यकरणस्य समुच्चित्य प्राप्तिसम्भवात् । अथाभावैकस्वभावनिवृत्तिफलत्वं विवक्ष्यते ? तथासति निषेधमुखप्रवृत्तपरिसङ्ख्याविधावव्याप्तिः तस्य भावरूपनिवृत्तिफलकत्वादिति परिसङ्ख्यालक्षणमयुक्तमिति ।

ननु तत्र चान्यत्रेति शब्दाभ्यां ग्राह्यव्यावर्त्ये अभिधीयेते इति तावदुक्तं प्राक्, ततश्च ग्राह्ये व्यावर्त्ये च प्राप्ते सति प्रवृत्त इति लक्षणं यस्मिन्विधौ नेयं तद्विधिनिरूपितमेव ग्राह्यत्वं

व्यावर्त्यत्वमत्र प्रतीयते, उचितं चेदृशमेव सहृदयोक्तिव्याख्यानम्। तत्र ग्राह्यपदेन लक्ष्यभूततत्तद्वाक्यज्ञाप्योयथाश्रुतवाक्यार्थ एवोच्यते व्यावर्त्यपदेन च तत्तल्लक्ष्यशास्त्रफलभूतनिवृत्तिप्रतियोग्यभिधीयते, एवं च स्वफलीभूतनिवृत्तिप्रतियोगिनि स्ववाक्यार्थे च प्राप्ते सति प्रवृत्तं शास्त्रं परिसङ्ख्येति सिद्धे लक्षणे न तावदपूर्वविधिषु नियमविधिषु चातिप्रसङ्गः तेषां स्वफलीभूतनिवृत्यप्रसिसिद्धेः, अतश्च तन्निवारणाय श्रुताधिकस्य निवृत्तिफलकत्वस्यानपेक्षणात्तद्विवक्षाप्रयुक्तं श्रुतवैयर्थ्यापादनं दूरापास्तम्। नाप्यपूर्वनिषेधेषु नियमनिषेधेष्वग्निहोत्रादिविधौ चातिप्रसङ्गः ज्ञाप्यवाक्यार्थस्य तत्तदिष्टानिष्टसाधनतात्मनः प्राप्त्यभावात्, अस्ति च परिसङ्ख्योदाहरणे ग्राह्यस्याश्वाभिधानीसम्बन्धादेर्निवर्त्यस्य रशनान्तरसम्बन्धादेः प्राप्तिरिति नाप्रसङ्गदोषोपि, स्यातां वा यद्यपि स्वीकार्यवर्जनीये ग्राह्यव्यावर्त्यपदाभिधेये, तथापि सप्तम्या तावत्तदुभयप्राप्तिनिमित्तकत्वं शास्त्रप्रवृत्तेर्गम्यते। परोद्देशप्रवृत्तेश्च पारार्थ्यत्वेन प्रसिद्धत्वात्पारार्थ्यविशेषात्मकत्वाच्च तात्पर्यस्य, तत्र चान्यत्र च प्राप्ते प्रवृत्तमिति प्रवृत्तिपदस्य तात्पर्यपरत्वाभ्युपगमेन तदुभयप्राप्तिनिमित्तकतात्पर्यकत्वं लक्षणं बोध्यम्। तन्निमित्तकत्वं च तन्निर्णेयत्वं, ततश्च ग्राह्यव्यावर्त्योभयप्राप्तिनिर्णायकतात्पर्यकत्वरूपे लक्षणे सिद्धे न तावदपूर्वनिषेधेषु नियमनिषेधेषु चातिप्रसङ्गः तदीयतात्पर्यस्य तत्तद्वर्जनविषयस्य व्यावर्त्यप्राप्त्यधीननिर्णेयत्वेपि ग्राह्यप्राप्त्यधीननिर्णेयत्वाभावात्, नापि हन्त्यादिविधिष्वतिप्रसङ्गः तदीयतात्पर्यस्य नियमगोचरस्य ग्राह्यहन्त्यादिपाक्षिकप्राप्त्यधीननिर्णेयत्वेपि व्यावर्त्यहन्त्यादिविधिष्वतिप्रसङ्गः प्राप्त्यनपेक्षत्वात्सत्या अपि दलनादिप्राप्तेर्हन्त्यादिपाक्षिकप्राप्तिसम्पादनेनान्यथासिद्धिः 'ऋतौ भार्यामुपेयात्'इत्यस्य ग्राह्यपाक्षिकप्राप्तिमात्रेण नियमपरत्वाच्च, नापि 'षडहा भवन्ति'

धिना क्रियते । अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः । पक्षेऽप्राप्ततादशायामघातविधानमिति यावत् । न त्वपूर्वविधाविवात्यन्ताप्राप्तयागविधानमिति ।

उभयस्य युगपत् प्राप्तौ इतरव्यावृत्तिपरोविधिः परिसङ्ख्याविधिः । यथा 'पञ्च पञ्चनखा भक्ष्या' इति । इदंहि वाक्यं न भक्षणविधिपरम्, तस्य रागतः प्राप्त-

---

'अग्निहोत्रं जुहोति' इत्यादावतिप्रसङ्गः तदीयतात्पर्यस्य तत्तत्प्रापणाविषयस्य तत्तदप्राप्तिमात्राधीननिर्णयत्वेन द्विविधप्राप्त्यनपेक्षत्वात् । परिसङ्ख्याभूतविधिनिषेधेषु च ग्राह्यत्वाभिमतशशादिभक्षणादेर्व्यावर्त्यत्वाभिमतश्वादिभक्षणादेश्च प्राप्त्यभावे श्रुतार्थतात्पर्याबाधेनाश्रुतनिवृत्तितात्पर्यायोगादस्त्येव द्विविधप्राप्तिनिर्णयतात्पर्यकत्वं, अतात्पर्यगोचरीभूतोपि चार्थोऽत्राभिधान्युदाहरणे तात्पर्यगोचरीभूतनिवृत्तिप्रतिपत्त्युपायत्वेन ज्ञाप्यते, न ज्ञाप्यते च पञ्चनखोदाहरण इति अन्यदेतत्, अतः सम्भवत्येव परिसङ्ख्यालक्षणमिति चेन्न ।

'अत्रह्येवावपन्ति' इत्यत्र द्विविधलक्षणस्याव्याप्तेः तज्ज्ञाप्यस्य स्तोत्रान्तरीयगर्धिकरणकावापनिवृत्त्यात्मनोऽर्थस्य प्राप्त्यभावात् तद्गोचरतात्पर्यनिर्णयस्य द्विविधप्राप्त्यनधीनत्वात् । यद्यपि हि पवमानगतगायत्र्यादिष्वावापो न प्राप्तः स्यात् तथाप्येवकारसामर्थ्यात्तद्वदेव निवृत्तिपरत्वमस्येति न कथंचित्परिसङ्ख्यालक्षणोपपत्तिरित्यत आह । उभयस्येति । ययोर्यादृशसम्बन्धेनिषेध्यत्वेनाभिमेतस्तदन्यतरस्तदन्यश्चोभयशब्दार्थः । तादृशसम्बन्धनिरूपकत्वेन प्रतीतिश्चाप्राप्तिः विधिफलभूतया व्यावृत्तिपदवाच्यया निवृत्तिप्रती-

त्या नियतैककालत्वमेव तादृशप्राप्तेः सप्तम्या निवक्षितं, नतु पूर्वकालतामात्रमिति ज्ञापनार्थोयुगपच्छब्दः तदन्यतरतदन्यनिरूपिततादृशसम्बन्धप्रतीतिनिवृत्तिफलक इति वाक्यार्थः। तादृशोभयनिरूपिततादृशसम्बन्धावगाहिनिवृत्तिप्रतीतिफलक इति तु निष्कर्षः। मन्त्रेणाश्वाभिधानीमादत्ताम् गर्दभाभिधानीमित्येतादृशप्रतीतेः परिसङ्ख्याविधिफलभूतायाः सर्वत्र ताद्रूप्यसम्भवान्नाव्याप्तिः। नाप्यपूर्वनियमनिषेधेष्वतिप्रसङ्गः यतस्तत्फलभूता निवृत्तिप्रतीतिर्ययोर्यं सम्बन्धं निवर्त्यत्वेनावगाहते अवगाहत एव यद्यपि तं तदन्यतरनिरूपितत्वेन, तथापि न तदन्यतरान्यनिरूपितत्वेनावगाहते, अश्वानयनकर्त्तर्मांगामानयेत्यादौ फलभूता निवृत्तिप्रतीतिर्यद्यपि तदन्यतरान्यनिरूपितत्वेन तादृशसम्बन्धमवगाहते तथापि नासौ तदन्यतरनिरूपितापि, गोपन्मागामानयेत्यादौ फलभूता निवृत्तिप्रतीतिर्यद्यपि तादृशोभयनिरूपितं सम्बन्धमवगाहते तथापि नासौ तादृशः, ययोर्व्रीहिदलनयोः सम्बन्धो यादृशोनिषेध्यः तदन्यतरव्रीहीणां तदन्यतरान्येन हन्तिना सम्बन्धमवगाहमाना प्रतीतिर्यद्यपि हन्तिविधेः फलं भवति तथापि नासौ दलननिवृत्तिप्रतीतिफलकः, यद्यप्येष विधिरग्निहोत्रविधिश्च विधेयाकरणनिवृत्तिप्रतीतिफलकोभवत्येव तथापि यादृशोः करणपुरुषयोः सम्बन्धोनिवर्त्योनैव तादृशम्बन्धन्तदन्यतरतदन्यनिरूपितत्वेन साऽवगाहते, अवगाहते हस्तकरणं पदकरणेन समुच्चित्य प्राप्तं तदकरणं यदि विध्युपात्तं स्यात् ययोर्यादृशः सम्बन्धोनिवर्त्त्य इत्यत्र चोद्देश्यभागे विधिप्रयोज्यत्वेन या निवृत्तिर्विवक्षिता विधेयदलान्तर्गतनिवृत्तिपदेनापि सैवोक्तेति बोध्यम्।

यद्वोद्देश्यदल एव स्वनिवर्त्यत्वं स्वफलीभूतनिवृत्तिप्रतियोगित्वमेव बोध्यं, तेन दलननिवृत्तिं हस्तकरणनिवृत्तिं चादाय न हन्तिविधावतिप्रसङ्गः अश्वानयनकर्त्तर्मांगामानयेत्यत्र

तु यद्यानयनव्यक्तिरेकैव निर्देशद्वयालम्बनम् ? तदा परिसङ्ख्यै-व निर्देशद्वयालम्बनभूताऽऽनयनव्यक्तिभेदे तु नैव परिसङ्ख्या, एकत्रोभयोः समुच्चित्य, प्राप्त्यपेक्षनिवृत्तिफलकत्वाभावात् ता-दृशनिवृत्तिफलकत्वस्यैव लक्ष्यतावच्छेदकत्वात् । न च तत्राति-प्रसङ्गः तत्फलभूताया निवृत्तिप्रतीतेस्तदन्यतरनिरूपितसम्बन्धा-नवगाहित्वादिति सुधीभिरूह्यम् । सामान्यविशेषबलाबलव-द्वापूर्वनियमविधिबलाबलस्यापि लोकवेदसाधारण्याल्लौकिक-पदेषु जातिवाचित्वादिविवेकवल्लौकिकविधिष्वपूर्वविधित्वादि-विवेकोपि नानुचितत्वेन शङ्क्यः अस्ति च 'अत्र ह्येवावपन्ती'त्य-त्राप्युक्तलक्षणं पवमानगतगायत्र्यादिषु आवापः कार्यो नान्य-स्तोत्रीयर्क्ष्विति विधिफलभूतप्रतीतेस्ताद्रूप्यात् ।

ननु नास्माद्वाक्यादुक्तविधप्रतीतिः सम्भवति तथा हि न तावद-न्यस्तोत्रीयर्गधिकरणकावापनिवृत्तित्वेन निवृत्तेरेवकारवाच्यत्वा-त्तादृशप्रतीतेर्निर्वाहः सर्वप्रयोगेषु एवकारस्य तादृशनिवृत्तित्व-प्रकारकप्रतीत्यजनकत्वात् । अथान्यव्यवच्छेदमात्रमेवकारवाच्यं अन्यत्वस्य पवमानगतगायत्र्यादिनिरूपितत्वं अन्यत्वाश्रयस्य स्तोत्रीयर्गात्मकत्वमावापे तदधिकरणकत्वं, सर्वमेतदन्यलभ्य-मितिचेत्? न, यतोन्यत्वस्य गायत्र्यादिनिरूपितत्वं समभिव्या-हारलभ्यं वाच्यं, न च तत्सम्भवति गायत्र्यादीनां स्वपदोपात्त-कारकोपसर्जनतयाऽन्यत्वस्य स्वपदोपात्तार्थान्तरोपसर्जनतया मिथोऽन्वयायोग्यत्वात्, अत एवान्यत्वाश्रयस्य स्तोत्रीयर्गात्म-कत्वमपि नान्यलभ्यं, यदि हि पवमानगतगायत्र्यादिनिरूपित-मन्यत्वं निमित्तीकृत्य कं चिदर्थं प्रतिपादयेदेवकारः तदा ता-भिः सदृशीः स्तोत्रान्तरीयर्चं एव प्रतिपादयेत् 'समानमितर-च्छ्येनेन' इत्यत्रेतरशब्दविषयाद्वार्त्तिककारोक्तन्यायात् । नाप्यधि-करणत्वस्यात्रेति सप्तम्युक्तस्यान्यर्गन्वयः समभिव्याहारलभ्यः सम्भवति प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् अ-

न्यविशिष्टव्यवच्छेदवाचिनैवकारेणोपसर्जनतयोपस्थापितस्यान्यपदार्थस्य सम्भूयार्थान्वयायोग्यत्वाच्च । अथैवकारस्यान्यस्मिन् व्यवच्छेदे च शक्तिर्भवतु नतु विशिष्टे. अत एवकारोत्तरलुप्तसप्तम्युपस्थापिताधिकरणत्वेनैवकारोपस्थितान्यान्वयाभ्युपगमाद्भवत्यात्रापेऽन्यगधिकरणकत्वलाभः । यद्यप्येवकारसमभिव्याहारादन्यत्र प्रातिपदिकार्थस्य सुवर्थेनैवान्वयोदृष्टस्तथापि तत्समभिव्याहारे व्युत्पत्तिवैचित्र्येण प्रातिपदिकार्थस्य युगपत्सुवर्थेनैवकारोपस्थापितान्येन चान्वयात्सम्भवत्यन्यत्वस्य पवमानगतगायत्र्यादिनिरूपितत्वलाभः । यद्वा तच्छब्दस्य बुद्धिस्थधर्मप्रकारकबुद्धिजनकत्ववदेवकारस्यापि बुद्धिस्थधर्मावच्छिन्नान्यत्वबोधकत्वात्तल्लाभः, भवतु चैवकार एव स्ववाच्येऽन्यत्वसमभिव्याहृतगायत्र्यादिनिरूपितत्वस्य लक्षणया बोधकः एवकारस्थलीयव्युत्पत्तिवैचित्र्याच्च युगपच्छक्यलक्ष्योपस्थितिरपि न सम्भवति, अतः सम्भवत्युक्तप्रतीतिनिर्वाह इति चेत्, भवतु तावत्कथञ्चिदेवमेवकारोपस्थितेऽन्यत्वे पवमानगतगायत्र्यादिनिरूपितत्वलाभः तथापि गायत्र्याद्यन्याधिकरणकावापकर्त्तव्यतोपस्थितिमपेक्ष्य नैवकारस्य व्यवच्छेदबोधकत्वं सम्भवति, नहि पदानां विरम्य व्यापारः सम्भवति, नच तमन्तरेणान्यात्मकैकार्थं बोधयित्वा तस्य पश्चान्तरालोचनलभ्येनार्थान्तरान्वयेन सिध्यन्तं विशिष्टावापबोधं प्रतीक्ष्य व्यवच्छेदात्मकार्थान्तरबोधकत्वमेवकारस्य सम्भवति । कथं तर्ह्येवकाराद्व्यवच्छेदसिद्धिरितिचेत् ? शृणु, यथैव प्रव्याद्युपसर्गागमे ताडनक्रीडादिप्रतीतिदर्शनेपि प्रहरतिविहरतीत्यादौ न ताडनक्रीडादेरुपसर्गार्थत्वं कल्प्यते, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकताया व्युत्पत्तिसिद्धाया बाधापत्तेः, किंतु धातोरेव प्रसिद्धार्थत्यागेन ताडनक्रीडादौ प्रव्यादिद्योत्या शक्तिः स्वीक्रियते तथैवकारसमभिव्याहृतस्य पदस्य स्वार्थमात्रगोचरप्रसिद्धित्यागेन स्वार्थान्यगोच-

रा शक्तिरेवकारद्योत्या स्वीकार्या एवकारेण च तत्रैव व्यवच्छेद-मात्रं बोध्यते तेन चोक्तमव्ययादिवद्द्योतकत्वेनैवोपक्षयात् नार्थबोधकत्वमेवकारस्य स्यादित्यपि शङ्क्यं, उपपूर्वकयोस्तिष्ठतिनयत्योर्भिन्नकरणाचार्यकरणाभिप्रायित्वं द्योतयताप्यात्मनेपदेन भावनाद्यर्थबोधनात् ततश्च 'अत्रैवावपन्ति' इत्यत्रैतदन्याधिकरणकावापो न कार्य इतिबोधोविनैव व्युत्पत्त्यन्तरकल्पनं विनैव च पदस्य विरुद्ध व्यापारमुपपन्नः, एवं चैतदधिकरणकावापप्रतीत्यनुदयात्सम्भवत्येवकारस्य तद्गोचरविधिशक्तिप्रतिबन्धकत्वव्यवहारः, ततश्चैतद्विधिफलभूताया निवृत्तिप्रतीतेस्तादृशसम्बन्धावगाहित्वाभावादस्यां परिसङ्ख्यायां लक्षणव्याप्तिरितिचेन्न। एवकारसमभिव्याहृतपदस्य स्वार्थान्वयगोचरशक्तिरेका एवकारस्य तद्द्योतनशक्तिर्द्वितीया तस्यैव व्यवच्छेदे शक्तिस्तृतीयेति शक्तित्रयकल्पनेऽतिगौरवात् स्तोमविवृद्धिप्रापकशास्त्रैकप्रमाणकावापस्यैवकारेण तत्रैव वर्जनबोधने, मीमांसकमर्यादया विकल्पापत्तेश्च । तर्हि किमेवकारान्न परिसङ्ख्यासिद्धिरितिचेत् ? न, सर्वोपन्यस्तदोषपरिहारेण प्रकारान्तरसम्भवात् तथाहि एवकारेण द्वावन्योन्याभावौ प्रत्याय्येते पुष्पवन्तपदेनेव सूर्यचन्द्रौ शक्ततावच्छेदकशक्यतावच्छेदकयोरभेदे च न शक्त्यनेकत्वसशङ्कावसरः यत्पदार्थान्वितार्थबोधनपरश्चैवकारस्तत्पदगतप्रकृत्यर्थविभक्त्यर्थनिरूपितावेव तौ प्रत्याय्येते । यद्यपि प्रकृतिविभक्त्योर्यथासङ्ख्यं विभक्त्यर्थक्रियान्वितार्थप्रतिपादकत्वमेवास्ति तथैव व्युत्पत्तेः तथाप्यन्यार्थामपि विशेषणोपस्थितिमपेक्ष्य सम्भवत्येवकारस्य तत्तत्प्रतियोगिविशिष्टान्यत्वबोधकत्वं, चैत्रायान्यस्मै च देहि चैत्रादन्यस्माच्च गृहाण 'समानमितरच्छ्येनेन' इत्यादौ लोकवेदयोरन्यत्वबोधकशब्दमात्रे तथा विशिष्टप्रतीतिजनकताया दृष्टत्वान्नाभिनवव्युत्पत्तेरेवकारे कल्पनापत्तिः ससम्बन्धिकार्थबोधकपदमात्रेचेत्थंविशिष्टधीजनकत्वमनुभूयते, तुल्येपि हि

त्वात् । नापि नियमपरम्, पञ्चनखापञ्चनखभक्षणस्य

क्रयपदशास्त्रयोरेकहायन्युपसर्जनकप्रतीतिजनकत्वे यदेकहायन्याः पदानङ्गत्वं तेन च तन्नयनस्य पदाप्रयुक्तत्वं तत्रदमेव बीजं यत्परार्थामेकहायन्युपस्थितिमपेक्ष्य पदशास्त्रस्य विशिष्टबोधकत्वं, अतोऽन्यत्वबोधकमात्रे नाभिनवा व्युत्पत्तिः कल्प्यते न तरामेवकारे, द्वाभ्यामपि च तत्प्रतीताभ्यामन्यत्वाभ्यामन्यपदोपस्थिनान्यत्वेनैव धर्म्येको निरूढलक्षणयोपस्थाप्यते, स चान्यत्वप्रतियोग्यन्वयिनि विशेषणम्, चादिनिपातान्तरार्थवदेवकारार्थस्यापि धात्वर्थे नामार्थे वा साक्षादन्वये बाधकाभावात् अतः पार्थायैव देहीत्यत्र पार्थसम्प्रदानकं तदन्यासम्प्रदानकं दानं कुर्विति बोधः पार्थ एव धनुर्धर इत्यत्र प्रथमाया अभिन्नार्थत्वे पार्थाभिन्नः पार्थान्यभिन्नश्च धनुर्धर इति बोधः एवमन्यत्राप्यूह्यम् । प्रकृतोदाहरणे च गायत्र्याद्यधिकरणकोगायत्र्याद्यन्याधिकरणकश्चावापः कार्य इतिप्रतीतेरुक्तरीत्या सिद्धायाः पर्युदासजप्रतीतितुल्यत्वान्न विकल्पावसरोऽपि, तादृशप्रतीत्या चात्यन्ताप्राप्तनिवृत्तिपर्यवसायित्वेन विधिफलभूतया फलान्तरनिरोधात्सम्भवत्येवकारस्यार्थान्तरगोचरविधिशक्तिप्रतिबन्धकत्वव्यवहारोऽपि, अस्ति च तस्या उक्तरीत्या लक्षणघटकतादृशसम्बन्धावगाहित्वमिति नाव्याप्तिरित्यनवद्यम् ।

नापीति । शशाद्यभक्षणे दोषस्य तन्निवृत्त्यैव प्रायश्चित्तस्य श्वादिभक्षणनिमित्तप्रायश्चित्तविधिनाऽपेक्षितस्य तन्निषेधस्य कल्पने गौरवादित्याशयः । उक्तलक्षणसदसद्भावाभ्यामपि न नियमपरत्वमित्याह । पञ्चनखेति । पञ्चनखपदमत्र न पञ्चनखत्वावच्छिन्नभेदवत्परं, किंतु पञ्चपदसमानाधिकरणेन पञ्चनखपदेन शशादिपरामर्शात्तद्भिन्नपरम्, भेदस्य चासति बाधके 'समानमितर' दित्यादावितरपदोक्तभेदवत्सजातीयनिवेशस्वाभाव्याच्छ्वादिपरं भवति, एवमग्रेऽपि । ततश्च श्वादिभक्षणस्य

युगपत्प्राप्तेः पक्षे ऽप्राप्त्यभावात् । अत इदमपञ्चनख-नभिक्षणवृत्तिमीति भवति परिसङ्ख्यापरविधिः ।

सा च परिसङ्ख्या द्विविधा—श्रौती लाक्षणिकी चेति । तत्र 'अत्र ह्येवावयन्ति' इत्यत्र श्रौती परिसङ्ख्या एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात् । 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र तु लाक्षणिकी, इतरनिवृत्तिवाचकस्य पदस्याभावात् । अत एवैषा त्रिदोषग्रस्ता ।

---

शशादिभक्षणस्य च ग्राह्यत्वेन निवर्त्यत्वेन च युगपत्प्रतीतेः शास्त्रफलमूलभूताया हेतोः परिसङ्ख्यालक्षणमस्तीत्याशयः । पक्षइत्यनन्तरमप्राप्तीत्यकारश्लेषः पाक्षिकाप्राप्तिः पाक्षिकास्वीकार्यत्वशङ्कानियमलक्षणघटकत्वेनोक्ता, तस्या एतद्विधितात्पर्यगोचरनिवृत्तावभावान्न नियमविधिलक्षणमत्रेत्याशयः । उपपादितमेतदधस्तात् । द्विविधेत्यनन्तरं शाब्दयशाब्दी च द्विविधेतिशेषः । व्यावृत्तिर्भेदः । पवमानगायत्र्यादिप्रतियोगिकोऽधिकरणप्रतियोगिकश्च तस्यैवकारेणाभिधानादित्यर्थः । अभावादिति । ततश्चाभाववाचिपदसत्वासत्वे एव श्रौतलाक्षणिकपरिसङ्ख्ययोर्भेदक इत्याशयः ।

एवेत्यवधारणं ध्वन्यते । तच्च न श्रौत्यास्त्रिदोषत्वपरिहारार्थं, तस्यां त्रैदोष्याभावस्य स्फुटत्वात्, किंतु फलतः परिसङ्ख्यायां त्रैदोष्यपरिहारार्थम्, तथाहि प्रत्यक्षश्रुत्याऽश्वाभिधान्यङ्गत्वेनावगतस्य मन्त्रस्य कैमर्थ्याकाङ्क्षानिवृत्तौ सत्यां रशनाद्वये विनियोजकश्रुतिकल्पनाप्रतिबन्धादश्वाभिधान्यां मन्त्रविनियोगो मानान्तरसिद्धोऽस्ति येन श्रुते तस्मिंस्तात्पर्यं हीयते, नापि गर्दभाभिधान्यां मन्त्रविनियोगोमानसिद्धो येन तन्निवृत्तावश्रुतायां तात्पर्यं कल्प्येत प्रापकश्रुतिकल्पनाप्रतिबन्धादेव च न प्राप्तबाधोऽपि । फले

तु विशेषरालोच्यमाने प्रत्यक्षानुमेयश्रुतिभ्यामश्वाभिधान्यां मन्त्रप्राप्तिसम्भवे तुल्येपि यदनुमेयश्रुतिप्रतिबन्धेन त्वरमाणया प्रत्यक्षश्रुत्याऽश्वाभिधान्यङ्गत्वबोधनं कृतं तद्गर्दभाभिधान्यामनुमेयश्रुत्या मन्त्रप्राप्तिर्माभूदित्येवमर्थमिति निर्णयात्फलतः परिसङ्ख्यासिद्धिः ।

ननु यदि वचनं गर्दभाभिधान्या मन्त्रनिवृत्तिं न बोधयेत् नैव तस्यास्तन्निवृत्तिः सिध्येत् मन्त्रस्याश्वाभिधान्यादानाङ्गत्वेन कैमर्थ्याकाङ्क्षानिवृत्तावपि गर्दभाभिधान्यादानस्मारकाकाङ्क्षासत्त्वेन समन्त्रस्य तादर्थ्यापत्तेः । न चाक्षेपलभ्येनोपद्रष्ट्रादिना स्मारकेणापि गर्दभाभिधान्यादानीयाकाङ्क्षोपशमसम्भवान्न मन्त्रस्य तादर्थ्यापत्तिरिति शङ्क्यम्, नियमसम्भवेऽनियमस्यान्याय्यत्वात्. अपूर्वीयगर्दभाभिधान्यादानस्मारकत्वेनाक्लृप्तापूर्वसम्बन्धानामुपद्रष्ट्रादीनां स्वीकारात् क्लृप्तापूर्वसम्बन्धमन्त्रस्वीकारे लाघवाच्च । उक्तं हि तृतीये 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठत' इति वचनं स्तोत्राद्यङ्गत्वेन विनियुक्तामपि प्रकृतामेवाग्नेयीं विनियुङ्क्ते न त्वप्रकृतां, तस्या अपूर्वसम्बन्धे द्वारसम्बन्धे च बोध्यमानेऽतिगौरवादिति । नच वचनस्याश्वाभिधानीमन्त्रसम्बन्धबोधकत्वेपि न तद्व्यतिरेके सम्भवत्प्राप्तिकतद्बोधनप्रत्युक्तवैयर्थ्यानुपपत्त्यैव गर्दभाभिधान्या मन्त्रनिवृत्तिः शङ्क्या, तथासति 'पञ्चपञ्चनखा' इत्यत्रापि त्रैदोष्याभावापत्तेः शशादिभक्षणबोधकत्वापरित्यागेपि श्वस्य वैयर्थ्यानुपपत्त्यैव श्वादिनिवृत्तिसिद्धेः किमिति श्रुतहान्यश्रुतकल्पने स्वीकार्ये, तस्मात्केनापि मानेन सम्भवत्प्राप्तिकस्यार्थस्य निवृत्तिबोधकवचनं विना वैयर्थ्यानुपपत्तिमात्रेण न निवृत्तिसिद्धिरिति स्वीकार्यम्, तथासत्युक्तरीत्या गर्दभाभिधान्यां सम्भवत्प्राप्तिकमन्त्रनिवृत्तिसिध्यै श्रुतवचनेनैव लैङ्गिकातिनियोगं प्रतीक्ष्य निवृत्तिपरेण भवितव्यं ततश्चानिवार्यं त्रैदोष्यमिति ।

नैवम्, गर्दभाभिधान्यादानस्य सत्यामपि स्मारकाका-

ङ्क्षायां सत्यापि च मन्त्रस्य क्लृप्तापूर्वसम्बन्धस्य मन्त्रस्य तादर्थ्यानापत्तेः तथाहि 'हिरण्यगर्भः समवर्त्तताग्रइत्याघारमाघारयति' इति आघारसामान्ये विनियुक्तस्य मन्त्रस्य कमाघारं प्रत्यङ्गत्वमित्याकाङ्क्षासम्भवेपि प्राजापत्याघारस्य च प्रकृताविव विकृतावप्यनियतोपायाक्षेपकत्वप्रयोजकस्मारकाकाङ्क्षासत्वेपि पराघारस्य चोदकप्राप्तमन्त्रेण नैराकाङ्क्ष्यसम्भवेपि हैरण्यगर्भमन्त्रस्य पूर्वस्मिन्प्राजापत्ये योग्यताया उत्तरस्मिन्नैन्द्रे चायोग्यतायाः स्फुटत्वेपि नियमादृष्टकल्पनागौरवभयादेव पूर्वाघारं प्रति हिरण्यगर्भमन्त्रस्य नाङ्गत्वमाश्रीयते, आश्रीयते चोत्तरं प्रति, तत्र नियमादृष्टस्य क्लृप्तत्वात्, प्रकृते तु अश्वाभिधान्यादानस्य मन्त्रान्तरावरोधः, नापि तत्र मन्त्रस्यायोग्यत्वं विशिष्य च वचनेन तत्रैव विनियोगोदृश्यते एवं सत्यभिनवनियमादृष्टकल्पनापादकं गर्द्दभाभिधान्यर्थत्वं तदीयस्मारकाकाङ्क्षामात्रवशेन कथमाश्रयितुं शक्यं, आग्नेय्या तु श्रुतिविनियोगविधिवशान्नियमादृष्टं क्लृप्तं तस्यैव प्रकृतानियोजन्यत्वाश्रयणान्नाभिनवनियमविधिबलान्नियमादृष्टकल्पनापत्तिः । यदि गर्द्दभाभिधान्यामपि प्रकृताप्रकृतमन्त्रसाधारण्येन विनियोगः श्रूयेत ततःक्लृप्तेऽपि नियमादृष्टे प्रकृतमन्त्रस्यैव साधनत्वं स्वीक्रियेत, नचैवमस्ति । अथानेकस्मारकाक्षेपान्नियमादृष्टकल्पनमपि लघीयः अतः स्वीकृत्यापि तद्गर्द्दभाभिधान्यां मन्त्रविनियोगोवक्तुमुचित इत्युच्यते ? तर्हि हैरण्यगर्भमन्त्रोऽपि तथैव पूर्वाघारे लब्धविनियोगोत्तराघारे गौणत्वापादकमङ्गत्वं गच्छेत् । अथ गर्द्दभाभिधान्यादानस्यानेकस्मारकाक्षेपकत्वं नेतः प्राक् क्लृप्तं, क्लृप्तन्तु पूर्वाघारस्य प्रकृताविति चेत ? किं ततः ? नहि प्रकृतावाक्षेपलभ्यस्य विकृतावतिदेशोऽस्ति येन तत्रत्याक्षेपगौरवं परिह्रियते । नचाक्षेपलभ्यानामुपायान्तराणां प्रकृत्यपूर्वसम्बन्धः क्लृप्त इति विकृत्यपूर्वसम्बन्धोपि क्लृप्तो वक्तुं शक्यते येन तत्कल्पनागौरवं न स्यात् । किञ्च भ-

वन्यते प्रकृतावपि पूर्वाधारस्य नानियतानेकोपायाक्षेपकत्वमुचितं उपांशुयाजादिगोचरविनियोगेन क्लृप्तापूर्वसम्बन्धस्य प्रकृतप्राजापत्यमन्त्रस्यैव वाचोच्चार्यमाणस्य मनसाऽऽलोच्यमानस्य वा स्मारकत्वेन स्वीकार्यतया आग्नेयीन्यायसिद्धत्वात्, ततश्च प्रकृतौ पूर्वाघारेपि नियमादृष्टं क्लृप्तमिति हैरण्यगर्भमन्त्रोपि लिङ्गाविरोधाय तदङ्गमेव स्यात् । किञ्चाप्रकृताग्नेय्याः प्रत्यक्षविधिना विनियोगे तस्यापूर्वसम्बन्धं विना पर्यवसानाद्द्वारसम्बन्धेऽपूर्वसम्बन्धे च बोध्ये गौरवं अवैतीति युक्तं उपद्रष्ट्रादीनां तु लोके सिद्धसाधनत्वालोचनेनाक्षिप्यमाणानां नैवापूर्वसम्बन्धापेक्षा, अतः कथं तत्कल्पनानिमित्तगौरवापत्तिः यत्परिजिहीर्षया गर्दभाभिधान्यां मन्त्रोनियम्येत । किञ्च सत्यमपि उपद्रष्ट्रादीनामपूर्वसम्बन्धापेक्षायां नैव तत्कल्पनापत्तिः अश्वाभिधान्यादानद्वारा मन्त्रस्येव प्रकरणगतामन्त्रकवाग्यमादिपदार्थद्वारोपद्रष्ट्रादीनामप्यपूर्वसम्बन्धस्य क्लृप्तत्वात् । अथ न कल्प्यापूर्वसम्बन्धत्वेनोपद्रष्ट्रादिस्वीकारे गौरवं वदामि किन्तु कल्प्यरशनासम्बन्धत्वेन यथाहि 'पुरा वाचः प्रवदितोनिर्वपेत' इति अध्वरकल्पाप्रकरणपठिते वचने क्लृप्तप्रातःकालसम्बन्धत्वेन प्रातर्विहितप्रधानसम्बन्धिन एव निर्वापस्य प्रातःकालगतविशेषसम्बन्धोविधीयते नतु मध्यान्हादिविहितप्रधानसम्बन्धिनः, तस्य प्रातःसामान्यसम्बन्धे तद्विशेषसम्बन्धे चातिगौरवात्, उक्तं चैतदेकादशे तथाऽश्वाभिधान्यां विनियोगेन क्लृप्तरशनासम्बन्धस्य मन्त्रस्य गर्दभाभिधान्याख्यतद्विशेषसम्बन्धोवक्तुमुचितः न यूपपृष्ठादेः तस्य रशनासामान्यसम्बन्धे तद्विशेषसम्बन्धे चातिगौरवादित्युच्येत । नैवम् । अक्लृप्तप्रातःसम्बन्धस्य हि प्रातःकालविशेषसम्बन्धविधिरपूर्वविधिः स्यात् क्लृप्तप्रातःसामान्यसम्बन्धस्य तु तद्विशेषसम्बन्धे नियमविधिरिति युक्तं प्रातर्विहितप्रधानसम्बन्धिनिर्वापस्यैव कालविशेषविध्यङ्गीकरणम् । नच त्वदुक्तरीत्या रशनासम्बन्धक्लृप्त्यक्लृप्तिभ्यां विधिव्यापारे क-

दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति । श्रुतस्य पञ्चनखभक्षणस्य हानात् अश्रुतापञ्चनखभक्षणनिवृत्तेः कल्पनात्, प्राप्तस्य चापञ्चनखभक्षणस्य बाधनादिति । अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम्, प्राप्तबाधस्तु दोषोऽर्थनिष्ठ इति दिक् ।

---

श्रिद्विशेषोऽस्ति अप्राप्तरशनासामान्यसम्बन्धस्यैव प्राप्ताश्वाभिधानीसम्बन्धस्यापि गर्दभाभिधान्यङ्गताया अप्राप्ताया एव प्रापणीयत्वात् ।

नच द्वारसम्बन्धव्यतिरेकेणापूर्वसम्बन्ध इव गर्दभाभिधानीसम्बन्धं कुर्वतोविधेः रशनासामान्यसम्बन्धे पृथग्व्यापारोऽस्ति यद्गौरवभयात्कॢप्तसामान्यसम्बन्धमेव स्वीकुर्यात् तथैव ह्ययंपृथिवींद्रव्यमन्मेयसामान्यसम्बन्धान्नापक्षेत न व्यापीयेत च तेषु तथैव रशनासामान्यसम्बन्धमपि नापेक्षेतनैव च तत्र व्यापीयेत । किञ्चोक्तविधया मन्त्रस्योपद्रष्ट्रादीनां च कॢप्तापूर्वसम्बन्धत्वे तुल्येऽपि हि कॢप्तरशनासामान्यसम्बन्धत्वान्मन्त्रोपादानं गर्दभरशनार्थमापद्यते आपद्येत तदा कॢप्तगर्दभरशनासम्बन्धत्वेन गर्दभरशनादानविधेरेव स्मारकत्वेनोपादानं तस्य प्राप्तगर्दभरशनादानप्रतीतिद्वारेण कॢप्तापूर्वसम्बन्धस्य प्राप्ततत्प्रतीतिद्वारणाप्यपूर्वसम्बन्धेऽतिलाघवात् अतः श्रुतविधेर्गर्दभाभिधानीनिवृत्तिपरत्वाभावेऽपि प्रापकप्रमाणनिरोधेनैव गर्दभाभिधानीनिवृत्तिसिद्धेः सम्भवत्यत्र त्रैदोष्यरहितपरिसङ्ख्याव्यवहार आचार्याणामिति ।

ननु यैव गर्दभरशनानिवृत्तिरश्रुता सती कल्प्या सैव प्राप्तबाधात्मिकेति नाश्रुतकल्पनातः प्राप्तबाधस्य पृथग्दोषत्वेनोपन्यासः सम्भवतीत्यत आह । अस्मिंश्चेति । यथैव ह्यश्रुतेऽर्थे शब्दतात्पर्यकल्पनमन्याय्यत्वात्स्वयंदोषस्तथैव मानप्राप्तस्यार्थस्याबाधेनोपपत्तौ-

तत्सिद्धं मन्त्रैरेव स्मर्त्तव्यमिति नियमविध्याश्रयणात् न मन्त्राम्नानमनर्थकम्। अतश्च युक्तं मन्त्राणां प्रयोगसमवेतार्थस्मारकतयाऽर्थवत्वम् । तत्र ये मन्त्रा यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनं प्रयोजनं

---

बाधस्यान्याय्यत्वात्प्रासत्रापि स्वतन्त्र एव दोष इत्याशयः ।

अतश्चेति। ननु यद्यपि देवस्यत्वेत्यादिमन्त्रेऽग्नयेनिर्वपामीति पदद्वयं समवेतार्थस्य भवति प्रकाशकं नैतावता सम्पूर्णस्य मन्त्रस्य तत्प्रकाशकत्वं सम्भवति देवस्यत्वादिपदानामसमवेतार्थत्वादितिचेत् ? न, तेषामपि स्वार्थविशिष्टत्वेन निर्वापप्रकाशनार्थत्वात् वैशिष्ट्यप्रकाशनस्यानुष्ठानानुपयोगिन्यपि मन्त्रे नियमादृष्ट एवोपयोगसम्भवात्। ननु तथापि स्तोत्रशस्त्रमन्त्राणां नैव प्रयोगसमवेतार्थः प्रकाश्यः सम्भवति तेषां देवतासंस्कारार्थत्वस्य द्वितीये निरस्तत्वादितिचेत् न, यत्प्रकाशनप्रयोगसाध्यापूर्वेणापेक्षितं तत्प्रकाशकत्वस्य त्वनन विवक्षितत्वात् । तत्तु प्रकाशनं स्वरूपेणापेक्षितं प्रकाश्यद्वारेण वेत्यन्यदेतत्। नचैवमपि तादृशार्थप्रकाशकत्वस्य जपमन्त्रेष्वसम्भवस्तेषामुच्चारणादृष्टोत्पत्त्यभ्युपगमादिति वाच्यम् । तेषामप्यन्यक्रतौ याज्यानुवाक्यार्थे स्तोत्रशस्त्रयोर्वा विनियोगेन तादृशार्थप्रकाशकत्वावश्यम्भावात्, इत्याहोपनिबद्धानां चार्थाभिधानद्वारैवादृष्टार्थताया वक्तुमुचितत्वात्, यथोक्तं तन्त्रसारे 'इत्याहोपनिबद्धश्च मन्त्राणां दृश्यते विधिः । प्रवादेशश्चाहशब्दः सोभिधानाविधायक' इति । यद्यपि सामभिर्नैव साक्षात्कोप्यर्थोभिधीयते तथाप्यृगक्षराभिव्यक्तिद्वारा सम्भवति तेषामर्थप्रकाशकत्वम्। तथापि प्रजापतिहृदयादीनामनृक्सामनां नार्थाभिधानार्थत्वमिति चेत् ? न तान्यपि यत्र कर्मणि विनियुक्तानि तदपूर्वेणापेक्षितस्य स्वविशिष्टत्वेन प्रयोगप्रत्यायनस्य तैरपि सम्पादनात् । तर्हि किं मन्त्रोच्चारणस्यादृष्टार्थत्वं न क्वाप्यत आह—शेषांशेष्वपीति । येषां मन्त्राणां प्रामाणिकविनियो-

गबलेन क्वापि प्रयोगे निविष्टानां तन्त्रार्थप्रत्यायनार्थत्वं न सम्भवति तत्र तदुच्चारणस्यागत्याऽदृष्टार्थत्वेऽप्यन्यत्र विनियोगवशेन तेषामेवार्थप्रत्यायनार्थत्वसम्भवाच्च क्वापि मन्त्रे प्रतीयमानार्थाविवक्षा शङ्क्येत्याशयः । नचैवं मन्त्राणां विवक्षितार्थत्वलाभेपि कथं स्मारकत्वेनाभिमतानां तेषामनधिगतबोधकत्वरूपं प्रामाण्यमिति चेत् ? तत्र केचिद्यथार्थत्वमात्रेणैषां स्मृतिवत्प्रामाण्यमित्याहुः ।

अन्ये तु 'चोदनालक्षणो'र्थोधर्म' इति द्वितीयसूत्रे चोदनाशब्देन प्रवर्त्तकत्वपर्याप्त्यधिकरणस्य मन्त्रार्थवादाद्येकवाक्यतापन्नस्य विधेरभिधानाद्युगपत्प्रतिज्ञातं मन्त्रार्थवादविधिप्रामाण्यमेकरूपमेव वक्तुमुचितं, सम्भवति च मन्त्राणामप्यनधिगतार्थगन्तृत्वं 'धन्वन्निव प्रपा असि कुमारा विशिखाइव'इत्यादीनां तावत्प्रपाशिखाधारणादि तद्गतं श्रेयःसाधनत्वं चानधिगतशास्त्रानुमानेन ज्ञापयतां स्पष्टमेव तत्, एवमनधिगतं यागस्वरूपं तद्गतमायुरादिसाधनत्वं च बोधयति सूक्तवाकेपि, तथा शास्त्रान्तरप्राप्तानामन्वाधानाद्याक्रमणप्रतिवचनक्रियाणां यथाक्रमं यजमानगाम्यृत्विग्गाम्युभयगामि 'अन्वहमिषं'विजिहाथां 'मामासन्ताप्त'मितिवर्चोःसन्तापप्रद्वात्मकश्रेयःसाधनतां ज्ञापयत्सु 'ममाग्नेवर्चोविहवेष्व'इति 'अग्नाविष्णूमावामवतक्मौसहे'ति मन्त्रेषु, एषूदाहरणेषु यथाग्नेयादिविधिवद्दर्शपूर्णमासविधिवच्चाविहितं धर्मे प्रामाण्यम्, एवं 'मिन्द्र ऊर्ध्वोअध्वर' इत्यादिमन्त्रस्याधिगतमङ्गयागं बोधयतः प्रयाजविधिवत् । ये तु द्रव्यविशेषदेवताविशेषकर्तृविशेषक्रमविशेषज्ञापका मन्त्राः 'छागस्य वपायामेदसोऽनुब्रूही'ति 'समिधः समिधोऽग्नआज्यस्य व्यन्त्वि'ति 'आयुर्दाअग्नेस्यायुर्मेदेही'ति 'होतेव नः प्रथमः पाही'ति, तेषामपि 'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्त'दित्यादिविधिवत्, सर्वेषां च लिङ्गविनियोज्यमन्त्राणामपूर्वसाधनीभूते लवनादावात्मनोऽङ्गत्वं ज्ञापयतां तद्वदेव अन्तत उदाहृतानां सर्वेषामेव प्रयोगकाले ऽपूर्वसाधनत्वेन स्वार्थानुसन्धा-

नकर्त्तव्यतां प्रापयतामिति ।

परेत्वाहुः नैवमपि चोदनावन्मन्त्राणां शब्दविधया प्रामाण्यसिद्धिः नहि चोदनागतैरिव मन्त्रगतैः पदैरुपस्थिताः पदार्था उक्तोदाहरणेष्वाकाङ्क्षादिसचिवास्तां तामनधिगतप्रमां जनयन्ति, अपि तु तन्तमर्थं बोधयतां तेषामाम्नानानुपपत्तिः। नच शब्दानुपपत्त्या जातं ज्ञानं शब्दलिङ्गकाकाशानुमितिवच्छाब्दत्वेन व्यवहर्तुं शक्यं, असत्यपि शब्दविधया प्रामाण्ये यथाकथंचिदैकरूप्येण प्रतिज्ञोपपादने त्वसत्यप्यनधिगतार्थगन्तृत्वे यथार्थज्ञानजनकत्वसारूप्येणैव प्रतिज्ञोपपत्तिः किं न स्यात् । न चानधिगतार्थगंतृत्वमपि सर्वमन्त्रसाधारण्येन शक्यं निरूपयितुं अनूकसाम्नां केनापि त्वदुक्तप्रकारेण तदसम्भवात् । अतएव द्वितीयसूत्रे चोदनापदं नार्थवादमंत्राद्येकवाक्यतापन्नविधिपरं उक्तविधया विध्यर्थमंत्रेषु एकरूपप्रामाण्यप्रतिज्ञाया असम्भवात् । नचैवमप्रतिज्ञातस्य मन्त्रादिप्रामाण्यस्य कथमाकरे निरूपणमितिशंक्यं, प्रथमसूत्र एव सामान्यतोधर्मप्रमाणनिरूपणप्रतिज्ञायाः 'कथंलक्षणकोधर्म' इति भाष्येण प्रदर्शनात् पदैकवाक्यतयाऽर्थवादादेः प्रामाण्यं यन्मूलत्वेन स्मृत्यादेः प्रामाण्यं तस्य प्रधानप्रमाणत्वेन तत्प्रदर्शनार्थतया द्वितीयसूत्रे चोदनाग्रहणोपपत्तेः, तस्मात्सर्वमन्त्राणां तत्तद्विनियोजकविधिवाक्यार्थे पदार्थविधयाऽनुप्रवेशात्पदार्थानां च वाक्यार्थे प्रामाण्यं 'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वा'दिति सूत्रेऽर्थस्येत्याद्यवयव्याख्यानं कुर्वता भाष्यकारेणोक्तं 'पदानि हि स्वंस्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति' ।

वार्त्तिककारेणापि 'अवाचकत्वं वाक्यस्य तद्भूतानामितीरितम् । हेतुः स्यात्तन्निमित्तत्वं मूलं वाऽर्थस्य कस्य-

चित् । पदार्थमूलकोह्येष न भ्रान्तिरितिगम्यते । साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् । वर्णास्तथापि नैवस्मिन् पर्यवस्यन्ति निष्फले । वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् । प्रयोजनतया चैषामर्थमिच्छन्ति भावनाम् । क्रियार्थेनेतितेनेह समाम्नायप्रयोजन'मिति ।

अस्य चेत्थमभिप्राय उक्तोन्यायरत्नाकरे 'ये हि वाक्यमेव सभागं निर्भागं वा वाक्यार्थस्य वाचकं मन्यन्ते ये च निर्मूलमेव वाक्यार्थज्ञानं, तेषामुभयेषामपीदं सूत्रेण निराकरणं तत्र 'तद्भूतानां' इति सूत्रावयवेन वाक्यस्य वाचकत्वनिराकरणं लोकसिद्धेषु पदार्थेषु वर्त्तमानानां पदानामेव वाक्यार्थोपायत्वान्न वाक्यं वाचकमिति अर्थस्य तन्निमित्तत्वादिति । तत्र च हेतुः पदार्थानामेव निमित्तत्वोपपत्तेर्निष्प्रमाणकं वाक्यस्य वाचकत्वमिति । यद्वाऽर्थस्य वाक्यार्थस्य मूलं कथ्यते तन्निमित्तत्वादिति पदार्थमूलकोहि वाक्यार्थबोधो न निर्मूलत्वे भ्रान्तितया शङ्कितव्यः । नचैवं वाक्यार्थभूतक्रियाप्रतीतेः पदार्थनिमित्तत्वं पदानां क्रियार्थेन समाम्नायः कथमितिशङ्क्यं, पदार्थेषु पर्यवसिताभिधाव्यापाराणामपि पदानां वाक्यार्थ एव तात्पर्यपर्यवसानात्, एवं च क्रियार्थेनेत्यर्थशब्दः प्रयोजनपरोनाभिधेयपर' इति । नचैवमपि पदार्थज्ञानानां हेतुत्वमनङ्गीकृत्य पदार्थानां तदङ्गीकारे कोहेतुरितिशङ्क्यम् । गोपदजन्यानन्तज्ञानव्यक्तीनां हेतुत्वमपेक्ष्य गोपदाभिहितगोत्वस्य हेतुत्वाङ्गीकारे लाघवात् एवं शुक्लयागाकाशादिशब्दानां नित्यसिद्धैकव्यक्तिकगुणक्रियाद्रव्यवाचित्वमते श्वेतत्वादिजातिवाचित्वमते वा तत्तत्पदार्थानां वाक्यार्थधीहेतुत्वमते लाघवं बोध्यम् । नचाज्ञातपदार्थानां वाक्यार्थधीहेतुत्वायोगात् ज्ञातपदार्थानां तद्वाच्यतया च लाघवाज्ज्ञानानामेव हेतुत्व-

मस्त्विति वाच्यम् । गोत्वादिरूपितवाक्यार्थधियं प्रति गोत्वादिभिन्नार्थगोचरज्ञानानां हेतुत्वायोगेन गोत्वादिज्ञानानां हेतुत्वं वाच्यम्, तथा च लाघवाद्गोत्वादीनामेव हेतुत्वमस्त्वित्यपि वक्तुं शक्यत्वात् । 'वस्तुतस्तु पदाभिहितगोत्वादीनां वाक्यार्थधियं प्रति हेतुत्वं, पदाभिहितत्वं च पदविषयीकृतत्वं लक्ष्यगौणसाधारणं, अतोनैव कारणतावच्छेदके ज्ञानप्रवेशः । नचातीतानागतपदार्थानां कथं हेतुतेति शङ्क्यं, स एकः स एक इत्यपेक्षाबुद्धिजन्यस्यैतौ द्वावित्यबाधितधीविषयस्य द्वित्वस्यातीताभ्यामपि पदार्थाभ्यां बुद्धिस्थात्मना जननवदुपपत्तेः तत्सिद्धं पदार्थविधया मन्त्राणां धर्मे प्रामाण्यमिति ।

भवदेवस्त्वाह नैव मन्त्राणां शब्दविधया पदार्थविधया वाऽनधिगतार्थगन्तृत्वरूपप्रामाण्यनिरूपणस्य प्रयोजनं, प्रति वेदवाक्यं तादृशप्रामाण्यव्युत्पादनस्याऽसम्भवात्, नहि विद्वद्वाक्ययोस्तादृशप्रामाण्यमस्ति, कथंचित्साक्षात्परंपरया वा धर्मप्रमित्युपयोगित्वमात्रं तु मन्त्राणां स्पष्टमेवेति ।

गुरुमतानुसारिणस्तु प्रथमसूत्रप्रतिज्ञातधर्मप्रमाणसामान्यस्य द्वितीयसूत्रे चोदनायामुपसंहारान्नैव स्वातन्त्र्येण मन्त्रार्थवादादिप्रामाण्यं प्रतिज्ञातं, अत एव न तादर्थ्यं कस्यचिदधिकरणस्य । किमर्थं तर्हि मन्त्राद्यधिकरणमिति चेत् ? केनापि प्रकारेण चोदनानामप्रामाण्यशङ्कानिरासाय, तथाहि मन्त्राधिकरणे तावत्तदर्थशास्त्रमन्त्रयोरन्योन्यव्याहतार्थत्वात्तादृशतदुभयैकवाक्यतापन्नप्रयोगचोदनानामप्रामाण्यमाशङ्क्य राद्धान्तिते व्युत्पत्तितोऽर्थपरतायां मन्त्रेष्वविशेषात्तदर्थशास्त्रस्य चानुवादत्वेन विद्वद्वाक्यवन्नयनसम्भवान्नैव तयोर्व्याहतार्थत्वम् । ननु श्रुतिकल्पनया विलम्बितप्रवृत्तिकं लिङ्गमेव शीघ्रप्रवृत्ततदर्थशास्त्रानुरोधेनानुवादो भवेत् कथमन्यथा श्रुतवचनानुरोधेनैन्द्रीलिङ्गस्य बाध इति चेत् ? परिहृतमेतन्नयविवेके

सम्भवति तदा तत्रैव विनियोगः । येषां तु न सम्भवति तेषां यत्र सम्भवति तत्रोत्कर्षः—यथा पूषानुमन्त्रणमन्त्राणामित्युक्तम् । येषां क्वापि न सम्भवति तदुच्चारणस्य त्वगत्या ऽदृष्टार्थत्वम् । सर्वथापि तु तेषां नानर्थक्यमिति ।

नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम् ।

---

'तदर्थशास्त्राच्छेषशेषिमात्रार्पणं, किञ्चित्करता तु मन्त्रशक्तिनिरूपणात्, तन्निरूपणे च किञ्चित्कार्यात्मा शेष्यपि लब्ध एवेति विनियोगबुद्धौ जातायां तदर्थशास्त्रमनुवादः 'एन्द्र्यां तु वचनादेव लब्धं किञ्चित्करताभिधान'मिति ।

व्याख्यातमेतद्वरदराजेन, शेषः शेषी किञ्चित्कारश्चेति त्रयज्ञानं विनियोगे सामग्री, तत्र तदर्थशास्त्रे शेषशेषिमात्रार्पणं, नतु शेषसाध्यः किञ्चित्कारपदवाच्य उपकारविशेषोपि, स च मन्त्रशक्तिनिरूपणादभिधानात्मा प्राप्तव्यः अतोलिङ्गापेक्षं तदर्थशास्त्रं, नतु लिङ्गस्य क्वचिदप्यंशे तदर्थशास्त्रापेक्षेति तदर्थशास्त्रस्य लिङ्गप्राप्तानुवादत्वमुचितं, ऐन्द्रीवचने तु न लिङ्गापेक्षा उपपूर्वस्य तिष्ठतेरभिधानार्थत्वेन वचनादेव किञ्चित्कारलाभादिति । नच सर्वतदर्थशास्त्राणामनुवादतया वैयर्थ्यमपि शङ्क्यं क्वचिदर्थवादाद्यर्थतायाः सम्भवात् अतो न प्रयोगचोदनानामप्रामाण्यमिति एवमर्थवादाद्यधिकरणेष्वपि चोदनाप्रामाण्यमेव साध्यते तेन न मन्त्रादीनां पृथक् प्रामाण्यचिन्तायाः फलमित्याहुः ।

सर्वाण्यपि मतानि मनसि निधायाह । सर्वथापीति ।

नामधेयानामिति । अत्र नामधेयग्रहणं न प्रातिपदिकमात्रपरं व्रीह्यादिपदानां विधेयार्थपरिच्छेदार्थत्वाभावात्, नापि कर्म-

तथा हि 'उद्भिदा यजेत पशुकाम'इत्यत्र उद्भिच्छब्दो यागनामधेयम्। तेन च विधेयार्थपरिच्छेदः क्रियते । अनेन हि वाक्येनाप्राप्तत्वात्फलोद्देशेन यागो विधीयते।

विशेष्यकप्रतीतिजनकसुबन्तपरं सर्वपृष्ठातिरात्रादिपदानां तज्जनकानामपि उक्तपरिच्छेदार्थत्वासम्भवात्, किन्तु योगेन रूढ्या वा धात्वर्थपरिच्छेदतात्पर्यकसुबन्तत्वम् । ननु परिच्छेदोनाम सामान्यात्मना बुद्धिस्थस्य विशेषात्मना प्रत्यायनं एकहायन्या इवारुण्येन, उद्भित्पदस्य च यजिसामानाधिकरण्यात्कर्मनामत्वं व दद्भिर्यदि यागसामान्यवाचित्वमुच्येत ततोनैव विशेषप्रत्यायकत्वमिति कथं परिच्छेदकत्वम् ? अथ शब्दान्तरादिमानकयागत्वावान्तरवैजात्यवाचित्वमस्योच्येत ? तदा कथं तत्र यजिसामानाकरण्यस्य मानत्वं ? नहि यजिर्वैजात्यवाची, तेनैव वैजात्यप्रत्यायने वा नैव परिच्छेदो नामफलं अन्यलभ्यत्वात् अत आह । अनेन हीति । नैव पिकः कोकिल इत्यत्र कोकिलपदसामानाधिकरण्यात्कोकिलपदवाच्ये पिकपदस्येव यजिसामानाधिकरण्याद्यजिवाच्ये वा सामान्य उद्भित्पदस्य शक्तिं ब्रूमः किंतु शब्दान्तराद्यन्यतरसहितविधिना यजितात्पर्यविषयत्वेनाक्षिप्ते यागीयविशेषरूपे, यथाऽत्रैकब्राह्मणानयनकथनोपक्रमके वाक्ये देवदत्तं ब्राह्मणमानयेत्यत्र देवदत्तब्राह्मणपदयोः सामानाधिकरण्याद्योनाम देवदत्तपदस्य ब्राह्मणवाचितां गृह्णाति नासौ ब्राह्मणसामान्यवाचितां गृह्णाति किंतु ब्राह्मणत्वाश्रयीभूतविशेषवाचिताम् । नचैतावता सामानाधिकरण्यस्याकिञ्चित्करत्वं एककारकान्वयित्वरूपं हि सामानाधिकरण्यं धातुनामज्ञाप्ययोरभेदमापादयत् तन्निर्वाहाय धातुज्ञाप्ये नाम्नः शक्तिं ग्राहयदसति बाधके सामान्यविशिष्टे विशेषरूपे ग्राहयेत् स्नुषापुत्रभार्येति सामानाधिकरण्यमिव स्नुषापदस्य पुत्रविशिष्टभार्यायां, विशेषणांशे बाधकोपनिपाते तु सम्भवति तस्य

यागसामान्यस्य चाविधेयत्वाद्यागविशेष एव विधीयते । तत्र कोऽसौ विशेष इत्यपेक्षायां उद्भिच्छब्दात् उद्भिद्रूपो

---

विशेष्य एव शक्तिग्राहकत्वं यथोदाहृतसामानाधिकरण्ययोर्देवदत्तब्राह्मणपदयोर्यथाक्रमं विशेषसामान्ययोर्बाधकोपनिपातात्सामान्यविशेषगोचरशक्तिग्राहकत्वम् । नन्वेवं यजिनैव यागविशेषप्रत्यायने नाम्नः परिच्छेदफलत्वं न स्यादिति शङ्कां निराकर्तुमाह । तत्रेति । अयमर्थः न वयं नाम्नोऽज्ञातविशेषरूपज्ञापनेन परिच्छेदकत्वं ब्रूमः किंतु ज्ञात एव विशेषरूपे जिज्ञासानिवर्तनेन, यथा रूपाकृत्यादिविशिष्टदेवदत्तस्वरूपे शब्दाज्ज्ञातेपि प्रत्यक्षज्ञानेच्छया भवति प्रश्नः कोसाविति, प्रत्यक्षज्ञानेन तन्निवृत्तौ च भवति परिच्छेदव्यवहारः तथा यजिज्ञानेपि विशेषरूपे संज्ञाजन्यज्ञानेच्छयोदाहृतप्रश्नः संज्ञाजन्यज्ञानोत्पत्त्या तन्निवृत्तौ सम्भवति परिच्छेदव्यवहारः । न चोद्भित्पदजन्यज्ञानस्यानधिकविषयत्वे कथं तत्सत्त्वासत्त्वयोः परिच्छेदसत्त्वासत्त्वाव्यवस्था, प्रत्यक्षज्ञानस्य तु शब्दाज्ञप्त्यैव क्वाचिदप्यंशेऽधिकविषयत्वमिति शङ्क्यं, प्रत्यक्षज्ञानवेलायामाधिक्यबुद्धिशून्यस्यापि परिच्छेदव्यवहारेण विलक्षणज्ञानेच्छानिवृत्तेरेव तदालम्बनत्वनिर्णयात् दृष्टं च विभिन्नहेतूनामविलक्षणविषयाणामपि ज्ञानानां हेतुविशेषजस्यैव कार्यविशेषे नियामकत्वं तार्किकमते पदजन्यज्ञानस्यैव शाब्दज्ञाने औपनिषदमते सोयंदेवदत्तइति वाक्यजस्याखण्डार्थज्ञानस्यैव भेदभ्रमनिवृत्तौ, अतो धातुजज्ञानादनधिकविषयेणापि नामजज्ञानेनैव परिच्छेद इति न दुर्घटम् । अमुनैवाशयेनाह 'भवदेवः तेनैवंभूतोयागविशेषः प्रतीयते न तु विशेषणाविशिष्ट' इति । अनन्यलभ्यविशेषणं विशेषणशब्दार्थः । मूले उद्भिद्रूपइत्युद्भिदभिन्न इति

ननु सम्भवदधिकार्थत्वे किमिति नाम्न उक्तविधपरिच्छेदार्थ-

यो याग इति ज्ञायते उद्भिदा यागेनेति सामानाधिक-

---

रण्यं वर्ण्यते ? कथं तत्संभव इति चेत् ? उद्भित्पदादुद्भित्संज्ञकेनेत्येवं संज्ञाविशिष्टयागप्रतीत्यङ्गीकरणात् । नन्वेवमुद्भिदादीनां शब्दस्वरूपाभिधायित्वं स्यात् आस्तां जातिविशिष्टप्रतीतिजनकानां गवादीनां जातिवाचित्वं साधकन्यायेन संज्ञाविशिष्टप्रतीतिजनकानामुद्भिदादीनां संज्ञावाचित्वस्यौचित्यायातत्त्वात् अतएव गौः शुक्लश्चल इत्येवं जातिगुणक्रिया इव डित्थादीनां शब्दमेव निमित्तीकृत्य प्रवृत्तिमाहुरालङ्कारिकाः । अथ गवादिशब्दाभिहितैर्गोत्वादिभिस्तादात्म्यादिना सम्बन्धेन विशेष्यलक्षणासम्भवाद्भवतु तैर्विशेष्यानभिधानं, संज्ञाशब्दैस्तु शब्दमात्राभिधाने लक्षणयापि न संज्ञिप्रतीतिसम्भवः शब्दसंज्ञिनोः सम्बन्धाभावे लक्षणानुपपत्तेः । अथ संज्ञिन्यपि शक्तिरास्त्वित्युच्येत ! न, अतिगौरवादितिचेत् ? भवतु तर्हि संज्ञांशे लक्षणामङ्गीकृत्योद्भित्संज्ञकेनेति प्रतीतिनिर्वाहः । नच नामत्ववादिनोपि लक्षणाप्रसङ्गे तुल्ये कोऽपराधो मत्वर्थलक्षणया यदस्या भयेन गुणविधित्वत्याग इति वाच्यम् । विशिष्टविधिगौरवापादकत्वेन तस्या हेयत्वात् यथाह वरदराजः 'लक्षणया स्वोपस्थितं नाम विशेषणम् । नचैवं लक्षणायां तुल्यायां न मत्वर्थलक्षणात्याग इति वाच्यम् । वाच्यस्य भावार्थैकविधिपरत्वनियमा' दिति । यद्वा श्रोत्रजां शब्दोपस्थितिमपेक्ष्योद्भित्संज्ञकेनेति प्रतीत्युपपत्तिः इत्थमेवोपपादयितुमुक्तं भट्टचरणैः 'सर्वत्र ह्यगृहीतविशेषणा विशिष्टबुद्धिर्न दृष्टा न त्वभिहितविशेषणे'ति अत उद्भित्संज्ञकत्वप्रकारकप्रतीतिजननेनैवोद्भिच्छब्दस्य परिच्छेदकत्वमस्त्वित्यतआह। उद्भिदेति । न तावदनवगमे संज्ञात्वे तादृशप्रतीतिजननसम्भवः तदवगमोपि नोद्भिदायजेतेति वाक्यात्प्राक्केनापि मानान्तरेण सम्भवति । अत इदमेव वाक्यं उद्भिदा यागेनेति नाम्नोयजिसामानाधिकरण्येनान्वयं बोधयत् संज्ञात्वमाक्षिपतीति-

वाच्यं, ततश्च संज्ञात्वसिद्ध्यै प्रथमतोयोन्वयबोधोऽवश्यांगीकार्यः तेनैवाबाधितेन वाक्यपर्यवसानान्नोद्भित्संज्ञकेनेतिबोधः सम्भवति, कथं चैतद्वाक्याधीनसिद्धिकस्यैतत्संज्ञकत्वस्यास्मिन्नेव वाक्ये सिद्धवन्निर्देश इत्याशयः । ननु यदि सामानाधिकरण्यात्संज्ञात्वमुद्भिच्छब्दस्य तदा सामानाधिकरण्यनिर्वाहार्थं यज्यधिकार्थत्वं स्वीकार्यं, भिन्नप्रवृत्तिनिमित्तयोरेकार्थवृत्तित्वस्य तल्लक्षणत्वात् । नच सर्वात्मना तदसम्भवः उद्भित्पदस्य यौगिकत्वेन फलोद्भेदनकारित्वप्रकारकबोधजनकत्वात् यजेर्यागत्वावांतरजातिप्रकारकबोधजजनकत्वात् । नच फलोद्भेदनकारित्वयोगस्य ज्योतिष्टोमादिसाधारण्यान्नोद्भित्पदस्य नियतप्रवृत्तिहेतुत्वं सम्भवतीति वाच्यम् । इतिहरि(१)पदे पशुत्वस्येवोद्भित्पदे यागत्वावान्तरजातिविशेषस्य प्रयोगोपाधित्वाङ्गीकारात् । योहि स्वयमशब्दवाच्योऽतिप्रसज्यमानां शब्दप्रवृत्तिं निवार्य विषयविशेषे व्यवस्थापयति स एव प्रयोगोपाधिरित्युच्यते । ननु यदुद्भित्पदज्ञाप्यं फलोद्भेदनकारित्वं तदुद्भित्पदस्य प्रवृत्तिनिमित्तं ? उतान्यत् ? नाद्यः एतद्विधिज्ञाप्यस्यैतस्मिन्नेव विधौ सिद्धवन्निर्देशायोगात् । न द्वितीयः जनिष्यमाणस्यालीकत्वेन निमित्तत्वायोगात्, अत उद्भित्पदस्य यागत्वावान्तरवैजात्ये रूढिरेव स्वीकार्या, योगोपन्यासस्तु गवादाविव साधुत्वार्थः साङ्गसोपबृंहणवेदाभ्यासशीलैर्दध्यग्निकेशवादिनाम्ना रूढीनामपि तत्र योगोपन्यासं पश्यद्भिः केनापि योगेन यत्र यस्य प्रवृत्तिसम्भवः तत्रैव तस्य साधुत्वमित्यालोचयद्भिः सांप्रदायिकैरुद्भिदादौ रूढेपि योगोपन्यासः कृत इति किमाश्चर्यम् । नच रूढ्या विना संज्ञात्वं सम्भवति डित्थादीनां पाचकादीनां च पुंविशेष्यकप्रतीतिहेतुत्वे तुल्येपि डित्थादीनामेव संज्ञात्वव्यवहारात्, अत एव दर्शपूर्णमाससमिच्छयेनशब्दानामाकरे कालसम्बन्धदेवतासम्बन्धहेतुकलक्ष-

(१) हरिपदे इति पु० पा० ।

रण्येन नामधेयान्वयात् । तस्य च यजिना सामानाधि-

---

णाभ्यां गौण्या च प्रवृत्त्युपपादनेऽपि रूढत्वमेव तत्तत्कर्मण्याश्र-यणीयं, लक्षणाद्युपन्यासस्तु प्रसिद्धार्थत्यागेन नामधेयत्वस्याक-स्मिकत्वनिरासार्थं, अन्यत्र प्रसिद्धस्य हि सहसैवार्थान्तरवाचित्वं दुर्ग्रहं, पूर्वप्रसिद्ध्यैव कथं चित्सम्भवत्प्रवृत्तिकस्य तु सुग्रहं तदि-त्यनुभवसिद्धमेतत्सहृदयानां, अतो न यौगिकत्वेनोद्भित्पदस्य सामानाधिकरण्योपपत्तिरिति चेत् ?

न, उदुपसर्गाद्यवयवानां क्लृप्तशक्तिभिरेव सम्भवत्प्रवृ-त्तिकस्योद्भिच्छब्दस्य प्रोक्षणीशब्दन्यायेन रूढिकल्पनायोगात्, सम्भवति च यद्वैदिकं कर्म तत्फलसाधनमिति व्याप्तिबला-दवगतं सामान्यतः फलोद्भेदनकारित्वं निमित्तीकृत्योद्भि-त्पदप्रवृत्तिः विधेश्च फलविशेषपशूद्भेदकत्वं प्रत्यज्ञातज्ञापक-त्वं, युक्तं च गोदध्यादिशब्देषु लोकतोरूढतया प्रसिद्धेषु योग शास्त्रस्याविवक्षास्वीकरणं न तूद्भिच्छब्दस्य रूढिप्रसिद्धिरस्ति येन तद्गोचरयोगोपन्यासस्य साधुत्वसिध्यर्थत्वं कल्प्येत, नच सं-ज्ञात्वे रूढित्वं नियामकं डित्थोऽयमिति डित्थेदंशब्दयो रूढत्वे तुल्येपि परिच्छेदकफलके डित्थशब्द एव संज्ञात्वव्यवहारेण तत्फ-लताया एव संज्ञात्वनियामकत्वावधारणात् । नच दर्शादिपदे रूढि-स्वीकरणमुचितं तथा सति पिण्डपितृयज्ञवाक्येऽमावास्यापदस्य फल-कल्पनाभयेन कर्मपरत्वापत्त्या पिण्डपितृयज्ञस्य दर्शाङ्गत्वप्रसङ्गात्, तस्माद्यौगिकत्वेनैवोद्भिच्छब्दस्य सामानाधिकरण्यं यज्यधिकार्थत्वं च वाच्यमत आह । तस्य चेति ।

तच्छब्देन प्रकृतविधिवाक्यस्थ उद्भिच्छब्दः शङ्काग्राहि-कया परामृश्यते । एतद्वाक्योत्तरप्रवृत्तवाक्यान्तरे हि श्रूयमा-ण उद्भिच्छब्दोयोगेन यजिसामानाधिकरण्यं गच्छेदपि न

त्विहश्रूयमाणः न ह्यस्पाद्वाक्यात्पूर्वं सामान्यतोपि फलसाधनत्वावगमः सम्भवति वेदाविहितत्वात्मकवैदिकत्वस्येतः प्रागसिद्धेः अन्यादृशस्याप्रयोजकत्वात् । नच सोमवाक्यात्प्राक् सोमयागयोः सम्बन्धानवगमेपि सोमवता यागेनेति वाक्यार्थोपपत्तिवदुद्भिद्वाक्यात्प्राक् फलसाधत्वानवगमेपि फलोद्भेदनकारिणा यागेनेति वाक्यार्थः किं न स्यादिति शङ्क्यं, वस्तुतः पूर्वप्रवृत्तेनानुमानिककविशेषणविधिना सिद्धं सोमसम्बन्धमादाय विशिष्टविध्युपपत्तेः । नचैवमुद्भिद्विधेः प्राक् फलसामान्यसम्बन्धप्रापकः कोपि विधिः प्रवृत्तोस्ति, न चेहाप्युत्पत्तिविधिरनुमेयः उक्तं हि नावमिकेरापदाधिकरणे विनियोगविधिनाप्युत्पत्तिविध्यनुमानमिति चेन्न । यतोयुक्तं सोमस्यासिद्ध्यागाङ्गत्वसिद्ध्यै विशेषणविध्यनुमानं, नतु श्रुतवाक्येन यागविशेषफलविशेषयोः सम्बन्धे गमिते पुनर्यागस्वरूपावगमः फलसामान्यसम्बन्धावगमोवा पृथगपेक्षते यत्सिद्ध्यै विध्यनुमानं स्यात् । वस्तुतस्तु सोमवाक्यस्यापि न कल्पितवाक्यजबोधमपेक्ष्य स्वार्थबोधकत्वं कल्प्यस्यैतदधीनप्रतीतिकत्वेनतरेतराश्रयापत्तेः, किंतु स्वजन्यमेव प्रथमं बोधमपेक्ष्य । उपपादितं चैतदधस्तात् । नच सोमेन यजेतेतिवाक्यात सोमेन यागं कुर्यादिति प्रथमबोधात् सोमयागसम्बन्ध इवोद्भित्पदनिमित्तत्वेनाभिमतः फलसामान्यसम्बन्धोऽप्युद्भिद्वाक्यजप्रथमबोधाल्लभ्यत इति साम्प्रतम्, उद्भित्पदपशुकामपदे अनपेक्ष्य यजेतेतिपदस्याप्रमाणत्वात् अनवगतप्रवृत्तिनिमित्तस्योद्भित्पदस्य फलविशेषगमकस्य च पशुकामपदस्य फलसामान्यसम्बन्धेऽपेक्षायोगात् । अतोनैवात्रोद्भित्पदस्य योगेन यजिसामानाधिकरण्यमितिरूढ्यैव तद्वाच्यं, साधुत्वनिर्वाहाय तु स्वीक्रियमाणोयोगः कामं वाक्यान्तरे स्वानुरूपां प्रतीतिमादध्यात् । गवादाविव साधुत्वार्थं स्वीक्रीयमाणोयोगः कथं प्रतीतिजनक इतिचेत् ? किमौपगवादिपदगतोयोगस्तांतां प-

करण्यं न नीलोत्पलादिशब्दवत् एकार्थकत्वेन । तत्र हि उत्पलशब्दस्यार्थादुत्पलादन्यो नीलशब्दस्य वाच्यार्थो ऽस्ति नीलगुणः लक्षणया तु नीलशब्दस्य द्रव्यपरत्वेन सामानाधिकरण्यम् । उद्भिच्छब्दशब्दस्य तु यज्यवगतविशेषान्नान्यो वाच्योऽर्थोऽस्ति विशेषवाचित्वात् तस्य । अतश्चार्थान्तरवाचित्वाभावेन नामधेयस्य नील-

---

तीतिं जनयन्न साधुत्वार्थः ? किमिति तर्हि गोपदगतयोगस्यालीकत्वमितिं चेत् ? शृणु । योगो नामानेकावयवशक्तीनां समुदायः ताश्च कार्यैकगम्याः तत्र गमेर्डोइत्यनुशासने सत्यपि न डोप्रत्ययस्य कर्त्तरि शक्तिः तदनुसारिप्रतीतेः पदान्तरे गोपदे चादर्शनात् एवमहीनदध्यादिपदगतस्यापि योगस्यालीकत्वं बोध्यम् । उद्भित्पदगतावयवशक्तीनां तु उत्क्षेपणं त्रिभिन्नं शास्त्रविदितप्रयोगेषु प्रत्येकं लब्धात्मकानामुद्भित्पदजन्यप्रतीतिविशेष्ये च सम्भवदर्थकाणां गवादावश्वकर्णादाविव रूढेष्युद्भित्पदे शक्योऽपलापः एवं पङ्कत्वप्रकारप्रतीतिजनकतया रूढेऽपि पङ्कजपदे न योगापलापसम्भवः तत्सिद्धं योगरूढोऽप्युद्भिच्छब्दः प्रकृतवाक्ये रूढ्या यागीयविशेषरूपं प्रतिपादयन्नन्वेतीति न तस्य यज्यधिकार्थत्वेन सामानाधिकरण्यसम्भव इत्याशयः ।

नन्वेवमपि व्याप्यव्यापकजातिवाचिनोः उद्भिच्छब्दयजिधात्वोर्लक्षणयैकव्यक्तिपरत्वात् व्याप्यव्यापकजातिवाचिनोः तुल्यत्वमत आह । यज्यवगतेति । यद्यपि यजिधातोर्न यागीयविशेषरूपं वाच्यं तथाप्यवगतं तावत्तेन ततोऽनवगते तस्मिन्नुद्भित्पदस्य शक्तिग्रहायोगात् ततश्च सत्यपि वाच्यभेदे न नी-

शब्दवत् न सामानाधिकरण्यम्, किं तर्हि ? वैश्वदेव्यामिक्षेत्यत्रामिक्षाशब्दवत् । वैश्वदेवीशब्दस्य हि देवतातद्धितान्तत्वात्तद्धितस्य च 'सास्य देवता' इति सर्वनामार्थे स्मरणात् सर्वनाम्नां चोपस्थितविशेषवाचित्वेन विशेषपरत्वम् । तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो वि-

---

लोत्पलवत् परस्पराधिकार्थत्वेन सामानाधिकरण्यमित्यर्थः । वैश्वदेवीति । यद्यपि तद्धितस्य शक्तिजन्यप्रतीतिः स्वोत्पत्त्यै आमिक्षापदमपेक्षते यजिधातुजन्यप्रतीतिस्तु स्वपर्यवसानाय न इत्यस्ति वैषम्यं तथापि स्वानधिकार्थसमर्पकमपि पदं स्वसमानाधिकरणतयाऽपेक्ष्यत इत्येतावता साम्येनैष दृष्टान्तः । ननु यथैवोद्भिद्विधिविधेयस्य फलोद्भेदनकारित्वस्य तत्रैव नोद्भित्पदेन सिद्धवन्निर्देशस्तथैव तद्विधिविशेषस्य विधेयरूपस्य कथमत्रैव तेन सिद्धवन्निर्देश इत्यत आह । समर्पकत्वेनेति । विध्यपेक्षितरूपेणार्पणं समर्पणं, फलोद्भेदनकारित्वस्य हि साधनतात्मकस्य यागेनेति यागं प्रति विशेष्यतया प्रतीयमानस्य क्रियान्वययोग्यत्वादसिद्धावस्थत्वं कृदन्तकरणादिशब्दैरिवोद्भित्पदेन यागोपसर्जनतया प्रतीयमानस्य च सिद्धावस्थत्वमिति सम्भवदवस्थाद्वयस्य विधिनाऽसिद्धावस्थस्यैव विषयीकरणाद्युक्ता तत्रैव सिद्धवन्निर्देशानुपपत्तिः, विशेषरूपस्य तु वैजात्यात्मनो धातुनामपदेन वाच्या, यागविशेषणत्वमन्तरेण प्रतीतेरप्रसिद्धत्वादसम्भवदवस्थाद्वयस्य यागविशेषणतयैव विधिना विषयीकरणान्न सिद्धवन्निर्देशानुपपत्तिः ततो यथा कारकान्वययोग्यस्य द्रव्यादेर्विनियोगं कर्तुं विधिः कारकविभक्त्यन्तपदेनैव तदर्पणमपेक्षते कारकान्वयायोग्यस्य तु क्रमसाहित्यादिः पदार्थान्तरविशेषणत्वेनैव तदर्पणमपेक्षत इति तस्य तथैवार्पणं समुचितं तथा यागादेरुत्पत्ति

शेष इत्यपेक्षायां आमिक्षापदसान्निध्यादामिक्षारूपो विशेष इत्यवगम्यते। यथाहुः—

'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसानिध्यात्तस्यैव विषयार्पणम्' इति।

तथा—

'श्रुत्यैवोपपदस्यार्थः सर्वनाम्ना प्रतीयते।
तदर्थस्तद्धितेनैव त्रयाणामेकवाक्यता' इति।

तस्माद्यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यं, एवं सामान्यस्याविधेयत्वाद्यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यम्। तत्सिद्धं नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम्। यथाहुः 'तदधीनत्वाद्यागविशेषसिद्धेः' इति।

नामधेयत्वं च निमित्तचतुष्टयात्। मत्वर्थलक्षणाभयात्। वाक्यभेदभयात् तत्प्रख्यशास्त्रात् तद्व्यपदेशाच्चेति।

तत्र 'उद्भिदा यजेत पशुकाम' इत्यत्र उद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात्। तथाहि—उद्भिच्छब्दस्य गुणसमर्पकत्वे यागानुवादेन तावन्न गुणविधानं युज्यते, फलपदानर्थक्यापत्तेः। न चानेन वाक्येन फलं

---

कर्तुं यागविशेषणत्वेनैव वैजात्यार्पणमपेक्ष्यत इति वैजात्यस्य त-

प्रति यागविधानं तस्मिंश्च गुणविधानं युज्यते, वाक्यभेदापत्तेः । नापि गुणफलसम्बन्धविधानं सम्भवति, परपदार्थविधानेन विप्रकृष्टार्थविधानापत्तेः, धात्वर्थस्य स्वरूपेणाविधानात् तदुद्देशेन वान्यस्य कस्य चिदविधानाद्धातोरत्यन्तपारार्थ्यापत्तेश्च यज्यानर्थक्यापत्तेश्च । न हि तदाऽनेन करणं समर्प्यते, गुणस्य करणत्वेनान्वयात् । नापि फलं, पशोर्भाव्यत्वेनान्वयात् । अथ "गुणफलसम्बन्धविधाने यागस्याश्रयत्वेन सम्बन्ध इति

थैवार्पणं समुचितं कुर्वतोनाम्नः सम्भवति सामानाधिकरण्यमित्याशयः । विप्रकृष्टार्थविध्यापत्तौ हेतुद्वयं अविधानादिति । पारार्थ्यं स्वोत्तरप्रत्ययसाधुत्वार्थत्वं तदापत्तावानर्थक्यापत्तिर्हेतुः आनर्थक्यं चाभिधेयगोचरतात्पर्यशून्यत्वं, चोभिन्नक्रमः ।

पारार्थ्यापत्तेश्चेति । स्वार्थतात्पर्यवन्तौ धातुप्रत्ययौ विनिगमनाविरहादुभावपि परस्परसाधुत्वसम्पादकौ भवतः न त्वन्यतरस्यैकान्तिकं परसाधुत्वार्थमवधारयितुं शक्यं स्वार्थतात्पर्यशून्यत्वेन तु यस्तयोर्निर्णीयते स एकान्तेन परसाधुत्वार्थो भवति न चैतन्न्याय्यमित्याशयः । यद्यपि सत्यपि यागस्याश्रयत्वेन तस्य प्रकरणलभ्यत्वान्न धातोराश्रयतया स्वार्थसमर्पणपरत्वमिति परिहारः सम्भवति तथापि वाक्यभेदापादकं समभिव्याहृतधातोराश्रयसमर्पकत्वमहृदयेनैव शङ्कितुमुचितम् । अहृदयवाचां च परिहारस्तादृशवाग्भिरेव कर्त्तुमुचितः यथा सौमिकेष्टिषु देवतापरिग्रहार्थमन्वाधानं कार्यमिति शङ्कायाः परिहारार्थमुक्तमाकरे दीक्षणीययैव देवतापरिग्रहार्थत्वसिद्धेर्न तत्कार्यमिति । वस्तुतोऽन्वाधाने दीक्षणीयायां च देवतापरिग्रहार्थत्वस्य स्तुतिमात्र-

चेत् । न । यजेतेत्यत्र आश्रयत्ववाचकपदाभावात् । अथ सिद्धान्ते करणत्वमिवाश्रयत्वमपि लक्ष्यमिति चेन्न । आश्रयत्वापेक्षया करणत्वस्य लघुत्वेन तल्लक्षणाया एव युक्तत्वात् । फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रयः, तत्त्वं चाश्रयत्वं करणत्वं च निष्कृष्टा शक्तिरिति लाघवम् ।

किं च गुणफलसम्बन्धविधाने करणीभूतो गुणस्तेन्निष्ठं करणत्वं वा फलोद्देशेन विधेयम् ? । तत्राद्ये

---

त्वादित्यभिप्रेत्याह । नेति । लक्ष्यमिति । भावनान्वयं परित्यज्य गुणकरणतावच्छेदकरूपानिरूपकत्वेनान्वयः कल्प्य इत्यर्थः । वाक्यगम्येद्दशान्वयकल्पनात्पदश्रुतिगम्यभावनान्वयनिर्वाहकस्य करणत्वस्यैव कल्पनमुचितमित्याशयेनाह : आश्रयत्वेत्यादिना । निष्कृष्टशक्तित्वोपन्यासश्च श्रौतभावनान्वयनिर्वाहकत्वोपपत्त्यर्थः । तत्रापि यागान्तरकल्पनानिमित्तं गौरवमस्त्येव तस्याश्च गौरवस्य कोविशेष इत्यत आह । किंचेति । तृतीयान्त इति तृतीयाशब्दौ तृतीयान्तपरौ 'तृतीयातत्कृतार्थगुणवचनेने'ति सूत्रस्थ शब्दवत् तृतीयांतशब्दादरुणयेत्यादेरुपरि तदर्थविशेष्यसमर्पकत्वेनेतियावत् । तृतीयांतस्यैकहायन्येत्यादिः प्रतीतिप्रसङ्गादित्यर्थः । अरुणयेति तृतीयाभिहितस्य कारकस्य क्रियान्यान्वयनियमयुक्तश्रुतसामानाधिकरण्यबाधः । यदि तु तस्य क्रियान्येनाप्यन्वयोघटते तदा कांस्यभोजिन्यायेन सामानाधिकरण्यानुग्रहार्थ एकहायन्यैवान्वयः स्यादिति भावः । अत एव च-साक्षात्क्रियानन्वयिकारकसमर्पकत्वादेव । ननु यदि धातुपारार्थ्यादिदोषान्तरैर्गुणविधित्वनिरासः कथं तर्हि मत्वर्थलक्षणाप्रसञ्जकविशिष्टविध्याख्यं गुणविधिप्रकरणं परे स्वीकारयन्ति ।

पक्षे करणत्वस्य गुणोपसर्जनत्वेन प्रतीतिर्लक्षणयैव वाच्या । तस्य तृतीयया प्रत्ययार्थत्वात् प्राधान्येनोपस्थितेः । यद्यपि गुणनिष्ठं करणत्वं फलोद्देशेन विधेयं तद्यपि फलभावनायां करणत्वेनान्वयोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या । तृतीयाभिहितस्य करणकारकस्य क्रियान्वययोग्यस्य करणत्वेनान्वयायोग्यत्वात् । करणशब्देनाभिहितं हि करणकारकं तत्त्वेनान्वययोग्यम्, न तृतीयाभिहितम् । करणशब्दादिवत्तृतीयातस्तृतीयोत्पत्तिप्रसङ्गात् । अतश्च करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या । लक्षणया चोपस्थितकरणत्वस्य करणीभूतस्य वा गुणस्य फलभावनायां यत्करणत्वं तदपि लक्षणयैव वाच्यम् । श्रूयमाणया तृतीयया गुणमात्रस्य यागं प्रति करणत्वाभिधानात् । अत एव तन्त्ररत्ने चतुर्थे करणीभूणगोदोहनादेः पश्वर्थत्वं समभिव्याहारादित्युक्तम् । अतश्च गुणफलसम्बन्धविधाने धातोरत्यन्तपारार्थ्यादिबहुदोषवत्त्वादुद्भिच्छब्दस्य गुणसमर्पकत्वे गुणविशिष्टकर्मविविधानमेव स्वीकार्य्यम् । तथा सति हि यजिना लघु-

अतश्चेति । तत्र हेतुं पूर्वोक्तदोषानास्कन्दितत्वमाह । तथा सतीति । इतरगुणविधिप्रकारेभ्योऽज्यायानप्येपामनेकद्रव्यनिरूपितानेकसम्बन्धानुपपत्त्याऽनेकयागकल्पनैवोचिता, ततः कथं यागस्यैकत्वं कवचनमिति चेत् ?

भूतं करणत्वमात्रं लक्ष्यते, उद्भिच्छब्देन च प्रकृत्यंशेन मत्वर्थमात्रं लक्ष्यमिति गुणफलसम्बन्धाविधानाल्लाघवं भवति। धातोरत्यन्तपारार्थ्यादिकं तु न भवत्येव। धात्वर्थस्यैव फलोद्देशेनविधानात्। अतश्चोद्भिच्छब्दस्य गुणसमर्पकत्वेन मत्वर्थं लक्षयित्वा गुणविशिष्टकर्मविधानं स्वीकार्यमुद्भिद्वता यागेन पशुं भावयेदिति। कर्मनामधेयत्वे तु उद्भिच्छब्दस्य न मत्वर्थलक्षणा। मुख्ययैव वृत्त्या यजिसामानाधिकरण्येन तस्यान्वयसम्भवात्। उद्भिदा यागेन पशुं भावयेदिति। सम्भवति च मुख्येऽर्थे लक्षणा आश्रयितुं न युक्ता। सन्निकृष्टविधानं तु समानमेव। न च—"सोमेन यजेत" इत्यत्रापि सोमपदस्य यागनामधेयत्वापातः गुणसमर्पकत्वे मत्वर्थलक्षणापत्तेरिति वाच्यम्। सोमपदस्य लतायां रूढत्वेन यागनामधेयत्वानुपपत्तेरगत्या लक्षणाश्रयणात्। उद्भिच्छब्दस्य तु नैवं वाच्योर्थः कश्चित्प्रसिद्धः। उद्भिद्यते ऽनेनेति योगस्य तु गुणे इव यागेपि फलोद्भेदन-

---

अत्र केचित् एकवचनान्तेन वीप्साशून्येन तदित्यनेन दध्यादीनां बहूनां परामर्शासम्भवात् नपुंसकलिङ्गेन च तेन प्रास्मा अग्निं भरतादित्यभिगतेन प्रास्माइति शब्देन षष्ठ्या इव धानातंदुलानिर्दशायोगात् दध्यादिविशिष्टसंसृष्टमेव परामृश्य च देवतासम्बन्धभयादुद्भिच्छब्दस्य नामत्वमितिप्रतिज्ञेत्याशङ्क्य दूषितगुणविधिप्रकारभिन्नमत्वर्थलक्षणापरो न त्वदधम इति वक्तुं तस्य मत्वर्थलक्षणा-

कारिण्युपपत्तेः । तत्सिद्धमुद्भिच्छब्दस्य मत्वर्थलक्षणाभयाद्यागनामधेयत्वमिति ।

'चित्रया यजेत पशुकाम' इत्यत्र चित्राशब्दस्य वाक्यभेदभयात्कर्मनामधेयत्वम् । तथा हि न तावदत्र गुणविशिष्टयागविधानं सम्भवति, 'दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्'—इत्यनेन विहितत्वाद्यागस्य, विशिष्टविधानानुपपत्तेः । प्राप्तस्य फलसम्बन्धे गुणसम्बन्धे च विधीयमाने वाक्यभेदः। अथ चित्राशब्दात् चित्रत्वस्त्रीत्त्वयोः प्रतिपत्तेः स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वात्प्रकृते दध्यादिद्रव्यके कर्मणि निवेशायोगात् नानेन वाक्येन प्रकृते कर्मणि गुणविधानं, किं तु प्राणिद्रव्यके कर्मणि । तत्रास्य वाक्यस्यानारभ्याधीतत्वात् अनारभ्याधीतानां च 'प्रकृ-

---

गसङ्गतामाह । अतश्चेति । यागस्येति । नन्वेकस्या अपि देवताया अत एवेति युक्तमेतत् उपपादितं च योगैकत्वमाष्टमिके मधूदकाधिकरणे वार्त्तिककृद्भिरित्याहुः

अन्ये त्वाहुः षष्ठ्यन्तनिर्देशं विना दध्यादीनां परविशेषणत्वायोगात् विशेषणमन्तरेण निरूपितरूपस्य संसृष्टस्य देवतान्वयानर्हत्वाद्देवतैक्यमप्राप्तसंसर्गानुवादत्वेन च संसृष्टपदसम्भवात्सर्वनाम्नश्च निर्दिष्टप्रतिनिर्देशस्वभावत्वात्सर्वनाम्ना तदित्यनेन दध्यादीन्येव परामृश्यन्ते । न चैकवचनानुपपत्तिः वीप्साङ्गीकरणात् । कथमश्रुततदङ्गीकार इति चेत् ? शृणु वीप्सया प्रत्येकरूपेणानेकार्थपरामर्शे तात्पर्यनिर्णयः कार्यः स चेह सर्वनाम्नोनिर्दिष्टप्रतिनिर्देशस्वभावेनैव

तौ वाऽद्धिरुक्तत्वात्' इति न्यायेन प्रकृतिगामित्वात्प्राणिद्रव्यकाणां च यागानां 'दैक्षस्य चेतरेषु' इति न्यायेनाग्नीषोमीयप्रकृतिकत्वात्तदनुवादेनानेन वाक्येन गुणो विधीयते। दैक्षस्य च ज्योतिष्टोमाङ्गत्वेन स्वतन्त्र-

---

सिद्धः, स्वीक्रियते ह्यसौ पशुगणेऽध्रिगुस्थमात्रादिशब्देषु विनैव वीप्सां ससम्बन्धिकार्थाभिधानस्वाभाव्यात्। नचाऽव्यवहितनिर्देशात्तण्डुलानामेव परामर्शः स्यात् क्लीवत्वाद्वा धानातण्डुलयोर्नैव परामर्शः स्यादिति शङ्क्यं, निर्दिष्टानां मध्ये कस्य चित्सर्वनाम्ना परामर्शाभावे तन्निर्देशस्यानर्थक्यापातात् बलवत्प्रमाणबाधधुरस्य चानर्थक्यस्य तर्कबाधकताया अनाश्चर्यत्वात् लिङ्गस्य च शब्दसाधुत्वार्थत्वसम्भवात्, अस्तु वा वीप्सान्तादिति अभिगतेन प्रास्मा इति शब्देन षष्ठ्या इव धानातण्डुलनिर्देशायोग। द्दध्यादिविशिष्टसंसृष्टमेव परामृश्य च देवतात्वैवंभावादङ्गीकारः पाशन्यायेन प्रधानतया मुख्यतया च बलवत्प्रातिपदिकानुरोधेन लिङ्गसंख्ययोरुभयोरविवक्षायाः सुवचत्वात्। यदि त्वविवक्षायां न तुष्यसि तदा भवत्वौपचारिकत्वेन तयोर्नयनं यथोक्तं द्वादशाध्यटुप्टीकायां 'अथवैकदेवतत्वाल्लक्षणया लक्षितलक्षणया वोपपन्नमेकवचनं लिङ्गं चे'ति, व्याख्यातं चैतन्मिश्रैः 'तच्छब्दो यदि संनिधानाख्यगुणवचनस्तत्तल्लक्षितसांनिहितदध्यादिलक्षितदेवताभिप्रायं लक्षितलक्षणमेकवचनं, अथ सन्निहितद्रव्यवचनस्ततोलक्षणया लिङ्गं त्वेकदेशगतं समस्तेषूपचर्य प्रयुक्त'मिति।

अन्यैस्तु तच्छब्दस्याकृतिवचनत्वे प्रथमः कल्पोपि विशिष्टवचनत्वे द्वितीय इति व्याख्यातम्।

व्याख्याद्वयेप्याद्यकल्पोक्तिरभ्युपेत्यवादः सत्यपि तच्छब्दस्य सन्निहितत्वप्रकारकबोधजनकत्वे सन्निधावदृष्टप्रयोगस्य तस्य स्तु-

षापदस्य पुत्रवाचित्ववत्संनिधिवाचित्वकल्पनानुपपत्तेः पटशुक्लाकाशशब्दजनितोपस्थितीरपेक्ष्य प्रवृत्तेन तच्छब्देन क्वचिज्जात्यभिधानं क्वचिद्गुणाभिधानं क्वचिद्द्रव्याभिधानमित्यनेकविधशक्तिग्रहात्सर्वत्र येन रूपेण यदुपस्थितं तेन तत्तच्छब्दवाच्यमित्येकरूपेण शक्तिग्रहलाघवात्, इत्थं च यत्किंचित्प्राचीनमिति शास्त्रस्य 'उपांशुयाज'त्स्वति शास्त्रेणानुपसंहारोक्तिः 'पुराडाशं चतुर्द्धाकरोती'त्याग्नेयं चतुर्द्धा करोती'त्यनेनोपसंहारोक्तिश्च सङ्गच्छते, अन्यथा तच्छब्देनेव यच्छब्देनापि सन्निधेः प्राचीनत्वस्य वा सामान्यस्याभिधाने प्रायपाठसंरक्षणायोपांशूपसत्स्वित्युपसंहारविधिरेव स्यात् सर्वनामसमानार्थेऽस्य च तद्धितस्य सामान्यवाचित्वे सत्याग्न्याज्यभागाज्ये प्रसज्यमानचतुर्द्धाकरणनिवृत्त्यै पुरोडाशशास्त्रेवाग्नेयं चतुर्धा करोतीत्यस्योपसंहारः स्यात् । नच जुह्वामुपात्तचतुर्गृहीतस्याग्नौ प्रक्षिप्तत्वाद्ध्रौवस्यत्वनेककार्यसाधारणस्य प्रतिपत्त्यनर्हत्वान्नाज्यभागाज्यचतुर्द्धाकरणप्रसक्तिरिति शङ्क्यं, प्रक्षेपान्वयिना प्रयाजभागेनेवाज्यभागशेषेणापि स्वस्य प्रतिपत्त्यन्तरासिद्ध्यै धारणप्रयुक्तिसम्भवात् । नच सामान्यप्रवृत्तस्य चतुर्द्धाकरणविधेः प्रधानपुराडाशे चरितार्थस्य न विशेषप्रवृत्तप्रयाजशेषक्षारणावीधिवत्स्वक्षेपविषयसङ्कोचकत्वं सम्भवतीत्यपि शङ्क्यं, अत्रैव 'त्विजोहविः–शेषान्भक्षयन्ती'ति विहितायाः प्रतिपत्तेः प्रधानपुरोडाशे प्राप्तायाबाधमपेक्ष्यांगभूताज्यभागाज्यविषयप्रतिपत्तेः सङ्कोचस्यैव न्याय्यत्वात् सम्मतं चोपस्थितयावद्रूपविशिष्टव्यक्तिवाचित्वं जैमिनेः तदुक्तं 'यथोक्तं वा सन्निधाना'दिति । आह चैतद्व्याख्यावसरे भाष्यकारः 'लिङ्गादिसर्वविशेषणविशिष्टरूपेण सन्निहिते प्रयुज्यते सन्निधानेनैकेन विशेषणविशिष्टां व्यक्तिमभिवदितुं शक्नोतीति । व्याख्यातं चैतत्तुप्टीकायां 'जातिलिङ्गसंख्याविशेषणविशिष्टां सन्निहितव्यक्तिमभिदधीति सर्वनामशब्दोरूपेण स्वसामर्थ्येन यद्यत्स-

फलाकाङ्क्षाया अभावात्पशुकाममिदं न फलसमर्पकं, किं तु अग्नीषोमीयपश्वर्जनाङ्गतया प्राप्तकामनानुवादः तथा च न वाक्यभेदः इति चेत्। न। तथापि दै-

---

न्निधानं विशिष्टं तत्तत्सर्वमभिदधाति सर्वनामशब्दास्तस्मात्सन्निधानमेषां सामान्यं निमित्तमिति सर्वनाम्नां सन्निधिवाचित्वे जातिवाचित्वे वा सर्वमेतदलग्नकं स्यात् ततिसद्धं तच्छब्दाभिहितदध्यादिलक्षितदेवताभिप्रायमेकवचनम्। तदितीति। नच पाशाधिकरणन्यायेन वचनस्यान्यसंख्येष्वन्वयवजात्याद्यभिप्रायेण नयनसम्भवेपि मेध्यामाभिग्वमर्वृतिन्यायेन नान्यलिङ्गेऽन्यलिङ्ग शब्दप्रयोगसम्भवः इति शङ्क्यं 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मित्यनपुंसकेपि नपुंसकशब्दप्रयोगस्यानुशासनसिद्धत्वात् तस्मादनेकद्रव्यनिरूपितानेकदेवतासम्बन्धैरनेकयागकल्पनावश्यम्भावाद्यागस्येत्येकवचनमेकसमुदायाभिप्रायेण मूलेनेयमित्याहुः।

प्रकृतयागाश्रितस्य चित्रापदोपात्तगुणस्य पशुफले विधिनिरासार्थश्च। गुणसम्बन्धेचेति। तदा च वाक्यभेदोनामाश्रयसमर्पकत्वाभिमतप्रकृतवाक्येन साकमसम्बन्धः नहि दध्यादिद्रव्यके यागे स्त्रीत्वं तदाक्षिप्तं वा प्राणिद्रव्यं कारकीभवितुमलं प्राणिगतजातिविशेषस्य तदुचितेतिकर्त्तव्यताविशेषस्य च लाभसम्भवात उत्पत्तिवेलायामैष्टिकविध्यन्तेन निराकाङ्क्षस्य यागस्य काम्यगुणानुरोधेनापरविध्यन्तानाक्षेपकत्वात् गुणस्य च दर्वीहोमवद्यागसादृश्यमभजमानस्य संस्थादिकाम्यगुणवदाश्रयधर्मग्राहिताया एव वक्तुमौचित्यादित्याशयः। तथापीति। वाक्यभेदे हि विधेयतावच्छेदकरूपभेद एव तन्त्रं, नानेकपदोपात्तत्वमपि अन्तर्वेद्याद्यनेकपदलक्षितैकरूपावच्छिन्नदेशविधानेन वाक्यभेदपरिहारात्। एकभावनाविशेषणत्वेनानेककारकाणामिवैककारकविशेषणत्वेनानेकस्य

क्षानुवादेन चित्रत्वस्त्रीत्वविधाने वाक्यभेदात् विशिष्ट कारकविधानेऽपि गौरवलक्षणो वाक्यभेद एव, कारक-

---

प्रातिपदिकार्थस्यापि विधौ विधिव्यापारनानात्वस्यापरिहार्यत्वादिति भावः । उक्तवाक्यभेदानभ्युपगमे त्वाह । विशिष्टेति । तत्त्वतः कारकस्येतिविधानमित्यनन्तरमनुपपन्नमिति शेषः । प्रथमान्तेनानुपपत्तेरित्यस्यानन्वयात् । बाधोपपत्तिरिति । अन्यथा चित्रत्वविधेरानर्थक्यापातादित्याशयः । ननु स्त्रीलिङ्गानुवादगृहीततात्पर्यकोपपत्तिरंवोद्देश्यतया मेषीयागसमर्पकोभवतु ततश्च नैकप्रसरताभङ्ग इत्याशङ्क्याह । मेषीति । भवतु तर्हि प्रकृतयागीयनिर्देशलब्धस्त्रीत्वविधानानुवादेन पक्वापक्वत्वरूपचित्रत्वविधानमितिशङ्कानिरासे हेतुद्वयसमुच्चयार्थश्च । अथ फलपदानर्थक्यभयान्मेषीप्रकृतधानां वा समाश्रितस्य चित्रत्वस्य फले विधिरस्त्वत आह । उभयेति । नहि मेषीयागस्य प्रकरणमस्ति नापि विशिष्य धानानां, अस्तदाश्रितत्वमप्यवश्यं विधेयमित्याशयः । सर्वेष्वपि गुणविधिपक्षेषु साधारण्येन गौरवसहितं वाक्यभेदं दूषणमाह । प्रकृतस्येत्यादिना । वाक्यभेदश्चयतः प्राक्तोपीति शेषः । मात्रकरणादिति । फलसम्बन्धकरणं सम्बन्धान्तराकरणं च हेतू विवक्षितौ । द्वितीयमुपपादयति प्रकृतायाइति । यदि समुच्चितावग्निप्रजापती होमानुवादेन विधीयेते समुच्चितयोरेव तयोर्देवतात्वं स्यादग्नीषोमयोरिवात आह अग्निप्रजापत्योश्चेति ।

ननुकिमिदं देवतात्वं ? कश्च तदाश्रयः ? कानि तत्र प्रमाणानि कथं च तेषां बलाबलमिति ? न तावत् त्यज्यमानद्रव्योद्देश्यत्वं देवतात्वं आग्नेयपुरोडाशत्यागसमये प्रमादादुद्देश्यतां गतस्येन्द्रादर्देवतात्वप्रसङ्गात् । न च विहितत्वविशेषणेन तत्परिहारः सान्नाय्ययागाङ्गत्वेनेन्द्रादेरपि विहितत्वात् । अथ यस्मिन् यागे योद्देश्यत्वेन

स्यापि प्राप्तत्वात् विशिष्टविधानानुपपत्तेश्च। पशुका-
विहिता सा तस्य देवतेति वाच्यं, तथा सति यागस्य देवताधी-
ननिरूपणत्वादन्योन्याश्रयः ज्योतिष्टोमे चैंद्रवायवादीनां अदेवता-
त्वापातः यागं प्रत्युद्देश्यत्वेन तासां विध्यभावात्। अथ यत्कर्मा-
ङ्गभूतद्रव्यान्वयिव्यापारोद्देश्यत्वेन या विहिता सा तस्य देवते-
ति विवक्ष्यते सोमदर्शादौ तादृशव्यापारो ग्रहणनिर्वापादि, द्रव्यसं-
स्कारहीने दर्विहोमादौ त्याग एव, यागाघटितलक्षणत्वाच्च देवताया
नान्योन्याश्रय इति चेत् न, वेदविदे गां दद्यादितिदाने वेदविदो
देवतात्वापातात्। अथ प्रतिग्रहशून्यत्वेनोक्तलक्षणं विशेषणीयं उक्तं
हि यजतिचोदनाद्रव्यदेवताक्रियं समुदायगतार्थत्वादितिसूत्रे मिश्रै
स्तद्घटितं देवतालक्षणमिति चेत्। 'न विद्यया केवलया तपसा वापि
पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तित' मित्येवंलक्षण-
स्य पात्रस्य विशिष्टदेशकालसान्निध्यासन्निधौ 'गोभूतिलहिरण्यादि
पात्रे दातव्यमर्चितम्। नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छ-
ते'ति अपात्रे दाननिषेधात् स्वोद्देशेन त्यक्तं कालान्तरादौ स्व-
स्माअर्पणमपि येन पात्रेण 'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जये'दि-
ति निषेधान्न स्वीक्रियते तस्मिन्नतिव्याप्तेः। तद्देवतैवेति चेत्?
तथा सति 'न देवताग्निशब्दक्रिय'मितिन्यायेन तत्प्रतिनिधिभूत-
ब्राह्मणान्तरस्वीकारासम्भवापत्तिः। अथ विधिगतशब्दाविनाभूतो-
द्देश्यकत्वं देवतात्वं अस्ति च तदग्न्यादिषु विधिगताग्न्यादिपर्याय-
वह्न्यादिशब्दैरुद्देशासम्भवात्, नास्ति च सम्प्रदाने उदाहृतश्रुति-
विधिगतपात्रादिशब्देन तस्योद्देशनियमाभावादित्युच्यते तथासति
मान्त्रवर्णिकदेवतास्वव्याप्तिः ब्राह्मणाम्नानशब्देन तासामुद्देशनि-
यमाभावात्। अथ मन्त्रवर्णानुमितविधिमादाय तास्वपि लक्षणं
नीयते तथासति येषु दानेषु पात्रस्य नामगोत्रादिशब्दैरुद्देशनियम-
स्मृतिरस्ति यथोदाजहार हेमाद्रिः 'नामगोत्रे तु सङ्कीर्त्य सम्प्रदानस्य

चात्मनः। सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुंस्त्वम्'मिति तथाऽनुमितमदोगोत्रायामुष्म इति पात्रमुद्दिश्य त्यजेदितिविधिमादाय तत्सम्प्रदानेऽव्रतिव्याप्तिः। येन चैत्रादिशब्देनोद्देशस्तस्य नैव विधिगतत्वमिति चेत्, न। तादृशशब्दसङ्केतार्थादिःशब्दस्य विधिगतत्वेन तादृशशब्दस्य विधिगतत्वात् अत एव 'अनाम्नातेष्वमन्त्रत्व'मित्यधिकरणे सूक्तवाकगतयजमाननाम्नोऽस्त्येव मन्त्रत्वं असावसाविति तस्याम्नातत्वादित्युक्तं वार्त्तिके । अन्यथा स्वास्थानिन्याववाहने निमित्ते अमुष्मैस्वाहेति जुहुयादितिविहितहोमोद्देश्यैन्द्रादेरदेवतात्वापत्तिः तद्वाचकेन्द्रादिशब्दस्य विधिगतत्वाभावात्। अथ विधिगतशब्दोद्देश्यत्वे सति द्युलोकस्थत्वे सति देवतात्वं न च सम्प्रदानभूते ब्राह्मणे तदस्तीति चेत् न, पित्रादीनां श्राद्धीयदेवतात्वाभावापत्तेः तेषां सर्वेषां द्युलोकवासस्य श्राद्धीयदेवतात्वप्रतिपत्तिकालीनत्वाभ्युपगमे गयाश्राद्धादेर्द्युलोकप्राप्तिफलकत्वानुपपत्तेः। अथ द्युलोकस्थशब्देनामानुषत्वं विवक्षितं ? तथापि सम्भवन्मानुषत्त्वेषु पित्रादिष्वदेवतात्वापत्तिः। नच सपिण्डीकरणात् प्राक्प्रेतावस्थया स्थितानां तदन्तश्राद्धैर्वस्वादिभावश्रवणान्नैव केषामपि मानुषत्वप्राप्तिरिति शङ्क्यं, विचित्रकर्मणां प्राणिनां नियतावस्थानुपपत्तेः तथात्वेवा पित्राद्युद्देशेन पुत्रादिदत्तान्नादेर्विविधपरिणामप्रतिपादकस्य 'पानं भवति यक्षत्वे राक्षसत्त्वे तथामिषम्। दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम्। मानुषत्वेऽन्नपानादि नानाभोगरसो भवे,दिति मात्स्यवचसोऽनुपपत्तिः नियतावस्थाश्रवणस्य तु तच्छ्राद्धगतनियतोद्देशविधिशेषत्वेनाप्युपपत्तिः। अथ मत्कर्तृकोत्सर्गोद्देश्योयमिति प्रत्यक्षायोग्यत्वं तेन शब्देन विवक्षितं अस्ति च तत्समस्तपित्रादिषु, नास्ति च पात्रेषु ब्राह्मणेष्विति चेत् ? न, अश्वमेधे 'दद्भ्यः स्वाहाहनूभ्यांस्वाहा'इत्यादिमन्त्रैः क्रियमाणहोमेषु अश्वीयदंतहन्वादेरदेवतात्वापत्तेः। अथोच्येत नैव श्राद्धे कर्त्तुः पित्रादीनां देवतात्वं, किन्तु वसुरुद्रादित्यानां

'वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः' इति, याज्ञवल्क्योक्तदन्तहन्त्रादिशब्दैश्च तदधिष्ठातॄणां द्युलोकस्थानामेव देवतात्वं विवक्षितं, तेषां च प्रसिद्धमेव द्युलोकस्थत्वादीतियथाश्रुतस्यैव तस्य लक्षणमवेशे नानुपपत्तिरिति । आस्तामेवं, सपिण्डीकरणोत्तरश्राद्धेषु पार्वणदेवताविषयत्वादुक्तवचसां, तत्पूर्वभाविषु तु कर्तुः पित्रादीनां देवतात्वं विना का गतिः ।

स्यादेतत् अस्ति तावदिन्द्रादिभ्यः पितॄणां स्वोद्देश्यकर्मजन्योत्तमलोकप्राप्त्याख्यफलभाक्त्वेन वैलक्षण्यं रात्रिसत्रन्यायेन जातेष्टौ पुत्रगामिफलत्वस्येव श्राद्धेपितृगामिफलत्वस्याऽवश्यंभावात् श्राद्धे च हविर्विशेषेण पितॄणां तृप्त्यानन्त्यं श्रूयते देशविशेषे कालविशेषे दत्तेन हविःसामान्येनापि, तद्यथा—

'खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।
लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च ॥
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते' ।
इति । तत्तद्धविःस्वीकर्तृत्वात्तदुद्देश्यकोत्सर्गस्य च
'यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते' इति ।

तत्तद्धविःस्वीकारप्रयुक्तविचित्रफलस्य पित्राश्रितत्वनिर्वाहाय च पितॄणां हविःस्वीकारोऽवश्यं वक्तव्यः ततश्चपितॄणां हविःस्वीकर्तृत्वात्तदुद्देश्यकोत्सर्गस्य च यद्ददातिगयास्थ इतिविधौ ददातिना निर्देशान्न पितॄणां देवतात्वं, अस्ति च निषेधेपि ददातिना तन्निर्देशः ।

'न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्रेभ्यस्तृप्तिरासां यतः स्मृतेति' ।

अत्र च सपत्नीकानां पित्रादीनां श्राद्धीयदेवतात्वविवक्षया पृथक्कर्तृत्वमात्रं निषिध्यते शूलपाण्युक्तरीत्या योषिदुद्देश्यकत्वमात्रं वे-

सन्यदेतत् । श्राद्धीयोत्सर्गस्य ददातिना निर्देशाच्छ्राद्धस्य दानत्वं तु निर्णीयते ।

यत्तु तेनैवोक्तं पितॄणां देवतात्वस्यापस्तम्बेन निर्देशादिन्द्रादिवद्धविःस्वीकर्तृत्वाच्च पित्रपेक्षया श्राद्धस्य यागत्वं ब्राह्मणश्चाहवनीयार्थ इति ब्राह्मणगतस्वामित्वजनकत्वप्रतीतेर्ब्राह्मणापेक्षया तस्यैव दानत्वं भ्रान्तेर्विशेष्यप्रकारापेक्षया प्रमात्वाप्रमात्ववच्च प्रतियोगिभेदापेक्षया नोभयरूपत्वं विरुद्धमिति ।

तत्तुच्छम् । अन्वाहार्यदानविधिवाक्यशेषे ब्राह्मणानां देवतात्वनिर्देशवदुपचारेण पितॄणां तन्निर्देशसम्भवात् इन्द्रादिवैलक्षण्यस्य चोपपादितत्वात् आहवनीयकार्यापत्तिनिर्देशेन चाहवनीयाधिकरणकप्रक्षेपस्येव ब्राह्मणभोजनस्य प्रतिपत्तित्वप्रतीतेर्नब्राह्मणस्वत्वापादनं शास्त्रीयं, नतरां श्राद्धस्य ब्राह्मणसम्प्रदानकदानत्वं, अतः पितृसम्प्रदानकदानात्मकमेव श्राद्धमिति कथं पितृष्वव्याप्तिर्देवतालक्षणस्येति ।

नैतत् । दानात्मकश्राद्धस्य ब्राह्मणसम्प्रदानकदानपर्यन्तत्वनियमे सति विमुक्तपितृकेण श्राद्धकरणानुपपत्तेः । न चाकर्त्तव्यमेव तेन तदिति वाच्यम् । नित्यत्वश्रवणात् तस्मात्पितृदैवत्ययागात्मकमेव श्राद्धमितिपितृष्वव्याप्तेर्देवतालक्षणासम्भवः, न तावत्प्रोक्षणं प्रति व्रीहीणामिवेप्सिततमत्वेन सम्भवः क्वचित्पशुपरोडाशादिदेवतायां तत्सम्भवेपि सर्वयागीयदेवतासु तदसम्भवात् । किञ्चोक्तसर्वलक्षणेषु प्रविष्टोद्देश्यानिर्वचनादेव तासु तदसम्भवात् । नच स्ववाचकशब्देन निर्देश एवोद्देश इति वाच्यम् । इदमादिशब्दानिर्दिष्टद्रव्यादेरप्युद्देश्यत्वापत्तेः । नापि पर्वतोवह्निमानित्यत्र पर्वतस्येव सिद्धवन्निर्देशाभिव्यङ्ग्योविषयताविशेषः अग्नय इदं न ममेतित्यागवाक्यस्येतरपदार्थान्प्रति धर्मित्वेन प्रत्यक्षसिद्धत्वेन द्रव्यस्यैव पर्वततुल्यतया तदापत्तेः । नापि चतुर्थ्यन्तपदनिर्देश्यत्वमुद्देशः धृत्यादिदैवत्यहोमे तेषामदेवतात्वापत्तेः

यथोदाजहार छन्दोगपरिशिष्टवचः शूलपाणिः 'धृतिहोमे न प्रयुञ्ज्याद्धोनामसु तथाष्टसु चतुर्थ'मिति। ननु नैतद्वचस्त्यागकालोच्चार्यचतुर्थ्या निषेधकं तथाहि धृतिहोमस्तावद्गोभिलगृह्यसूत्रे विवाहप्रकरणे श्रूयते तच्च 'उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टाविह धृतिरिति गोनामभि'र्होमोपि तत्रैवाश्वयुजीकर्मणि श्रूयते गोनामभिश्च पृथक्काम्यासीत्येवं प्रभृतिभिरिति एतत्सूत्रद्वयव्याख्यानावसरे भाष्यकारेण नारायणेनोभयेषां मन्त्राणां यथाम्नातानामेव स्वाहान्तनामभिश्च प्रथमहोमे प्रयोगो न तन्मन्त्रगतानां धृत्यादीनां काम्यादीनां चतुर्थ्यंतत्वमित्युपन्यस्य तत्र मानत्वेनैतच्छन्दोगवच उदाहृतं तथा छन्दोगपरिशिष्टभाष्यकर्तृभिराशादित्यप्रभृतिभिरपि मन्त्रगतचतुर्थीनिषेधकत्वेन एतद्वचो व्याख्यातम्, अङ्गभूतमन्त्रगतचतुर्थ्या निषेधकत्वेनोपपन्नस्य वचसश्च न प्रधानशरीरप्रविष्टतन्निषेधकत्वमुचितमितिचेन्न। 'चित्तं च चितिश्चे'त्यादिष्विव विनैव शास्त्रेण न्यायतश्चतुर्थीनिषेधस्य मन्त्रेषु प्राप्तिसम्भवात्। नच देवतायाश्चतुर्थ्यंतपदनिर्देशे किञ्चित् प्रमाणं स्पष्टस्य तत्कर्त्तव्यताबोधकवचसोऽनुपलम्भात्। नचावश्यवक्तव्ये देवतानाम्नि योग्यताबलाच्चतुर्थ्यन्तत्वलाभ इति वाच्यम्। देवतात्वे ज्ञाप्ये तद्धितमपेक्ष्य चतुर्थ्या दौर्बल्यप्रयोजकन्यायेन देवतापदोपरि चतुर्थीनिर्देशानर्हत्वात् अग्नय इदं न ममेत्यपि यागवाक्यप्रयोगसम्भवाच्च, नापि तस्येदमित्यारोपविषयत्वमुद्देश्यत्वमिति शूलपाण्युक्तिः सङ्गच्छते द्रव्यस्यापि तद्विषयत्वे नोद्देश्यत्वापत्तेः अग्नेरिदं न ममेतित्यागवाक्यप्रसङ्गाच्च, अत उद्देशानिर्वचनादपि देवतानिर्वचनासम्भवः। अथ देवतात्वमग्नीन्द्रादिवृत्तिजातिविशेष इत्युच्यते ? तथासति यागचोदनया द्रव्याणामिव देवतानामप्यनियताक्षेपे प्राप्ते व्रीह्यादेरिवाग्न्यादिचोदनया नियताग्न्यादेरपचारे द्रव्यान्तराक्षेपेण द्रव्यप्रतिनिधिवद्देवतान्तराक्षेपेण देवताप्रतिनिधिस्वीकारापत्तिः। यदि

हि या यत्रोद्देश्यत्वेन विहिता सा तत्र देवतोच्येत ततोनैवान्यस्य देवतात्वमितिप्रतिनिधिर्वारयितुं शक्यः । किंच हविषामिव मन्त्रेपि देवतातद्धितविधानाद्धविर्निरूपितमिव मन्त्रनिरूपितमपि देवतात्वं जात्यात्मकं वाच्यं तत्र मन्त्रनिरूपिताद्धविर्निरूपितस्याभेदे मन्त्रगोचरस्या'ऽऽग्नेय्याग्नीध्र'मित्यादितद्धितस्य श्रवणादिव 'सौर्यंचरु'मित्यादितद्धितश्रवणादपि न यागकल्पनापत्तिः भेदे समानाधिकरणजात्योर्व्याप्यव्यापकभावोऽवश्यं वाच्यः न चासौ सम्भवति, तूष्णींहोमीयहविर्देवतायां मन्त्रदेवतात्वाभावात् स्तोत्रादिमन्त्रदेवतायां हविर्देवतात्वाभावादिति न जात्यात्मकमपि देवतात्वं इति देवतालक्षणाक्षेपः ।

तदाश्रयोप्यर्थोवा ? स्याच्छब्दोवा ? तत्रकेचित् प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमं प्रत्ययत्वसामान्येन प्राप्तमतिक्रम्य ताद्धितचतुर्थीभ्यां प्रकृतिशब्दान्वितस्वार्थाभिधानं यत्स्वीकार्यं तत् प्रकृत्यर्थाभावात् ? उतप्रकृत्यर्थस्य देवतात्वान्वयानर्हत्वाद्वा ? नाद्यः वायव्याग्नेयसौर्यादिकतिपयदेवतापदप्रकृत्यर्थानां प्रत्यक्षादिलौकिकमानासिद्धत्वात् ऐन्द्रादिप्रकृत्यर्थानामपि स्वर्गवदर्थवादादिसिद्धत्वात्, विध्यपेक्षिते स्वर्गरूपे सम्भवत्यर्थवादादिप्रामाण्यं न तु विध्यनपेक्षितेन्द्रादिस्वरूप इति चेत् ? कथमनपेक्षितमेतद्यावता प्रत्ययान्तरवत् प्रकृत्यर्थान्वितत्वेन तद्धितादिसमर्पितस्य देवताकारकस्य विधाने प्रवर्त्तमानो विधि स्तन्निर्वाहाय प्रार्थयत एव प्रकृत्यर्थविशेषरूपं, स्फुटं चेन्द्रत्वादिफलार्थशताश्वमेधादिकर्मविधीनामिन्द्रादिस्वरूपापेक्षत्वम् । किञ्च 'इद्राय जुष्टं''इन्द्र मावह'इन्द्रस्य प्रियाधामान्ययाडिन्द्रइन्दइन्द्रस्याहमुज्जितिदेवताशब्दात्सुविभक्तयस्तावच्छ्रूयन्ते, नचैता इन्द्रशब्दस्याप्रातिपदिकत्वे सङ्गच्छन्ते । नचार्थशून्यस्य प्रातिपदिकत्वसम्भवः 'अर्थवदधातुरप्रत्ययः प्रातिपदिक'मिति पाणिनीयोक्तेः, अतोपि नेन्द्रादिशब्दानामर्थशून्यत्वम् । न द्वितीयः यदि हि त्याग-

कालोच्चार्यत्वादिलक्षणं देवतात्वं शब्दसमवायार्हं तद्धितवाच्यत्वेन निर्णीतं स्यात् ततः प्रकृत्यर्थस्य तदन्वयानर्हत्वं सिध्येत् । नचैवं वृद्धव्यवहारादिना निर्णीतमस्ति । अथ शब्दसमवायिदेवतात्वाभिधानानुरोधेन देवतात्वस्य तादृक्लक्षणत्वमुच्यते तदा चक्रकापत्तिः । शब्दसमवायिदेवतात्वाभिधानमिति यद्यपि लोके तद्धितार्थत्वेन शब्दसमवायिदेवतात्वं प्रसिद्धं भवेत् तथा 'वायुर्वैक्षेपिष्ठादेवते'त्यादिवाक्यशेषाद्वायव्यादिकतिपयतद्धितैस्तावदर्थगतमेव देवतात्वमभिधेयं यैव हि वायव्यतद्धितसमर्पितदेवता विधिविहिता सैवेह वाक्यशेषे क्षिप्रगामित्वेन गुणेन स्तूयत इत्यविवादम् । न च शब्दस्य प्रसिद्धोयं गुणः स्तुत्यै निर्देष्टुं शक्यते अतो यथा 'ऽऽदित्यः प्रायणीयः पयसि चरु'रित्यत्रादितिमोदनेनेतिवाक्यशेषाच्चरुशब्दस्य लोकप्रसिद्धस्थाल्यार्थत्वपरित्यागेनौदनविषयत्वे निर्णीते यत्रापि 'सौर्यं चरु'मित्यादौ न वाक्यशेषस्तत्रापि वेदावधृतशक्त्यनुरोधेनौदनवाचित्वमेवाश्रीयते, तथा वायव्यतद्धितस्य वाक्यशेषादर्थगतदेवतात्वाभिधायित्वे निर्णीते यत्रापि सौर्यादौ नासौ, तत्रापि तद्गतमभिधायित्वमेव स्वीकार्यं, एवं च सूर्यगतत्वेन प्रसिद्धगुणप्रकाशकोयाज्यादिमन्त्रगतो'ज्योतिष्कृदसिविश्वमाभासि'इत्यादौ पदनिचयः सङ्गच्छते, तद्धितोक्तन्यायेन चतुर्थीमन्त्रप्रमाणकमपि देवतात्वमर्थगाम्येव, कथमन्यथा 'एषवैहविर्यजते'इत्यादिवाक्यशेषमन्त्रवर्णाः सङ्गच्छेरन्,तस्मादर्थानामेव देवतात्वम्,अतएव तिर्यगधिकरणे देवानामनधिकारासिध्यै भाष्यकारोक्तहेतुः सङ्गच्छते 'न देवानां देवतान्तराभावात्'इति, शब्दस्य देवतात्वे तदुच्चारणस्यास्माभिरिवेन्द्रादिभिरपि कर्त्तुं शक्यत्वान्नानेन हेतुना तेषामनधिकारः सिध्येत् निरस्तं चैतद्भाष्यबलेन शब्ददेवतामतं मिश्रैः । अथार्थस्य देवतात्वे येन केनापि शब्देनोद्दिश्यमानस्य देवतात्वापत्तिः ततश्च 'विधिशब्दस्य मन्त्रत्वे' इतिन्यायविरोधः । नच शब्देनोद्देशं विना देवतात्वाऽयो-

गाच्छब्दविशेषाकाङ्क्षायां श्रुतशब्दं विधिरेव नियमयतीतिवाच्यम्। तस्यार्थं देवतात्वेन विधाय तमपि विदधतोविधेयावृत्तिप्रसङ्गात् अतः शब्दनियममभ्युपगच्छताऽनिच्छताप्यर्थदेवताविध्यभावोभ्युपेय इति चेन्न। अमन्त्रकपदार्थस्य प्रयोगकाले स्मारकाकाङ्क्षायां तद्विधानेन चरितार्थस्यापि ब्राह्मणस्या ऽध्ययनविधिबलात्स्मारकत्वनियमाद्देवतात्वेन विहितार्थस्य प्रयोगकालीनोद्देशोपयोगिशब्दापेक्षायामर्थसमर्पणेन चरितार्थस्यापि शब्दस्य तद्बलादेव नियमसम्भवादित्याहुः।

तन्न, देवतात्वेन विहितस्यार्थस्य शब्दाकाङ्क्षायां निराकाङ्क्षस्यापि शब्दस्य केनापि विधिना नियमाङ्गीकारे यत्र 'अग्नये-पावकाय'इत्यादौ पर्यायाभ्यां देवतासमर्पणमस्ति तत्रैकेनैव शब्देनार्थस्य नैराकाङ्क्ष्योपपत्तौ सत्यामेकपदार्थे लिङ्गविनियुक्तानेकमन्त्रवत्पर्याययोर्विकल्पापत्तेः। न चेष्टापत्तिः 'प्राकृतस्य गुणश्रुतौ सगुणनाभिधानं स्यात्'इति दशमाधिकरणविरोधात् तत्र ह्यतान्निरूपितं ईदृशस्थले समुच्चिताभ्यां पर्यायाभ्यां देवतोद्देशः कार्यइति।

अन्ये त्वाहुः? सत्यपीन्द्रादिशब्दार्थसत्वे तद्वाचिशब्दोच्चारणव्यतिरेकेण तद्गोचरपुरुषव्यापारासम्भवात् स्वव्यापारे पुरुषोनियुज्यते इति न्यायाच्छब्दोच्चारणमेव विधिविधेयमवश्यं वाच्यं अतएव 'प्राकृतस्य गुणश्रुता'वित्यधिकरण एव भाष्यकारेणोक्तं 'देवताशब्दस्य हविषश्च सम्बन्धः साक्षादुच्यते' इति। 'विधिशब्दस्य मन्त्रत्व' इत्यधिकरणे च मिश्रैरपि 'सर्वत्र देवताविधौ शब्द एव विधीयते नार्थ'इत्युक्तम्, नचाविहिता देवता भवति अतिप्रसङ्गात्। उक्तं च 'न देवताग्निशब्दाक्रिय' मित्यधिकरणे मिश्रैः 'या यदर्थं विहिता सा तस्यदेवता'इति। एवं चाविधेयार्थस्य तद्धिताद्यर्थस्य देवतान्वयबाधादाग्नेयादिपदप्रकृत्यंशेन लक्षणयोपस्थापितशब्दान्वितमेव देवतात्वं प्रसिद्धलक्षणं विलक्षणं वा तद्धितादिनाऽभिधेयं, अतएव

विधेस्ताद्धितप्रकृत्यर्थगतविशेषरूपानपेक्षत्वान्नार्थवादादेस्तत्र प्रामाण्यं, तदनपेक्षितेपि वस्तुनि मन्त्रार्थवादादेः प्रामाण्याभ्युपगमे नक्षत्रेष्टि-वाक्यशेषेभ्योऽग्न्यादिदैवत्यकर्मसु अग्न्यादीनामधिकारः स्यात्तस्य च शब्ददेवतात्वं विना ऽसम्भवादनिच्छतापि शब्दस्यैव देवता-त्वमभ्युपेयं तथाहि 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इत्यादिनक्षत्रेष्टिसमीपे श्रूयते 'अग्निर्वा अकामयत, अन्नादो देवानां स्यामिति, स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवप-त्'इति 'प्रजापतिः प्रजा असृजत'इत्युपक्रम्य 'स एतं प्रजापतये रोहिण्यै चरुं निरवपत्' इत्यादि अर्थस्य देवतात्वं स्वात्मानमुद्दिश्य स्वत्वत्यागं कृतवानिति बाधितं, शब्दस्य देवतात्वे तु सम्भवत्यग्ने-रप्यग्नये इति शब्दं समुच्चार्य त्यागकर्तृत्वम् ।

यत्तु यस्य कर्मणा भाव्यग्नित्वं लक्षणया स जीवविशेषः प्रथमान्ताग्निशब्देनोच्यते वर्त्तमानाग्निभावस्तु चतुर्थ्यन्ताग्निशब्दे-नेति वाक्यशेषबोधितस्याग्न्याद्यधिकारस्योपपादनम् ।

तन्न, वाक्यशेषगतमुख्याग्निशब्दे लक्षणैव दोषो वरं हि ततोजघन्ये चतुर्थ्यन्ते लक्षणाश्रयणम् । किञ्च 'रुद्रो वा अकामयत, पशुमान् स्यामिति स एनं रुद्रायार्द्रायै प्रैयङ्गवं चरुं पयसि निरवपत् विष्णुर्वा अकामयत पुण्यं श्लोकं शृण्वीयं न मा-पापी कीर्त्तिरागच्छेदिति स एतं विष्णवे श्रोणायै पुरोडाशं त्रिक-पालं निरवपत्'इति वाक्यशेषगतौ प्रथमान्तौ रुद्रविष्णुशब्दौ नोक्त-रीत्या लक्षणयापि नेतुं शक्यौ तयोरजीववचनत्वस्य नित्यसिद्धै-करूपार्थत्वस्य चेतिहासपुराणोपबृंहितानेकश्रुतिसिद्धत्वात्, कथं च 'ब्रह्म वा अकामयत ब्रह्मलोकमभिजयेयमिति तदेतं ब्रह्मणेऽभि-जिते चरुं निरवपत्'इति वाक्यशेषगतौ प्रथमान्तचतुर्थ्यन्तौ ब्रह्म-शब्दौ परब्रह्मवाचिनौ सन्तौ भिन्नार्थौ स्याताम् ।

यदपि मतं नक्षत्रेष्टिष्वेकैकस्मिन्यागे तत्तन्नक्षत्रस्य तदधिष्ठा-

तुश्च देवतयोः समुच्चयात् स्वस्वनक्षत्रसाधारणस्वत्वापादकं स्व-सहितनक्षत्रोद्देश्यकप्रसाधारणस्वत्वत्यागं कुर्वतामग्न्यादीनां स-म्भवत्येवाधिकार इति ।

तदपि तुच्छम् । यतो न ममेत्येतावन्मात्राकारबुद्ध्यात्मकं यादृशं दानशरीरे यागान्तरशरीरे प्रविष्टं क्रतुर्विशिष्यमाणाग्निस्वत्वनिवर्त्तकं साधारणस्वत्वान्तरानापादकं त्यागस्वरूपं तादृशमेव नक्षत्रेष्टियागशरीरप्रविष्टं स्वीक्रियते ? उत लोके क्वचित्प्रसिद्धं न ममेदं किन्तु तवापीत्याद्याकारबुद्ध्यात्मकम् ?, नाद्यः तादृशयागे स्वोद्देशस्य सर्वथा बाधात् । न द्वितीयः नक्षत्रेष्टिष्वीदृशत्यागस्यैवेदानीन्तनपुरुषैर-नुष्ठेयत्वापत्तेः । नचैकस्मिन्नेव शास्त्रे पुरुषभेदेन शास्त्रार्थभेदः एक-स्मिश्च पदे पदार्थभेदः सम्भवति । तस्माच्छब्दस्यैव देवतात्वम् ।

अथ नावमिकदेवताधिकरणन्यायेन समस्तनक्षत्रेष्टिवाक्यशेषाणां स्तुतिपरतया स्वार्थे प्रामाण्याभावान्निरवपदित्यादिसमस्तातिङ्क्ति-क्तीनां अविवक्षितार्थत्वं ? अतो न तेभ्योऽग्न्याद्यधिकारसिद्धिः नतरां शब्ददेवतात्वसिद्धिरित्युच्यते ? तर्हि विग्रहादिमदिन्द्रादिस्व-रूपप्रतिपादकानां मन्त्रार्थवादानां भवदुदाहृतानामर्थदेवतात्वसा-धकानां वाक्यशेषाणां मन्त्रगतसुब्विभक्तीनां च तेनैव न्यायेनावि-वक्षितार्थत्वान्नेन्द्राद्यर्थेनापि तद्देवतात्वमिति तत्ताद्विधिपर्यालोचन-यैव सुतरां शब्ददेवतात्वसिद्धिरिति ।

तदपि न, यतो यादृशं चतुर्थ्यन्तपदप्रतिपाद्यत्वप्रयोजकं देवता-त्वं प्रसिद्धं यदि तावत्तादृशमेव शब्दसमवाय्युच्येत ततो यथै-वाग्नेयसौर्यादितद्धितसमर्पिततत्तद्देवतात्वनिर्वाहायावश्यस्वीकर्त्तव्ये चतुर्थ्यन्तशब्दोच्चारणे वाक्यशेषादिना वचनविशेषे व्याकरणादिना प्रकृतिप्रत्ययविकारविशेषे प्रयोगयोग्यतामालोच्याग्नये सूर्यायेति-विशिष्टशब्दोच्चारणमेव विधिविषयत्वेनानुष्ठेयत्वेन च स्वीक्रियते तथैव लोकप्रसिद्धार्थविशेषगोचरशक्तीनामग्न्यादिशब्दानां शब्द-

वाचकत्वायोगात्स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इति न्यायमालोच्याग्निशब्दाय सूर्यशब्दायेत्येवशब्दोच्चारणं तत्वेन त्वभ्युपेयं स्यात् । अथ चतुर्थ्यंतत्त्वेन त्यागकालोच्चार्यत्वमेव देवतात्वं शब्दगतं तद्धितादिप्रतिपाद्यमित्युच्यते ? उच्यतां तथा सति त्यागकाले यद्यपि नानिष्टशब्दप्रयोगापत्तिः तद्धितप्रकृतिमात्रस्य त्यागकालीनचतुर्थ्यन्तपदोच्चारणे बाधकाभावात् । नापि देवताप्रकाशनार्थेष्वपि मारुत्वतेषु आवाहनादिनिगमेषु 'धान्यमसी'तिवदाम्नातैरग्न्यादिशब्दैरेव लक्षणया देवताभूतशब्दप्रकाशनौचित्यात् । तथापि सौर्यादिविकृतिगतेष्वावाहनादिनिगमेषु प्राकृतदेवतापदस्थानेऽवश्यकर्त्तव्ये वैकृतदेवताप्रकाशकपदप्रक्षेपे स्वायत्त इत्याद्युक्तन्यायात् सूर्यशब्दायेत्येवोहः प्रसज्येत न सूर्यायेति ।

ननु दशमे 'तथोत्तरस्यां ततोतत्प्रकृतित्वाद्' इत्यधिकरणे सौर्याङ्गभूतेषु निगमेषु सूर्यदेवताप्रकाशनायानियतशब्दोच्चारणं पूर्वपक्षीकृत्य न सौर्यविधिना त्यागवेलायामेव सूर्यशब्दो नियम्यते, किंतु कृत्स्ने प्रयोगे यावत्सु प्रदेशेषु देवताप्रकाशनायानियतशब्दोच्चारणमपेक्ष्यते तत्र सर्वत्रापि युगपदेकरूपसूर्यशब्दोच्चारणं नियम्यते कारकाणां भावनान्वयनियमेन देवतात्मककारकविशेषात्मनः शब्दस्यापि भावनान्वयनियमाद्वितभावनाया एव च प्रयोगत्वादिति सिद्धान्तितं, ततश्च कालादिवत् प्रयोगानुबन्धयङ्गत्वं देवताया यद्यपि नास्ति, तथापि त्यागे निगमेषु च शब्दैक्यनियमात् त्यागवेलायामप्रयुक्तस्य शब्दशब्दशिरस्कसूर्यशब्दस्यादित्यादिशब्दानामिव न निगमेषु प्रयोगापत्तिरिति । मैवम् । यद्यपि सर्वत्र सूर्यशब्दनियमेन तत्पर्याया निवर्त्तन्ते तथापि नास्यैकरूप्यमपि नियमगोचरः नहि त्यागवेलायां चतुर्थ्यन्तोऽसौ प्रयुक्त इति निगमेष्वपि तथैव नियम्यते अतो यथैव तत्तन्निगमकार्यभूतवाक्यार्थप्रतीत्यानुगुण्येन सूर्यशब्दस्यैव द्वितीयान्तषष्ठ्यन्तादिरूपेण नियमेन निगमेषु प्रयो-

गः सिध्यति तथैव यागीयदेवताभूतशब्दप्रकाशनात्मककार्यानुरोधेन शब्दशिरस्कस्यैव तस्य प्रयोगः सिध्येत् । किञ्च तत्प्रख्याधिकरणे 'इन्द्र ऊर्ध्वोऽध्वर' इति मन्त्रादाघारदेवतालाभ इत्युक्तम्। उपांशुयाजे च क्रमविनियुक्तमन्त्रवशाद् विष्ण्वादिदेवतालाभ इत्युक्तम्, द्वैतीयोपांशुयाजाधिकरणे च, शब्दस्यैव देवतात्वमिति मते च सर्वमेतदनङ्गतं स्यात्। यदि ह्याग्नेयादियागेष्विवाघारादिषु विधिबलाच्छब्ददेवतात्वमवधारितं स्यात् ततोऽवधारितदेवताप्रकाशनं विना मन्त्राणामङ्गत्वानुपपत्तेर्मन्त्रगतेन्द्रविष्ण्वादिसमिदादिशब्दैर्लक्षणया देवताभूतशब्दप्रकाशनं स्यात्। यदि चोत्तमप्रयाजयाज्यामन्त्रे सूक्तवाके चाज्यभागादियागान्तरीयदेवताप्रकाशनार्थत्वमहिम्नाऽग्न्यादिशब्दानां लक्षणया शब्दपरत्वनिर्णयवदिन्द्र ऊर्ध्व इत्यादिष्वाघारादिमन्त्रेषु इन्द्रादिशब्दानां शब्दपरत्वनिर्णयः स्यात् तत उत्तमप्रयाजप्रस्तरप्रहरणयोरिवाघारादिष्वपि शब्दानां देवतात्वमाक्षिप्याघारादिदेवताभूतशब्दप्रकाशनार्थास्तत्तन्मन्त्रा भवेयुः । नचान्यतरदपि सिद्धमस्ति । नच मन्त्राणां शब्दप्रकाशकत्वासिद्धौ मन्त्रप्रकाश्यत्वमहिम्ना शब्दानां देवतात्वसिद्धिः सम्भवति। अथाग्न्यादिशब्दवदिन्द्रादिशब्दार्थस्य लोकतोऽसिद्धत्वादर्थशून्यत्वमेवेन्द्रादिशब्दानां शब्दपरत्वनिर्णायकमित्युच्यते ? तन्न, इन्द्रादिलोकप्राप्तिफलककर्मविध्यपेक्षितसमर्पकवाक्यशेषेभ्यः स्वर्गवत्तदर्थसिद्धेः । नचात्रैवर्णिकानां इन्द्रादीनामुपनयनाभावेन कर्माधिकारबाधात्तद्बोधकतिङ्विभक्तीनां वाक्यशेषगतानामविवक्षितार्थत्वमिव कुतोपि हेतोरिन्द्रमिन्द्रस्येत्यादिसुब्विभक्तीनां अविवक्षितार्थत्वं सिद्धं येन ताभ्योऽप्युक्तन्यायेनेन्द्राद्यर्थत्वासिद्धिर्न स्यात् । किञ्च 'आग्नेयं चतुर्द्धा करोति' इति विहितचतुर्द्धाकरणं नाग्नीषोमीयैन्द्राग्नयोर्भवतीति तृतीये प्रथमचरणान्त्ये स्थापितं, शब्ददेवतामते तद्धितप्रकृत्याग्निशब्दस्येव तद्घटितशब्दान्तरस्यापि लक्षणासम्भवात्तयोरपि चतुर्द्धा-

करणं स्यात् ।

अथ स्वार्थवाचकत्वरूपः शक्यसम्बन्धो यं शब्दं व्याप्य वर्त्तते स एव शब्दो लक्षयितुमुचितः । नचाग्नीषोमीयादिशब्देऽग्निशब्दार्थवाचकत्वं व्याप्यवृत्तीत्युच्यते ? तर्ह्याग्नेययागीयदेवताभूतस्याग्नय इति शब्दस्यापि तद्धितप्रकृत्या लक्षणा न स्यात् चतुर्थ्यन्ते पदे प्रातिपदिकार्थवाचकताया व्याप्यवृत्तित्वसम्भवात्। अथोच्यते चतुर्थ्यन्तोच्चार्यत्वं लक्षणं देवतात्वं तद्धिताभिहितं न चतुर्थ्यन्तान्वयि, किन्तु प्रकृतिमात्रान्वयि, इति नाग्नेय इत्येतावतस्तद्धितप्रकृत्या लक्षणाप्रसक्तिरिति । तन्न । यदाकदाचिद्यत्किञ्चिद्यागकाले वा चतुर्थ्यंतोच्चारितस्य कस्यापि शब्दस्य देवतात्वापातात् । अथ यद्यागकाले चतुर्थ्यन्तोच्चार्यत्वेन योविधिनियतः शब्दः स तास्मिन् देवतेति शब्ददेवतावादिना विशिष्य देवतात्वं निरुच्यते ? तदा नेदृशदेवतात्वस्य तद्धितार्थत्वसम्भवः तद्धितार्थस्य विधिविषयत्वेन विधेस्तद्धितविषयतावच्छेदकत्वायोगात् । अथ यथा तृतीयाविभक्तिः पारार्थ्यमनभिदधानापि पारार्थ्यप्रतीतिपर्यवसायिप्रतीतिगोचरं साधनत्वमभिदधाना पारार्थ्ये प्रमाणमित्युच्यते, तथोक्तलक्षणं देवतात्वमनभिदधानोपि तद्धितस्तत्प्रतीतिपर्यवसायिप्रतीतिगोचरं त्यागकालीनं चतुर्थ्यंतोच्चारणविषयत्वमभिदधानोदेवतात्वे प्रमाणमिति वदसि ? तदा देवतात्वलक्षणे तद्धितार्थे चतुर्थ्यंतत्वप्रवेशोऽव्यर्थमेव स्वीकृतः स्यात् अप्रसङ्गातिप्रसङ्गनिवारणानुपयोगात् धृत्यादिहोमदेवतायामव्याप्तिफलकः परं देवतात्वलक्षणे तत्प्रवेशः स्यात् । अथ तद्धितार्थस्य चतुर्थ्यन्तत्वस्य विधिविषयभावोपि न स्यात् अतोविधिविषयत्वसिद्ध्यै तस्य तद्धितार्थत्वमावश्यकमितिचेत् ? कथमुपांशुयाजदेवताशब्दे चतुर्थ्यन्तत्वं विधिविषयः तदन्तशब्दोच्चारणपूर्वकस्वत्वत्यागात्मकयोगेन तदाक्षेप इति चेत् ? तद्धितस्थलेपि स केन वार्यते अतोऽन्यलभ्य-

त्वादपि न चतुर्थ्यन्तत्वस्य तद्धितार्थप्रवेशः । तर्ह्युच्चार्यत्वमेव तद्धितार्थः स्यात् त्यागकालोच्चार्यत्वस्याप्यन्यलभ्यत्वादिचेत् ? न, तावन्मात्रस्य तद्धितार्थत्वे सौर्यं चरुं वायव्यं श्वेतमित्यादौ द्वैतीयन्यायसिद्धाया यागकल्पनाया अनुत्थानापत्तेः । अथ तद्धिताभिहितं त्यागकालोच्चार्यत्वं विधिनियतशब्देनैवान्वेति तथासत्येव तद्धितस्योक्तलक्षणदेवतात्वप्रतीतिपर्यवसानसम्भवात् । विधिना चाग्निप्रातिपदिकमेव नियम्यते न चतुर्थी, उक्तलक्षणयागस्वरूपेणैव नियमेन तदाक्षेपात् अतोनाग्निशब्देन चतुर्थ्यंतलक्षणेत्युच्यते । तदप्यसत् । सामान्यापेक्षस्य चतुर्थ्यामिव प्रातिपदिकेपि तुल्यत्वात् अग्न्याद्याम्नातविशेषरूपेण प्रातिपादिकस्येवाग्नयेधिप्रस्त्वेत्याद्याम्नातैकवचनादिरूपेण चतुर्थ्या अपि नियम्यत्वात्, अन्यथा 'सौद्रं चरुं निर्वपेत् श्रीकाम' इति 'मरुद्भ्यः स्वतवत्भ्यः सप्तकपाल' मितिच विहितयागयोः श्रीया इतिस्वतवद्भ्य इति शब्दोच्चारणेनापि देवतोद्देशासिध्यापत्तेः । अत एव 'विधिशब्दस्य मन्त्रत्व' इत्यधिकरणे मिश्रैः शब्दनियमप्रदर्शनावसरेऽग्नयइति शब्दमुच्चार्य हविस्त्यजेदित्येव विध्यर्थोदर्शितो नतु चतुर्थ्यंतमग्निशब्दमुच्चार्येति, अतश्चतुर्थ्यंतस्य तद्धितार्थान्वियाप तद्धितप्रकृत्या स्वार्थवाचकत्वमव्याप्यवर्त्तिनमपि सम्बन्धं निमित्तीकृत्याग्नय इति शब्दो लक्षयितव्यः तद्वदग्नीषोमशब्देन्द्राग्नीशब्दावपि लक्षयितुं शक्याविति कथमग्नीषोमीयैन्द्राग्नयोर्न चतुर्द्धाकरणापत्तिः । अथाग्नेयशब्दस्याग्नीषोमीयप्रतिपादकत्वे सत्यपि यदाग्नेयोष्टाकपाल इति यत्र पुरोडाशे दृष्टप्रयोगत्वं तमेव चतुर्धाकरणवाक्ये ऽसौ वक्तुमर्हति नान्यमित्युच्यते ? ततः 'पुरोडाशं कूर्मं भूत्वा प्रसक्तमपश्यन्'इति तत्रैव पुरोडाशशब्दस्य दृष्टप्रयोगत्वात् 'पुरोडाशं चतुर्धा करोति' इतिविधिरपि स्वत एव आग्नेयमात्रविषयः स्यात् 'पुरोडाशंपर्यग्निकरोति'इत्यपि तथा । अथ दृष्टप्रयोगत्वरूपकानादरेणाविशेषप्रवृत्तप्रकरणाख्यप्र-

माणबलेन प्रकृताखिलपुरोडाशपरामर्शीपुरोडाशशब्दः? तुल्यमिदमा-ग्नेयशब्देपीति सुधिय एव विवेचयन्तु । किञ्च वाक्यशेषादि-ना भिन्नार्थत्वेनावगताभ्यां भिन्नविभक्त्यन्ताभ्यां शब्दाभ्यां प्राप्त-कर्मानुवादेन देवतासमर्पणे वाक्यभेद इति मीमांसकाः । यथाहुः

'अनेकपदसम्बद्धं यद्येकमपि कारकम् ।
तथापि तदनावृत्तैः प्रत्ययैर्न विधीयत' इति ।

अत एव यदग्नये च इत्यस्य तत्प्रख्यशास्त्रत्वं नेच्छन्ति मिश्राः । एकार्थत्वेन प्रसिद्धाभ्यां तु तादृशाभ्यां शब्दाभ्यां प्राप्तकर्मानुवा-देन तत्समर्पणेन वाक्यभेद इत्यपि मीमांसकप्रसिद्धिः अत एवा-भ्युदयेष्टिवाक्ये प्रकृतयागानुवादेनाग्नयेदात्र इति देवताविधौ ना-सावित्युक्तं षष्ठे । अर्थानपेक्षशब्दमात्रस्य देवतात्वे भिन्नविभक्त्यंत-योः शब्दयोर्विधेयत्वे तुल्ये कथमेवंव्यवस्था स्यात् । किञ्च तद्धि-तचतुर्थ्योर्मन्त्रापेक्षया प्राबल्यं वदद्भिरपि मीमांसकैरपि तद्धितच-तुर्थीभ्यां देवतात्वेन समर्पितस्य गुणस्य मन्त्रसमर्पितगुण्यपेक्षं देवतात्वं स्वीक्रियते। अत एवैन्द्रपीताधिकरणे 'पत्नीवन्तं गृह्णाति'इति विहितग्रहे 'अग्नायिपत्नीवान्त्सजूर्देवेनत्वष्ट्रासोमंपिब' इतिमन्त्रात् पत्नीवतोग्नेर्देवतात्वात्पत्नीवदग्निपीतस्येत्यूहः कार्योनतुत्वष्टृपीतस्येति पत्नीवतस्त्रिंशतं त्रींश्चदेवतानितिमन्त्राद्वा त्रयस्त्रिंशद्देवपीतस्येत्यपि न कार्य इत्युक्तं तार्तीयद्वितीयपादे ऽनैन्द्रप्रदानेषु भक्षमन्त्रस्योहेन प्रवृ-त्तिरिति कृत्वाचिन्तारूपयोः 'त्वष्टारन्तूपलक्षयेत्' 'पत्यानास्त्रिंशच्च-परार्थत्वात्' इत्यधिकरणयोः । अत एव च 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात्'इतिचातुर्थिकाधिकरणोदाहृतेनोत्तरार्द्धात्स्विष्टकृते समवद्यतीतिवचनेन विहिते स्विष्टकृद्यागे स्विष्टकृद्गुणविशिष्टस्या-ग्नेर्देवतात्वमभ्युपगम्यते कथमन्यथाऽग्नीवरुणौ स्विष्टकृतौ यजती तिआवभृथिके वचने किं दर्श इव सगुणयोस्तयोतर्देवतात्वमुत केवलयो स्तयोरितिदाशमिकोविचारः सङ्गच्छते, न स्वीक्रियते

च तद्धितचतुर्थीभ्यां देवतात्वेन समर्पितस्य गुणिनोमन्त्रसमर्पितगुणापेक्षं देवतात्वम्, अतएव सौर्यांगभूतनिर्वापमन्त्रे सूर्यायेत्येवोहमाहुर्नतु उदुत्यं जातवेदस'मितिमन्त्राज्जातवेदसे सूर्यायेति। अतएव च 'अग्नीषोमाभ्यामाज्यभागौ यजति' इतिविधिवशादाग्नेयस्य प्रथमाज्यभागस्य प्रथमप्रधानदेवतासंस्कारार्थत्वे प्राप्ते द्वितीयाज्यभागस्य देवतासंस्कारत्वासम्भवात् द्वन्द्वोपात्तयोश्च देवतयोरेकधातूपात्ताभ्यां यागाभ्यां विरुद्धान्वयद्वयासम्भवात्सम्भवदपि प्रथमाज्यभागस्य सन्निपातित्वं न स्वीकार्यमिति सिद्धान्तितं दशमे। अर्थस्य देवतात्वे गुणस्य गुणिनमिव गुणिनो गुणं प्रति नित्यसापेक्षत्वाभावात्सम्भवत्युक्तव्यवस्था, शब्दस्य देवतात्वे तु नैषा सिध्येत्।

किञ्चाग्नये पयसि देवतासामान्याद्बलीयसा द्रव्यसामान्येनैवातिदेश इति सिद्धान्तः तत्सिद्ध्यै द्रव्यस्य स्वरूपेण कर्मसमवायात् बलीयस्त्वं, देवतायास्तु शब्दद्वारेण कर्मणि समवायाद्दौर्बल्यमित्युक्तमष्टमे 'विप्रतिपत्तौ हविषा नियम्येते'त्यधिकरणे। शब्दस्यैव देवतात्वे तदसङ्गतं स्यात्। किं च 'अग्नये पवमानाये'त्यादावनेकशब्दोपात्तैकदेवत्ये यागे आग्नेयविध्यन्तस्यातिदेशः 'मारुतं सप्तकपाल'मित्यादौ चैकशब्दोपात्तानेकदैवत्ये कर्मणि चेन्द्राग्न्यादेरितिव्यवस्था तावन्मीमांसकानां याज्ञिकानां च प्रसिद्धा, शब्दस्य देवतात्वे तद्वैपरीत्यमवर्जनीयमापद्येत। नच शब्दविशिष्टस्यार्थस्यार्थविशिष्टस्य शब्दस्य वा देवतात्वमितिदेवतात्वाधिष्ठानशरीरेऽर्थस्यापि प्रवेशाङ्गीकारेणार्थभेदाद्देवताभेदसिद्धिरिति शङ्क्यं, 'एषा वा नाहिताग्नेरिष्टिर्यच्चतुर्होतार' इतिवचनेऽनेकवचनव्यक्त्याश्रयेण न चतुर्होतृहोमेष्वनाहिताऽग्न्यधिकारिकत्वानियमानियमपूर्वपक्षस्य षाष्ठनिराकरणन्यायेनानियतशास्त्रार्थस्यासम्भवात्। विशिष्टस्य देवतात्वे चार्थस्येव शब्दस्यापि देवतात्वाधिष्ठानशरीरप्रवेशावश्यंभावेनार्थवशाद्भे-

दादेरिव शब्दवशादभेदादेरप्यापत्तेः अर्थस्य देवत्वाधिष्ठानत्वसम्भवाङ्गीकारे लक्षणोपस्थाप्यशब्दस्य तदसम्भवापत्तेश्च ।

केचित्तु मारुतादितद्धितस्यैकशेषादुत्पत्तेरेकशेषविग्रहे प्रयुक्तानामेकशेषकाले लुप्तालुप्तानामनेकशब्दानां देवतात्वाङ्गीकारेण शक्यत एव शब्ददेवतात्ववादिनापि मारुतादेरनेकदैवत्यत्वं व्युत्पादयितुमित्याहुः ।

तच्चिन्त्यं अग्नीषोमीये चतुर्द्धाकरणापादनायोक्तन्यायेन यादृशचतुर्थ्यन्तस्योच्चारणं त्यागकाले विधिना विधेयं तादृशस्यैव देवतात्वं ताबच्छब्ददेवतावादिनाऽवश्यं वाच्यं, मारुतयागे च 'मरुतो यस्य हि क्षय' इत्यादिमन्त्रान्मरुद्भ्य इत्येव शब्दोच्चारणं विधेयं नान्यादृशम् । नचैकशेषविग्रहे मरुद्भ्य इति बहवः शब्दाः प्रयुक्ता नापि लुप्ताः ये त्वेकवचनान्तास्तत्र प्रयुक्ता लुप्ताश्च नैव तेषां चतुर्थीबहुवचनान्तवाद्यादिशब्ददेवतात्वमिति । नचैतादृशकुशकाशावलंबनं नापि भवताऽऽश्विनादियागेऽनेकदैवसत्वं वक्तुं युक्तं, शब्दवत् अश्विनावित्यादेः सन्निहितानेकाभिधायित्वनियमेन मरुच्चमरुच्चेतिवदश्वीचाश्वीचेतिविग्रहासम्भवेन द्वावित्यादिवदेकशेषित्वापुष्पवन्तादियुक्तं सम्भवात् ।

किञ्च नवमे 'पार्वणौ जुहोती'त्यत्र किं पर्वशब्दोपात्तकालदैवत्यावारादुपकारिणौ विहितौ होमौ विकृतिषु प्रवर्त्तेते उत पर्वशब्दोपात्तसमुदायदैवत्यौ सान्निपातिनौ संस्कार्यसमुदायाभावाद्विकृतिषु न प्रवर्त्तेते इति सन्दिह्य काले पर्वशब्दस्य मुख्यत्वात् कालदैवत्याविति पूर्वपक्षे प्राप्ते 'पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्याही'ति सूत्रेण समुदायवाचिपर्वशब्दसंयोगात्समुदायदैवत्यौ इति सिद्धान्तितम् । कालवाचित्वनिराकरणार्थे च सूत्रे नाप्रकरणत्वादित्यस्मिन्भाष्यकारेण समुदायप्रकरणाद्दानकर्मणः प्रीणातेश्च भावे व्युत्पन्नस्य पर्वशब्दस्य दानसमुदाये मुख्यत्वात्समु-

दायदैवत्यात्वेत्युक्का "मन्त्रवर्णाच्चे" तिसूत्रे फलप्रदत्वेन पूर्णमासादिप्रकाशकौ 'ऋषभं वाजिन' मित्यादिमन्त्रौ तत्रैव हेतुत्वेनोपन्यस्यासन्निहितमपि समुदायमुद्दिश्य विकृतौ पार्वणहोमः स्यादित्याशङ्क्य 'नाधिकारिकत्वा' दिति सूत्रे उक्तं आग्नेयादीनां चाधिकारः ते चात्र देवतास्तत्संस्काराथौं होमौ तदभावे न स्त' इति । उक्तं चास्मिन्नधिकरणे मिश्रैः 'तन्त्राभिहितत्वात्प्राकृतानां व्यासज्य देवतात्वं न प्रत्येक' मिति । पर्वशब्दस्य देवतात्वे समुदाहृतपूर्वपक्षसिद्धान्तौ द्वावप्यनुपपन्नौ स्यातां, शब्दाभीज्या हि तदा स्यान्न कालाभीज्या समुदायाभीज्या वा, तथोदाहृताः सूत्रप्रभृतिग्रन्था अप्यहृदयवाचो भवेयुः, एतदनन्तर 'मुभयोरविशेषाद्यदभीज्या वा तद्विषयौ' इतिसूत्रद्वयं भाष्यकारेणाधिकरणान्तरत्वेन व्याख्यातं, वार्त्तिककारैस्तु पूर्वाधिकरणप्रयोजनत्वेन व्याख्यातं, तदप्यसङ्गतं स्यात्, तथाहि कालदैवत्यत्व इव शब्ददैवत्यत्वेपि समुदायसंस्कारत्वाभावात् 'यत्समुदाये संस्कारकोयत्सतत्प्रयोगेस्या" दितिसिद्धान्तसूत्रमसङ्गतम् । यद्युच्यते शब्दस्य देवतात्वेपि समुदायवाचिता तेन नान्तरीयकतया जायमानस्मरणांशेन होमस्य समुदायसंस्कारत्वोपपत्तेरुपपन्नं तदिति ? तदा शब्दस्य वाचकत्वमिव कालस्यापि 'पौर्णमास्यां पौर्णमास्या यजेते' तिशास्त्रादङ्गत्वं समुदायसम्बन्धोस्तीति हास्तिज्ञाने हस्तिपकस्मरणवत् कालज्ञाने नान्तरीयकतया जायमानस्मरणांशेन होमयोः समुदायसंस्कारत्वोपपत्तेः पूर्वपक्षसूत्रमसङ्गमिति । किंच नवम एव 'नियमोवहुदेवते विकारात्स्याद्विकल्पो वाप्रकृतिव' दितिसूत्रद्वये 'सएताशुनासीरीयेभ्यः कामायालभत' इतिविहितयागेऽग्नीषोमीयपशोर्विकल्पेन प्राप्तस्य मेधपतिभ्यां मेधं मेधपतये मेध' मितिमन्त्रद्वयस्य यथाक्रमं तत्पूर्वाधिकरणे देवताधिष्ठानसङ्ख्याया देवताकारकसंख्यायाश्च प्रकाशकत्वेन सिद्धस्य मेधपतिबहुवचनान्तोहेनानूहेन च प्रयोग इति निरूपितं, शब्दस्य देवतात्वाधिष्ठानत्वे प्रकृताव-

ग्निरिति सोम इति च्रत्यपि अधिष्ठानभेदे निर्दिष्टविकृतावादित्य-शब्दस्यैवाधिष्ठानत्वेन कथं चोक्तोविकल्पः सङ्गच्छते । तस्मान्न शब्दस्याप्याश्रयत्वमिति देवतात्वाश्रयाक्षेपः ।

प्रमाणमपि तत्र न तावत्तद्धितः सम्भवति, नहि तस्य विधायकत्वेन प्रामाण्यं प्रवर्त्तनानभिधायित्वात्, नापि व्रीह्या-दिशब्दवद्विनियोज्याभिधायित्वेन कारकशक्त्यधिष्ठानत्वेन, व्रीह्यादि-तुल्यं विनियोज्यत्वं हि तद्धितप्रकृत्यर्थस्याग्न्यादेरेव वक्तुं शक्यं न तद्धितार्थस्य । अथ करणादिकारकाभिधायिविभक्तिवद्देवता-कारकाभिधायितद्धितस्य विनियोजकत्वमुच्यते ? तन्न, गोमानाध्व-र्यवमिति तद्धितान्तस्याग्नेयादिपदस्य

'सर्वत्र योगिकैः शब्दैर्द्रव्यमेवाभिधीयते'

इतिन्यायेन प्रकृत्यर्थविशिष्टद्रव्यमात्राभिधायित्वात् गोमानि-त्यादौ सम्बन्धसामान्यस्येवेह देवतात्वस्य संसर्गविधया भानमात्रेणानुशासनोपपत्तेः अग्नेः पुरोडाशेन सह देवतात्वेतरस-म्बन्धासम्भवेन शब्दजन्यविशिष्टप्रतीत्यनन्तरं सम्बन्धसामान्यस्येव देवतात्वस्याप्यन्यलभ्यत्वसम्भवात् । सत्यपि कारकाभिधायित्वे प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यत्र निष्ठाया इव तद्धितस्य द्र-व्योपसर्जनाक्रियानन्वायिकारकाभिधायित्वान्न विनियोजकसम्भवः, एवं चतुर्थ्या अपि विनियोजकत्वेन प्रामाण्ये वक्तव्ये तस्यददात्य-न्वितकारकाभिधायिस्वभावतया यागान्विततदभिधायित्वासम्भ-वाद्विनियोजकत्वासम्भवोदर्शयितव्यः । अथ लक्षणया यान्वयार्ह-कारकस्वरूपतयोपस्थाप्यत इत्युच्यते ? तर्हि यावच्छब्दानां शक्य-सम्बन्धिदेवतात्वं तावतामपि लक्षणयोपस्थाकत्वसम्भवात् 'तद्धि-तेन चतुर्थ्या वे'ति चतुर्थ्या एव विशिष्योपन्यासोनिस्तात्पर्यकः स्यात् । किञ्च 'यदग्नये च प्रजापतये चे'त्यादौ होमसमभिव्याहारा-च्चतुर्थ्या तदन्वयार्हकारकलक्षणा युक्ता अपनीतदेवताकप्रकृताया-

गानां देवतान्तरसम्बन्धविधिपरे 'ये मध्यमास्तानग्नये दात्र'इत्यादौ च, तथा आधानप्रकरणाम्नाते 'अग्नये पवमानायाष्टाकपालं निर्वपे' दित्यादौ तु न याग इति समभिव्यवहारो न वा प्रकृतयागग्रहणमिति कथं चतुर्थ्या देवतालक्षणत्वासिद्धिः। निर्वपतिलक्षितयागसमभिव्याहारस्तत्र बीजमितिचेत्तेन यागलक्षणायां किं बीजं? द्रव्यदेवतासम्बन्ध इति चेन्नान्योन्याश्रयात्। अतो न चतुर्थ्या अपि देवतायां प्रामाण्यं, नापिमन्त्रस्य, तस्य प्रामाण्यमाकरे द्वेधा निरूतं क्वचित्पूर्वक्लृप्तदेवतात्वानुपजीवनेन यथाऽऽघारमन्त्रोपांशुयाजमन्त्रादेस्तत्प्रख्याधिकरणोपांशुयाजाधिकरणादौ, क्वचित्पूर्वक्लृप्ततदुपजीवनेन, यथा सूक्तवाकोत्तमप्रयाजयाज्यादेस्तार्तीयदाशमिकाधिकरणादौ शब्ददेवतावादिनामर्थदेवतात्वादिनां च मते देवताविधेः 'विधिशब्दस्य मन्त्रत्वं' इत्यधिकरणोक्तन्यायेन चतुर्थ्यन्तशब्दोच्चारणपर्यवसायित्वान्मन्त्रस्य विध्यनुमानेन स्वान्तर्गतशब्दाविशेषे किं चतुर्थ्यन्तोच्चार्यत्वं ज्ञापयतः प्रामाण्येन भवितव्यं, तत्राद्योदाहरणेनैकशब्दसमुदायात्मकोमन्त्रोयदेकस्यैव स्य चिदेव शब्दस्य चतुर्थ्यन्तोच्चारणं ज्ञापयति तत्र किं नियामकमिति वक्तव्यं? इतरपदार्थान्प्रति प्राधान्येन स्वार्थबोधकत्वमितिचेत् ? किमत्र प्राधान्यशब्देन शाब्दं विशेष्यत्वं विवक्षितं? उत वास्तवं धर्मित्वं? आद्येपि विशेष्यत्वशब्देन मुख्यविशेष्यत्वं? उत विशेष्यत्वमात्रं? नाद्य 'स्त्रिर्देवःपृथिवीमेष एतां विचक्रम' इत्यादिमन्त्रे विचक्रम इत्यादिशब्दोक्तायाः क्रियाया एव तादृक्त्वेन तद्वाचिनीस्त्रिविक्रमशब्दस्यैवोपांशुयाजे चतुर्थ्यंतोच्चारणप्रसङ्गात्। न द्वितीयः 'त्वेषं ह्यस्य स्थविरस्य नामे'तिषष्ठ्यन्तपदनिर्दिष्टविष्णुं प्रति प्राधान्येनार्थं बोधयतो नामशब्दस्य चतुर्थ्यन्तोच्चारणप्रसङ्गात्। नाद्ये द्वितीयः त्रिविक्रमत्वादिभिर्विष्णवादीनां धर्मधर्मिभावे नावमिकदेवताधिकरणन्यायेन वास्तवत्वस्य मीमांसकैरनङ्गीकारात्। तदङ्गीकारे वा "इन्द्रआगच्छ हरिव आगच्छे'तिसु-

ब्रह्मण्यानिगदस्याग्निष्वतिप्राप्तस्य 'अग्ने आगच्छ रोहिताश्वे'तिगुणवाचिषु हरिवदादित्यूहः स्यात्। तथाच नावमिकाधिकरणविरोधः।

एतेन यत्र स्वनिरूपितं स्तुत्यत्वरूपं देवतात्वं तत्रैव हविर्निरूपितं देवतात्वं मन्त्रेणाक्षिप्यत इति परास्तम्।

यद्वृत्तिनोधर्माः मन्त्रेन्तर्गतैः पदैः प्रतिपाद्यन्ते स स्तुत्यः, न च मन्त्रान्तर्गता धर्माः क्वचिद्वर्त्तन्त इति स्वीक्रियते। अथासद्गुणवत्तया प्रतिपाद्यत्वरूपं स्तुत्यत्वमेव मन्त्रनिरूपितं देवतात्वमिति चेत्? न, 'अग्निर्हिमस्य भेषज'मित्यत्रं स्तुतिभाजां देवतात्वाभावप्रसङ्गात्। अथ गुणवत्तया प्रतिपाद्यत्वमेव तत्, गुणसत्वासत्वयोस्तु नादर इतिचेत्? तथापि 'विर्देवः पृथिवी'मित्यादिमन्त्रेषु समानाधिकरणदेवविष्ण्वाद्यनेकपदयुक्तेषु यदेकस्यैव कस्यचित् पदस्यार्थं स्तुत्यत्वेनाभ्युपगम्य तेनैव पदेन मन्त्रहविर्देवताव्यवहारः क्रियते तत्र किं वीजं?, शक्यते हि वक्तुं सर्वैः पदैर्देवपदार्थः स्तुत्य इति, तुल्यं हि लोकप्रसिध्या देवविष्णुशब्दयोरूढत्वं निरुक्त्यादिप्रसिध्या यौगिकत्वं, तुल्यं चानेकार्थत्वं देवशब्दस्येन्द्रादिष्विव विष्णुशब्दस्यापि पादेन्द्रियाधिष्ठातरि द्वादशादित्यान्तर्गते यज्ञे जगत्पालके च श्रुत्यादिप्रसिद्धत्वात्। दृष्टं च विष्णुशब्दस्येव देवशब्दस्यापि देवतासमर्पकत्वं 'योनः सपत्नोयोरण'इत्यादिमन्त्रकहोमे।

अथ छन्दोदेवताअनुक्रमणिकाग्रन्थे मन्त्रविशेषदेवताविशेषस्य नियतरूपेण कथनाच्छक्यते मन्त्रेण स्वदेवताया हविर्देवतात्वं कल्पयितुमिति निरूप्यते?

नैतदपि, छन्दोनिरूपण इव देवतानिरूपणेपि तस्य ग्रन्थस्य श्रुत्यतिरिक्तमूलताया अवश्यवक्तव्यत्वात् यथैव हीयं गायत्रीयं त्रिष्टुबिति प्रतिमन्त्रश्रुतयो न सम्भावयितुं शक्यन्ते तथास्याग्निर्देवता ऽस्येन्द्र इति न सम्भावयितुं शक्याः, शक्यत्वे वा 'तद्येऽनादिष्टदेवता मन्त्रास्तेषुदेवतोपपरीक्षा यद्देवतः सयज्ञो वा यज्ञाङ्गं वा त-

देवताभवन्ती'त्यादिकानाविष्कृतदेवतालिङ्गेषु मन्त्रेषु नैरुक्तदेवतापरीक्षा कथं सङ्गच्छते। नचश्रुत्यतिरिक्तं स्यात्। तस्मान्नोपांशुयाजमन्त्रादेर्देवतायांप्रामाण्यं सम्भवति। द्वितीयोदाहरणेपि यद्यपि नैष आक्षेपः सम्भवति क्लृप्तदेवतात्वोपजीवनेन कल्प्यदेवतात्वस्य तत्क्लृप्तसमानाश्रयस्यैव कल्पयितुमुचितत्वात् । तथापि कल्पनामूलभूतानुपपत्त्यभावेन न मन्त्रस्य प्रामाण्यं सम्भवति तथाहि कर्माङ्गत्वेनावगतस्य मन्त्रस्य कर्मतत्सम्बन्धिप्रकाशकत्वं विनाऽगत्वानुपपत्तेः क्लृप्तसम्बन्ध्यप्रकाशकेन तेन स्वप्रकाशस्य कर्मसम्बन्धित्वमाक्षिप्य योग्यतया हविष्ठं देवतात्वं वाऽऽक्षिप्यत इति तावदाकररीतिः तत्रोत्तमप्रयाजप्रहरणयोः शेषिसम्बन्धिदेवतात्वेन क्लृप्ता अग्न्यादयस्तेनैव सम्बन्धेन क्लृप्ततदुभयसम्बन्धा इति विनैव सम्बन्धाक्षेपं तान्प्रकाशयतोर्याज्यासूक्तवाक्ययोः प्रयाजप्रहरणांगत्वोपपत्तेः कथं देवतात्वाक्षेपकत्वम्। अथो.त्तमप्रयाजयाज्याया अङ्गत्वानुपपत्त्यभावेपि प्रयाजस्यैव देवतां विनाऽनुपपत्तेर्याज्याप्रकाश्याग्न्यादीनां देवतात्वं कल्प्यते, सूक्तवाक्ये तु इदं हविरितिशब्दनिर्दिष्टप्रस्तरसम्बन्धित्वेनाग्न्यादिप्रकाशनानुपपत्तिस्तासां देवतात्वे बीजमित्युच्यते? तन्न, 'अग्न आज्यस्य व्यन्त्वि'तिसम्बुद्ध्यन्ताग्निपदनिर्दिष्टस्याग्नेरेवाक्लृप्तदेवतात्वकल्पनेन प्रयाजोपपत्तेः। नचेतरप्रयाजयाज्यामन्त्रेषु समिदादीनामिवेहापि अग्न्यादीना'माज्यस्य व्यन्तु' इतिहविर्लाभप्रकाशनाद्देवतात्वं प्रतीयत इति शङ्क्यं 'एभिरग्ने सरथं याह्यर्वाङिति' मन्त्रे पत्नीवतां त्रिंशतां हविर्लाभप्रतीतावपि सम्बुद्ध्यतपदनिर्दिष्टाग्ने रेवपात्नीवतग्रहे देवतात्ववत्सर्वप्रयाजयाज्यामन्त्रेषु संबुद्ध्यन्तपदनिर्दिष्टाग्नेरेव सत्यामप्यन्येषां हविर्लाभप्रतीतौ देवतात्वस्योचितत्वाव । तथा चाग्नेर्विश्वेषां देवानां च संवादरूपे द्वे ऋचौ सङ्गच्छेते 'अग्निः किल वव्रे प्रयाजान् अनुयाजांश्च केवलानूर्जस्वन्तं हविषोदत्तभागं घृतं चापां पुरुषं

चौषधीनामग्नेश्च दीर्घमायुरस्तु देवा' इति । केवलानन्यदेवता संपृक्तान् निरवशेषान्वा, यज्ञियस्य सर्वस्य हविषोवधार्योर्जस्वन्तं भागं मह्यं दत्तं घृतं चापांमुवाणां पिवे प्रथमाज्यभागे ओषधीनामोषधिमयानां हविषां मध्ये पुरुषं पुरोडाशं चाश्रीयां प्रथमप्रधानयागे हे देवा ममातिदीर्घमायुरस्त्विति, अनुजज्ञिरे च विश्वेदेवाः तस्मै तं भागं 'तव प्रयाजा अनुयाजाश्चकेवलाऊर्जस्वन्तो हविषः संतु भागाः तवाग्ने यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्र' इति । यास्कोपि छन्दांदेवता इत्येवमादिना प्रयाजेष्वनेकविधदेवताकल्पानुपन्यस्याह 'आग्नेया इति तु स्थितिर्भक्तिमात्रमितरत्'इति । तस्मान्नोत्तमप्रयाजयाज्याया अग्न्यादीनां देवतात्वे प्रामाण्यम् । नाप्यग्नेरपि देवतात्वे तत् आग्नेयाः प्रयाजाः आग्नेया अनुयाजा इति यास्कोदाहृतब्राह्मणेनैव तत् प्राप्तिः । नच तदुदाहृतेभ्य 'श्छन्दांसि वै प्रयाजा' इत्यादि ब्राह्मणान्तरेभ्यश्छन्दःप्रभृतिदेवतान्तराणामपि प्राप्तेः कथमुक्तब्राह्मणादग्नेरेव देवतात्वमिति शङ्क्यं, अग्निदेवतात्वप्रापकब्राह्मणे तद्धितयोगेनैव वैशेष्यात् । नापि सूक्तवाके इदं शब्दनिर्दिष्टप्रस्तरं प्रति अग्न्यादीनां देवतात्वासिद्धिः सूक्तवाकात्प्रागासिद्धाग्न्यादिसंबन्धस्य प्रस्तरस्येदं हविरिति पदद्वयेन निर्देशेऽजुषतेत्यादिभूतक्रियानिर्देशस्य बाधापत्तेः । अतः प्रधानक्रियायाः अनुरोधेनास्यहविरित्यर्थे प्रत्यक्षबर्हिःपरामर्शीदंशब्दसमासमङ्गीकृत्य बर्हिरधिकरणकपुरोडाशादिसम्बन्धित्वेनैवाग्न्यादिप्रकाशनं सूक्तवाकेन कर्तुमुचितं, भवति चैवं सति 'देवा आज्यपा आज्य'मित्यस्य वाक्यान्तरैः सह क्लृप्तदेवतासम्बन्धप्रकाशकतयैवैकरूप्यं, तथा सति च कथं प्रस्तरं प्रत्यग्न्यादीनां देवतात्वासिद्धिः । अतो न मन्त्रस्यापि देवतायां प्रामाण्यम् । नापि द्वितीयायाः 'तद्धितेन चतुर्थ्या वे'ति वार्त्तिके देवताप्रमाणप्राये तदपरिगणनात् प्रत्युतोपांशुयाजाधिकरणे 'विष्णुं यजति विष्णुर्यष्टव्य'इति

उपन्यस्य न तु तत्र देवतात्वमभिधीयत इति वार्त्तिककृद्भिरभिधानात् त्यागानन्वयित्वेन त्यामान्वयिदेवतात्वाद्विरुद्धस्वभावं कर्मत्वमदधत्यास्तस्या देवतात्वे प्रामाण्यायोगाच्च। इति देवताप्रमाणाक्षेपः।

बलाबलमपि न तावत्तद्धितचतुर्थ्योः सम्भवति, तद्धितस्य विशेषतः सामान्यतो वा द्रव्याभिधायित्वात् तत्र शब्दशक्त्यैव द्रव्यदेवतासम्बन्धप्रतीतेः श्रौतान्वयलाभात्पदान्तरेण सामानाधिकरण्यान्वयलाभात् देयमित्यध्याहारानपेक्षत्वात् चतुर्थ्या द्रव्यानभिधायित्वेन सर्ववैपरीत्यात् तद्धितचतुर्थ्योर्देवतात्वाभिधानानभिधानाभ्यां चेति द्वैतीये गुणाधिकरणे उक्तम्। नच तद्धितस्य द्रव्यवाचित्वं आख्याताभिहितकृत्या कर्त्तुरिव तद्धिताभिहितदेवतया द्रव्यस्याक्षेपसम्भवेन कर्त्तुराख्यातानभिधेयत्ववत् द्रव्यस्य तद्धितानभिधेयत्वौचित्यात्। नच पाचकादिकृदन्तानां कर्तृविशेष्यकप्रतीतिजनकत्वात्तेषु कर्त्तुरिव तद्धितस्य द्रव्यविशेष्यकप्रतीतिजनकत्वात्तस्मिन्द्रव्यस्याभिधेयत्वं स्वीकार्यं अन्यथाऽऽख्याते कृतेरिव तद्धिते देवताया विशेष्यत्वेन प्रतीतिप्रसङ्गादिति वाच्यम्। पाचकादिषु कर्त्तुरिव देवतातद्धितेषु द्रव्यस्य नियतप्रतीत्यभावात् 'वैश्वदेवेन यजेत' 'शिरोवा एतद्यज्ञस्य यदाग्नेय' इति तद्धितात्कर्मप्रतीतेः 'आग्नेयोवैब्राह्मण' इति पुरुषस्य 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठत' इति मन्त्रस्य च प्रतीतेः। अथोच्येत कर्मपुरुषयोर्हविःसम्बन्धेनैव तद्धितप्रतिपाद्यत्वं यागस्य हविःसाधनकत्वात् पुंसस्तादृशयागकर्तृत्वात्, अत एव मन्त्रसमुदायात्मके 'सूक्ते हविषि च देवतातद्धितोत्पत्तिं व्यवहरन्ति प्राञ्चो नान्यत्रेति चेत्। तथा सति याज्यादिमन्त्रप्रकाशितदेवतामुद्दिश्यैव हविस्त्यागादस्तु मन्त्रसंबन्धेनैव कर्मपुरुषहविषां तद्धितप्रतिपाद्यत्वं मन्त्रस्यैव च तद्धितवाच्यत्वम्। अथ मन्त्रनिरपेक्षप्रतीतिकत्वाद्धविषोपि तद्धितवाच्यत्वं? तदा मन्त्रहविर्निरपेक्षप्रतीतिकत्वात्कर्मपुरुषयोरपि कथं न तद्धितवाच्यत्वापत्तिः अतो व्यक्ति-

विशेष्यकप्रतीतिजनकेष्वपि गवादिशब्देष्वव्यभिचारिप्रतीतिकत्वेन जातेरेव वाच्यत्ववद्धात्रिर्विशेष्यकप्रतीतिजनकेपि तद्धितऽव्यभिचरितप्रतीतिकत्वेन देवताया एव वाच्यत्वं वक्तुमुचितमिति न द्रव्यभिधायित्वं, अतश्च न तन्मूलकस्तद्धितबलीयस्त्वे हेतुः कोपि सम्भवति । नापि देवतात्वाभिधायित्वेन बलीयस्त्वं, नहि, यादृशं विधिनियतशब्दोद्देश्यत्वात्मकं यजिप्रवृत्तिनिमित्तप्रविष्टं मीमांसकाभिमतं देवतात्वं तादृशं तद्धिताभिधेयं विधेर्नियमस्याऽग्न्यादिशब्दस्य तद्धितानभिधेयत्वात् । अथोद्देश्यत्वमात्राभिधायिनोपि तद्धितस्य विधिसमभिव्याहारादुक्तविधदेवतात्वप्रतीतिपर्यवसायितया तदभिधायित्वव्यवहार इत्युच्यते ? भवेत्तर्हि चतुर्थ्यामप्यसौ, समभिव्याहारेणोक्तप्रतीतिपर्यवसायितायास्तत्रापि सम्भवात् । ननु सम्प्रदानेऽसौविहितः तत्वं च देवतात्वघटकेभ्यः पदार्थेभ्योऽधिकेन प्रतिगृहीतत्वेन घटितमिति तत्यागेन लक्षणया निष्कृष्टदेवतात्वोपस्थापनेऽस्ति चतुर्थ्या विप्रकर्ष इति चेत् ? न, देवताया अपि यजिनिरूपितसम्प्रदानविशेषात्मकत्वेन सम्प्रदानसामान्यविहितचतुर्थीवाच्यत्वोपपत्तेः । यथाहुः कैयटकाशिकाकृत्प्रभृतयोवैय्याकरणाः 'यागसम्प्रदानं देवतेति' । भट्टपादा अप्युपांशुयाजाधिकरणे'सर्वथेयं देवता, न चान्यैः सम्प्रदानैस्तुल्या, असाधारणेनैव स्वात्मना केवलं यजिविषयं सम्प्रदानं भवति तच्चैतस्याः क्रियासाधनत्वात्सप्तमकारकासम्भवाच्चैवं कल्प्यत' इति । न च गौणसम्प्रदानत्वं देवताया अभिप्रेत्यैव ग्रन्थ इति शङ्क्यं, यच्चान्यस्मै प्रतिश्रुतमित्यत्राप्रतिग्रहीतुरिव देवताया आपन्नगौणसम्प्रदानत्वव्यावृत्त्यर्थतयोक्तग्रन्थस्थकेवलशब्दस्य न्यायसुधाकृता व्याख्यानात्, अतश्च दाननिरूपितं सम्प्रदानत्वं प्रतीग्रहीतृत्वघटितं यजिनिरूपितं तु तदघटितमिति,द्विविधं सम्प्रदानं, सम्प्रदाने चतुर्थीसूत्राच्चतुर्थीवाच्यमिति चतुर्थ्या अपि तद्धितवद्देवतावाचित्वात् कथं दौर्बल्यम् ?

अस्तु वा त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वमेव सम्प्रदानत्वं, तदभिधानं तु ददातिसमभिव्याहृतचतुर्थ्यामेव न स्वीकुर्मः प्रतिग्रहफलोपहितत्यागाभिधायितयाऽभ्युपेयस्य ददातेः समभिव्याहाराद्देवोद्देश्यत्वमात्राभिधायिन्या अपि चतुर्थ्या उक्तविधसम्प्रदानप्रतीतिपर्यवसानसम्भवेन त्यज्यमानद्रव्यांशस्येव प्रतिग्रहीतृत्वांशस्याप्यभिधानाङ्गीकारवैयर्थ्यात्, यथैव च यजिसमभिव्याहारे त्यज्यमानतयाऽवगतं द्रव्यं जुहोतिसमभिव्याहारे प्रक्षेप्यतयाऽप्यवगम्यते,तत्कस्य हेतोः? जुहोतेरधिकाभिधायित्वात् न तु द्रव्यविनियोजकशब्दशक्तिवैचित्र्यात्, तथैव यजिसमभिव्याहारे त्यज्यमानद्रव्योद्देश्यतयाऽवगतस्य चतुर्थ्यन्तार्थस्य ददातिसमभिव्याहारे यत्प्रतिग्रहीतृत्वमपि प्रतीयते तद्ददातेरधिकाभिधायित्वान्न तु चतुर्थ्यास्तत्वात् एवं चतुर्थ्या उद्देश्यत्वमात्राभिधायित्वे 'सर्वेभ्यः कामेभ्य' इत्यादितादर्थ्यचतुर्थ्याः शक्त्यन्तरकल्पनागौरवमपि परिहृतं भवति ,अस्ति च देवताया यागं प्रति उद्देश्यत्वमिति कथं चतुर्थ्या देवतासमर्पणे लक्षणाप्रसक्तिरिति । मैवम् । चतुर्थ्यास्तद्वशादपि दौर्बल्यं प्रत्युत तद्धितचतुर्थ्योर्देवताभिधायित्वे तुल्ये चतुर्थ्या क्रियान्वयिदेवतात्वाभिधानात्तद्धिते तु मीमांसकैर्द्रव्यविशेषणतया देवतात्वाभिधानाङ्गीकारात्क्रियान्वयिकारकाभिधायिद्वितीयावच्च तदनन्वयिकारकाभिधायिनः प्रोक्षिताभ्यामित्यादिनिष्ठाप्रत्ययस्य न विनियोजकत्वमित्याकरे निरूपणात्तद्धितस्यैव चतुर्थ्यपेक्षया दौर्बल्यम् । किञ्च 'विधिशब्दस्य मन्त्रत्वं' इत्यधिकरणोक्तन्यायेन सर्वस्य देवताविधेश्चतुर्थ्यन्तशब्दोच्चारणविषयत्वात्तद्धितस्थले च तादृशशब्दस्य कल्प्यत्वाच्चतुर्थीस्थले च तादृशशब्दस्य क्लृप्तस्य क्लृप्तत्वात्तद्धितस्यैव दौर्बल्यं इति तद्धितचतुर्थ्योर्बलाबलाक्षेपः ।

चतुर्थीमन्त्रयोरपि न बलाबलं सम्भवति तद्धितचतुर्थ्या कथञ्चिद्देवतात्वाभिधानान्मन्त्रेणाधिष्ठानमात्रप्रकाशकेन सर्वथा तदन-

भिधानादिति सांप्रदायिका वर्णयन्ति ।

अयुक्तं चैतत् 'अग्नये स्वाहे'त्यादिमन्त्रेष्वपि केषुचिद्देवतात्वाभिधानसत्वात् । यत्रापि अग्निर्ज्योतिरग्निरित्यादिमन्त्रेषु न चतुर्थीश्रवणं, तत्रापि पाठाद्वचनाद्वा मन्त्रान्तेऽवश्यपठनीयस्वाहादिशब्दोपस्थाप्यप्रदानाक्रियाया इतरपदार्थान्वितरूपेण प्रकाशनसिद्ध्यर्थमवश्यमग्न्यादिपदोत्तरविभक्त्या लक्षणया देवतात्वमुपस्थाप्यते तथाविधप्रकाशनस्यैकवाक्यताघटकत्वात् प्रधानविध्यपेक्षितत्वाच्च । ततश्च निष्कृष्टदेवतात्वोपस्थित्यै चतुर्थ्यां मन्त्रे च लक्षणाश्रयणस्य तुल्यत्वात् कथं मन्त्रस्य दौर्बल्यम् । विधिसमभिव्याहाराद्ब्राह्मणगता चतुर्थी बलवतीति चेत् ? तस्मादेव हेतोर्ब्राह्मणगता द्वितीयापि बलवत्तया कथं न व्यवह्रियते । वस्तुतस्तु यदैव विधिना यागो होमोवा विहितः तदैवैतन्निर्णीतं चतुर्थ्यन्तं कश्चिद्देवताशब्दमुच्चार्य हविस्त्याज्यमिति । कोसौ शब्द इति शब्दविशेषमात्रमन्यतः प्रार्थ्यते नतु तस्य चतुर्थ्यन्तत्वं विधिविषयत्वं वा, प्रागेव सिद्धत्वात् । यथैव समन्त्रकपदार्थस्थले मन्त्राणां प्रयोगकाले स्मारकतयाऽन्तरङ्गत्वान्मन्त्रक्रमेणैव क्रम आश्रीयते न ब्राह्मणक्रमेण, उक्तं हि पञ्चमे 'ब्राह्मणक्रमस्य बलीयस्त्वादाग्नेयं कृत्वैवाग्नीषोमीयः कर्त्तव्य'इति । तथैव यागाद्यनुष्ठानकालीनदेवताप्रकाशनार्थमन्त्रस्य ब्राह्मणादन्तरङ्गत्वादुक्तशब्दविशेषाकाङ्क्षायां मन्त्रगतः शब्दविशेष एव यागादिविधिना स्वीकर्त्तुमुचितो न ब्राह्मणगतः, सङ्गच्छते चैवं सति 'पार्वणौ जुहोती'तिविहितयोरपि होमयोः 'अमावास्यासुभगा ऋषभं वाजिनं वयं पूर्णमास'मित्यमावास्यापूर्णमासपदोपेतमन्त्रयोरमावास्याया इदं पूर्णमासायेदमितित्यागानुष्ठानं सकलयाज्ञिकानाम् ।

अतस्ताद्धितादपि न दुर्बलोमन्त्रो न तरां चतुर्थ्या इति नैव सकलमपि देवतानिरूपणं मीमांसकाभिमतं सङ्गच्छते इति ।

अत्रोच्यते । प्रधानलोपप्रयोजकव्यतिरेकप्रतियोग्युद्देशविशेष-

विषयत्वं देवतात्वं, निरूपितं ह्येतत् षष्ठे, अग्नय इत्येवं रूपोद्देशविशेषाभावे सत्याग्नेययागलोप' इति । संप्रदानत्वाभिमतब्राह्मणस्य च चैत्रायेत्येवंरूपोद्देशविशेषव्यतिरेकेपि न दानलोप इति । अङ्गारव्यतिरेक इव तस्मिन्ननति परस्वत्वापादानविशिष्टस्वत्वत्यागात्मकदानस्य सिद्धिसम्भवात् । यद्यपि चन्द्राभ्युदयविशिष्टदर्शप्रयोगे नित्यदेवतोद्देशव्यतिरेकपि न प्रधानलोपः तथापि प्रयोगान्तरे तद्व्यतिरेकप्रयुक्तस्य प्रधानलोपस्य स्वीकारान्न क्षतिः अशास्त्रमूलकत्वेन विशेषणीयो वा व्यतिरेकः वह्नय इत्युद्देशव्यतिरेकस्य चाग्नेयलोपप्रयोजकत्वाभावान्न तादृशोद्देशविषयेऽतिप्रसङ्गः । यद्यपि नेन्द्रवाय्वाद्युद्देशः सोमयागाङ्गत्वेन विहितः तथाप्युभयाकाङ्क्षया तयोः साध्यसाधनभावनियमस्यावश्याभ्युपेयत्वादस्य्येवेन्द्रवाय्वादिदेवतोद्देशव्यतिरेकस्य स्वप्रतियोगिसाध्यप्रधानलोपप्रयोजकत्वमिति न तास्वप्रसङ्गोपि । यदा यादृशोद्देशो यज्जातीयक्रियासाधनत्वेन न वेदबोधितः यदा यत्तादृशोद्देशविषयत्वमात्रेण तज्जातीयक्रियाकारकं तदा तज्जातीयक्रियाया देवतेति । यादृशेत्युक्त्या यज्जीतीयत्युक्त्या चाग्नये पावकायेत्युद्देशविषयस्य देवतात्वनिरासः, नहि तादृशोद्देशविषयतद्बृत्तिविधिविधेयतावच्छेदकीभूतवैजात्यविशिष्टे कर्मणि कारकं भवति विषयत्वान्यव्यापारनिरासार्थेन मात्रचा च संप्रदाननिरासः इन्द्रवाय्वाद्युद्देशस्याङ्गत्वेन वेदबोधितत्वाभावेपि साधनत्वेन तद्बोधितत्वमस्त्येवेति न तास्वप्रसङ्गोपि। यदा यदित्युक्त्या नाभ्युदयेष्टिप्रयोगान्तर्गतदर्शयागव्यक्तिषु नित्याग्न्यादीनां देवतात्वप्रसङ्गः अभ्युदयेष्टिप्रयोगकाले तासां नित्यप्रयोगक्लृप्तोद्देशविषयत्वेन तत्तद्विधिविधेयतावच्छेदकीभूतवैजात्यविशिष्टतत्तद्यागकारकत्वाभावात् ।

यद्वा दानत्वाव्याप्यत्यागवृत्तिविधेयतावच्छेदकीभूतजात्यवच्छिन्नफलोपहितोद्देशविषयः तज्जातीयक्रियादेवतेति । दानवृत्तिवैजात्यावच्छिन्नफलोपहितोद्देशविषयेऽतिप्रसङ्गवारणाय दा-

नत्वान्याप्येति। 'इदं होत्र इदमध्वर्यव' इति विभागक्रियोद्देशविषयेऽतिप्रसङ्गवारणाय त्यागवृत्तीति विधेयताविशेषणम्, न तु जातौ, तथासति क्रियात्वमादाय दोषतादवस्थ्यात्। दर्शस्य नित्यप्रयोगे वन्हय इत्युद्देशस्याभ्युदयनिमित्तकप्रयोगे अग्नय इत्युद्देशस्य तादृशजात्यवच्छिन्नफलोपधानाभावान्न तद्विषयेऽप्यतिप्रसङ्गः। उद्देशश्चतुर्थ्यन्तपदजन्या पारार्थ्यनिरूपकत्वप्रतीतिः तथैव याज्ञिकनिबन्धव्यवहारात्। न च धृत्यादिहोमे तदसम्भवः छन्दोगपरिशिष्टवचनं गोभिलसूत्रतद्व्याख्यातृवचोनुसारेण न्यायमूलकत्वमङ्गीकृत्य मन्त्रगतचतुर्थनिषेधकत्वस्य वक्तुमौचित्यात्। अस्तु वा त्यागकालीनचतुर्थीनिषेधकत्वं तथापि तादृशोद्देशस्य शास्त्रार्थत्वे सति षष्ठ्यादिविभक्त्यन्तरेणस्थापितचतुर्थ्यन्तजन्यां तां प्रतीतिमादाय शक्यते एव धृत्यादिहोमेऽप्युक्तविधोद्देशो निरूपयितुम्। सा च सम्प्रदाने प्रमात्मिका, देवतायां तु आहार्यारोपात्मिकेति भेदः। अत एव वेदबोधितसाधनताकारोपात्मकोद्देशविषयस्तद्देवतेत्यापि लक्षणसिद्धिः। वेदबोधितेत्युक्त्या नित्यदर्शप्रयोगे वन्हय इत्युद्देशविषये नातिप्रसङ्गः। तच्छब्देन च व्यक्तिग्रहणाच्चाभ्युदयेष्टिप्रयोगेऽग्नय इत्युद्देशविषयेऽतिप्रसङ्गः साधनताग्रहणादैन्द्रवायवादिष्वप्रसङ्गः। आरोपग्रहणात्सम्प्रदाने विभागक्रियोद्देश्ये च नातिप्रसङ्गः। उद्देश्यग्रहणाद् द्वादशाहिकमानसयागसाधनीभूतारोपविषये द्रव्यपात्रादौ नातिप्रसङ्गः। शब्दस्य विधेयत्वे सत्येवार्थाश्रितत्वेनैवोक्तलक्षणदेवतात्वनिर्वाहान्न देवतात्वमर्थविधिमपेक्षते भवति च तदाश्रितं न देवतेत्यधिकरणे यापि मिश्रोक्तिः 'या यदर्थं विहिता सा तस्य देवतेति' यत्साधनत्वेन विहितोद्देशविषयीभूता येत्येवं सापि व्याख्येया। सङ्गच्छते चैवं सति 'विधिशब्दस्य मन्त्रत्वं' इत्यधिकरणे मिश्रोक्तिः, अर्थसङ्ख्यावेपि शब्द एवास्मिन्वाक्ये हविस्त्यागाङ्गतया विधीयते तद्विधाने चार्थस्य

देवतात्वं प्राप्तमनूद्यते इत्यादिका, शब्दस्यैव विधेयत्वाश्रयणाच्चाग्नयेपावकायेत्यादौ विनिगमनाविरहेणोभयोरपि शब्दयोरेकाविधिविधेयतया साहित्यविवक्षायां न विकल्पापत्तिः असत्यप्यर्थस्य विधेयत्वे तदन्वितदेवतात्वस्यैव विधिसमभिव्याहृततद्धिताभिधेयत्वादर्थान्वितदेवतात्वाभिधायिचतुर्थ्या विधिविधेयत्वादर्थगतदेवतात्वेनैव विधेययागशरीरपर्यवसानादपेक्षत एव विधिरर्थगत विशेषं, अतः सम्भवत्येव तत्प्रतिपादकानां मन्त्रार्थवादानां स्वार्थे प्रामाण्यम्। नावमिकन्यायस्तु विध्यनपेक्षिते देवतायाः फलदातृत्वादौ तत्प्रामाण्यनिरासार्थतया नेयः अतएव न विध्यनपेक्षितेऽग्न्यादिदेवतानां तत्तत्कर्माधिकारे नक्षत्रेष्टिवाक्यशेषाणां प्रामाण्यासम्भवान्न तदनुरोधेन शब्ददेवतात्वसिद्धिः शब्ददेवतात्वानाश्रयणाच्च न तद्गोचरपूर्वोपन्यस्तदोषप्रसक्तिः ।

इति देवतात्वलक्षणतदाश्रयाक्षेपपरिहारः ।

यत एवार्थस्य देवतात्वेपि नासौ विधेयः अतएव तद्गतदेवतात्वं सहकारित्वेनैव वाच्यं तृतीयादिवत्, यच्च न विधेर्विषयः कथं तन्न विधिसहकारितयाऽन्यत्प्रमाणं स्यात्। कथं तर्हि तस्य प्रामाण्यमितिचेत् ? विधेययागशरीरपर्यवसानाय विध्यपेक्षितं अनधिगतं अबाधितमर्थविशेषान्वितं देवतात्वं पदान्तरमनपेक्ष्य स्वशक्त्या बोधयतः कथं प्रामाण्ये विवादः नहि विधायकत्वविनियोजकत्वविनियोज्याभिधायित्वानामन्यतरेणैव प्रकारेण शब्दप्रामाण्यमिति राजाज्ञाऽस्ति, प्रकारत्रयशून्यस्यापि 'यन्न दुःखेन सम्भिन्न'मित्यादेः स्वर्गस्वरूपे प्रामाण्यस्वीकारात्। तादृशस्वर्गोद्देशेन यागविनियोगप्रतीतिप्रयोजकत्वादस्ति परंपरया तस्यापि विनियोजकत्वमिति चेत् ? भवतु तर्हि चतुर्थ्यन्तशब्दविशेषविनियोगप्रतीतिप्रयोजकतया तद्धितस्यापि तादृशविनियोजकत्वं, सर्वथाऽप्यर्थविनियोगे नास्य प्रामाण्यमित्यविवादम् ।

अतएव द्रव्योपसर्जनकारकाभिधायित्वेऽप्यस्य न क्षतिः तृतीयादिवद्विधिसहकारित्वेन प्रकृत्यर्थविनियोजकत्वे हि क्रियान्वियकारकाभिधानमपेक्षणीयं स्यात् । न च नास्त्येव कारकाभिधायित्वं प्रकृत्यर्थान्वितद्रव्यमात्राभिधायित्वादिति शङ्क्यं, सम्बन्धसामान्यविहिततद्धितादेवतातद्धितस्य विलक्षणप्रतीतिजनकत्वे पृथगनुशासनवैयर्थ्यापत्तेः देवतात्वस्य प्रकारतायास्तद्धितजन्यप्रतीतावानुभविकत्वाच्च, अन्यथौपगव इत्यादितद्धितस्यापत्याद्यर्थवाचित्वमपि न सिद्ध्येत् । शक्यते हि प्रकृतिप्रत्ययार्थयोः संसर्गतयाऽपत्यत्वं भासत इति वक्तुम् । न च तद्धितस्य विध्यनपेक्षस्य देवतायां प्रामाण्ये 'चरुमुपदधातीति' विधिसमीपे पठित 'बार्हस्पत्यो भवती'ति तद्धिताद्बृहस्पतेर्देवतात्वं सिद्ध्येदिति शङ्क्यं, स्वार्थविधिनियोगसिद्धौ विध्यनपेक्षस्यापि तद्धितस्य स्वार्थगौरवतात्पर्यसिद्ध्यै विधिवाक्यान्तर्भावसापेक्षत्वात् तत्सिद्धं देवतायां तद्धितस्य प्रामाण्यम् ।

चतुर्थी तु यद्यपि सम्प्रदाने विहिता सम्प्रदानशब्दश्च 'कर्मणा यमभिप्रैति स सम्प्रदान'मितिलक्षणानुसारेण दानान्वयिकारकमेवाभिधत्ते, कथं हि कर्मत्वाभिमतेन द्रव्येण पुरुषोभिप्रेतः स्याद्यदि न तत्स्वत्वापादनं कर्मत्वापादकत्वं कर्मत्वाभिमते द्रव्ये चिकीर्ष्येत, ततश्च यागान्वयिकारकं लक्षणयैवाभिधत्ते तथापि भवत्येवै तद्धितवत्प्रमाणं वैदिकलौकिकानेकप्रयोगेषु देवतायां चतुर्थ्या दृष्टप्रयोगत्वाल्लक्षणाप्येषा शक्तिकोटिनिक्षिप्तैव । नचैतादृशलक्षणया केचन शब्दा देवतायां दृढप्रवर्त्तकाः येन चतुर्थ्युक्तौ निवेशार्हाःस्युः । अतएवाग्नये पवमानायेत्यादौ यजिसमभिव्याहारमनपेक्ष्य यज्यन्वितकारकप्रतिपादनोपपत्तिः निरूढलक्षणाया अनुपपत्तिप्रतिसन्धानानपेक्षत्वात् अधिकारिणः प्रति सम्प्रदानत्वायोग्यार्थकप्रकृतिसमभिव्याहारस्य तत्र तात्पर्यनियामकस्य सत्त्वात्, अतोयुक्तं चतुर्थ्या अपि प्रामाण्यम्

मन्त्रस्य तु यद्यपि न मन्त्रविधया देवतायां प्रामाण्यं तथाऽप्यर्थापत्त्यनुमानान्यतरमानेन सम्भवत्येव तत्। नच पूर्वक्लृप्तदेवतात्वानुपजीवनेन देवतायां मानत्वाभिमतादुपांशुयाजादिमन्त्रात्कपदार्थे देवतात्वं कल्प्यमित्यत्र विनिगमकाभावः यत्सूक्तेसौ मन्त्रस्तत्सूक्तान्तर्गतानेकमन्त्रस्तुत्यत्वस्य 'विष्णुरुपांशु यष्टव्य' इत्यादिलिङ्गस्य विनिगमकस्य सत्त्वात्, शक्यते च देवविष्णुशब्दयोरनेकविधसाम्ये सत्यपि विष्णुशब्दस्यासकृत्प्रयोगे योगरूढिभ्यामर्थविशेषप्रतिपादकत्वानियमाद्देवशब्दस्य तु युगपदेकरूपेणाऽनेकार्थप्रतिपादकतया शुक्लादिवद्गुणविशेषवाचकत्वाच्छ्वेतं पंकजमित्यादौ पंकजपदार्थस्यैव धर्मित्ववद्विष्णुपदार्थस्यैव धर्मित्वमित्येव विनिगमकं वक्तुम्, क्लृप्तदेवतात्वोपजीवनेन देवतायां मानत्वमपि नोत्तमप्रयाजयाज्यासूक्तवाकयोरसम्भवि आज्यस्य व्यन्त्विती दंहविरजुषतेति च हविःसम्बन्धित्वेन प्रकाश्यतया देवतात्वमन्तरेणानुपपत्तेः, अग्निशब्दस्य च सम्बुद्ध्यन्तत्वेनावाहननिगदान्तर्गतसम्बुद्ध्यन्ताग्निशब्दवद्देवताभूताग्निप्रतिपादकत्वात्। नच पात्नीवतग्रहेऽग्नेरिवेहाप्यग्नेर्हविःसम्बन्धः प्रतीयते, नापि त्रिंशतामिवाज्यभागदेवतानामग्निद्वारकस्तत्सम्बन्धः येनाग्नेर्देवतात्वं स्यात् न स्याच्च तासाम्। नचैवं पूर्वापन्यस्तमन्त्रवर्णयास्कोक्तिभ्यां विरोधः प्रयाजदेवतासमर्पकसान्दिग्धार्थकसमिदादिशब्दार्थकथनपरत्वात्तयोः। युक्तं च वैदिकशब्दार्थनिर्वचनाय प्रवृत्तस्य यास्कस्योक्तेरैदंपर्यं नतु देवताविधिपरत्वं,

अत एव 'भक्तिमात्र' मितरदिति वाक्यान्ते किमर्थं पुनरिदमुच्यते किंविचारे प्रयोजनमिति शङ्कोत्तरत्वेनावतारितं 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्य'न्निति निरुक्ते होतुर्वषट्कारपूर्वकाले ध्यानविशेषसिद्धिं विचारप्रयोजनं कथयत्सङ्गच्छते। एष एव च ध्यानकालो यजमानस्याहुतिप्रक्षेपकाल इति व्या-

ख्यातॄणां प्रयोजनान्तरोक्तिश्च समिदादिशब्दानां देवतासमर्पकत्वमनङ्गीकृत्य, सम्बुद्ध्यन्ताग्निशब्दस्य देवतासमर्पकत्वमिति यास्काभिप्राये तु सर्वमेतदसङ्गतं स्यात्, अग्नयइत्युद्देशस्य स्फुटप्रयोजनस्य सत्वात् ।

किञ्च छन्दःप्रभृतीनामिव समिदादीनामपि देवतात्वं यास्कोक्तदेवतात्वात् कल्पान्तरत्वेन पठ्यमानस्य तद्याग्नयाइति तु स्थितिरित्यतः प्राग्भक्तित्वाभिमतकल्पान्तरैः सह समिदादिदैवत्यत्वमप्यवक्ष्यत् अतोपि ज्ञायते समिदादिशब्दार्थनिर्णयायैव नैरुक्तः प्रयाजदेवताविचार इति, येन च न्यायेन चतुर्थाग्नेषु समिदादीनां देवतात्वं तेन न्यायेनोत्तमप्रयाज आज्यभागादिदेवतानां देवतात्वमितिसिद्धं तत्राज्यामन्त्रस्य तत्र प्रामाण्यम् । यत्त्विदंहविरजुषनेत्यत्र व्यधिकरणसमासाश्रयणेन पुरोडाशादिसम्बन्धित्वेन देवताप्रकाशनं नतु प्रस्तरसम्बन्धित्वेनेत्युक्तं, तन्न, सत्यपि समासे चातुर्थिकपितृयज्ञाधिकरणन्यायेन व्यधिकरणन्यायेन व्यधिकरणान्वयात्समानाधिकरणान्वयस्य ज्यायस्त्वेन समानाधिकरणसमासस्यैवौचितत्वात् तदुपक्रमानुरोधेनोपसंहारे क्रियापदगतभूतनिर्देशाविवक्षाया अंगीकार्यत्वात् 'यदनेन हविषाऽऽशास्त'इतिसूक्तवाकशेषे इदंशब्दहविःशब्दयोरसमस्तत्वदर्शनेन प्रागपि श्रुतयोस्तयोस्तथात्वौचित्याच्च तदुपन्यस्तादेवाआज्यपाआज्यमित्येतत्सारूप्यादस्य सारूप्यस्य झटित्युपस्थितेः ।

अस्तु वेदंहविरित्यत्र पुरोडाशादीनामेवाग्न्यादिसम्बन्धप्रकाशनं तथापि 'यदनेन हविषाशास्त' इत्यत्र प्रस्तरस्य हविष्ट्वेन प्रकाशनमसन्दिग्धम् । नच तद्धोमसाधनस्य सम्भवति । नच होमोदेवतां विना । नचाग्न्यादिभ्योन्या प्रस्तरदेवता कुतश्चित्प्रमाणात्सिद्धेति मंत्रप्रकाशितानामग्न्यादीनामेव देवतात्वं कल्प्यं, अतः सिद्धं सूक्तवाकस्यापि प्रामाण्यं, द्वितीयायास्तु प्रामाण्याक्षेप

र्पितगुणापेक्षं देवतात्वं अत एव सौर्यांगभूतनिर्वापमन्त्रे सूर्यायेत्येवोहमाहुर्नतूदुत्यं जातवेदस मितिमन्त्राज्जातवेदसे सूर्यायेति । अत एव च 'अग्नीषोमाभ्यामाज्यभागौ यजती'तिविधिवशादाग्नेयस्य प्रथमाज्यभागस्य प्रथमप्रधानदेवतासंस्कारार्थत्वे प्राप्ते द्वितीइष्ट एव । नचैवं 'विष्णुं यजेत'इत्यादौ विष्ण्वादेर्देवतात्वासिद्धिः समभिव्याहारकल्प्यश्रुत्या तत्सिद्धेः ।

इति देवतात्वप्रमाणाक्षेपपरिहारः ।

सम्भवति च तद्धितचतुर्थ्योर्बलाबलं तयोर्द्रव्याभिधानमूलकेभ्योगुणाधिकरणोक्तसमस्तहेतुभ्यः । नच तद्धिते द्रव्याभिधानमसिद्धं द्रव्यप्रतीतेरनुभवसिद्धत्वात् स्नुषादिशब्दन्यायेन तस्याकृत्यधिकरणाविषयत्वात् क्रियया कर्तुरिव कारकात्मकदेवतया यागक्रियाया एव साक्षादाक्षेपे द्रव्यप्रतीतेरनन्यथासिद्धत्वेन कर्त्रधिकरणन्यायाविषयत्वाच्च । नच यागाक्षेपद्वारेण द्रव्याक्षेपः तद्धितादेवताविशिष्टयागविशिष्टद्रव्यप्रतीत्यापत्तेः 'यजतिस्तु कर्मफलभोक्तृसंयोगा'दित्यादावुक्तायास्तद्धितोक्तद्रव्यदेवतासम्बन्धेन यागकल्पनाया असम्भवापत्तेश्च । अस्ति च देवतात्वाभिधानेनापि तद्धितप्राबल्यम् । न चदेवतायाः सम्प्रदानविशेषात्मकत्वात्सम्प्रदाने विहितचतुर्थ्या देवतापि वाच्यैवेति वाच्यम् । एवमपि सम्प्रदानसामान्ये विहिताया स्तस्यास्तद्धितस्य विशेषाभिधायितया प्राबल्यसिद्धेः ।

वस्तुतः 'कर्मणा यमभिप्रैति स सम्प्रदान' मितिलक्षणसूत्रे वास्तवाभिप्रेतत्वस्य लक्षणत्वेनाभिप्रेतत्वात् तस्य च देवतायामसम्भवात्सम्प्रदानपदप्रवृत्तिनिमित्तस्य च ददात्यर्थघटितयोगस्य तस्यामभावान्न देवतायाः सम्प्रदानत्वं नतरां चतुर्थीवाच्यत्वम् । नच तद्धितचतुर्थ्योरुक्तरीत्योद्देश्यत्वमात्राभिधायित्वे तुल्ये सत्येव विचित्रसमभिव्याहारेण विचित्रप्रतीतिपर्यवसायित्वा-

न्न शब्दशक्तिवैचित्र्यकृतं बलाबलं सम्भवतीत्यपि शङ्क्यं, सास्यदेवतेत्यनुशासनवशेन तद्धितस्य समारोपितपारार्थ्यनिरूपकत्वात्मकोद्देश्यत्ववाचित्वात् । सम्प्रदानेचतुर्थीत्यनुशासनवशेन चतुर्थ्या असमारोपितपारार्थ्यनिरूपकत्वात्मकोद्देश्यत्ववाचित्वात् । अन्यथाऽनुशासनवैचित्र्यस्य निस्तात्पर्यत्वापत्तेः देवतात्वाभिमतेष्विन्द्रादिषु सम्प्रदानत्वाभिमतेषु च ब्राह्मणादिषु हविःस्वीकारास्वीकाराभ्यामुक्तविधोद्देश्यत्ववैचित्र्यस्य प्रामाणिकत्वात्, एवंच प्रैषार्थकविध्यर्थकप्रत्यययोः प्रवर्त्तनाभिधायित्वे तुल्येपि विधिप्रतिपादने प्रैषार्थकानां दौर्बल्यप्रयोजकन्यायेन तद्धितचतुर्थ्योरुद्देश्यत्वाभिधायित्वे तुल्येपि देवतात्वप्रतीतिपर्यवसाय्युद्देश्यत्वप्रतिपादने सिद्धं चतुर्थ्या दौर्बल्यम्, तद्धितचतुर्थ्योरुभयोरपि विनियोजकत्वानङ्गीकाराच्च न क्रियान्वय्यनन्वयिकारकाभिधायित्वेन विपरीतबलाबलापत्तिः । यश्च देवतात्वेन निर्णीतोर्थस्तद्वाचकः शब्दोविधिना चतुर्थ्यन्तत्वेन विधेय इति प्रथमं देवतात्व निर्णयेन भवितव्यं, देवतात्वनिर्णयश्चोक्तरीत्या तद्धितादेव झटिति सम्भवतीति चतुर्थीस्थले चतुर्थ्यन्तशब्दस्य क्लृप्तत्वेनापि न विपरीतबलापत्तिः प्राथमिकलाघवानुरोधेन जघन्यगौरवस्य फलमुखन्यायेन स्वीकर्त्तव्यत्वात् ।

तद्धितचतुर्थ्योर्बलाबलाक्षेपपरिहारः ।

यथा च यागादिविधिसमभिव्याहारे तदपेक्षावशेन निर्णीततात्पर्यया चतुर्थ्या देवतात्वावगमोन तथा मन्त्राच्चतुर्थ्यन्ताग्न्यादिपदयुक्तादपि, नतरां तादृशपदरहितात्, सर्वेषामपि मन्त्राणां जपे विनियोगसम्भवात् । यागादौ तद्विनियोगानुपपत्तिप्रसूतार्थापत्त्या मन्त्रप्रकाश्यार्थविशेषगतयोग्यत्वाद्यालोचनसहकृतया परं प्रतीयमानं देवतात्वं मन्त्रप्रमाणकं व्यवह्रियते यावता च कालेन मन्त्रविनियोजकाल्लिङ्गाद्दा-

कयाद्वा मन्त्रविनियोगः प्रतीयते श्रौततद्विनियोगस्थले च मन्त्रार्थ आलोच्यते तावता कालेन यागादिविधिसमभिव्याहृतया चतुर्थ्या देवतात्वमेवावगम्यत इति भवति चतुर्थ्याः प्राबल्यम् । या चाग्निर्ज्योतिरित्यादावग्न्यादिपदोत्तरविभक्त्या देवतात्वलक्षणा तुल्या अनुपस्थितोपस्थित्यपेक्षया विशिष्टात्मनोपस्थितस्य निष्कृष्टात्मनोपस्थितौ लाघवात् । यद्यपि द्वितीयायामपि लक्षणयाऽनुपस्थितदेवतात्वोपस्थापनं तुल्यं तथापि देवताया उद्देश्यात्मकत्वात्सिद्धस्यैवोद्देश्यत्वात्तद्विपरीतसाध्यत्वात्मककर्मत्वं बोधयन्ती द्वितीया न मन्त्रसाम्यं लभते, नतरां बलवत्त्वं, आनर्थक्यप्रतिहतत्वेन तु प्राबल्यं यदि कचिदापद्यते न तन्निराकुर्मः ।

यत्तु पाश्चमिकन्यायेन चतुर्थ्यपेक्षया मन्त्रस्य बलीयस्त्वोपपादनं, तत्र ब्रूमः यागादिविधिना चतुर्थ्यन्तं कञ्चिच्छब्दमुच्चार्य हविस्त्यजेदितिज्ञाने कोसौ शब्द इत्याकाङ्क्षायां यदर्थस्य देवतात्वं निर्णीतं स शब्दोविधेयतया निर्णीयत इति प्रथममर्थविशेषस्य देवतात्वनिर्णयेन भवितव्यं तत्र चोक्तरीत्या चतुर्थ्येव बलवतीति न तद्विरोधे मन्त्रादर्थगतदेवतात्वनिर्णयः तद्धितेन चतुर्थ्या वा न देवतात्वनिर्णयोत्तरं च दाशमिकन्यायेन तद्विधिमुपेक्ष्य शब्दविधिवेलायां यदि पाश्चमिकन्यायेन मन्त्रगतः शब्दएव विधीयते न तावता चतुर्थीमन्त्रयोर्देवतात्वनिर्णये विपरीतबलाबलापत्तिः नहि शब्द एव देवता, न चोच्चार्यत्वं देवतात्वं, येन तन्निर्णये मन्त्रस्य बलीयस्त्वेन देवतात्वनिर्णये बलीयस्त्वं व्यवह्रियेत ।

चतुर्थीमन्त्रयोर्बलाबलाक्षेपपरिहारः ।
देवताविषयाशेषदोषराशिविशोषिणी ।
अनन्तदेववागेषा सतां तोषाय जायताम् ॥ १ ॥

देवतावादः समाप्तः ।

मपदस्यापि स्वरसतः फलपरस्य कामनानुवादत्व आनर्थक्यापत्तेश्च । नच नियमतः पश्वर्जनकामना भवति कामनातः प्रागेव केन चिद्दत्ते पशौ तदभावात् । तथा च पशुकामपदस्य नित्यवच्छ्रवणबाधः । दैक्षस्योत्पत्तिशिष्टपुंस्त्वावरुद्धत्वेन तत्र स्त्रीत्वविधानानुपपत्तेश्च, आमिक्षायागानुवादेन वाजिनविधानवत् । 'कृष्णसारङ्गोऽग्नीषोमीय' इति विशेषविहितेन स्वसन्निधिपठितेन च कृष्णसारङ्गवर्णेनावरुद्धे चित्रत्वस्यानारभ्याधीतत्वेन सामान्यशास्त्रेण विधानानुपपत्तेश्च । पाञ्चदश्यावरुद्ध इव साप्तदश्यविधानम् । अथ मा भूदग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वविधानम्, 'सारस्वती मेषी' इति वाक्यविहितयागाङ्गमेष्यनुवादेन तु गुणविधानं स्यात् । चित्रयेति स्त्रीकारकानुवादेन चित्रत्वमात्रविधानात् । न च प्राकृतेन कृष्णसारङ्गवर्णेन नैराकाङ्क्षयान्न चित्रत्वविधानं युक्तमिति वाच्यम् । उपदिष्टेन चित्रत्वेनातिदिष्टस्य वर्णान्तरस्य बाधोपपत्तेरिति चेत् । मैवम् । न हि चित्रयेत्येकेन पदेन स्त्रीकारकस्योद्देशः चित्रत्वस्य च विधानं सम्भवति एकप्रसरताभङ्गलक्षणवाक्यभेदापत्तेः । उद्देश्यविधेयभावस्यानेकपदसाध्यत्वात् । अत एव 'वषट्कर्त्तुः प्रथमभक्ष' इत्यत्र विशिष्टभक्षविधिर्न तु भक्षानुवादेन प्राथम्यविधिरित्युक्तं तृतीये । मेष्य-

नुवादेन चित्रत्वविधाने फलपदानर्थक्यापत्तेश्च । उभयविधाने वाक्यभेदात् । प्रकृतस्य च यागस्य फलाकाङ्क्षाया अनिवृत्तेः । विश्वजिन्न्यायेन फलकल्पने गौरवम् । दधिमध्वित्याद्युत्पत्तिवाक्येनैतस्याधिकारवाक्यस्य प्रतिपन्नैकवाक्यताबाधेन वाक्यभेदप्रसङ्गाच्च । चित्राशब्दस्य तु कर्मनामधेयत्वे प्रकृतस्य कर्मणः फलाकाङ्क्षस्य फलसम्बन्धमात्रकरणान्न वाक्यभेदः । प्रकृताया इष्टेरनेकद्रव्यकत्वेन चित्राशब्दस्य तत्रोपपत्तेः । तत्सिद्धं वाक्यभेदभयाच्चित्राशब्दः कर्मनामधेयमिति ।

'अग्निहोत्रं जुहोति' इत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात् । तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वेनाग्निहोत्रशब्दः कर्मनामधेयमिति यावत् । तथा हि विधिना तावत्तदेव विधेयं यत्प्रकारान्तरेणाप्राप्तम् । अप्राप्ते शास्त्रमर्थवदिति न्यायात् । अग्निहोत्रशब्दस्य च गुणविधित्वे यो गुणस्तेन विधेयः स शास्त्रान्तरेण प्राप्तः । कथमिति चेत् ? शृणु ।

यदि तावदग्नौ होत्रमस्मिन्निति सप्तमीसमासमाश्रित्य होमाधारत्वेनाग्निर्विधेय इत्युच्येत, तदा 'यदाहवनीये जुहोति' इत्यनेनैव प्राप्तत्वाद्विध्यानर्थक्यम् । अथाग्नये होत्रमस्मिन्निति चतुर्थीसमासमाश्रित्याग्नि-

रूपदेवताऽनेन समर्प्यते इति चेत्,—न । शास्त्रान्तरेण प्राप्तत्वात् । किं तच्छास्त्रान्तरमिति चेत्—

अत्र केचित् 'यदग्नये च प्रजापतये च सायं जुहोति' इति शास्त्रान्तरेण होमानुवादेनाग्निप्रजापत्योर्विधानान्नाग्निहोत्रपदं देवतासमर्पकम् । न चोभयविधाने वाक्यभेदः । परस्परनिरपेक्षविधाने हि वाक्यभेदः स्यात्, अग्नये जुहोति प्रजापतये जुहोतीति प्रत्येकं विधिव्यापारात् । च शब्दश्रवणात्तु परस्परसापेक्षस्यैव पदद्वयस्याख्यातान्वयान्न वाक्यभेदः । अत एव 'ऋत्विग्भ्यो दक्षिणां ददाति' इति वाक्यविहितदक्षिणानुवादेन 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति वाक्येन गवादीनां विधानं दशमोक्तं सङ्गच्छते । परस्परसापेक्षाणां गवादीनां विधानेन वाक्यभेदाभावात् । अन्यथा दक्षिणानुवादेनानेकेषां गवादीनां विधानं नैव सङ्गच्छेतेति । अग्निप्रजापत्योश्च देवतयोः सतोः समुच्चयो न तु समुच्चितयोर्देवतात्वं, पृथक्कारकविभक्तिश्रवणात् । चकारार्थस्य च विभ-

पृथगिति । यजति ददातीतितिङ्विभक्तिभ्यां धात्वर्थभेदभिन्नभावनोक्तिवदग्नये प्रजापतय इति सुब्विभक्तिभ्यां प्रातिपदिकार्थभेदभिन्नदेवताप्रतिपादनमुचितमित्याशयः । ननु न प्रत्येकं चतुर्थीतः प्रत्येकं देवतात्वं चतुर्थीतोहि तत्कल्प्यं, गुणपरे चैकवाक्येऽनेका-

क्त्यर्थेनान्वयात् । तस्याप्राधान्यात् । अतश्च नाग्नीषोमादिवदग्निप्रजापत्योर्देवतात्वमिति ।

अन्ये त्वाचार्या आहुः—'यदग्नये च प्रजापतये च सायं जुहोति' इति वाक्यं नाग्नेः प्रापकम् । होमानुवादेन प्रजापतिविधानात् । न च विनिगमनाविरहादुभयविधानं युक्तमिति वाच्यम् । विधिना हि तदेव

---

श्रितमेकमेव कल्पयितुमुचितं, आह चेत्थं नयविवेके भवनाथः । न न्वेवं यदग्नयेचेतिवाक्यं न तत्प्रख्यशास्त्रं स्यात् अग्निहोत्रवाक्ये विधित्सितायाः केवलाग्निदेवतायाः अग्निप्रजापत्युभयाश्रितैकदेवताकारकप्रापकेनैतेन प्रख्यापनासम्भवादितिचेत्परिहृतमेतत् त्रेधा वरदराजेन, चतुर्थीभिदचकाराभ्यां जातं विमर्शरूपं प्राथमिकावगमं देवताद्वयं विधेयमित्येवंरूपमादाय तत्प्रख्यत्वमुच्यते न स्थायित्वेन । यद्वा यदग्नये चेति अनुपसर्जनविध्यपेक्षयोपसर्जनविधित्वेन विलम्बितप्रवृत्तिरग्निहोत्रमितिविधिर्बलवद्विरोधेन देवतान्तरं विधातुमशक्तः सन् यद्यग्निं विदध्यात्परविहितदेवतांशत्वेनैव विदध्यात् तादृत्क्वेन च यदग्नयेचेतिवाक्यादेव स प्राप्त इति तत्प्रख्यत्वम् । यद्वाऽग्निरूपाधिष्ठानविशिष्टकारकविधानार्थं प्रवृत्तेन विधिना ऽर्थादधिष्ठानविधिराक्षेप्तव्यः यदग्नयेचेतिवाक्यादधिष्ठानत्वेनाग्निप्राप्तौ न तदाक्षेपः कर्त्तुमुचित इत्यधिष्ठानापेक्षया तत्प्रख्यत्वेति त्रिविधं परिहारमभ्युपेत्याह । चकारार्थस्यचेति । स एव कुतोऽतआह । तस्येति । अतश्चेति । 'अग्नेः पूर्वाऽऽहुतिः प्रजापतेरुत्तराहुति'रितिविरोधान्मनोतामन्त्रन्यायेनाग्निर्ज्योतिरित्यादिमन्त्रेषु अग्न्यादिशब्दानां देवतात्वाधिष्ठानैकदेशाभिधानद्वारेण लाक्षणिकदेवताप्रकाशनार्थत्वप्रसङ्गादित्यनुक्तहेत्वन्तरसमुच्चयार्थश्चः ।

विधीयते यत्प्रकारान्तरान्तरेणाप्राप्तम् । तत्र यथाऽनेन वाक्येन सायं कालो न विधीयते 'सायं जुहोति' इति वचनान्तरेण प्राप्तत्वात्, तथाऽग्निरपि न विधीयते 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति मन्त्रवर्णादेव देवतायाः प्राप्तत्वात् । मन्त्रवर्णस्यापि देवतासमर्पकत्वमस्त्येव । अत एवोपांशुयाजे विष्ण्वादीनां मान्त्रवर्णिकं देवतात्वमित्युक्तम् । नन्वेवं प्रजापतिदेवतया अग्नेर्बाधः स्यात् चतुर्थ्या हि प्रजापतेर्देवतात्वमवगम्यते, अग्नेस्तु मान्त्रवर्णिकम् । तत्र साऽस्यदेवतेति देवतात्वे तद्धितस्मरणवद्यद्यपि देवतात्वे चतुर्थी स्मरणं नास्ति, 'सम्प्रदाने चतुर्थी' इति सम्प्रदाने तस्याः स्मरणात्, तथापि त्यज्यमानद्रव्योद्देश्यत्वं तावद्देवतात्वम् । तच्च सम्प्रदानस्वरूपान्तर्गतं, त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वस्यैव सम्प्रदानत्वात् । अतश्चतुर्थीतः सम्प्रदानैकदेशतया देवतात्वप्रतीतिरस्त्येव । मन्त्रवर्णात्तु न देवतात्वं प्रतीयते, किं त्वधिष्ठानमात्रम् । अतश्च मन्त्रवर्णश्चतुर्थीतो दुर्बलः । यथाहुः—

'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ।
देवताया विधिस्तत्र दुर्बलं तु परं परम्' इति ।

अतश्च प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्बलप्रमाणबोधिताग्नेर्बाधः स्यादिति चेत्—सत्यं, स्या-

द्बाधो यदि प्रजापतये जुहोतीति केवलं प्रजापतिविधानं स्यात् । विधीयमानस्तु प्रजापतिर्मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितो होमोद्देशेन विधीयते । समुच्चितोभयविधानापेक्षयाऽन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात् । अतश्च न बाधकत्वं, निरपेक्षविधानाभावात् ।

यथा च त्वन्मतेऽग्निप्रजापत्योरेकहोमोद्देशेन विधानात्तुल्यार्थत्वेन विकल्पे प्रसक्ते प्रजापतेर्न पाक्षिकमग्निबाधकत्वं, समुच्चयविधानात्, एवं मन्त्रवर्णप्राप्तमग्निनूमद्य तत्समुच्चितप्रजापतिविधानेपि न बाधकत्वमिति तुल्यम् ।

यत्त्वग्नेर्मान्त्रवर्णिकत्वे 'अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति मिश्रलिङ्गमन्त्रवर्णबलात्सायंहोमस्य द्विदैवत्वापत्तिरिति ।

---

तत्समुच्चितेति । अत्र वरदराजः पूर्वप्रवृत्ताग्निविधिमपेक्ष्य प्रजापतिर्विधीयमान उत्पत्तिशिष्टगुणावरुद्धे उत्पन्नशिष्ट इव न निवेशं लभेत अग्निसमुच्चितप्रजापतिविधेश्चाग्नेः प्रजापतिं प्रति शेषत्वं प्रसज्येत सोमविशिष्टयागविधेरिव यागं प्रति सोमस्येत्याह । तत्र द्वितीयदोषपरिहारार्थमन्यतः प्राप्ताग्निपरामर्शी तच्छब्दः अन्यतः प्राप्तहोमाभिषवसमानकर्तृकत्वविशिष्टभक्षणविधिनार्थयहोमाभिषवयोर्न भक्षणाङ्गत्वं तथाऽग्नेर्न प्रजापत्यङ्गत्वमित्याशयः । आद्यं परिहर्तुं । यथाचेति । अग्निबाधकत्वमिति भावप्रत्य-

तन्न । अग्निसमुच्चितप्रजापतिविधानवत्सूर्यसमुच्चितस्याविधानात्प्रबलप्रमाणबोधितेन प्रजापतिना मन्त्रवर्णप्राप्तस्य सूर्यस्य बाधितत्वात् । यत्त्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धेः 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत्सूर्याय च प्रजापतये च प्रातर्जुहोति' इति' वाक्यद्वयं व्यर्थमिति । तन्न । भवेद्व्यर्थं, यदि प्रजापतिमात्रविधानं विवक्षितं स्यात्, सायंहोमे ऽग्निसमुच्चितप्रजापतिविधानं, प्रातर्होमे 'सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहा' इति मन्त्रवर्णप्राप्तसूर्यसमुच्चितप्रजापतिविधानं च विवक्षितम् । न चैतदेकेन वाक्येन सिध्यति । अतोऽर्थवद्वाक्यद्वयम् ।

यत्तु—अग्नेर्मान्त्रवर्णिकत्वे मन्त्रवर्णस्य 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति' इति वाक्येन सायंहोमे विनियुक्तत्वात् तत्प्रकाश्यस्याग्नेरपि प्रजापतिसमुच्चितस्य तत्रैव देवतात्वावगतेर्यदग्नये चेति वाक्ये सायंशब्दो व्यर्थ इति, एवं यत्सूर्याय चेति वाक्ये प्रातःशब्दो व्यर्थ इति । किं च मन्त्रवर्णेन ज्योतिष्ट्व-

---

योर्बहुव्रीहेस्तत्पुरुषाच्च न बाधकत्वमित्यतः परस्परमितिशेषः । चतुर्थीविहितत्वेन प्रजापतेरिव पूर्वप्रवृत्तत्वेनाग्नेर्बाधकत्वमपि समुच्चयविधिनैवावद्योतत इत्याशयः । अग्निसमुच्चितेत्यस्य

गुणविशिष्टस्याग्नेः प्रकाशनाद्विशिष्टस्यैव देवतात्वापात इति ।

तदपि न, होमानुवादेन देवताद्वयविधानेऽपि सर्वत्र मन्त्रवर्णयोर्लिङ्गादेव प्राप्तिसम्भवात्तद्विध्यानर्थक्यात । मिश्रलिङ्गमन्त्रविधिपर्युदस्तयोः प्रतिप्रसवार्थं विधानेऽपि तद्विधिगतयोः सायम्प्रातःशब्दयोरानर्थक्यं, विधीयमानयोर्मन्त्रयोर्व्यवस्थयैव प्राप्तिसम्भवात। तत्प्रकाश्ययोर्देवतयोर्व्यवस्थितत्वात । अनुवादत्वोक्तिस्तूभयत्र तुल्येति । मान्त्रवर्णिकत्वेऽपि अग्नेः केवलस्यैव देवतात्वं न गुणविशिष्टस्य । यदग्नये चेति वाक्ये 'अग्नेः पूर्वाहुति' रित्यत्र च केवलस्यैवाग्नेः सङ्कीर्त्तनात्केवलस्यैव देवतात्वावगतेः । यथा ह्युपांशुयाजे विष्णवा-

---

सायमित्यादिः। मन्त्रवर्णप्राप्तस्येत्यत्र मिश्रलिङ्गेत्यादिः। प्रतिप्रसवार्थं विधानेपीति । कालद्वयगतदेवताप्रकाशकतया द्वयोरपि मिश्रलिङ्गमन्त्रयोः कालद्वयेप्यव्यवस्थया प्राप्तयोर्व्यवस्थार्थत्वेन त्वाग्न्यादिविधिवन्मिश्रलिङ्गकमन्त्रविध्युपपत्तेर्न तद्वशेन केवलाग्न्यादिलिङ्गकमन्त्रयोः पर्युदासप्रसक्तिरित्याशयेनैषोपि । नच मिश्रलिङ्गकमन्त्रयोर्मुख्याग्निसूर्यपदसामानाधिकरण्यानुरोधेन जघन्यसूर्याग्निपदयोर्गौण्याऽग्निसूर्यपरत्वाद्व्यवस्थितदेवताप्रकाशनार्थत्वेन व्यवस्थयैव प्राप्तिरितिशङ्क्यं, न्यायसुधोदाहृत'उभाभ्यां सायं हूयते, उभाभ्यां प्रातः न देवताभ्यः समदं दधाति'इत्येवंरूपात्तद्विधिवाक्यशेषे तत्तद्गताग्निसूर्यशब्दयोः सामानाधिकरण्यबाधात् सूक्तवाकन्यायेन मिश्रलिङ्गकमन्त्रयोः स्वाहाकारस्य स्वतन्त्रपदत्वाङ्गीकारे-

देर्मान्त्रवर्णिकत्वेपि न गुणविशिष्टस्य देवतात्वं 'विष्णुरुपांशु यष्टव्य' इत्यर्थवादे केवलस्यैव सङ्कीर्त्तनात्तद्वदिति । अतश्च मान्त्रवर्णिकत्वे दोषाभावाद्देवताद्वयविधाने च गौरवापत्तेरन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिरेवात्र विधीयते । होमानुवादेनोभयविधाने वाक्यभेदप्रसङ्गाच्च । न च चकारश्रवणान्न वाक्यभेद इति वाच्यम् । चकारार्थो हि समुच्चयः । तं च समुच्चयं यदि चकारः प्रधान्येन ब्रूयात्तदा प्रधानस्यानेकविशेषणसङ्ग्राहकत्वादारुण्यादिविशिष्टक्रयविधान इव कारकद्वयसमुच्चयाविधाने वाक्यभेदो नभवेत् । न च चकारः समुच्चयं प्रधान्येन ब्रूते परोपसर्जनत्वेनैवाभिधानात् । अत एव दशमे भाष्यकारैश्चकारस्य समुच्चयशब्दाद्वैलक्षण्यं प्रतिपादितम् । समुच्चयशब्दो हि तं प्राधान्येन ब्रूते न चकारः । समुच्चयः शोभनः समुच्चयो द्रष्टव्य इतिवत् च शोभनश्च द्रष्टव्य इति

---

णाग्निर्ज्योतिरित्यस्य सूर्योज्योतिरित्यस्य प्रातरिति प्रसक्तविमज्यविनियोगनिरासार्थत्वेनोपपन्नाभ्यां ताद्विधिभ्यां नेतरयोः पर्युदासप्रसक्तिरित्याशयेनापीइतिकाश्चित् । यदिकश्चिद्ब्रूयात् प्रादिवच्चादीनामपि द्योतकत्वाच्चकारगृहीततात्पर्यकेणाग्न्यादिपदेनेतरेतरसमुच्चितस्वार्थाभिधाने सत्येकपदाभिहितानेकार्थविधानेन वाक्यभेदपरिहार इति तमभ्युपेत्याह । गौरवापत्तेश्चेति । नन्वेकदयेनव्यक्ति-

प्रयोगः स्यात् । समुच्चयशब्दवच्चकारस्य प्राधान्येन समुच्चयवाचित्वे धवखादिरयोः समुच्चय इतिवद् धवखदिरयोश्चेत्यपि प्रयोगः स्यादिति । अतश्चकारः समुच्चयं प्राधान्येन न ब्रूते, येन प्रधानस्यैकस्यैव विधानान्न वाक्यभेदो भवेत । किं तु कारकद्वयोपसर्जनत्वेनैव स तं ब्रूते । समुच्चितौ अग्निप्रजापती इति । यद्यपि चकारः समुच्चयं प्राधान्येन ब्रूयात्तथापि तस्य कारकद्वयं प्रति प्राधान्यमनुपपन्नम्, विभक्त्यभिहितस्य कारकद्वयस्य क्रियोपसर्जनत्वेन समुच्चयोपसर्जनत्वाभावात् । कृदन्तादिशब्दैरुपस्थितं हि कारकं क्रियातोऽन्येन सम्बध्यते । कारकसमुच्चयः करणसमुच्चय इति । विभक्त्यऽभिहितं तु क्रिययैव, कारकाणां तयैवान्वयात । अतश्चकारेणोच्यमानः स कारकोपसर्जनत्वेनैवोच्यते । कारकद्वयं च प्रधानम् । एकोद्देशेन च प्रधानद्वयविधाने वाक्यभेद एव । यथाहुः ।

'अनेकपदसम्बद्धं यद्येकमपि कारकम् ।
तथापि तदनावृत्तैः प्रत्ययैर्न विधीयते' इति ।

यच्च यथा दक्षिणानुवादेन गवादीनामनेकेषां विधाने न वाक्यभेदस्तथा कारकद्वयविधानेपीति । तन्न । न हि गौश्चाश्वश्चेत्यस्मिन् वाक्ये दक्षिणानुवादेन गवा-

दयो विधीयन्ते । उक्तरीत्या वाक्यभेदापत्तेः । चकारश्रवणेन कथं चित्तत्परिहारेऽपि गवादीनामनेकेषां द्वादशशतसङ्ख्यायाश्च विधाने वाक्यभेद एव । आध्वर्यवशाखायां गौश्चेत्यादेः तस्य द्वादशशतमित्यन्तस्य सह श्रुतत्वेन वाक्यैकवाक्यत्वमित्युक्तं दशमे । अतोऽनेन वाक्येनोभयविशिष्टा दक्षिणैव विधीयते । विशिष्टविधानाच्च न वाक्यभेदः । अत एव पार्थसारथिमिश्रैर्दशमे तत्र तत्र 'सोभयविशिष्टा विधीयते' 'अनेकगवाद्यात्मिकैका दक्षिणा विधीयत' इति चोक्तम् । नचैवं 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यस्यानर्थक्यं, तस्यानुवादत्वात् । ऋत्विक्सम्बन्धपरत्वाद्वा । दक्षिणाशब्दसामर्थ्याद्धि ऋत्विजां चमसाध्वर्यूणां च तत्सम्बन्धः स्यात् । एतद्वाक्यसत्त्वे च न भवति ऋत्विक्शब्दस्य ब्रह्मादिगतऋतुयजनानिमित्तत्वेन चमसाध्वर्यूणामृत्विक्त्वाभावस्य तृतीये उक्तत्वात् । अतश्च गौश्चाश्वश्चेत्यस्मिन् वाक्ये विशिष्टविधानान्न वाक्यभेदः । यदग्नये च प्रजापतये च सायं जुहोतीति तु न विशिष्टविधानं, होमस्याग्निहोत्रं जुहोतीत्यनेन प्राप्तत्वात् । अतश्च होमानुवादेन समुच्चितोभयविधाने वाक्यभेदाद्गौरवापत्तेश्च नानेन वाक्येन देवताद्वयं विधीयते, किन्तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिर्होमोद्देशेन विधीयते । अतश्च नेदमग्नेः प्रापकं

किं तु मन्त्रवर्ण एव । अतश्च तेनाग्नेः प्राप्तत्वान्नाग्निहोत्रपदं देवतासमर्पकं. किं तर्हि ! नामधेयमेव । तत्सिद्धमेतत्तत्प्रख्यशास्त्रादग्निहोत्रशब्दस्य कर्मनामधेयत्वमिति ।

एवं प्रयाजेषु समिदादिदेवतानां 'समिधः समिधोऽग्न आज्यस्य व्यन्त्वि' त्यादिमन्त्रग्वर्णेभ्यः प्राप्तत्वात्समिधो यजतीत्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात्कर्मनामधेयानि । यथाहुः

'विधित्सितगुणप्रापि शास्त्रमन्यद्यतस्त्विह । तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यत' इति दिक् ॥

'श्येनेनाभिचरन्यजेते'त्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात्तेन व्यपदेशः उपमानं तदन्यथानुपपत्त्येति यावत् । तथा हि यद्विधेयं तस्य स्तुतिर्भवति । तद्यदि अत्र श्येनो विधेयः स्यात्तदार्थवादैस्तस्यैव स्तुतिः कार्या । न च 'यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त' इत्यनेनात्रत्येनार्थवादेन श्येनस्तोतुं शक्यः । श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात् । न च श्येनोपमानेन स एव

साम्येन शक्यते एव श्येनव्यक्त्यन्तरं स्तोतुमत आह । श्येनोपमानेनेति । श्येनसामान्योपमानेनेत्यर्थः । नह्यत्र श्येनविशेषसादृश्यं स्तुतिकरणत्वेन प्रतीयत इत्याशयः । ननु 'रामरावणयोर्युद्धं रामरावणयोरिवे'त्यादिवदभेदेपि सम्भवत्येवोपमाऽत आह । नचश्येनेति ।

स्तोतुं शक्यते। उपमानोपमेयभावस्य भिन्ननिष्ठत्वात्। यदा तु श्येनसंज्ञको यागो विधीयते तदा अर्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्त्तुं शक्यते इति श्येनशब्दस्य तद्व्यपदेशाद्यागनामधेयत्वम्। तत्सिद्धं निमित्तचतुष्टयान्नामधेयत्वम्।

उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं केचिन्नामधेयत्वे निमित्तमाहुः। 'वैश्वदेवेन यजेते' त्यत्र वैश्वदेवशब्दस्य कर्मनामधेयत्वमुत्पत्तिशिष्टगुणबलीयस्त्वात्। उक्तमत्वर्थलक्षणादिप्रकारचतुष्टयासम्भवात्। तथा हि न तावन्मत्वर्थलक्षणाभयान्नामधेयत्वं युक्तमिति वक्तुं शक्यं, वैश्वदेवेनेति तद्धितेनैव मत्वर्थस्य यागास्योक्तत्वात्। साऽस्यदेवतेत्यस्मिन्नर्थे हि तद्धितस्मरणम्। तत्रास्य शब्दस्य तद्धितान्तर्गतस्य यद्यपि सूक्तहविषोरिति स्मृतेः सूक्ते हविषि वा मुख्यत्वमवगतं तथापि सर्वनाम्नामुपस्थितवाचित्वात् हविषोश्चात्रानुपस्थितत्वाद्यजेतेत्युपस्थितं यागमेवास्यशब्दो ऽभिधत्त इति न

---

तत्राप्यगत्या भिन्नोपाधिकं भेदमादायैवोपमेत्याशयः। नच प्रकृते गत्यभावः यागे गौण्या वृत्त्या श्येनपदप्रवृत्त्यै गौणीनिमित्तानामाद्यतत्सिध्याख्यनिमित्तकथने 'समानमितरच्छयेनेने'त्यादिविधिमूलप्रवृत्तिविशेषकरत्वेन केवलस्तुत्यपेक्षया प्रयोजनालाभादित्याशयेनाह। यदात्विति।

यागे मत्वर्थलक्षणा । विश्वदेवरूपैकदेवताविधानाच्च न वाक्यभेदः ।

नापि तत्प्रख्यशास्त्रान्नामत्वम् । यत्र हि विधित्सितो गुणोऽन्यतः प्राप्तः तत्र तत्प्रख्यशास्त्रान्नामधेयत्वम् । यथाऽग्निहोत्रशब्दे । अत्र चाग्नेयादयोऽष्टौ यागाः प्रकृताः । तत्रामिक्षायागे यद्यपि विश्वेदेवाः प्राप्ताः वैश्वदेव्यामिक्षेति, तथापि समस्तु तेषामप्राप्तत्वाद्वैश्वदेवेन यजेतेत्यनेन तत्र तद्विधाने न तत्प्रख्यशास्त्रमन्यत् येन तद्वशान्नामत्वं स्यात् । न चामिक्षायागस्यैवैतन्नामेति वाच्यम् । वैश्वदेवेन यजेतेति वाक्यवैयर्थ्यापत्तेः । वैश्वदेवशब्दस्यामिक्षायागमात्रनामत्वे स एव यागोऽनेनानूद्यत इति वाच्यम्, न च तदनुवादेनास्ति किं चित्कृत्यम् 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति विधीयमानस्य प्राचीनप्रवणदेशस्य विनाप्येतद्वाक्यं आमिक्षायाग एव सम्बन्धोपपत्तेः । विश्वेदेवसम्बन्धात् तस्य । आग्नेयाद्यशेषप्रकृतयागनामत्वे तु न वैश्वदेवेन यजेतेति वाक्यानर्थक्यं, तदा त्वनेनाष्टौ यागाः अनूद्यन्ते । अनुवादेन चैकप्रतीत्यारूढत्वात्समुदितानामष्टानामपि वैश्वदेवशब्दो नामधेयं सिध्यति । एवं च प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दो नामधेयं सिध्यति । एवं च प्राचीनप्रवण वैश्वदेव-

न यजेत इत्यत्र वैश्वदेव शब्देनाष्टौ यागाननूद्य प्राचीनप्रवणविधानं तत्र सिद्धं भवति। तद्वाक्यस्यासत्त्वेऽनेन वाक्येनामिक्षायाग एव प्राचीनप्रवणदेशसम्बन्धः स्यात। अतश्चाष्टसु यागेषु प्राचीनप्रवणदेशसम्बन्ध एवैतद्वाक्यप्रयोजनम्। एवं च वैश्वदेवशब्दोऽष्टानां नामधेयम्। न च तत्र तत्प्रख्यशास्त्रं निमित्तं सम्भवति सप्तसु विश्वेदेवाऽप्राप्तेः अतो न वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रान्नामधेयत्वमिति।

नापि तद्व्यपदेशात्। तादृशस्य व्यपदेशस्यानुपलम्भात। अतश्च वैश्वदेवशब्दस्य नामधेयत्वे उक्तप्रकारचतुष्टयस्यानिमित्तत्वादुत्पत्तिशिष्टगुणबलीयस्त्वमेव निमित्तम्॥

तथा हि वैश्वदेवेन यजेतेत्यत्र न तावदप्रकृतकर्मानुवादेन देवताविधानं सम्भवति तेषामत्रानुपस्थितेः। नापि देवताविशिष्टकर्मान्तरविधानं सम्भवति गौरवापत्तेः। अष्टौ हवींषीत्यनन्यगतिकलिङ्गविरोधात्। अतोऽनेन वाक्येन प्रकृतकर्मानुवादेन देवता विधीयन्त इति वक्तव्यम। तत्रामिक्षायागे विश्वेदेवप्राप्तेः सप्तसु यागेष्वनेन वाक्येन विश्वेदेवा विधीयन्त इति वक्तव्यम्। न च तत्सम्भवति। तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात। आकाङ्क्षया हि सम्बन्धो भवति। आग्ने-

यादियागानां हि देवताकाङ्क्षा उत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वेदेवविधानं युक्तम् । अतश्चोत्पत्तिशिष्टगुणबलीयस्त्वाद्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति । यथाऽऽहुः-

'गुणान्तरावरुद्धत्वान्नावकाश्यो गुणोऽपरः ।
विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यत' इति ॥

अन्ये त्वाचार्याः आहुः-यः शब्दो यत्र कर्मणि

---

केचित्-न्यायसुधाकृतः । मिश्राशयमाह । अन्येत्विति । ननु यद्गुणसम्बन्धमित्यस्य यश्चासौ गुणसम्बन्धश्चेत्यर्थः, तथा च तद्गुणनिरूपितस्य यत्किञ्चित्सम्बन्धस्य ततः प्रतिपत्तौ तत्प्रख्यतेति वाच्यं तथा सति तानि वा इति वाक्यशेषात्प्राग्यदीयादिज्योतिःसमुदायस्य विधेयतया प्रतीतिर्ज्योतिष्टोमशब्दाद्भवति तन्निरूपितो न कोऽपि सम्बन्धस्तस्माद्वाक्यशेषात्प्रतिपन्न इति कथं तत्प्रख्यता । अथोच्येत वाक्यीयविधानादिदोषनिरस्तगुणविधित्वे यः शब्दः कर्मणि नामत्वेन प्रवर्त्तमानः प्रवृत्तिनिमित्तत्वाभिमतं गुणसम्बन्धं शास्त्रान्तरप्रतिपन्नं निमित्तीकृत्य प्रवर्तते तत्र तत्प्रख्यतेति । तन्न । तथासति चित्राज्यपृष्ठश्येनशब्दानामपि तत्प्रख्यतयैव नामत्वापत्तेः उत्पत्तिविधितोऽर्थवादतो वाऽवगतं तत्तत्सम्बन्धं निमित्तीकृत्यैव तेषां प्रवृत्तेरिति चेत् । न । यतो यत्संबद्धोऽर्थः शब्देन बोध्यते तदेव शब्दस्य प्रवृत्तिनिमित्तं अग्निहोत्रज्योतिष्टोमवैश्वदेवादिशब्दानां यौगिकतया शास्त्रान्तरप्रतिपन्नगुणसम्बद्धार्थबोधकानां सम्भवति तादृशगुणसम्बन्धनिमित्तत्वं, चित्रादीनां तु रूढतया तादृशगुणसम्बन्धकर्माबोधकानां कथं तादृशगुणसम्बन्धनिमित्तत्वं स्यात् । नचैवमयौगिकदर्शसमिदादिपदानां तत्प्रख्यन्यायाविषय-

यद्गुणसम्बन्धं बोधयति स चेत्सम्बन्धः शास्त्रान्तरप्रतिपन्नः तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रात् । तच्च शास्त्रान्तरं विधिर्वाऽर्थवादो वेत्यत्रानादरः । तत्राग्निहोत्रशब्देऽग्निसम्बन्धबोधकं शास्त्रान्तरं विधिरेव । वैश्वदेवशब्दश्च विश्वेदेवसम्बन्धं कर्मणि बोधयति । विश्वेदेवसम्बन्धश्चाष्टसु यागेषु 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्व'मित्यर्थवादावगतः । न च विधिरेव तत्प्रख्यशास्त्रं नार्थवाद इत्यत्र किं चित्प्रमाणमस्ति ।

अत एव 'ज्योतिष्टोमेन स्वर्गकामो यजते' त्यत्र ज्योतिष्टोमशब्द'स्तानि वा एतानि ज्योतींषि य एतस्य स्तोमा' इत्यर्थवादावगतज्योतिः सम्बन्धं निमित्ती-

---

त्वापत्तिः तेषामपि लाक्षणिकतया तादृशगुणसम्बन्धकर्मबोधकत्वात् । नच लाक्षणिकानां गङ्गादिपदानां लक्ष्यतावच्छेदकीभूततीरत्वादिप्रकारकबोधजनकत्वानियमान्न दर्शादिपदानां तथा बोधकत्वं सम्भवतीति वाच्यम् । गङ्गापदगतसांप्रतिकलक्षणाप्रयोजनभूतस्य तीरगतपावनत्वप्रत्ययस्य निर्वाहाय गङ्गापदेपि गङ्गासम्बन्धित्वेनैव तीरे बोधकतायां वक्तुमुचितत्वात् । अन्यथाऽवर्त्तमाने वर्तमानोक्तिः स्तुत्यर्थेति हेत्वधिकरणव्याकरोक्तेर्निस्तात्पर्यकत्वापत्तेः । यदि हि भूतभविष्यदर्थकलकारेणेव वर्त्तमानार्थकलकारेणापि भूतत्वाद्याकारेण भूतादिकालोबोध्यत तदा को विशेषो वर्तमानोक्तौ यदि यस्तुत्यर्था भवति नेतरोक्तिरिति । नचैवमालङ्कारिकमतानुसारेण गङ्गात्ववर्त्तमानत्वादिप्रकारक एव बोधोलक्षणया स्वीक्रियतामिति

कृत्य सोमयागे प्रवर्त्तमानस्तत्प्रख्यशास्त्रान्नामधेयं भवति। एवं प्रकृतेपि द्रष्टव्यम् । पञ्चमप्रकारकल्पने प्रमाणाभावात् । अत एव वैश्वदेवाधिकरणे वार्त्तिककारैरेवमुपसंहृतं 'तत्प्रख्यतयैव सर्वेषां नामधेयत्व'मिति । यच्चोत्पत्तिशिष्टगुणबलीयस्त्वमुक्तं तद्गुणविध्यसम्भवे युक्त्यभ्युच्चयमात्रम् । तत सिद्धं तत्प्रख्यशास्त्राद्वैश्वदेवशब्दस्य कर्मनामधेत्वमिति ।

ननु पशुसोमाधिकरणे 'ऐन्द्रवायवं गृह्णाति' इत्यादौ न यजिकल्पनं 'सोमेन यजेते' ति प्रत्यक्षयजिश्रुतेरित्युक्तम् । तेन न्यायेन 'वैश्वदेव्यामिक्षा' इत्यत्रापि यजिकल्पना मास्तु । 'वैश्वदेवेन यजेते' इत्यत्र प्रत्यक्षयजिश्रुतेः, एवं चानेन वाक्येन देवताविशिष्टकर्मविधानमस्तु । तस्य च द्रव्याकाङ्क्षायां वैदश्वेदव्यामिक्षेति द्रव्यविधानमस्तु, एवं च न वाक्यद्वयस्याप्यनुवादकत्वम्' नाप्यष्टौ हवींषीत्यनन्यगतिकलिङ्गविरोधो भवेदिति चेत्—मैवम् ।

---

शङ्क्यं, तस्य बाधितत्वात् आहार्यबोधस्य च पदादस्वीकरणात् । अतो लाक्षणिकपदस्य शक्यसम्बन्धित्वेनार्थान्तरबोधकत्वमभ्युपेयम् । उक्तं च न्यायसुधाकृताऽभिधेयाविनाभूत इति श्लोकव्याख्यावसरे नात्र लक्षणाहेतुत्वेनाभावोपादानं तस्याः सम्बन्धमात्रेण शब्दतात्पर्यवशादुपपत्तेः किन्तु अभिधेयसम्बन्धित्वरूपादरप्रदर्शनार्थमिति । नचैवं चित्राशब्दस्य दर्शतुल्यन्यायतापत्तिः लाक्षणिकेपि

वैश्वदेव्यामिक्षेत्यत्र यज्यकल्पने आमिक्षा किम-नुवादेन विधीयत इति वक्तव्यम्। विश्वेदेवानुवादेन विधाने द्रव्यस्य देवताङ्गत्वमेव स्यात्, न यागाङ्गत्वम्।

---

तस्मिन् चित्रत्वविशिष्टस्त्रीत्वसम्बन्धस्य प्रवृत्तिनिमित्तत्वात् तस्य च शास्त्रान्तरादप्रतिपत्तेः। नच श्येनशब्दस्य तदापत्तिः तस्मिन् गौणतयाऽभिधेयसम्बन्धित्वरूपादराभावात् उक्तश्चोक्तश्लोकव्याख्यावसरे लक्षणातो गौण्या विवेकसिद्ध्यं तदादराभावो न्यायसुधाकृता। धूमलिङ्गसमवायोदाहरणयोश्च तदादरसत्वेन प्रसिद्धमपि गौणत्वं न स्वीकृतं, अतः सर्वमनवद्यम्। यद्वा येन शब्देन यत्र यो-गुणोविधित्सितः विध्यन्तरप्रापितं तं निमित्तीकृत्य तत्र प्रवर्त्त-मानः स शब्दस्तत्प्रख्यन्यायगोचरो भवति वैश्वदेवशब्देप्यामिक्षा-यागीयदेवताविधिरेव तत्प्रख्यशास्त्रं यथैव प्रातर्होमेऽप्राप्तस्याप्यग्नेः सायं होमे प्राप्तिमात्रेणाग्निहोत्रशब्दः सायंप्रातरनुष्ठीयमानकर्मणो-र्नामधेयं तथाऽष्टयागसमुदायमध्ये सप्तस्वप्राप्तानामपि विश्वेषां देवा-नां आमिक्षायागे प्राप्तिमात्रेण अष्टयागसमुदायनामत्वं शक्यत एव वैश्वदेवशब्दस्य वक्तुं ज्योतिष्टोमशब्देपि तानिवाइति वाक्यशेषात् त्रिवृदादिस्तोमसमुदाय एव विधित्सितोगुणः 'ग्रहं वा गृहीत्वा च-मसं वोन्नीय स्तोत्रमुपाकरोती'ति शास्त्रं च तत्प्रख्यशास्त्रं चतुर्थ्या-स्त्वेतन्निमित्तां प्राप्तिमादाय ज्योतिष्टोमशब्दस्य नामत्वोपपादनात् अर्थवादमप्यादाय शक्यत एव तत्प्रख्यन्यायोयोजयितुमित्यतिश-याय परमुभयार्थवादोदाहरणं मूले। चित्राशब्दे च चित्रत्ववि-शिष्टस्त्रीत्वस्य विधित्सितगुणस्य विध्यन्तरादप्राप्तेर्न तत्प्रख्यन्याय इति न काचिदनुपपत्तिरिति।

नन्वभ्युदयेष्टौ मध्यमादिद्रव्योद्देशेन विहितस्यापि द्रव्यस्य न देवताङ्गत्वापत्तिर्यागगर्भान्वितसम्बन्धस्यैव विधितात्पर्यवि-

किञ्च वैश्वदेवीशब्दो देवतातद्धितत्वादामिक्षान्तर्गतत्वेन ब्रूत इत्युक्तम्। तत्र विश्वेदेवानुवादेन द्रव्यविधानं वैश्वदेवीशब्देनैव कर्त्तव्यं, पदश्रुतेः। यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रुतेः न तूपपदेनेत्युक्तं भावार्थाधिकरणे तद्वत्। तत्र च 'वषट्कर्त्तुः प्रथमभक्ष' इति वदेकप्रसरताविरोधः। अतो यागानुवादेनापि द्रव्यविधानार्थं वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनं तावदवश्यं कर्त्तव्यम्। ततश्च पशुसोमाधिकरणन्यायवैषम्यम्। 'ऐन्द्रवायवं गृह्लाती'त्यत्र देवताविशिष्टग्रहणविधानेन यज्यकल्पनात्। यजिकल्पने च वैश्वदेव्यामिक्षेत्यत्रैव द्रव्यदेवताविशिष्टकर्मविधानं युक्तं रूपद्वयश्रवणात्। एवं चाग्नेयोऽष्टाकपालः सौम्यश्चरुरित्यादिवाक्यैर्वैश्वदेव्यामिक्षेत्यस्य वाक्यस्य प्रायपाठो रक्षितो भवति। अन्यथा हि तेषु सर्वेषु द्रव्यदेवतासम्बन्धकल्पितयागविधानमत्र च द्रव्यमात्रविधानमिति वैरूप्यं

---

पयत्वादत आह। किञ्चेति। अथैकप्रसरताभङ्गं यजिकल्पनागौरवं च परिहर्त्तुं वैश्वदेवीपदेन विश्वान् देवानुद्दिश्यामिक्षापदेन द्रव्यविधिक्रमः 'चतुरवत्तं जुहोती'त्यत्र वार्त्तिककृन्मते जुहोतेस्तदुक्तेः श्रवणाज्जुहोतिरासेचनाधिके स्या'दिति न्यायेन प्रक्षेपाधिकयागवाचित्वेपि विधेयतायां विशेषणीभूतप्रक्षेपमात्रपर्यवसायित्ववद्वैश्वदेवीपदस्य देवताविशिष्टद्रव्यवाचित्वेपि उद्देश्यतायाः सम्भवत्येव देवतामात्रपर्यवसायित्वमत आह। एवंचेति। ननु

प्रसज्येत ।

किञ्च वैश्वदेवेन यजेतेत्यत्र वैश्वदेवस्य देवतासमर्पकत्वे 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्व' मित्येतस्यार्थवादस्यात्यन्तमेव निरालम्बनत्वम् । एतदर्थवादाद्धि वैश्वदेवशब्दो विश्वेदेवकर्तृकत्वेन कर्मणि प्रवृत्त इति ज्ञायते । तद्देवतासमर्पकत्वे विरुध्यते । किञ्च वैश्वदेवेन यजेतेत्यस्य यागविधित्वे आमिक्षाया नोत्पत्तिशिष्टत्वम् । तथा च तया न वाजिनं बाधितुं शक्यत इति उभयोरपि आमिक्षावाजिनयोर्यागाङ्गत्वं स्यात् । तथा च विकल्पः स चाष्टदोष इति । तस्माद्वैश्वदेव्यामिक्षेत्यत्रैव यागविधानम् । इतरस्य त्वनुवादत्वम् । अनुवादत्वे च यथा नानर्थक्यं तथोक्तमित्यास्तां तावत् । तत्सिद्धं वैश्वदेवस्य कर्मनाम-

---

'वर्षासु रथकार'इत्यत्र योगाश्रयणगौरवभयाद्वसन्तादिवाक्यप्राप्तपाठबाधवद्यागकल्पनागौरवभयादिहापि तद्बाधोऽस्तु, तत्राह । किञ्चेति ।

स्यादेतत् देवतानां कर्मण्यनधिकारादलौकिकस्य विश्वेदेवकर्तृकत्वस्य नप्रवृत्तिनिमित्तत्वं सम्भवतीति वैश्वदेवशब्दस्य कर्मविशेष्यकप्रतीतिपरत्वज्ञापनमात्रपरोऽयमर्थवादो न देवताविधिं प्रतिबध्नाति तत्राह । किञ्चेति । न चोत्पत्त्युत्पन्नशिष्टबलाबलाभावेपि गुणाधिकरणोक्तबलाबलान्तरसद्भावात्कथं विकल्प इति शङ्क्यं, इतरबलाबलानुरोधेन कर्मान्तरकल्पनाया आकरादिष्टत्वेनागत्या विकल्प-

धेयत्वम् । तदेवं निरूपितं मत्वर्थलक्षणादिप्रकारचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वम् ।

अनर्थहेतुकर्मणः सकाशात्पुरुषस्य निवृत्तिकरत्वेन निषेधानां पुरुषार्थानुबन्धित्वम् ॥

तथा हि—यथा विधयः प्रेरणामभिदधतः स्वप्रवर्त्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्त्तयन्ति, एवं 'न कलञ्जं भक्षयेद्'-इत्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनिवर्त्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेः अनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्त्तयन्ति ।

ननु कथं निषेधानां निवर्त्तनाप्रतिपादकत्वम ? यावता न भक्षयेन्न हन्तव्य इत्येवमादावव्यवधानेन

---

स्याभ्युपेयत्वात् वैश्वदेवीशब्देन विश्वान् देवानुद्दिश्यामिक्षापदेन द्रव्यविधौ च न बलाबलान्तराणि सम्भवन्तीत्यपि सुधीभिरूह्यम । अनर्थेति । हिंसादिनिषेधेऽनर्थो नरकादिदुःखं तद्धेतुर्हिंसादीति व्याख्येयम् । 'नातिरात्रे षोडशिनं गृह्णाति'इत्यादौ अर्थः प्रकृतक्रतुफलमात्रं अतद्धेतुः कर्म षोडशिग्रहणं तस्य तद्गतातिशयहेतुत्वात् । 'दीक्षितो न जुहोति'इत्यादौ अर्थः क्रतुफलमेव, तदहेतुत्वं तद्धेतुविपरीतरूपवत्त्वम्, तत्प्रतिबन्धकत्वमिति यावत् । तादृशं कर्माग्निहोत्रादि । एवं च नात्र सकलनिषेधाव्यापित्वदोषः । भाट्टैकदेशिनां मतमाशङ्कते—नन्विति । अव्यवधानेनेति । यद्यपि धात्वर्थादव्यवहितं कलञ्जादि, तथाऽपि समासं विना न तदन्वययोग्यतेति दुराशयः । नच प्रागभावा-

नञर्थस्याभावस्य धात्वर्थेनान्वये धात्वर्थवर्जनकर्त्तव्यतैव सर्वत्र वाक्यार्थः प्रतीयते। ततश्च यथा यजेतेत्यादौ यागकर्त्तव्यता वाक्यार्थः, एवं निषेधेषु तत्तद्धात्वर्थवर्जनकर्त्तव्यता वाक्यार्थो न निवर्त्तना' इति चेत्?। मैवम्। अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य नञर्थेनान्वयायोगात्। न ह्यन्योपसर्जनमन्येनान्वेति। मा भूद् 'राजपुरुषमानय' इत्यत्र राज्ञ आनयनान्वयित्वम्। ततश्चाव्यवधानेऽपि नञर्थस्य न धात्वर्थेनान्वयः, आरुण्यस्येवैकहायन्या। नापि कलञ्जादिपदार्थैरन्वयः। तेषामपि कारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्य नञर्थेनान्वयायोगात्, एकहायन्या इवारुण्येन। अतश्चान्येनान्वयायोगान्नञर्थः प्रत्ययार्थेन

---

त्मनो वर्जनस्य कथं कर्त्तव्यतेत्यपि शङ्क्यम्, योगक्षेमसाधारणकर्त्तव्यतायास्तत्रापि सम्भवात्। अवश्यं च रागप्राप्तशास्त्रप्राप्तनिषेधेषु 'न स्त्रियमुपेयाद्' 'दीक्षितो न जुहोति' इत्यादिषु क्रत्वङ्गत्वाभिमतेषु इत्थमेव स्वीकार्यम्। नचाविहितमङ्गं भवतीति प्रसिद्धेः कर्त्तव्यतयाऽबोधितस्य च विहितत्वासम्भवात्। यच्च न कर्त्तव्यतया बोधितं, नाप्यङ्गं, तस्येतिकर्त्तव्यताकाङ्क्षालक्षणप्रकरणेन ग्रहणानुपपत्तेश्चेत्याशयेनाह एवमिति। धात्वर्थानन्वये दृष्टान्तसिद्ध्यर्थं कलञ्जाद्यनन्वयमुपपादयति नापीति। राजपुरुषमित्यादिस्थले राज्ञाऽन्वितस्य सतः पुरुषस्य कारकोपसर्जनत्वमित्युपपादयितुं भिन्नपदस्येति। ननु नञः सुबन्तसम्बन्धे नित्यसमास इति दुराशयेन, तन्निराकरणस्याकर एव स्फुटत्वात्, वक्ष्यमाणपर्युदाससिद्ध्या अत्र-

सम्बध्यते प्राधान्यात्, क्रयभावनयेवारुण्यादीनि । तत्रापि नाख्यातांशवाच्ययाऽर्थभावनया, तस्या अपि लिङ्त्वांशवाच्यप्रवर्त्तनोपसर्जनत्वेनोपस्थितत्वात् । अतो लिङ्त्वांशेन नञ् सम्बध्यते । तस्य सर्वापेक्षया प्राधान्यात् । नञश्चैष स्वभावो यत्स्वसम्बन्धिप्रतिपक्षबोधक-

---

त्वाभ्युपगमाच्च । प्रवर्त्तनोपसर्जनत्वेनेति । उपपादितमेत-दधस्तात् । लिङ्त्वांशेनेति । तदर्थेनेत्यर्थः । नञश्चेति । ननु यस्य शब्दस्य यत्र शक्तिस्तद्बोधकत्वमेव तस्य स्वभावः, नच नञः स्वसम्बन्धिप्रतिपक्षे शक्तिरस्ति अनन्तरमेव तदन्यतद्विरुद्धयोर्नञ्-शक्यत्वस्य वक्ष्यमाणत्वात्, अतः कथमेतत्, कथं च नास्तीत्यत्र नञः प्रतिपक्षबोधकत्वे दृष्टान्तत्वं 'घटो नास्ति'इत्यादिस्थलेऽभावस्यैव प्रतीतेः, नहि प्रवर्त्तनाया निवर्त्तनेव सत्त्वस्य प्रतिपक्षभूतमसत्त्वं नाम भावान्तरमस्ति, कथं च निषेधान्तर्गतानां भक्षयेदित्यादिविधि-प्रत्ययानां प्रवर्त्तनाभिधायित्वमुपन्यस्तम्, यतो यत् 'कलञ्जं भक्षयेद्' इतिरागप्राप्तानुवादेन नेति नञा तन्निषेधो बोध्यते इति तत्र मतं, नच शब्दव्यापाररूपायाः प्रवर्त्तनाया रागतः प्राप्तिः सम्भवति, येन तदनुवादो वक्तुं शक्येत, कथं च विधिना नञा च प्रतिपादितयोः प्रवर्त्तनानिवर्त्तनयोः परस्परविरुद्धयोरुद्देश्यविधेयभावेन मिथोऽन्व-यो निरूपयितुं शक्यः ?।

अत्र भवदेवः—नात्र विधिरस्ति लिङादिप्रत्ययेन तु विधि-फलभूतो रागतः प्राप्तः कुर्यामिति सङ्कल्पो लक्ष्यते, विरोधिवचनश्च नञ् तद्विरोधिनं 'न कुर्याम्' इतिप्रत्ययमादधानो निषेधको भवतीति ।

तत्तुच्छम् । प्रवर्त्तनावाचिना प्रत्ययेन कुर्यामितिसङ्कल्पस्य अभा-

वचाचिना नञा तद्विरोधिसङ्कल्पान्तरस्य च लक्षणामपेक्ष्य पर्युदासे समापतन्त्या निरूढायास्तदन्यलक्षणाया ज्यायस्त्वेनाकरस्थस्य पर्युदासान्निषेधज्यायस्त्वव्यवहारस्यासम्भवापत्तेः। विध्यभावे च 'न कुर्याम्'इति सङ्कल्पस्य कर्त्तव्यताप्रतीत्यसम्भवात्, 'न कुर्याम्' इति शब्दवद् 'न भक्षयेद्'इत्यस्यापि निवर्त्तकत्वासम्भवापत्तेः। किञ्चाचाराधिकरणे 'न ब्राह्मणं हन्याद्'इत्यत्र ब्राह्मणगतपुंस्त्वाविवक्षाप्रदर्शनार्थस्य—

'यो ब्राह्मण इति ह्युक्ते हननप्रतिषेधतः।
ब्राह्मणे प्रतिषेधे वा लिङ्गं नान्यद्विधीयते'

इति श्लोकस्य विवरणार्थः प्रतिषेधविधिपरो हि विधायक इत्यादिग्रन्थो द्वेधा न्यायसुधायां व्याख्यातः—'नञर्थगोचरप्रवर्त्तनाबोधको विधिः'इत्यभिप्रायो, 'नञ्सहितो विधिर्निवर्त्तनाबोधकः' इति चेति। तत्र यद्यपि केवलनञो निवर्त्तनाभिधायित्वप्रदर्शनार्थस्योत्तरवार्त्तिकस्य व्याख्यानावसरे न्यायसुधाकृता नैकधाभिप्रायगोचरोऽस्वरसो दर्शितः, तथैव निराकृतश्च तदभिप्रायगोचरो मूलेऽपि, तथाऽपि तत्रत्यद्वितीयव्याख्यामप्युपेक्ष्य कथं केवलनञो निवर्त्तनाभिधायित्वमुपन्यस्यते यावता प्रवर्त्तनावाचित्वेन विधेरभाववाचित्वे नञः क्लृप्ताविशेषेण कस्य निवर्त्तनावाचित्वं कल्प्यमित्याकाङ्क्षायां विनिगमनाविरहेणोभयोरेव तद्वाचित्वं कल्पयितुमुचितं पङ्कजपदश्रवणानन्तरं जायमानपद्मत्वप्रकारकप्रतीतिबलेन कल्प्यमानशक्तेः पङ्कपदजनिधात्वोः स्वीकारवत्। यद्वा विधिरेव निवर्त्तनावाचको वक्तुमुचितः नञो निपातत्वेन द्योतकत्वात्। यथाहुराकृत्यधिकरणे—

'चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः।
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।

सदर्थद्योतकौ तौ तु वाचकः स विचार्यते' इति ।

असत्यपि च निपातान्तराणां द्योतकत्वे नञ एव द्योतकत्वमभ्युपेयम्, तथा सत्येवाब्राह्मण इत्यादौ नञ्द्योतितशक्तिकेन ब्राह्मणपदेन ब्राह्मणभिन्नबोधे सति उत्तरपदार्थप्राधान्येन तत्पुरुषत्वनिर्वाहात् ।

नन्वेवं वार्त्तिककारैः केवलनञो निवर्त्तनाभिधायिनो 'यत् ब्राह्मणं हन्यात्तन्न'इति वचनव्यक्तिर्यथोपन्यस्ता, यथा वा नञ्विध्योरुभयोर्निवर्तनाभिधायित्वे हननस्यापि रागतः प्राप्तेर्वस्तुवृत्तमपेक्ष्य 'यद्ब्राह्मणहननं तन्न कुर्याद्'इतिवचनव्यक्तिर्दर्शिता, एकस्मिन् पदे धात्वंशेऽनुवादः प्रत्ययांशे विधिरिति वैरूप्यासम्भवात्, शब्दवृत्तमपेक्ष्य 'यो ब्राह्मणस्तं न हन्याद्'इतिवचनव्यक्तिर्दर्शिता तथा केवलविधेर्निवर्त्तनाभिधायित्वे तदभिप्रेतेऽन्याऽपि वचनव्यक्तिः प्रदर्श्येत । प्रदर्शनीया भवतेति चेत् । उभयोरभिधायित्वे या वचनव्यक्तिः केवलविध्यभिधायित्वेऽपि तस्या एव स्वीकारात्, द्योतकस्यापि नञोऽवश्योच्चार्यत्वात् । किञ्च विरोधिमात्रे क्लृप्तशक्त्यैव नञो निवर्त्तनाप्रतीतिरुच्यते ?, निवर्त्तनात्वेन प्रतीत्यै शक्त्यन्तरं वा स्वीक्रियते ? । नाद्यो, निवर्त्तनात्वेन प्रतीत्यभावे 'अयं मां निवर्त्तयति'इति व्यवहारासम्भवापत्तेः, यथैव हि तदन्यवाचिनाऽपि नञा तदन्यत्वप्रकारक एव बोधो जन्यते एवं तद्विरोधिवाचिनाऽपि तद्विरोधित्वप्रकारक एव जनयितुमुचितः । एतेन विधिसमभिव्याहृतस्य नञः क्लृप्तशक्त्यैव निवर्त्तनाभिधायित्वमिति भवदेवीयो द्वितीयोऽपि प्रकारो निरस्तः । वाचकद्योतकत्वान्यथासिद्धयोर्विधिनञोर्वैपरीत्यकल्पनाया अन्याय्यत्वाच्च । यस्य यद्वाचकत्वमविवक्षितस्वार्थकयत्समभिव्याहारलभ्यं तत्समभिव्याहारस्य तत्र द्योतकत्वात् । न द्वितीयः । यतः प्रवर्त्तनावन्निवर्त्तनाया अपि धात्वर्थानुरक्तभावनाविषयत्वमवश्याभ्युपेयम्, एकविषयत्वेनैव विरोधनिर्वाहात, विधिवन्निषेधस्या-

पि वाक्यार्थरूपा भावना विषय एवेति न्यायसुधोक्तेश्च । ततश्चावश्यकल्प्ये शक्त्यन्तरे विषयविषयिणोः समानाभिधानश्रुत्याऽन्वयलाभाय विधावेव तत् स्वीकार्यं, नतु वाक्याय तदन्वयापादको नञि शक्त्यन्तरस्वीकार उचितः, अतो नञश्चेत्यादिर्गमयतीत्यन्तो ग्रन्थोऽयुक्त इति चेत् ।

मैवम् । यद्यपि विरोधिबोधकत्वं नञो न स्वाभाविकम् ।
'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः' ।

इतिवृद्धवाक्ये निर्दिष्टसादृश्याद्यर्थान्तरवद्विरोधस्याप्यभावघटितत्वेन लाघवादभावगोचरक्लृप्तशक्त्यैव प्रतीतिनिर्वाहे शक्त्यन्तरानाक्षेपात् अग्रिमग्रन्थविरोधाच्च, तथाऽपि प्रकृतनिषेधगतनञो निवर्त्तनाभिधायित्वाभिप्रायेण सङ्गच्छत एव ग्रन्थः । यथा हि पङ्कजपदानन्तरं जायमानपद्मत्वप्रकारकप्रतीतेः पङ्कशब्दादिगतक्लृप्तशक्त्या लक्षणया वाऽनिर्वाहात्तन्निर्वाहार्थं शक्तिः कल्प्यते एवं निषेधवाक्यश्रवणानन्तरं जायमानाया निवर्त्तनात्वेन निवर्त्तनाप्रतीतेः क्लृप्तशक्त्या लक्षणया वा निर्वाहासंभवादवश्यं शक्त्यन्तरं कल्पनीयम् । नहि विरोधवन्निवर्त्तनात्वमभावघटितं येन तद्वदेव प्रतीतिनिर्वाहः शङ्क्येत, तन्निवृत्तेरपि विजातीययत्नात्मकत्वात् । तच्च शक्त्यन्तरं न लिङादिनिष्ठम्, तत्र हि न लिङ्त्वाद्येव शक्ततावच्छेदकं विधिवाक्यगतलिङोऽपि निवर्त्तनाप्रतीत्यापत्तेः । द्योतकनञस्तत्राभावान्न सेति चेत् ? तर्हि नञ्विशिष्टलिङ्त्वं शक्ततावच्छेदकं ब्रूहि । व्युत्तरहरातित्वमिव क्रीडायाः । नहि शब्दान्तरगतशक्ततावच्छेदकत्वादन्यद् द्योतकत्वं शक्यनिर्वचनम् । तथाऽस्त्विति चेत् ? 'मा कुरु' इत्यादौ तथा प्रतीत्यनापत्तिः । अथाभाववाच्यव्ययविशिष्टप्रवर्त्तनावाचिप्रत्ययत्वेन निवर्त्तनावाचित्वम् ? । अभावः प्रवर्त्तनेतिशब्दाभ्यां निवर्त्तनाप्रतीतिनिवारणायाव्ययेति प्रत्ययेति च ग्रहण-

मिति चेत् । न । यो यद्वाची न स तद्विपरीताभिधायीति विरुद्धयोः प्रवर्तनावाचित्वनिवर्त्तनावाचित्वयोः सामानाधिकरण्येनावच्छेद्यावच्छेदकभावासम्भवात्, आरादित्याद्यनुरोधेन विरोधानभ्युपगमेऽपि वा सामान्यतो विरोधिप्रतीतिजनकत्वेन क्लृप्तनञ एव विरोधिविशेषनिवर्त्तनायां शक्तिकल्पनौचित्यात् । 'यस्य येन सामान्यसम्बन्धः क्लृप्तस्तस्यैव तेन विशेषसम्बन्धः स्वीकार्यः' इति न्यायस्य 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते, पुरा वाचः प्रवदितोः, निर्वपेद्' इतिवेदवाक्यनिर्णयायोक्तस्य लौकिकपदार्थसम्बन्धावधारणेऽपि तुल्यत्वात्, नञो द्योतकत्वे च न पृथक्पदत्वव्यवहारः स्यात्, नहि विहरतीत्यादौ व्यादेः पृथक्पदत्वव्यवहारोऽस्ति । नच स सङ्गच्छतेऽपि । अवाचकस्य 'शक्तं पदम्'इति लोकप्रसिद्ध्यविषयत्वात् । अर्थशून्यस्य प्रातिपदिकत्वाद्यसम्भवेन ततः सुबाद्यनुत्पत्तौ 'सुप्तिङन्तं पदम्'इतिशास्त्रपरिभाषायां प्रत्यप्यविषयत्वात्। नञां निवर्तनावाचित्वे तु लिङादेर्द्योतकत्वेऽपि न पृथक्पदत्वप्रसिद्धिविरोधः, कृत्याद्यभिधायित्वेनैव तन्निर्वाहात् । किञ्च नञ्विशिष्टलिङो निवर्त्तनाभिधायित्वमङ्गीकृत्य नञो द्योतकत्वं वदता 'यत्सर्पायाङ्गुलिं दद्यात्तन्न'इति वाक्यप्रयोगः कदाऽपि न स्यान्निवर्त्तनानुवादस्य केवलनञर्थविधानस्य चासम्भवात् । नच लिङादेर्द्योतकत्वेऽपि दोषसाम्यं, भावनानुवादप्रतीत्यै नान्तरीयकतयाऽनुवादभागोच्चारितस्यापि द्योतकत्वोपपत्तेः दृश्यते हि दध्यन्वयिप्रवर्त्तनाप्रतीत्यै विधिभागनिर्देश्यस्यापि लिङोऽनुवादभागे नान्तरीयकतयोच्चारणं मीमांसकानां 'यज्जुहोति तद् दध्ना' इति, अतो यद्यपि चादीनां प्रकृतिप्रत्ययवत् 'धवंच खदिरं च'इतिनियतपौर्वापर्योच्चारणदर्शनादुद्देश्यतया विधेयतया वा स्वातन्त्र्येणार्थासमर्पकत्वाच्च द्योतकत्वेन पृथक्पदत्वाभावः स्वीक्रियेत, तथाऽपि नञो नैष वक्तुं शक्यः, अब्राह्मण इत्यत्र त्वानय गामित्यत्रानयेत्यस्येव निष्कौशाम्बिरित्यत्र;निरित्यस्येव विशिष्टप्रतीतिजननवेलायां नञ उत्तरत्वेना-

लोच्य तेनोत्तरपदार्थप्राधान्यबाधप्रसङ्गः। उपपादयिष्यते चैतत् प्रकारान्तरेणाप्यवसरे, अतो नञ एव निवर्त्तनावाचित्वम्, एवं च 'खपुष्पं नास्ति' इत्यादिवाक्यगतनास्तीतिपदाभिप्रायो दृष्टान्तग्रन्थोऽपि सङ्गच्छते, न ह्यत्र खपुष्पाभावो ज्ञाप्यत इति शक्यं वक्तुं, असत्प्रतियोगिकाभावानभ्युपगमात्, किन्तु अलीकापरपर्यायमसदेव ज्ञाप्यते, तत्र शब्दजन्यप्रतीतिविषयत्वस्यावश्याभ्युपेयत्वात्। नच निषेधेषु प्रवर्त्तनाया लिङर्थत्वोक्तिः कथमित्यपि साम्प्रतम्। स्वगतद्वेषस्यैव हननाद्यनुकूलस्य प्रवर्त्तनात्वेनानुवादसम्भवात्, 'यं मां द्वेषजननेनानिष्टकारित्वादिप्रत्ययो हनने प्रवर्त्तयति, तं मामेष निवर्त्तयति' इति प्रतीतेः। नच प्रवर्त्तनायां परगामित्वमपि लिङादिवाच्यकोटिनिक्षिप्तं, येन स्वगतद्वेषादेः प्रवर्त्तनात्वेन ततः प्रतीतिर्नोपपद्येत, प्रवर्त्तनाश्रयप्रतीतेर्मानान्तरलभ्यत्वस्य त्वयाऽप्युपपादनात्, अनुवादस्य तदधीनत्वात्। उक्तं च वार्त्तिके 'प्रत्ययसम्बन्धानुगृहीतशक्तिरभावमात्राभिधानादभ्यधिकलब्धव्यापारो नञ् विध्यर्थमपि द्वेषाद्यर्थप्राप्तं प्रतिषिध्य चरितार्थं' इति। अत एवाकृत्यधिकरणे निपातानां द्योतकत्वोक्तिः सम्भविद्योतकत्वनिपातान्तरविषयत्वेन नेया। यद्वा नात्र निवर्त्तनाप्रतीतिवेलायामनुवाद्यत्वेन प्रतीत्यै प्रवर्त्तनायां लिङर्थत्वोपन्यासः, किन्तु परे यथा 'भूतलं घटो न, भूतले घटो न' इत्यादौ भेदसंसर्गाभावप्रतीत्योर्व्यवस्थायै यादृशसमभिव्याहारो ययोस्तादात्म्यं संसर्गं वा बोधयति नञ्सहितस्तादृशस्तदन्यतरधर्मिप्रतियोगिकं भेदं संसर्गाभावं च यथाक्रमं बोधयतीति व्युत्पत्तिमङ्गीकृत्य तर्कितनञभावाङ्गीकारेण वदन्ति-'भूतलं घट इति समभिव्याहारस्तादृशस्य बोधक' इति तथा यादृशसमभिव्याहारः प्रवर्त्तनां यद्गोचरां बोधयति नञ्सहितस्तादृशस्तद्गोचरां निवर्त्तनां बोधयतीति व्युत्पत्तिमङ्गीकृत्य तर्कितनञभावाभ्युपगमेनैव प्रवर्त्तनायां लिङर्थत्वोपन्यास इति बोध्यम्। प्रकारान्तरेणापि निषेधेषु प्रवर्त्तनानु-

त्वम् । 'नास्ति' इत्यत्र ह्यस्तीतिसत्त्वशब्देन सम्बध्यमानो नञ् सत्त्वप्रतिपक्षमसत्त्वं गमयति । तदिह लिङर्थस्तावत्प्रवर्त्तना । अतस्तेन सम्बध्यमानो नञ् प्रवर्त्तनाप्रतिपक्षां निवर्तनां गमयति । विधिवाक्यश्रवणे 'अयं मां निवर्त्तयति' इति निवृत्त्यनुकूलव्यापारानिवर्त्तनायाः प्रतीतेः । अतश्च सर्वत्र निषेधेषु निवर्तनैव वाक्यार्थः ।

---

वादसम्भवं वक्ष्यामः । नच लिङर्थनिवर्त्तनाया अपि समानाभिधानश्रुत्या विषयलाभः । ब्राह्मणकर्मकहननावच्छिन्नाया एव भावनाया विषयत्वात्, तया तस्या अप्रतीतेः । नच नञर्थनिवर्त्तनाया विषयलाभोऽपि सर्वथा वाच्यीयः, यस्य पदान्तरीयेणापि येनार्थेनावच्छिन्नार्थबोधकत्वनियमः स तज्जन्यस्तदवच्छिन्नार्थबोधः श्रौत एवेति सर्वाधिकरणाद्याकरग्रन्थे प्रसिद्धत्वात् ।

अनश्चेति । 'न कलञ्जं भक्षयेद्' 'न दीक्षितो जुहोति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र यद्यपि क्वचिन्निषेधस्य प्रत्यवायहेतुत्वं, परत्र क्रतुफलप्रतिबन्धकत्वम्, अन्यत्र तदन्तरेणैवाभावस्य क्रतुफलजनकत्वमिति वैषम्यमस्ति, तथाऽपि तस्य मानान्तरसहकृतनिवर्त्तनयैवाक्षेपलभ्यत्वान्नास्माकमिष्टसाधनताविधिवादिनामिव क्वचिद् व्युत्पत्तिवैचित्र्यकल्पनागौरवमित्याशयः । ननु भवतु निषेधेषु निवर्त्तनाया वाक्यार्थत्वं तन्निर्वाहस्तु नञो लिङश्चाभावप्रवर्त्तनागोचरप्रसिद्धशक्तिभ्यामेव सम्भवति, तथाहि—यजेतेत्यादौ तावदाख्यातजन्यकृत्यपरपर्यायभावनात्मकप्रवृत्तिप्रतीतिमपेक्ष्यानुकूलव्यापारमात्रशक्तेन लिङादिना प्रवर्तनाप्रतीतिः क्रियत इति प्रागुक्तं, आख्याताभिहिता च कृतिर्धात्वर्थावच्छिन्ना प्रवृत्तिरित्युच्यते, धात्वर्थप्रतियोगिकनञभिहिताभावावच्छि-

एवं च विधिनिषेधयोर्भिन्नार्थत्वं सिद्धं भवति। हननादि-वर्जनकर्त्तव्यतावाक्यार्थपक्षे तु कर्त्तव्यताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेकार्थत्वं स्यात् । तच्च न युक्तम् । यथाहुः-

'अन्तरं यादृशं लोके ब्रह्महत्याऽश्वमेधयोः ।
दृश्यते तादृगेवेदं विधानप्रतिषेधयोः' ॥ इति ।
तथा
'फलबुद्धिप्रमेयाधिकारिबोधकभेदतः ।
पञ्चधाऽत्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोः ॥ इति ।

---

म्ना च निवृत्तिरिति, ततश्च विनैव शक्त्यन्तरं निवर्त्तनाप्रतीतिः स-म्भवतीसत आह एवं चेति । च एवार्थे । निवर्त्तनागो-चरशक्त्यन्तरं सत्येवेत्यर्थः । कर्त्तव्यता-विध्यन्वयिकृतिविषयता, तस्या वाक्यार्थत्वम्-तात्पर्यविषयत्वमिति यावत् । भवतु कर्त्तव्य-ताप्रतिपादकत्वेनैकार्थत्वं कृत्यवच्छेदकभेदादेव तयोर्भेदो भवेदत आह तच्चेति । प्रातिषेधादेव कर्त्तव्यार्थप्रतीत्युपपत्तौ 'नेक्षेत' इत्यस्य प्रतिषेधभूतस्यैव 'तस्य व्रतम्'इत्यनेनैकवाक्यत्वोपपत्तेश्चातु-र्थिकप्रतिषेधत्वपरित्यागेन सङ्कल्पलक्षणाश्रयणं नोपपद्येत, उपप-द्येत चार्थवादशून्येषु 'न कलञ्जं भक्षयेद्' इत्यादिषु षाष्ठन्यायः निरस्तमपि विश्वजिन्न्यायेन काम्यत्वं परोपसर्जत्वेनोपस्थितस्य प्रकृत्यर्थस्य नञर्थोपसर्जनत्वकल्पने निर्हेतुको व्युत्पत्तिविरोध-श्चापद्येतेत्याशयः । तादृक्-औपाधिकम् । फलेति । यद्यपि बुद्ध्यादिभेदः परस्यापि कथञ्चित्सुवचनः, तथाऽपि षाष्ठन्याय-सिद्धामिष्टानिष्टप्राप्तिपरिहारफलत्वेन विधिनिषेधयोर्भिन्नफलत्वं वि-धिनिषेधयोर्नात्यन्तभेदं विना सम्भवतीत्याशयेनेदम् । निषेधस्थ-

यन्मते इष्टसाधनत्वं लिङर्थस्तन्मते लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति । सर्वथाऽपि तु नञः प्राधान्यात्प्रत्ययेनान्वयः ।

यदा तु तदन्वये किंचिद् बाधकं तदाऽगत्या धा-

---

लीयनञो विध्यन्वयेन तद्विपरीतार्थबोधकत्वं परशङ्कया द्रढयति यन्मत इति । नचेष्टसाधनत्वाभावबोधक एव नञ् तन्मते कुतो न स्यादिति शङ्क्यम्, प्रत्यक्षसिद्धस्य कलञ्जभक्षणादिगतेष्टसाधनत्व-स्याभावबोधनासम्भवात् । नापीष्टांश एव प्रतिपक्षबोधनत्वं कुतो नो-पन्यस्तमिति शङ्क्यम्, तस्यापदार्थत्वेनापरपदार्थान्वयानर्हत्वात् । ननु कलञ्जभक्षणाभावस्येष्टसाधनत्वमेव लिङोच्यताम्, इष्टं च नित्यवि-धाविव प्रत्यवायपरिहारः,तत्साधनत्वं च तदभावप्रयोजकाभावप्रति-योगित्वात्मकं सुवचमभावेऽप्यत आह सर्वथापि त्विति । प्रा-धान्यात्—धात्वर्थं प्रति प्रत्ययार्थभावनाया एव प्राधान्यनियमात् ।

अयमाशयः—'कृतिसाध्येष्टसाधनत्वं विध्यर्थः' इति मते तावत् परैर्यागादिधात्वर्थविशेष्यकतत्प्रकारकबोधस्य विधावभ्युपगमान्नि-षेधस्थलेऽभावविशेष्यकस्तत्प्रकारको बोधो वाच्यः, नच स शक्यो वक्तुम्, अभावे यागादिवत्कृतिसाध्यत्वाभावात् । 'इष्टसाधनत्वमात्रं विध्यर्थः' इति पक्षे तु यागकृतिरिष्टसाधनमित्येव विधौ बोधः स्वी-कार्यः । 'धात्वर्थगतप्रकारतानिरूपितविशेष्यतासम्बन्धेन प्रतीतौ भा-वनात्वावच्छिन्नाख्यातजन्योपस्थितिः कारणम्' इति व्युत्पत्तेर्लङादिषु क्लृप्ताया लिङादिष्वपि सति सम्भवेऽनुसरणीयत्वात्, ततश्च तद्वशा-देव न नञर्थे भक्षणाद्यन्वयः,अतः कथं 'भक्षणाभाव इष्टसाधनम्' इति बोधः स्यात्, यदि च स्यात् वाक्यशेषशून्यनिषेधानां विश्वजिन्न्या-येन काम्यत्वं स्यादिति । धात्वर्थेनेति । उपलक्षणमेतत्, विधि-

त्वर्थेनान्वयः। तच्च बाधकं द्विविधम्। 'तस्य व्रतम्' इ-

भिन्नेन केनापीति द्रष्टव्यम्। तच्चेति। नन्वयुक्तमेतत्, यतोऽस्ति तृतीयमपि पर्युदासनिमित्तमाकरप्रसिद्धम्, तथाहि-'न दीक्षितस्यान्नमश्नीयात्' इति 'तस्माद्दीक्षितस्याविज्ञातस्याक्रीतराजकस्यान्नमभोज्यं भवति' इति च यथाक्रमं त्रय्यामथर्ववेदे चाम्नातस्य वाक्यद्वयस्य दीक्षितान्नभोजननिषेधार्थत्वप्रतीतौ तुल्यायामपि 'क्रीतराजको भोज्यान्नः, संस्थितेऽग्नीषोमीये दीक्षितस्यान्नमश्नीयात्' इतिशास्त्रीयविधिद्वयस्य केवलनिषेधान्वयासम्भवाद्राजक्रयावधिर्निषेध एकेन शास्त्रेणाथर्ववैदिकेन बोध्यते, अपरेण च त्रयीमतेनाग्नीषोमीयसंस्थाविधिरभोजनसङ्कल्पविधिः पर्युदासाश्रयणेनेति विरोधाधिकरणवार्त्तिके उक्तम्, अत्रावधिद्वयसङ्कीर्तनानुपपत्तिरेव पर्युदासनिमित्तत्वेन प्रतीयते, अतः पर्युदासनिमित्तद्वैविध्यनियमो न सङ्गच्छते। नचापदनापद्विषयत्वेनापि वाक्यद्वयव्यवस्थाया वार्त्तिककृदुक्तत्वान्नेयं व्यवस्था वार्त्तिककृत्संमतेति वक्तुं शक्यम्। पूर्वोपन्यस्ताया एतस्याः शास्त्रीयतुल्यकल्पनाबाधापादकतया वार्त्तिककृदनभिप्रेतत्वस्य न्यायसुधायामुपन्यासात्। नच 'तस्य व्रतम्' इत्युपक्रमादेव पर्युदास इति नियमः। 'चातुर्मास्यव्रतान्युपेयाद्' इत्युपक्रम्य पठितेषु 'न मध्वश्नीयान्न मांसमश्नीयाद्' इत्यादिष्वपि तदभ्युपगमस्यावश्यकत्वात्। नचोपक्रमाविरोधादेव पर्युदास इत्यपि नियन्तुं शक्यम्। 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। वनस्थयतिधर्मोऽयम्' इत्यत्रोपसंहारगतधर्मपदानुरोधेन पूर्वार्द्धे हेमाद्रिणा पर्युदासाश्रयणात्। यथाह सः 'ग्राहकगृहीतो निषेधो धर्मो भवेदपि, न पुनः स्वतन्त्रो निषेधस्तथा भवतीति श्रेयःसाधनत्वरूपस्य धर्मत्वस्य क्रत्वर्थनिषेधेषु सम्भवेऽपि स्वतन्त्रनिषेधेष्वसंभवः' इति धर्मपदानुरोधेन पर्युदास आश्रयणीय इति तदाशयः, अतः कथमुपक्रमाविरोधस्यैव पर्युदासनिमित्तत्वम्। अथोपक्रमग्रहणमुपल-

क्षणार्थं पर्युदासमन्तरेणानुपपद्यमानपदान्तरेणैकवाक्यतामात्रं निमित्तत्वेन विवक्षितमिति चेत्, तर्ह्येकवाक्यतैव पर्युदासानिमित्तत्वेन वक्तुमुचिता न विकल्पप्रसक्तेः पृथङ्निमित्तत्वोपन्यासः सङ्गच्छते । तथाहि 'यजतिषु ये यजामहं करोति नानुयाजेषु'इत्यत्र यदि नञ् न स्यात्तदा यजतिष्वनुयाजेष्वितिविरुद्धविभक्तिरहिताभ्यां नामभ्यां तावदभेदान्वयबोधः स्यात् 'नीलो घटः' इतिवत् । यश्चाभेदबोधकः समभिव्याहारस्तत्र श्रूयमाणनञ् भेदमेव बोधयति यथा 'घटो न नीलः'इति । एवं च 'नानुयाजेषु'इति नञो व्युत्पत्तिसिद्धभेदबोधकत्वाश्रयणेनैकवाक्यत्वे सम्भवति न पदद्वयानुषङ्गकल्पनापूर्वकं 'नानुयाजेषु ये यजामहं करोति'इति पृथग्वाक्यकल्पनमुचितमित्येकवाक्यतानुरोधेनैवेहापि पर्युदाससिद्धिः । नचेह विकल्पप्रसक्तिः, 'दधि ब्राह्मणेभ्यो दातव्यं कौण्डिन्याय न दातव्यम्'इति न्यायेन विशेषशास्त्रेण सामान्यशास्त्रस्य बाधोपपत्तेः । नचेहापि कौण्डिन्यभेदबोधकत्वं नञः शक्यं, कौण्डिन्यपदस्य विरुद्धैकवचनावरुद्धत्वात् । 'न महतो राज्ञः'इत्यत्र राजनि महद्भेदप्रतीतिवत् 'न महतां राज्ञः' इत्यत्रापि तस्मिन्महद्भेदप्रतीतिर्जायते । न च 'एको न द्वौ' इतिवद्विरुद्धविभक्तिकपदसमभिव्याहारेऽपि नञो भेदबोधकत्वमस्त्विति शङ्क्यम् । तथासति द्वितीयस्य दातव्यमित्यस्य वैयर्थ्यापत्तेः । यदि चेदृशसामान्यविशेषविषयेऽपि विकल्पापत्तिः,तदा 'रात्रौ श्राद्धं न कुर्वीत' 'न दीक्षितो जुहोति' 'अयज्ञिया वै माषाः'इति निषेधेभ्योऽपि कथं न विकल्पापत्तिः । नचैतेषु पर्युदासोऽभ्युपगम्यते । नच सम्भवति।रात्रीतरकाले श्राद्धकर्त्तव्यताज्ञानेऽपि रात्रिश्राद्धे दोषाभावापत्तेः । दीक्षितान्यस्य होमकर्त्तव्यताज्ञानेऽपि दीक्षितेन कृते होमे क्रतोर्वैगुण्याभावापत्तेः । माषभिन्नस्य यज्ञसाधनत्वावगमेऽपि माषाणां प्रतिनिधित्वे वैगुण्याभावापत्तेः । तस्मादनुयाजेषु न विकल्पप्रसक्तिर्येयजामहस्य सामान्यशास्त्रस्यानुयाजेतरविषयत्वे प्रसक्त्यभावान्निषेधानुपपत्तिरिति

चेत् । साध्विदं मन्त्रवत्परम्परायातं मीमांसकवचः, यतोऽनुयाजेतरविषयस्यापि सामान्यशास्त्रस्यानुयाजसाधारण्येन तात्पर्यभ्रमादनुयाजेषु प्रसक्तस्य येयजामहस्य सम्भवत्येव निषेधः। नहि निषेधो वास्तवप्राप्तिमेवापेक्षते, ह्रदे वह्निनिषेधस्यापि तादृशप्राप्तिसापेक्षत्वापत्तेः । नच शास्त्रीयनिषेधो भ्रान्तिप्राप्तस्य न सम्भवतीति राजाज्ञाऽस्ति ।

स्वीकृतं च कुण्डगोलकयोः श्राद्धभोजननिषेधस्य भ्रान्तिप्राप्तविषयत्वं कैश्चित्स्मृतिव्याख्यातृभिः । नच 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः' इति शास्त्राद्ब्राह्मणाद्ब्राह्मण्यां व्यभिचारोत्पन्नयोरपि तयोर्ब्राह्मण्याद्वास्तव एव श्राद्धभोजनप्रसङ्गोऽस्तीति वाच्यम् । 'विन्नास्वेषः विधिः स्मृतः' इति वाक्यशेषादूढायामेव सवर्णायां सवर्णोत्पत्तिप्रतीतेः ।

स्वीकृतश्च भ्रान्तिप्राप्तपर्युदासोऽपि प्रवराध्यायविद्भिः, यथा 'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणादिषु' इति । अत्र ह्यविवाहप्रयोजकसमानगोत्रत्वलक्षणं भृग्वङ्गिरोगणपर्युदासविशिष्टं बोध्यते । सन्ति च द्विविधा भृग्वङ्गिरोगणाः सप्तर्ष्यपत्यभूता जमदग्न्यादयः केवलाश्च हारितादयः । तत्र सप्तानां सप्तर्षीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षत इति गोत्रलक्षणाक्रान्तेष्वाद्यगणेषु सत्यामपि समानगोत्रत्वप्रसक्तौ न पर्युदासस्य तद्विषयत्वम्, तत्प्रयोजनभूताया विवाहसिद्धेर्जामदग्न्यानां सर्वेषामविवाह इत्यादिशास्त्रान्तरेण प्रतिबन्धात् पर्युदासवैयर्थ्यापत्तेः । द्वितीयगणेषु तु पर्युदासप्रयोजनं सम्भवति 'भृग्वङ्गिरोगणेषु पञ्चप्रवरिणां प्रवरत्रयसाम्येन त्रिप्रवरिणां प्रवरद्वयसाम्येनैव समानप्रवरत्वमितिनियमेनैकस्यानुवृत्तौ समानप्रवरतया शास्त्रान्तरेण वा विवाहाप्रतिबन्धात्, तथाऽपि तु तेषु समानगोत्रत्वाप्रसक्तिः, सप्तर्ष्य-

त्युपक्रमो विकल्पप्रसक्तिश्च । तत्र च बाधकद्वयेन नञ्युक्तेषु वाक्येषु पर्युदासाश्रयणं भवति । तदभावे निषेध एव ।

---

नपत्येषु तेषु गोत्रलक्षणाभावात् । अतो भ्रान्तिप्रसक्तस्य च तेषु पर्युदासो वाच्यः । अस्तु तथा भ्रान्तिप्रसक्तयेयजामहनिषेधत्वं नानुयाजेष्वित्यस्य ततो नात्र विकल्पप्रसक्तिः । सत्यामपि तस्यां 'न तौ पशौ करोति' इतिवन्न पर्युदासाश्रयणमुचितम् । अन्यथा विकल्पप्रसक्तेर्हेतोस्तुल्यत्वे किमिति तत्रापि पर्युदासो नाश्रीयते । दर्शप्रकरणपठितस्य 'न तौ पशौ करोति' इत्यस्य पाशुकातिदेशैनैकवाक्यता न सम्भवतीति न पर्युदासत्वमिति चेत्, हन्त यद्व्यतिरेकेण पर्युदासव्यतिरेकः सैकवाक्यतैव पर्युदासनिमित्तत्वेन वक्तुमुचिता न व्यभिचारिणी विकल्पप्रसक्तिः । यदि च तद्वयाज्जघन्यवृत्तिरपि पर्युदास आश्रीयते, तर्हि व्रीहियवयोरपि विकल्पभयाद्यववाक्ये यवपदं गौण्या वृत्त्या व्रीहिष्वेव यवसादृश्यविधिपरं किमिति नाश्रीयते । वैपरीत्यस्यापि सम्भवेन न किञ्चिद्विनिगमकमपि चेत् । 'व्रीहीणां मेध सुमनस्यमान' इति मन्त्रस्य नित्यवत् पाठसत्त्वात्कथं न स्वीकृतेऽपि पर्युदासे विकल्पपरिहारः । नहि निषेध एव प्राप्तिमपेक्षते न पर्युदास इति शक्यं वक्तुम् । तथासति 'न सौम्येऽध्वरे' इत्यस्य पर्युदासत्त्वापत्तेः, अतो नेदं पर्युदासनिमित्तद्वैविध्यं सम्भवतीत्याशङ्कां क्रमेण निराकर्त्तुमाह—तदभाव इत्यादिना । एवकारेण 'न दीक्षितस्यान्नमश्नीयाद्' इत्यत्र पर्युदासेऽपि नातिरिक्तं कारणमिति सूचितम् । स्वीकृता हि विरोधाधिकरण एव तन्निमित्तत्वेन विकल्पप्रसक्तिः । उपपादिता च न्यायसुधायां क्रयोत्तरमर्थप्राप्तदीक्षितान्नभोजननिषेधे पूर्वप्रतिषेधगस्याक्रीतराजस्येति विशेषणस्यानर्थक्यापत्तेः शास्त्रानुज्ञातप्रतिषेधस्याभ्युपगमनीयत्वाद्वि-

'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।
प्रतिषेधस्स विज्ञेयः क्रियया सह यत्र नञ्' ॥ इति च तयोर्लक्षणे। तत्र 'नेक्षेतोद्यन्तमादित्यम्' इत्यादौ पर्युदासाश्रयणम्, 'तस्य व्रतम्' इत्युपक्रमात्। तथा हि वि-

कल्पप्रसक्तिरिति। ननु स्वीकृतेऽपि पर्युदासे विकल्पः स्यादेव, 'अशितव्यं वपायां हुतायाम्' इत्यैतरेयब्राह्मणगताशनविधिशास्त्रस्याग्नीषोमीयसंस्थाव्रतविधिशास्त्रव्रतपर्युदासेनान्वयादिति चेत्। किं ततः?। परिहृतस्तावद्राजक्रयनिरूपितो विकल्पः पर्युदासेन। नच कश्चिद्दोषः परिहर्तुं शक्योऽपि न परिहार्यः। कः प्रतिषेधपर्युदासयोर्भेद इत्याशङ्क्याह पर्युदास इति। अत्रोत्तरत्वं नाव्यवहितोत्तरोच्चारितत्वम्, 'न दीक्षितस्यान्नमश्नीयाद्' इत्यत्र नञो व्यवहितधात्वन्वयस्यापि पर्युदासत्वात्। अतो व्यवहिताव्यवहितसाधारणोत्तरोच्चारितमक्रियार्थकपदमुत्तरपदशब्देन विवक्षितम्। तेन निषेधे पर्युदासलक्षणाप्रसङ्गः। 'नेक्षेत' 'नानुयाजेषु' इत्याद्युदाहरणगतोत्सर्गदर्शनमनुसृत्य चेदम्। वस्तुतस्त्वभावार्थकपदस्याक्रियार्थकपदान्वयः पर्युदास इति बोध्यम्। तेनान्यत्र भृग्वङ्गिरसाङ्गणादित्यादेः सिद्धस्य पर्युदासस्य नासङ्ग्रहः। नापि 'दीक्षितो न जुहोति' इत्यादेः सूत्रकाराद्यभिमतसाध्यपर्युदासस्य। इत्यादाविति। आदिना 'न मध्वश्नीयाद्' 'एकादश्यां न भुञ्जीत' इत्यादिसङ्ग्रहः। अत एव 'तस्य व्रतम्' इतीतिकरणः प्रकारार्थः। उपक्रमादिति चोपलक्षणम्। अनुष्ठेयार्थकपदसमभिव्याहारादित्यर्थः। उपसंहारगतं हि पर्युदासनिमित्तभूयस्त्वेन शाखान्तरसंवादेन वाऽनुगृहीतमेवोपक्रमे लक्षणया पर्युदासमापादयितुमलम्। क्वाचित्कं च उपक्रमगतत्वं तु वेदाधिकरणन्यायेन निरपेक्षमेव तत्रालम्। औत्सर्गिकं चेत्यभिप्रायेण परमप्रकृतुपक्रमोपन्यासः। यथाचैवं सत्यपि विकल्पस्य पृथक्पर्युदासनिमित्तत्वं तथाऽवसरे वक्ष्यामः।

तशब्देन कर्त्तव्योऽर्थ उच्यते । अतश्च स्नातकस्य कर्त्तव्यार्थानां वक्तव्यत्वेनोपक्रमात् 'किं तत् कर्तव्यम्' इत्यपेक्षायामग्रे 'नेक्षेतोद्यन्तम्' इत्यादौ कर्त्तव्य एवार्थो वक्तव्यः, आकाङ्क्षिताभिधानात् । अर्थान्तरोक्तौ च पूर्ववाक्यस्य साकाङ्क्षत्वेनाप्रामाण्यं स्यात् । न हि कर्तव्यार्थस्य वक्तव्यत्वेनोपक्रमेऽग्रे च तदनभिधाने पूर्ववाक्यस्य निराकाङ्क्षत्वं सम्भवति । न च साकाङ्क्षस्य प्रमाणत्वम्, गौरश्वः पुरुष इत्यादावपि प्रसङ्गात् । किं च 'नेक्षेत' इत्यस्योपक्रमेण प्रतीयमाना एकवाक्यता च न स्यात्, अर्थान्तरोक्तेः । अतश्चास्मिन्वाक्ये कश्चित्कर्त्तव्य एवार्थो वक्तव्यः । तदुक्तौ च न नञः प्रत्ययेन सम्बन्धो घटते । तत्सम्बन्धे कर्त्तव्यार्थोक्तेरनुपपत्तेः । प्रत्ययाच्चावतारितो नञ् धातुना सम्बध्यते । तत्सम्बन्धे च न नञः प्रतिषेधकत्वम् । विधायकसम्बन्धेनैव तस्य प्रतिषेधकत्वात् । प्रतिषेधकत्वस्य विधायकप्रतिपक्षत्वात् । नामधातु-

---

कर्त्तव्योऽर्थ इति । आकररीतिमनुसृत्येदम् । वस्तुतो व्रतशब्दस्य सङ्कल्प एव वाच्यः । तथासत्येव 'केशान्निवर्त्तयीत, श्मश्रूणि वापयीत, अधः शयीत' इत्याद्यनिषेधवाक्येषु कल्पसूत्रस्मृतिव्याख्यातॄणां सङ्कल्पलक्षणोक्तिनिर्वाहात् । अभिधानादिति । तल्लाभादित्यर्थः । साकाङ्क्षत्वेन—अपरिपूर्णत्वेन ॥

ननु 'तस्य व्रतम्' इत्यस्यैवानुष्ठेयविशेषः कल्प्योऽत आह—कि-ञ्चेति । नामधातुयोगिनोस्तुल्यन्यायत्वान्नामयोगिनो नञस्ताव-

योगे तु न नञः प्रतिषेधकत्वम्। तयोरभिधायकत्वात्। यथाऽहुः—

'नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः।
(१)वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ'॥ इति।

अतश्च 'नेक्षेत' इत्यत्र नञो धातुयोगान्नेक्षतिभ्यामीक्षणविरोधी कश्चनार्थः प्रतिपाद्यते।

ननु 'तदन्यतद्विरुद्धतदभावेषु नञ्' इति सत्यपि स्मरणे नञः स्वसंसृष्टाभाव एव शक्तिः लाघवात्, न तु तदन्यतद्विरुद्धयोः, तयोरभावघटितत्वेन गौरवात्, अनेकार्थत्वस्य चान्याय्यत्वात्। अतो नञो धातुयोगे धात्वर्थाभावबोधकत्वमेव, न तु तद्विरुद्धार्थबोधक-

---

-द्वोध्यमर्थमाह—वदतीति। अब्राह्मणाधर्माविति। नञ् क्रमेणान्यमात्रं विरोधिमात्रं च वदतीति योजना।

नन्वब्राह्मण इति पदाद्ब्राह्मणान्य इति प्रतीत्याश्रयणे पूर्वपदार्थप्राधान्यं नञ्समासे समाश्रितं स्यात्। न च तद् युक्तम्। केवलनञ इव नञ्समासस्यापि लिङ्गसङ्ख्यानन्वयप्रसङ्गात्। अनेकमित्येकवचनानुपपत्तेश्च। असर्व इत्यादावपि गुणभूतस्य सर्वादेः सर्वनामसञ्ज्ञाऽभावेन तत्प्रयुक्तस्य स्मैस्मादित्यादिकार्यस्यासम्भवापत्तेश्च। अतो नञ आरोपितार्थत्वमाश्रित्योत्तरपदार्थप्राधान्याश्रयणेनारोपितो ब्राह्मण इत्यर्थो वक्तुमुचित इति चेत्। न, 'त्वयाऽऽरोपितमिह रजतं वस्तुतस्त्वरजतमेतद्' इति प्रयोगानुपपत्त्यापत्तेः। न ह्येकस्मिन्नेव वाक्ये वस्तुतस्त्वारोपि-

---

(१) वदतोऽब्राह्मणेतिपाठः।

तरजतमेतदिति प्रयोगः सम्भवति । किञ्चारोपितबाधितब्राह्मण्येषु अनारोपितब्राह्मण्येषु च ब्राह्मणभिन्नेषु सन्निहितेषु 'अब्राह्मणानानय'इत्युक्ते येषु ब्राह्मण्यारोप आसीत्तेषामेवानयनं सिद्ध्येन्नान्येषाम् क्लृप्तसम्बन्धेन तेष्वेवारोपस्य झटित्युपलक्षणत्वप्रतीतेः। किञ्चाब्राह्मण इत्यत्र नञोक्तमारोपितत्वं प्रति का चिद्ब्राह्मणव्यक्तिः प्रतीप्रतीयते, उत सर्वाः, अथवा ब्राह्मणत्वजातिः ?। नाद्यः। यतस्तथासति तद्व्यक्तिप्रतियोगिक एव भेदः प्रतीयेत, नान्यव्यक्तिप्रतियोगिकः। न द्वितीयः। अब्राह्मणशब्दस्य नित्यबहुवचनान्तत्वापत्तेः। न तृतीयः। निष्कृष्टब्राह्मणविशेष्यकप्रतीतावेव पर्यवसितस्य ब्राह्मणशब्दस्य क्षत्रियादिपदसामानाधिकरण्यासंभवापत्तेः। आरोपितत्वविशिष्टजातिप्रकारिकायामारोपाधिष्ठानभूतक्षत्रियादिविशेष्यकायां प्रतीतावेव पर्यवस्यतीति चेत्, न। अभाववाचिना नञाऽऽरोपितत्वलक्षणा ब्राह्मणपदेन निष्कृष्टजातेर्लक्षणा तद्विशेष्यतया क्षत्रियस्य च लक्षणेति लक्षणात्रयापत्तेः। अनेकमित्येकवचनानुपपत्तितादवस्थ्याच्च। एकत्वारोपाधिष्ठानत्वं हि द्वयोर्बहूनां वा स्यात्। न च तत्रैकवचनोपपत्तिः। अतः पूर्वपदार्थप्राधान्याश्रयणेन ब्राह्मणान्य इत्येवार्थो वक्तुमुचितः। नच तथासति नञ्समासे लिङ्गसंख्यान्वयानुपपत्तिः। केवलस्य नञोऽसत्त्वभूतार्थाभिधायित्वेऽपि समासान्तर्गतस्य सत्त्वभूतार्थाभिधायित्वं भविष्यतीति महाभाष्यकैयटाभ्यामेव तत्परिहारात्। अनेकमित्यत्र त्वनिर्द्धारितविशेष्यकत्वेनैकवचनमित्यनिच्छताऽपि भवताऽभ्युपेयम्, उक्तन्यायात्। 'किंप्रधानोऽयं समासः ?। उत्तरपदार्थप्रधानः'इति भाष्यस्य पारिभाषिकोत्तरपदार्थप्राधान्यविधित्वाश्रयणेन च परिहृतसमस्तानुपपत्तिपरिहारः। यथा हि विशेष्यार्थकस्याप्यव्ययादेः 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति पारिभाषिकोपसर्जनत्ववशेन 'उपसर्जनं पूर्वम्'इति पूर्वनिपातो भवति,तथा विशेषणार्थकस्यापि नञ्समासोत्तरपदस्य पारिभाषिक-

त्वमिति चेत् । सत्यम् । नञो ऽभाव एव शक्तिः । स्मरणं तु प्रतीत्यभिप्रायं, न शक्त्यभिप्रायम् । 'नामधात्वर्थयोगी' इत्यपि प्रतीत्यभिप्रायम् । तथाऽपि 'नेक्षेत' इत्यत्र प्रत्ययस्य नञाऽसम्बन्धात्तेन तावत्कश्चिदर्थो विधेयः । तत्र न तावद्धात्वर्थो विधातुं शक्यते, नञा तदभावबोधनात् । नापि तदभावो विधातुं शक्यते, अभावस्याविधेयत्वात् । अतश्च नञीक्षतिभ्यां विधानयोग्यः कश्चनेक्षणविरोधी अर्थो लक्षणया प्रतिपाद्यते । स चेक्षणविरोधी लक्ष्यमाणः पदार्थो 'नेक्षिष्ये' इत्यनीक्षणसङ्कल्पः, तस्येक्षणविरोधित्वात् । सत्यपि पदार्थान्तरस्येक्षणविरोधित्वे सर्वक्रियाऽविनाभूतत्वेन सङ्कल्पस्यैव लक्षणात् ।

---

प्राधान्यवशेन सम्भवत्येवाऽस्मिन्नित्यादि । न च प्राधान्यपरिभाषाकल्पनमेव दोष इति शङ्क्यम्, निर्विभागपदतत्त्ववादिभिः परैरपि पूर्वोत्तरपदार्थप्राधान्योक्तेः पारिभाषिकस्यैव वाच्यत्वात् । यद्वा यथा केवलं तिष्ठतेर्गतिनिवृत्त्यर्थकत्वेऽपि 'प्रतिष्ठते' इत्यत्र प्रशब्दद्योतितशक्तिकेन तेनैव गतिर्बोध्यते, तथैव नञो द्योतकत्वाश्रयणे ब्राह्मणपदेनैव ब्राह्मणान्य इति प्रतीतेः सम्भवात् निर्वाह इति नास्माकमेतत्प्रतीतिनिर्वाहाय पूर्वपदार्थप्राधान्यमवश्यादरणीयम् । दर्शितं चास्य पक्षस्य भाष्याभिप्रेतत्वं कैयटेन । अस्मिंश्च पक्षे ब्राह्मणशब्दोऽन्यमात्रं वदति, अधर्मशब्दो विरोधिमात्रं वदतीति श्लोकार्थ इत्यलं प्रसङ्गचिन्तया ।

स्मरणमिति । तदन्येत्यादि शङ्कायादिदर्शितं वृद्धस्मरणमित्यर्थः । अविधेयत्वादिति । विध्ययोग्यत्वादित्यर्थः ।

स एव नेक्षेतेत्यत्र कर्तव्यतया विधीयते । अनीक्षणसङ्कल्पेन भावयेदिति भाव्याकाङ्क्षायां च 'एतावता हैनसा वियुक्तो भवति' इति वाक्यशेषावगतः पापक्षयो भाव्यतया सम्बध्यते । एवं चात्र पापक्षयार्थसङ्कल्पस्य कर्त्तव्यतया विधानात् 'तस्य व्रतम्' इत्यनेनैकवाक्यता सिद्धा भवति । तत्सिद्धं 'नेक्षेत' इत्यत्र 'तस्य व्रतम्' इत्युपक्रमात्पर्युदासाश्रयणमिति ।

'नानुयाजेषु ये यजामहं करोति' इत्यत्र विकल्प-

---

नानुयाजेष्विति । यथाभाष्यं करोत्यन्तवाक्योदाहरणेनैतत्सूचितम्—नैवात्रानुषङ्गप्रसक्तिः, नापि पदैकवाक्यत्वसम्भव इति । तथाहि भाष्ये—'एष सप्तदशो यज्ञेष्वन्वायत्त इति' वाक्यं येयजामहविधायकत्वेनोदाहृत्य 'नानुयाजेषु येयजामहं करोति' इति वाक्यं निषेधकत्वेनोदाहृतम् । न्यायसुधाकृत्प्रभृतिभिरपि दाशमिकाधिकरणशरीरं दर्शयद्भिरित्थमेव वाक्यद्वयं समुदाहृतम् । एवं चोत्तरवाक्य एव श्रुतस्य करोतीत्यस्य कुतः क्वानुषङ्गः? कथं चान्वायत्तःकरोतीति भिन्नक्रियापर्यवसितयोः पदैकवाक्यत्वम्? असति च तस्मिन् कथं व्युत्पत्तिबलेन पर्युदासलाभः?। सतोर्वैकवाक्यत्वतन्मूलकपर्युदासयोः 'अनुयाजेषु' 'सप्तदशोऽन्वायत्त' इति शास्त्रेणाश्रावयेत्यादेरप्यनुयाजेषु निवृत्त्यापत्तिः। 'यजतिषु येयजामहं करोति' इति वाक्येनैव सह मयैकवाक्यत्वमुपन्यस्तं नात एष पर्यनुयोगः सम्भवतीति चेत् । कस्यां शाखायामुपलब्धमीदृशं वाक्यमायुष्मता ?। मीमांसकमुखाच्छ्रुतमिति चेत्। किं तदीयाकरवृत्तान्तं नाश्रौषीः, यथैव हि 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति वाक्यं विषयत्वेनोदाहृत्याग्नीषोमीयेन पशुना यजेतेति वाक्यं न्यायसिद्धमादाय तात्त्विकवाक्यानुसारिन्या-

योपन्यासो विदुषामुचितः। भवतु वा साधीयानेष वाक्यपाठः। कथं तु व्युत्पत्तिलभ्यः पर्युदासः? नहि 'सुन्दरे गृहे नायं तिष्ठति'इत्युक्तेऽवश्यमसुन्दरे गृहे तिष्ठतीत्येव बोधो भवतीति केनापि स्वीकर्तुं शक्यम्। वनवासिन्यपीदृशायोगात्। अस्तु वा पर्युदासस्य व्युत्पत्तिलभ्यत्वम्,तथाऽप्यनुयाजभेदविशिष्टान्यागानुद्दिश्य येयजामहविधावुद्देश्यविशेषणस्यानुयाजभेदस्य कथं त्वविवक्षा। न चानुयाजभेद एवोद्देश्यतावच्छेदक इति शक्यं वक्तुम्। नारिष्टहोमादिष्वपि येयजामहापत्तेः। एतेन मीमांसकैकदेशिनोऽपि पर्युदासहेतुत्वेनैकवाक्यतामेव ये मन्यन्ते, ते यदि पदैकवाक्यतां तथा मन्येरन् तदा निरस्ताः। किञ्च'उपात्र वपन्ति'इत्यत्रात्रशब्देन चातुर्मास्यान्युद्दिश्य विहितोत्तरवेदिः 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीये'इत्येताभ्यामाद्योत्तमपर्वभ्यां पर्युदस्यत इति साप्तमिकाधिकरणे भाष्ये वार्त्तिके चोक्तम्। तत्र पदैकवाक्यतायामुद्देश्यविशेषणद्वयविवक्षानिमित्तवाक्यभेदद्वयमापद्यते। बहवश्च ग्रन्थास्तन्मतेऽनुपपन्ना भवेयुः। तथाहि-'नानुयाजेषु'इति पर्युदासविषयाधिकरणस्य विषयान्तरे 'न होतारं वृणीते'इत्यत्रातिदेशिकहोतृवरणपर्युदासत्वेनाभिमतेऽतिदेशेनैव सह पदैकवाक्यता वाच्या। नच सा सम्भवति। आम्नातयोः समीपाम्नानमन्तरेण पदैकवाक्यत्वासम्भवात्। अन्यथा दूरस्थस्यापि स्तावकत्वेनैकवाक्यत्वापत्तेः। आपद्यतामिति चेत् न। 'जायमानो वै ब्राह्मणस्त्रिभिः'इतिवाक्यशेषवशेन सोमे ब्राह्मणमात्राधिकारापत्तेः। एवं न्यायसुधाकृन्मते 'न प्रथमयज्ञे प्रवृञ्ज्याद्'इत्यस्मिन् 'यत्प्रवृञ्जन्ति'इति अनारभ्यवादपर्युदासेऽप्यनारभ्यवादेन सह पदैकवाक्यत्वानुपपत्तिर्दर्शयितव्या। नच सैव पार्थसारथिप्रभृतीनामिह पर्युदासानङ्गीकारे बीजमिति शङ्क्यम्। तत्र बीजान्तरस्यानुपदं वक्ष्यमाणत्वात्।

किञ्च।

'संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे।

चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही' ॥

इत्यादिषु नारदादिवाक्येषु

'शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन' ॥

इतिभविष्योत्तरवचनेन प्राप्तस्य गृहिणां कृष्णैकादश्युपवासस्य पुत्रवद्भिन्नविषयत्वेन पर्युदासो बोध्यत इति हेमाद्रिणोक्तम् । तत्र कथं तेषां तस्य च पदैकवाक्यतोपपत्तिः । भिन्नग्रन्थगतत्वात् । भिन्नविभक्त्यन्तगृहिगृहस्थपदोपेतत्वाच्च । तदुपपत्तौ वा तुल्यन्यायतया स्वीकार्यस्य चन्द्रसूर्योपरागनिमित्तोपवासे पुत्रवत्पर्युदासस्य शब्दवृत्तेन तत्प्रापकैरेव वाक्यैः सहैकवाक्यता स्यात् । सन्ति हि—

अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा ।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ॥

इत्यादीनि विष्ण्वादिवचनानि तादृशानि हेमाद्रिणैवोदाहृतानि । ननु सूर्यग्रस्तास्तेऽर्थादुपवासं प्रापयद्भ्यां 'सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्'इति 'अविमुच्यास्तगतयोर्दृष्ट्वा स्नात्वा परेऽहनि' इति च वृद्धगौतमप्रात्स्यवचोभ्यां माऽस्तु ताभ्यामेकवाक्यतेति चेत् । न । तथासति ताभ्यां प्रापितोपवासस्य पुत्रगृहीणा स्वीकारे बाधकाभावेन हेमाद्रिणैवापुत्रगृहिणामुपवासनिषेधवशेन तद्वाक्यद्वयप्रापितोपवासानुपपत्तिशङ्का या प्रदर्शिता,यच्च तत्समाधानाय 'सायाह्ने संगवेऽश्नीयाच्छारदे संगवादधः' इत्यादिस्मार्त्तवचनस्य केषसंकोचबोधकस्य पुत्रिगृहिविषयत्वमुक्तं तदुभयमप्यनुपपन्नं स्यात् । यदि तु होमानुवादेन दध्यादिगुणविधिवदुपवासानुवादेन पर्युदासविधिमाश्रित्योपवासप्रापकेण वाक्यैकवाक्यताऽऽश्रीयते तदाऽनुवादस्य शब्दादर्थाच्च प्राप्तोपवासविषयत्वसंभवाच्च शक्यते तदुभयमप्युपपाद-

प्रसक्त्या तदाश्रयणम् । तथा हि यद्यत्र प्रधानसम्बन्धलाभान्नञः प्रत्ययसम्बन्धः स्वीक्रियते तथा सत्यनेन वाक्येनानुयाजेषु येयजामहः प्रतिषिध्यते इति वक्तव्यमनुयाजेषु येयजामहं न कुर्यादिति । न च तत्र तस्य प्रतिषेधः प्राप्तिं विना सम्भवति प्राप्तिसापेक्षत्वात्प्रतिषेधस्य । अत एव 'नान्तरिक्षे न दिवि' इत्यस्य न

---

यितुम् । अथ वाक्यैकवाक्यतामेव पर्युदासहेतुत्वेन स्वीकुर्म इति चेत् । यद्यपि हि येयजामहप्रापकविधिना सह नानुयाजेष्वित्यस्य संनिधिपाठोऽस्ति तथाऽपि वाक्यैवाक्यतायां को लाभो यदर्थं पर्युदासः कल्प्यते ? । न तावत्पदैकवाक्यतायामिवानेकतात्पर्यकल्पनागौरवपरिहारः, प्रत्येकवाक्यार्थगोचरतात्पर्यभेदकल्पनाया आवश्यकत्वात् । प्रत्युत महावाक्यार्थगोचरस्य वाक्यद्वयपर्याप्तस्य तात्पर्यान्तरस्य कल्पने गौरवाधिक्यात् । नच येयजामहविधिः प्रकरणितया निश्चितः येन प्रकरणानुग्रहायापि साऽऽश्रीयेत । माऽस्त्वेकवाक्यतायाः पर्युदासहेतुत्वं कथं तु विकल्पप्रसक्तिः, कथं च तया पर्युदाससिद्धिरित्याशङ्क्य विकल्पप्रसक्तिं तावदुपपादयति तथाहीत्यादिना । प्राप्तिमिति अत्राग्निर्निषेध्यस्येष्टसाधनत्वप्रतीतिः, प्रकृपश्च तस्याः प्रमात्वेन प्रवृत्तिफलोपहितत्वेन च प्रतीयमानत्वम् । प्रतिषेधस्येत्यनन्तरं वैदिकस्येति शेषः । यद्विषयेष्टसाधनत्वप्रमा यत्पुरुषीयप्रवृत्तिफलोपहिताऽवगता भवति तन्निषेध एव तदुपकारिको वैदिकः सम्भवतीत्यर्थः । प्रमात्वापेक्षामुपपादयति अत एवेति । वेदपुराणेतिहासेषु लोकान्तरस्थानामिन्द्रादीनां यज्ञानुष्ठानश्रवणादन्तरिक्षद्युलोकाधिकरणकचयनं तेषां श्रेयःसाधनमिति ये भ्राम्यन्ति तद्दर्शने च तादृशचयनस्येन्द्रादिप्रवृत्तिविषयमभावं सम्भाव-

प्रतिषेधकत्वमन्तरिक्षे चयनाप्राप्तेः । अत एव 'न ब्राह्मणो हन्तव्यः' इत्यस्य नित्यवद्धननिवर्तकत्वमुपपद्यते । सर्वो हि पुरुषः कदाचिद्धननादौ प्रवर्तते कदाचिच्च रागाद्यभावेन निवर्त्तते । तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्तदा रागाद्यविरोधाय हननादावप्रवृत्तं प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना हननादौ प्रवृत्तेन पुंसा न ततो निवार्त्तितव्यम् । प्राप्तिसापेक्षत्वे तु स्वयमप्रवृत्तं प्रति प्रसक्त्यभावेन निषेधशास्त्राप्रवृत्तेः । अतश्च 'ब्राह्मणो न हन्तव्यः' इति रागादिना प्रवृत्तं प्रत्येव भ्रान्तिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेर्युक्ता प्रवृत्तस्य ततो निवृत्तिः । अतश्च'ब्राह्मणो न हन्तव्यः' इत्यस्य निषेधस्य निवृत्तिनियमबोधक-

---

यन्ति तद्भ्रमापनयनेन संभवत्प्रतिषेधत्वस्यापि 'नान्तरिक्षे' इत्यादेर्यः प्रतिषेधत्वानङ्गीकारः स प्रमारूपाप्तिं विना निषेधानुपपत्तेरेव । अन्यथा तस्य नित्यानुवादत्वं न स्यादित्यर्थः । प्रवृत्तिफलोपहितत्वापेक्षामुपपादयति अत एवेति । पुरुष इत्यनन्तरं हननेष्टसाधनताप्रमावानपीति शेषः । प्रामाण्येति । अनिर्णीतस्यानिष्टानुबन्धित्वस्य निर्णयजननेनेत्याशयः । पुंसेति । प्रवृत्तः पुमान्न ततो निवर्त्तयितव्यः । यथाहि सिद्धनिषेधत्रैवर्णिकान्प्रति सम्भवत्प्रामाण्यानां निषेधानां नानिष्टाननुबन्धित्वनिश्चयेन प्रवृत्तान् प्रति प्रवृत्तिरुचिता, तन्निश्चयबाधेऽत्यन्ताप्राप्तस्यानिष्टानुबन्धित्वस्य प्रापणे च गौरवातिशयादित्याशयः । बोधकत्वमित्यनन्तरमपीत्युक्तमिति शेषः । अप्रवृत्तं प्रत्येव तत्प्रवृत्तौ न नियम-

त्वम्, 'व्रीहीनवहन्याद्' इत्यस्यैवावघातनियमबोधकत्वम्। यथा खलु 'व्रीहीनवहन्याद्' इति शास्त्रं वैतुष्यार्थमवघाते स्वतः प्रवृत्तं पुरुषं प्रति न प्रवर्तते वैयर्थ्यात्, किं तु विदलनादौ प्रवृत्तं प्रति। एवं 'न हन्याद्'इति शास्त्रं हननात्स्वयं निवृत्तं पुरुषं प्रति न प्रवर्त्तते वैयर्थ्यात्, किं तु हनने प्रवृत्तं पुरुषं प्रति कर्त्तव्यत्वेन प्रसक्तस्य निषेधाद् 'यत्र कर्त्तव्यं तन्न'इति। अतश्च प्राप्तिसापेक्षत्वात्प्रतिषेधानामनुयाजेषु येयजामहप्रतिषेधे तस्य तत्र प्राप्तिर्वक्तव्या। सा न तावद्धननादाविव रागतः सम्भवति। अतो 'यजतिषु येयजामहं करोति' इति शास्त्रात्सा वक्तव्या। शास्त्रप्राप्तस्य च निषेधे विकल्पः स्याद्, शास्त्रेण भ्रान्तिनिमित्तरागस्येव शास्त्रान्तरस्यात्यन्तबाधायोगात्। न च पदशास्त्रेणाहवनीयशास्त्रस्येव 'नानुयाजेषु'इति विशेषशास्त्रेण 'यजतिषु येयजामहं करोति'इति सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम्। शास्त्रयोर्हि तत्र बाध्यबाधकभावो यत्र परस्परनिरपेक्षता। न हि पदशास्त्रस्य स्वार्थविधाना-

---

परत्वं स्यादित्याशयः। भवत्वेवंरूपप्राप्तिसापेक्षत्वं निषेधानां तथाऽपि हनननिषेध इव येयजामहानिषेधेऽपि न विकल्पप्रसक्तिरत आह सा नेति। भ्रान्तिःअनिष्टाननुबन्धित्वभ्रान्तिः। शास्त्रेत्यस्येष्टसाधनत्वप्रापकस्येत्यादिः। तस्यात्यन्तबाधे हि सत्यनुयाजरूपेष्टसाधनत्वप्राप्तेर्भ्रान्तित्वं वाच्यम्, तथा सति पूर्वोक्तप्राप्त्यभावे निषेध एव दुःस्थितः स्यादित्याशयः। कौण्डिन्यदृष्टान्तेन पूर्वशङ्कितं सा-

र्थमाहवनीयशास्त्रापेक्षाऽस्ति । निषेधशास्त्रस्य तु प्रसक्त्यर्थं 'यजतिषु येयजामहं करोति' इति विधेरस्त्यपेक्षा ।

---

मान्यविशेषत्वाभं निरस्यति बाध्येति । निषेधशास्त्रस्य—वैदिकनिषेधस्येत्यर्थः । इतिशब्दः प्रकारवाची । विधेरिष्टसाधनत्वप्रमितेरित्यर्थः । अयमाशयः—वैदिकवाक्यानां सर्वदा सर्वपुरुषान्प्रत्यैकरूप्येणैव प्रामाण्यं वक्तव्यम् । ग्रहणधारणाध्ययनविधिभ्यां तथैवापेक्षणात्, 'एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः' इत्येतद्धोत्रषाष्ठन्यायाच्च, निषेधनिरूपणावसरोक्तन्यायाद्वा । ननु तत्र भावे 'अनूयाजेषु येयजामहङ्करोति' इतिवचनम् उपसंहारार्थं स्यात्, तत्र चानुयाजोद्देशेन येयजामहस्याग्नेयोद्देशेन चतुर्द्धाकरणस्येव विधेयत्वात्, सति नञि तस्यैव निषेध्यत्वमुचितमिति चेत् । समानशाखाया उपसंहारविधावतात्पर्यविषयस्याप्युद्देश्यविधेयभावस्य शास्त्रान्तरतात्पर्यप्रतीत्युपायमात्रतयोपन्यासात् नञभावेन किं तस्य । वास्तवोद्देश्यविधेयभावस्यैव सति नञि विध्युद्देश्यनिषेध्यभावनियामकत्वात् । अत उक्तविध एव वाक्यार्थो वाच्यः—यदनुयाजेषु येयजामहं कुर्यात् तन्न । निर्वचनशक्तिर्निषेधपक्षवाच्या । वक्ष्यमाणन्यायेन च नञभावेऽनुवाद्यतया प्रतीतपदार्थमध्ये कस्यापि सति नञि तच्छब्दोपबन्धेन निषेध्यतारूपविषयताऽसम्भवः । ईदृशवाक्यार्थबोधश्च 'कुर्यात्' इत्यन्तावान्तरवाक्यार्थप्रसिद्ध्यधीनः, अप्रसिद्धस्यानुवाद्यत्वायोगात् । नच विशिष्टानुवादे वाक्यभेदवशेन येयजामहमात्रस्य निषेध्यत्वान्नावान्तरवाक्यार्थप्रसिद्ध्यपेक्षेति शङ्क्यम् । नैमित्तिकवैदिकत्वेन निमित्ताश्ववदाने क्रत्वपूर्वसाधनत्वात्मविशेषसिद्धिवद्वैदिकनिषेधवशेन निषेध्यस्य क्रत्वपूर्वसाधनत्वात्मकविशेषसिद्धिदशायां 'य इष्ट्या' इतिवाक्ये याजिनेष्ट्याद्यपूर्वसाधनस्येव येयजामहपदेनानुयाजापूर्वसाधनत्वोपहितस्यैव येयजामहस्य विवक्षायां तत्प-

एवं च निषेधशास्त्रस्य विशेषविषयत्वेन प्राबल्यवद्विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः

---

सिद्ध्यपेक्षाया अवश्यवक्तव्यत्वात् । नञ्निषेधप्रवृत्तेः प्राक् सामान्यशास्त्रतात्पर्यभ्रमोत्थतत्प्रसिद्धिरापाद्यते तदाऽनुयाजयेयजामहसंसर्गस्य ततोऽप्रसिद्धेरन्यतश्च तत्प्रसिद्धेरशक्यत्वादप्रसिद्धस्य चानुवाद्यत्वायोगात्कथमुक्तत्रिधवचनव्यक्त्याश्रयणेन निषेधप्रामाण्यमवतिष्ठेत ?। नहि शशविषाणभ्रमदशायां 'यच्छशविषाणेन कार्मुकं कुर्यात्तन्न'इति सम्भवत्प्रवृत्तिकोऽपि निषेधस्तद्बाधदशायां प्रवर्तितुमुत्सहत इति सहृदयैरेवालोचनीयम् । अतो निषेधेनैव स्वप्रामाण्यैकरूप्यनिर्वाहाय सामान्यशास्त्रस्यानुयाजयेयजामहसंसर्गे प्रामाण्यमनुमन्तव्यम् । नचैवं स्मृतिष्वपि भ्रान्तिप्राप्तस्य निषेधपर्युदासौ न स्यातामिति शङ्क्यम् । एकरूपप्रामाण्यशून्यवाक्यानां तासु बहूपलब्धेः । यथैव ह्यन्वयव्यतिरेकमूलकानि 'यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते' इत्यादिवाक्यानि अन्वयाद्यालोचनाकुशलान् प्रति प्रामाण्यमनुभवन्त्यपि तदालोचनकुशलान्प्रति न प्रामाण्यमनुभवन्ति, तथा यदि कानिचित् तमेव प्रति भ्रान्तिदशायां प्रामाण्यमनुभूय बाधदशायां नानुभवेयुस्तदा न क्षतिः । ननु वेदवाक्यस्यैवंविधता, तत्रैकरूप्येणैव प्रामाण्यस्य वक्तुमुचितत्वात् । अन्यथैष गुणविधिः,एष उत्पत्तिविधिः,एष नित्यानुवाद इति व्यवस्थोच्छेदापत्तेः । पुरुषभेदेन कालभेदेन प्रतिपत्तिवैचित्र्यस्यानिवार्यत्वात् । नचैवं 'न दीक्षितो जुहोति'इत्यादावपि विकल्पापत्तिः,तत्परिहारस्यानुपदं वक्ष्यमाणत्वादिति । फलितमाह-एवं चेति । भवतु विकल्प इत्याशङ्क्य तस्य दूषकताबीजमाह-स चेति । भावाभाववा-

स्यात् । स च न युक्तः । विकल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति । न ह्यनुयाजेषु येयजामहकरणे नानुयाजेष्वित्यस्य प्रामाण्यं सम्भवति, व्रीह्यनुष्ठानसमय इव यवशास्त्रस्य । द्विरदृष्टकल्पना च स्यात् । विधेर्हि एवं ज्ञायते यदनुयाजेषु येयजामहकरणे कश्चनोपकारो भवतीति, निषेधाच्च तदकरणादिति ज्ञायते, अनृत-

---

चिनोर्नञनुयाजशब्दयोः कथं सम्बन्ध इत्याशङ्क्याह—नह्यनुयाजेष्विति । 'न तौ पशौ करोति' इत्यत्र प्रयोजनासम्भवेन पर्युदासाभावं सूचयितुं प्रकृते वाक्यार्थशोधनपूर्वकं पर्युदासप्रयोजनमाह—अत्र चेति । यथा येयजामहो यज्ञसामान्यानुवादेन विहितस्तथा यद्याज्यभागौ विहितौ स्यातां तदा तद्विधेर्विषयसमर्पणाय 'पशुवर्जम्' इति पर्युदास आश्रीयेत । नचैवम् । उपदेशविधेर्दर्शपूर्णमासमात्रविषयत्वात्, अतिदेशस्य च तत्तद्विकृतिविश्रान्तत्वात् । नच 'नार्षेयं वृणीते' इतिवद् 'आज्यभागवर्जे पशौ तद्वत्कुर्याद्' इत्यातिदेशविषयसमर्पणायैव पर्युदासाश्रयणसम्भवः। तथा सति 'न तौ पशौ करोति' इत्यस्य पाशुकातिदेशप्रवृत्त्युत्तरं प्रवृत्त्यापत्तेः । अस्तु तथेति चेत् । न । दार्शिकाज्यभागविधिमात्रजन्यामसाधारण्येनाज्यभागोपस्थितिमपेक्ष्य प्रवृत्तेन 'तौ' इतिपदेन युक्तस्यास्य शास्त्रस्य समस्तोपदेशप्रवृत्त्युत्तरभाविपाशुकातिदेशोत्तरप्रवृत्त्यसम्भवात् । न च निषेधस्यापि प्राप्त्यपेक्षत्वात्पाशुकातिदेशोत्तरप्रवृत्तित्वं तुल्यमिति शङ्क्यम् । 'यः पशुस्तत्र तौ न कार्यौ' इतिपश्वनुवादेनाज्यभागवर्जनमङ्गत्वेन बोधयतोऽस्य प्राक्सिद्धपशुप्राप्तिमात्रसापेक्षत्वात्, भाविप्राप्तिसम्भवेन च प्रयोजनत्वात् । पर्युदासपक्षे त्वतिदेशविषयसमर्पणनिर्वाहाय 'यत् पशौ तत् कुर्यात्तदाज्यभागवर्जम्' इत्येव वचनव्यक्ते-

वदनाकरणादिवद्दर्शपूर्णमासयोः । स चोपाकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसङ्गः । अतश्च विकल्पो न युक्तः । प्रतिषेधाश्रयणे च तदापत्तेर्न तदाश्रयणं, किं तु नञोऽनुयाजशब्देन सम्बन्धमाश्रित्य पर्युदास आश्रीयते नञनुयाजशब्दाभ्यामनुयाजव्यतिरिक्तलक्षणात् ।

अनुयाजव्यतिरिक्तेषु येयजामहं करोतीत्यत्र च वाक्ये येयजामहः कर्त्तव्यतया न विधीयते यजतिषु येयजामहं करोतीत्यनेनैव विहितत्वात्, किं तु सामान्यशास्त्रविहितयेयजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते—यत् यजतिषु येयजामहं करोति तदनुयाजव्यतिरिक्तेष्विति । एवं च सामान्यशास्त्रस्य विशेषापेक्षिणो नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तेषु येयजामहः कर्त्तव्यतया प्राप्तः । अनुयाजेषु तु स न कर्तव्यतया प्राप्तो न वा

---

रुचितत्वात्, तस्याश्च प्राक्सिद्धातिदेशसापेक्षत्वादित्याशयः । पर्युदासाश्रयणे वा कथं न विकल्प इत्याशङ्क्याह—एवं चेति । प्राप्त इति । प्राप्नोतीत्यर्थः । नचैवं 'न सौम्येऽध्वरे' इत्यत्रापि पर्युदासापत्तिः । पर्युदासस्थले वाक्यार्थबोधनिर्वाहाय प्राक्सिद्धप्राप्त्यनपेक्षत्वेऽपि प्रयोजनवत्त्वनिर्वाहाय स्वव्यतिरेके पर्युदसनीयगोचरसम्भावितप्राप्त्यपेक्षत्वात्, इह च तदभावात् । नन्वेवं व्रीहियवविकल्पपरिहाराय यवशब्दोऽपि यवशास्त्रे व्रीहिषु यवसादृश्यविधानार्थः स्यात्, समामनन्त्यपि गौणी पर्युदासस्थलीयलक्षणावददोष

प्रतिषिद्ध इति न विकल्पः। लक्षणया चानुयाजव्यतिरिक्तविषयसमर्पणान्नानुयाजेष्विति वाक्यस्य नाप्रामाण्यम्, अतश्च पर्युदासाश्रयणे न किंचिद्द्बाधकम्। तत्सिद्धं नानुयाजेष्विति वाक्ये विकल्पभयात्पर्युदासाश्रयणमिति।

ननु पर्युदासाश्रयणे यजतिषु येयजामहं करोतीति शास्त्रेण यागसामान्ये प्राप्तस्य येयजामहस्य नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्ते सङ्कोचनात् पर्युदासस्योपसंहाराभेदः स्यात्। उपसंहारे हि सामान्ये प्राप्तस्य विशेषे सङ्कोचो भवति। यथा 'पुरोडाशं चतुर्द्धा करोति' इति पुरोडाशसामान्ये प्राप्तं चतुर्द्धाकरणम्, 'आग्नेयं चतुर्द्धा करोति' इत्याग्नेये सङ्कोच्यत इति चेत्—

---

इत्यत आह—लक्षणयेति। वाक्यस्येत्यनन्तरं स्वार्थ इति पूरणीयम्। 'नानुयाजेषु' इतिनिषेधाद्धि येयजामहनिवृत्तिरनुयाजेषु तात्पर्येण प्रतीयते। नच लक्षणया पर्युदासाश्रयणे सा त्यज्यते। अपाक्षिकत्वासिद्ध्या सुतरां तन्निर्वाहात्। अतस्तात्पर्यविषयतया प्रतीयमानार्थगोचरप्रामाण्यसिद्ध्यनुगुणाया लक्षणाया 'वेदोऽयमाश्रयत्यर्थम्' इतिन्यायेन वेदानुमतत्वाददोषत्वम्। यवशास्त्रे तु यवानां नित्यत्ववत्साधनत्वं तात्पर्येण प्रतीयते, गौणी चाश्रीयमाणा तद्बाधेनैवेति तद्गोचरप्रामाण्यसिद्ध्यननुगुणायास्तस्या वेदाननुमतत्वाद्दोषत्वमित्याशयः। नच शाब्दबोधवेलायामबोध्यायां फलत्वेनार्थात्सिध्यन्त्यामपि निवृत्तौ 'नानुयाजेषु' इत्यस्य कथं प्रामाण्योपपत्तिरिति शङ्क्यम्। हन्त्यादिविधेर्नियमादाविव तात्पर्यविषयत्वेन तस्यां

न। तन्मात्रसङ्कोचार्थत्वादुपसंहारस्य, तदन्यमात्रसङ्कोचार्थत्वात् पर्युदासस्येति केचित्।

अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे सङ्कोचनरूपो व्यापारविशेषो विधेः। 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्'—इत्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना वा नाम्ना वा नञः सम्बन्धः। अतोऽनयोस्तावत्स्वरूपतः स्पष्ट एव भेदः। एवं सत्यप्यभेद आशङ्क्येत यदि यत्र पर्युदासो विहितस्तत्रावश्यमुपसंहारः स्यात्। न चैतदस्ति। 'नेक्षेतोद्यन्तम्' इत्यादौ सत्यपि तस्मिन्नुपसंहाराभावात्। न हि तत्राग्नेयचतुर्द्धाकरणमिव सामान्ये प्राप्तं किंचिद्विशेषे सङ्कोच्यते। पापक्षयोद्देशेनानीक्षणसङ्कल्पमात्रविधानात्। प्रकृतोदाहरणे तु यजिसामान्ये प्राप्तस्य येयजामहस्यानुयाजव्यतिरिक्तेषु सङ्कोचनाद्यादि विधेरुपसंहारविधित्वं

---

प्रामाण्योपपत्तेः। न्यायसुधाकारोक्तं परिहारमाह—तन्मात्रेति। तद्दूषणाय सम्प्रदायमतमाह—अन्ये त्विति। रूप इति। सङ्कोचनं रूप्यतेऽनेनेत्यर्थः। विशेषं प्रति पारार्थ्यज्ञापनात्मक इत्याशयः। अभेद इति। फलैक्यात्प्रमाणान्तरत्वरूपभेदाभाव इत्यर्थः। सङ्कल्पमात्रविधानादिति—मात्रशब्दो भिन्नक्रमः कात्स्न्यर्थवाची च विधानमात्रादिति यदि सङ्कल्पसामान्यतः फलसाधनत्वेन विहितः सन्निह पापक्षयार्थत्वेन विधीयते तदा सम्भवेदपि तत्सङ्कोचः, नचैवमस्ति, इहैव सङ्कल्पगोचरविधिचतुष्टयाङ्गीकरणादित्याशयः। प्रत्युत विधेरुपसंहारविधित्वाभाव एव

भवति, नैतावता किंचिद्विरुध्यते । विध्यभावे हि कथं विधिकार्यमुपसंहारः पर्युदासेन क्रियत इति भवति विरोधः । न चात्र विधिर्नास्ति नञोऽनुयाजपदसम्बन्धेन विधेर्विधायकत्वस्याख्यापनात् । अत्र हि पर्युदासोऽनुयाजव्यतिरिक्तविषयसमर्पकः, आग्नेयवत् । उपसंहारकस्तु विधिरेव ।

न च—अत्र तन्मात्रसङ्कोचाभावान्नोपसंहार इति वाच्यम् । तन्मात्रसङ्कोच इति कोऽर्थः ?—आग्नेयमात्रे सङ्कोचो वा, सामान्यप्राप्तस्य विशेषमात्रे सङ्कोचो वा ? । आद्ये ऽनारभ्याधीतसाप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारो न स्यादाग्नेये सङ्कोचाभावात् । द्वितीये चतुर्द्धाकरणस्य पुरोडाशमात्रे प्राप्तस्याग्नेये सङ्कोचवत् अनुयाजाननुयाजसाधारण्येन प्राप्तस्याननुयाजेषु सङ्कोचादुपसंहारः स्यादेव । एतावांस्तु विशेषः-आग्नेयादिवाक्येषु आग्नेयादयो विशेषाः स्वपदोपस्थिताः, प्रकृते तु पर्युदासेन तस्योपस्थितिरिति । उपसंहारन्यायस्त्वविशिष्ट एव ।

---

विरोध इत्याह—विध्यभाव इति । ननु पर्यदासेन स्वयमेव विषयविशेषसमर्पणान्न विधिरपेक्ष्यतेऽतः श्रुतोऽप्यविवक्षितोऽत आह—नचात्रेति । नास्तीत्यविवक्षित इत्यर्थः । फलाभावादविवक्षां ब्रूमो न यच्छब्दादिवत्पर्युदासस्य तच्छक्तिविघातकत्वेनेत्यत आह—अत्रहीति । समर्पकइत्यनन्तरम्—इति सप्तमि-

यच्च तदन्यमात्रसङ्कोचनार्थत्वात्पर्युदासस्येति । तन्न । 'नेक्षेत'इत्यत्र सत्यपि पर्युदासे सङ्कोचाभावात् । न हि सामान्ये प्राप्तं तदन्यमात्रे सङ्कोच्यते सङ्कल्पमात्रविधानादित्युक्तमित्यास्तां तावत् । तत्सिद्धं नानुयाजेष्वित्यत्र विकल्पप्रसक्त्या पर्युदासाश्रयणमिति ।

यत्र तु स आश्रयितुं न शक्यते तत्र तत्प्रसक्तावपि निषेध एवाश्रीयते । यथा 'नातिरात्रे षोडशिनं गृह्णाति'इत्यत्र । नहि 'अतिरात्रे षोडशिनं गृह्णाति'इति शास्त्रप्राप्तमतिरात्रे षोडशिग्रहणं प्रतिषिध्यत इति विहितप्रतिषिद्धत्वाद्विकल्पप्रसक्तावपि पर्युदास आश्रीयते ऽशक्यत्वात्। यद्यत्र नञः षोडशिपदेन सम्बन्धः स्वीक्रियेत तदाऽतिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थः स्यात्, तत्र च 'अतिरात्रे षोडशिनं गृह्णाति'इति प्रत्यक्षविधिविरोधः । अत एवातिरात्रपदेन न नञः सम्बन्धः, 'अतिरात्रे षोडशिनं गृह्णाति'इति प्रत्यक्षविधिविरोधात् । अतश्चात्र पर्युदासस्यानुपपत्तेर्निषेध एव स्वीक्रियते ।

---

ति शेषः । पारार्थ्यबोधने विभक्तेरिवोपसंहारे विधिसहकारित्वेनैव विशेषोपस्थापकपदस्य मित्रविन्दादिप्रकरणं न तु स्वातन्त्र्येण, पारार्थ्यप्रतीतिमूलकत्वादुपसंहारस्येत्याशयः । विधिविरोध इति । पर्युदासो हि स्वीक्रियमाणो विकल्पपरिहारेण निवृत्तिफलको वाच्यः । नचैष पर्युदासस्तथा वक्तुं शक्यते, प्रत्यक्षविधिविरोधादिति भावः । अत एवेति । अनेनैव प्रकारेणेत्यर्थकविरोधादिति पञ्चम्यन्तेनान्वेति । अतश्चेति । चो भिन्नक्रमः । अत्रेति ।

विकल्पो ऽपि स्वीक्रियते अनन्यगतेः ।

अतश्चैतत्सिद्धम्—यत्र 'तस्य व्रतम्' इत्याद्युपक्रमः विकल्पप्रसक्तिश्च नास्ति तत्र प्रतिषेधः, यथा—'न कलञ्जं भक्षयेद्' इति । यत्र वा विकल्पप्रसक्तावपि पर्युदास आश्रयितुं न शक्यते तत्र प्रतिषेधः, यथा 'नातिरात्रे षोडशिनं गृह्णाति' इति । एतावांस्तु विशेषः यत्र विकल्पापादकः प्रतिषेधः, तत्र प्रतिषिध्यमानस्य नानर्थहेतुत्वम् उभयोरपि विधिनिषेधयोः क्रत्वर्थत्वात् । यत्र तु न विकल्पः प्रसज्यते प्राप्तिश्च रागतः प्रतिषेधश्च पुरुषार्थः, तत्र निषिध्यमानस्यानर्थहेतुत्वम् । यथा कलञ्जभक्षणस्य । दीक्षितो न ददाति न जुहोतीत्या-

---

यथाऽत्र पर्युदासकल्पनानिमित्ते सत्यपि तदनुपपत्तेर्निषेधस्तथा कल्पस्यापि पर्युदासस्य क्वचिदनुपपत्तेर्निषेध एव । यथा 'सहस्रसंवत्सरं मनुष्याणामसम्भवाद्' इति कातीयसूत्रे । व्याख्यातं च तथा कर्काचार्यैरित्याशयः । यत्रेत्यनन्तरं क्रत्वर्थ इति शेषः । उपलक्षणं चैतत् । पुरुषार्थविकल्पापादकोऽपि यत्र निषेधस्तत्रापि न निषेध्यस्यानर्थहेतुत्वं निषेधस्यानावश्यकताज्ञापनपरत्वात् । अत एव वाऽऽह—यत्रेत्विति । प्राप्तिश्च रागत इत्यस्य प्रयोजनदर्शनव्याजेन 'दीक्षितो न जुहोति' इत्यादौ विकल्पापत्तिं निराकरोति—दीक्षित इति । ननु 'यावज्जीवमग्निहोत्रं जुहुयाद्' इत्यादेर्दीक्षितेतरविषयत्वेन सङ्कोचे प्राप्त्यभावान्निषेधानुपपत्तिः । असङ्कोचे वा शास्त्रप्राप्तस्यात्यन्तिकबाधायोगादवर्जनीया विकल्पापत्तिरिति चेत् । स्यादेतदेवम्, यदि 'यदीक्षितो जुहोति तन्न' इति वचनव्यक्तिराश्रीयेत, नत्वेवम्, 'यज्जुहोति

तद्दीक्षितो न'इति होममात्रप्राप्तिसापेक्षाया वचनव्यक्तेराश्रयणात् । तथाहि नञभावे यद्विधातुं योग्यं सत्यपि तस्मिन्नतच्छब्दोपबन्धे नानुबन्धकाविनिक्षिप्ततया शक्यं दर्शयितुमिति नञभावे तच्छब्दोपबन्धेन यथा विधेयं भवति, तथा सति तस्मिंस्तच्छब्दोपबन्धेन निषेध्यतां प्रतिपद्यते । विधेयतात्मिकाया इव निषेध्यतात्मिकाया अपि विषयतायास्तदुपबन्धादिनाऽर्थविशेषेऽनुभवसिद्धत्वात् । यदि 'यद्दीक्षितो जुहोति' इति स्यात्तदा यावज्जीवविधिनाऽपि होमं प्रति दीक्षाविशिष्टकर्त्तुर्गुणभावाप्राप्तेर्होमोद्देशेन दीक्षित एव विधेयः स्यात्, अतः सति नञि 'यज्जुहोति'इतिहोममात्रानुवादेन 'तद्दीक्षितो न'इत्येवं स एव निषेध्यत्वेन वक्तुमुचितः । तथा च होमप्राप्तिमात्रेणोपपन्नत्वादसत्यामपि यावज्जीवविधिना दीक्षितकर्तृकहोमप्राप्तौ नानुपपत्तिर्निषेधस्य, असति चास्मिन्दीक्षितं प्रति होमप्राप्तिसम्भवात् पर्युदासवत्प्रयोजनसम्भवः । अत एव सौत्रः पर्युदासत्वव्यवहारः । नच दीक्षितत्वेन रूपेण पुंस इवानुयाजत्वेन रूपेणानुयाजानामपि सम्बन्धाप्राप्तेः 'नानुयाजेषु'इत्यत्रापि 'यदनुयाजेषु येयजामहङ्करोति'इत्यनुवादानुपपत्तिरिति शङ्क्यम् । यज्ञेषु येयजामहः कर्त्तव्य इति विधेः प्रत्युद्देश्यसमाप्त्याऽनुयाजत्वेनानुयाजशेषिताप्राप्तिसंभवात् । 'अग्निहोत्रं जुहुयाद्'इतिविधेस्तु कर्त्तुर्विधेयत्वे सत्यपि प्रतिव्यक्ति समाप्त्यभावेन दीक्षितत्वेन दीक्षितकर्त्तव्यत्वाप्राप्तेः । नच तत्त्वेन दीक्षितकर्तृकत्वाप्राप्तावपि दीक्षाकालीनहोमप्राप्तिमात्रेण 'यद्दीक्षितो जुहोति'इत्यनुवादः किं न स्यादिति शङ्क्यम् । नञभावे प्रतीतायास्तच्छब्दोल्लेखिविषयताया असति बाधके त्यागस्यान्याय्यत्वात् । दीक्षाया उपलक्षणत्वप्रसक्तेश्च । तस्माद्यावज्जीवविधेर्दीक्षितेतरविषयत्वेन सङ्कोचेऽपि 'यज्जुहोति तद्दीक्षितो न'इति निषेधस्य नानुपपत्तिः । यद्वा नैव तत्सङ्कोचः, नच शास्त्रप्राप्तस्य बाधप्रसङ्गः । यदि हि यावज्जीवविधिकृता दीक्षा-

कालीनहोमप्राप्तिमादाय प्रवृत्तेन 'यद्दीक्षितो जुहोति तन्न' इति निषेधेन तस्य विधेर्दीक्षितरकालावच्छिन्नजीवननिमित्तत्वपरतया सङ्कोचः क्रियेत, तदा दीक्षाकालीनहोमाकरणान्न प्रत्यवायः, तत्करणाद्वा न पापक्षय इत्येव सिध्येत्, नतु तत्करणाज्जोतिष्टोमवैगुण्यम्. उपजीव्यप्राप्त्यर्थमवश्यालोचनीयविधिसङ्कोचेनैव निषेधस्य प्रयोजनवत्त्वलाभे प्रकरणेन क्रत्वङ्गत्वकल्पनानुदयात् । तथाच प्रकरणपाठबाधापत्तिः । अतो 'यो होमस्तं दीक्षितो न कुर्याद्' इति केवलोत्पत्तिसिद्धहोमस्वरूपानुवादेन तद्वर्जनरूपनिवृत्तेः समीहितसामान्यानुबन्धबोधकशास्त्रेण तद्विशेषाकाङ्क्षायां क्रतुविध्येकवाक्यतां प्राप्य वर्जनस्यापूर्वहेतुत्वं बोधयता प्रतियोगिनस्तत्प्रतिबन्धकत्वमापाद्यते, नतु विध्यन्तरसङ्कोचः, नतरां तद्बाधः । नचैवमकरणे प्रत्यवायभयान्न दीक्षितो होमान्निवर्त्तेतेति शङ्क्यम् । हिंसागोचरसाङ्ख्योक्तन्यायेन ज्योतिष्टोमफलकामस्य प्रत्यवायमभ्युपगम्यापि निवृत्त्युपपत्तेः । महाभाष्यकारोक्तकूपखननन्यायेन वोत्पन्नस्यापि प्रत्यवायस्य प्रधानापूर्वेणैव नाशाभ्युपगमात् । ननु क्रत्वर्थहिंसाविधिना पुरुषार्थनिषेधस्येव क्रत्वर्थनिषेधेन पुरुषार्थहोमविधेरपि सङ्कोच एव कुतो नाभ्युपगम्यत इति चेत्, न । यतो निषेधस्य प्राप्त्यपेक्षायां रागप्राप्त्योपपन्नस्य स्वत एव शास्त्रीयहिंसायामप्रवृत्तिं वदामो नतु विधिना तत्सङ्कोचं ब्रूमः । इहापि यदि यावज्जीवविधिरकरणनिषेधबोधकः स्यात्, तेनैव न्यायेन शास्त्रीयप्रकरणं न विषयीकुर्यात् । करणविधिस्त्वयं कथमकारणसङ्कोचं गच्छेत्, अतो यथैकस्मिन्पर्वपूर्वाह्णेऽनेककामस्यानेककाम्येष्टिसन्निपाते युगपदनुष्ठानासम्भवाद्यत्फले एवोत्कटकामस्ततोऽन्यत्र न प्रवर्त्तते इत्यतो नान्यशास्त्राणां विषयतः फलतो वा बाधो व्यवह्रियते, तथा ज्योतिष्टोमफलार्थी यदि नाग्निहोत्रे प्रवर्त्तते नैतावता यावज्जीवविधेः कथमपि बाधव्यवहार उचित इति कथं

दिषु दानहोमादीनां शास्त्रप्राप्तावपि पुरुषार्थत्वेन प्राप्तत्वा-त् क्रत्वर्थत्वेन च प्रतिषेधात्तुल्यार्थत्वाभावेन विकल्पा-

---

शास्त्रबाधनिमित्तविकल्पप्रसक्तिः । अमुनैवाशयेनोक्तम्—तुल्यार्थत्वाभावेनेति । यो यावज्जीवविधेस्तात्पर्यविषयोऽकरणस्य प्रत्यवायहेतुत्वं स नैव प्रतिषेधस्य विषयो निषेध्यत्वेनेत्याशयः । विधेरनुवाद्यकोटिनिक्षेपाभावेन पर्युदासतुल्यत्वात्सौत्रव्यवहारोपपत्तिः । एतेन 'यच्छ्राद्धं तद्रात्रौ न कुर्वीत,' 'यो यज्ञस्तं मावैर्न कुर्वीत'इति केवलं श्राद्धं यज्ञं चानूद्य रात्रिमाषवर्जनयोरङ्गत्वबोधकशास्त्राभ्यां विकल्पाप्रसक्तिर्व्याख्याता । रात्रिमाषयोर्यज्ञाङ्गत्वप्राप्त्यनपेक्षत्वमात्रेण तुल्यन्यायत्वोपपत्तेः । नन्वेवमपि 'न प्रथमयज्ञे प्रवृञ्ज्याद्' इत्यत्र तार्तीयसिद्धान्तो न सङ्गच्छते, तथाहि वाक्यपादे "संख्यायुक्तं क्रतोः प्रकरणात्स्याद्" इत्यधिकरणे 'न प्रथमयज्ञे प्रवृञ्ज्यात्, न द्वितीये तृतीये वा प्रवृञ्ज्याद्'इत्युदाहृत्य चिन्तितम्—किं प्रथमयज्ञशब्देन ज्योतिष्टोममुद्दिश्य तदीयसर्वप्रयोगेषु प्रवर्ग्यो निषिध्यते, उत तदीयं प्रथमप्रयोगमुद्दिश्य तत्रैव स निषिध्यत इति ? । तत्र 'य एतेनानिष्ट्वा' इति शास्त्रेण ज्योतिष्टोमे प्रथमयज्ञपदप्रवृत्तिनिमित्तावगमात्, तद्वाक्यशेषे च 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति प्रथमयज्ञशब्दस्य ज्योतिष्टोम एव दृष्टप्रयोगत्वाद्, यज्ञशब्दस्य च प्रयोगे लक्षणापत्तेः, प्रथमप्रवृत्तिवाचिनः प्रथमशब्दस्य यागगोचरलक्षणायास्तु पृष्ठशब्दस्य रथन्तरादिष्विव वेददृष्टत्वेनादोषत्वात्, प्रकरणानुग्रहलाभाच्च ज्योतिष्टोमे एव प्रवर्ग्यनिषेधः । नन्वनारभ्य 'यत्प्रवृञ्जन्ति'-इति विहितं प्रवर्ग्यं प्रकृत्य पठितनिषेधे कथं प्रकरणानुग्रहः । 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति'इति शास्त्रेण यत्रोपसदस्तत्रायं स्यादित्यवगतेस्तासां ज्योतिष्टोम एवोपदेशात् 'प्रकृतौ वाऽद्विरुक्तत्वाद्' इति न्यायेन ज्योतिष्टोमप्रकरणानुप्रविष्टे विधौ सति निषेधस्या-

धि तत्रानुप्रवेशात् । कौषीतकिब्राह्मणं तत्प्रकरण एव प्रवर्ग्ये सति विधेर्निषेधस्य च पाठाच्च । अत एवोपसदङ्गत्वशङ्काऽपि निरस्ता । तस्माज्ज्योतिष्टोमस्य सर्वप्रयोगेषु निषेधप्रवृत्तिरित्याशङ्क्य सिद्धान्तितम्—प्रथमशब्दस्याप्रवृत्तप्रवृत्तिवाचित्वात्तद्योगेनैव यागे प्रवृत्तेर्मुख्यत्वात्तदनुरोधेन च जघन्ययज्ञशब्दे लक्षणौचित्यादसंदिग्धप्रयोगवाचिद्वितीयतृतीयशब्दसाहचर्येण प्रथमयज्ञशब्दस्य प्रयोगवाचित्वावसायाच्च प्रथमप्रयोग एव प्रवर्ग्यनिषेध इति । एवं सिद्धे सति 'अग्निष्टोमे प्रवृणक्ति' इति तैत्तिरीयाम्नातवाक्यस्य का गतिरिति शङ्कायामाहुः—द्वितीयादिप्रयोगेषु सामान्यशास्त्रेणैव प्रवर्ग्यप्राप्तेः प्रथमप्रयोगविषयमेवैतत्, तत्र न तावदस्य निरवकाशत्वान्निषेधस्य विकृतिप्रथमप्रयोगविषयत्वम् । अस्यापि अग्निष्टोमसंस्थाविकृतिष्वतिदेशप्राप्तनिषेधबाधेन सावकाशत्वसम्भवात् । 'य एतेन'इति शास्त्रावगतप्रथमयजनस्य ज्योतिष्टोमादन्यत्र सम्भवाच्च । अथोच्येताग्निष्टोमसंस्थाप्रथमप्रयोगविषयैतद्विधिबलादतिरात्रसंस्थप्रथमप्रयोगविषयो निषेधोऽस्तु । अस्ति हि तस्यापि विधिः । 'तस्मात्तु प्रथमं यज्ञोऽतिरात्रेण यजेत'इतीति चेत्, न । निषेधस्य प्रकृतिप्रथमप्रयोगद्वयविषयत्वे सति विधेश्च प्रकृतिविकृत्यग्निष्टोमसाधारण्ये सति विधिप्राबल्याश्रयणेन निषेधस्यैव सङ्कोचात्मकबाधाश्रयणे नियामकाभावात् । तस्मादग्निष्टोमप्रथमप्रयोगे 'न प्रथमप्रयोगे','न प्रथमयज्ञे' इति निषेधाद् 'अग्निष्टोमे प्रवृणक्ति'इतिप्रतिप्रसवाद्विकल्पः । अतिरात्रे तु निषेधप्रवृत्तेरनग्निष्टोमत्वेन च प्रतिप्रसवाप्राप्तेर्निसमकरणम् । अथ 'यत्प्रवृञ्जन्ति'इत्यनारभ्योत्पन्नस्य प्रवर्ग्यस्य 'अग्निष्टोमे प्रवृणक्ति'इति विनियोगोऽस्तु, तस्य च 'नानुयाजेषु'इतिन्यायेन प्रथमयज्ञवर्जमिति पर्युदासादकरणमेवत्वाग्निष्टोमप्रथमप्रयोगेऽपीति चेत्, न । कौषीतकिशाखाम्नातवचसां 'पुरस्तादुपसदाम्'इतिवचसां चोक्तन्यायेनाग्निष्टोमसंस्थज्योतिष्टोमाख्यप्रकृत्यर्थत्वसिद्धेरुक्तत्वात् । एतेन सामदग्न्यन्यायेनानारभ्यवादोपसंहारार्थत्वमग्निष्टोमवाक्यस्य प्रत्युक्तम् । नच

पर्युदासोऽपि सम्भवति। स ह्यग्निष्टोमवाक्यशेषः स्याद्, अनारभ्यवादशेषो वा ?। नाद्यः। पर्युदासस्याग्निष्टोमवाक्यशेषत्वे सत्यग्निष्टोमवाक्यस्य पर्युदासप्रतिप्रसवत्वस्याप्यसम्भवेनोक्तरीत्योपसंहारविनियोगार्थत्वस्याप्यसम्भवेन च सामान्यप्रवृत्तानारभ्यवादानधिकार्थस्यानर्थक्यापत्तेः। सपर्युदासैतल्लभ्यद्वितीयादिप्रयोगे प्रवर्ग्यानुष्ठानस्य सपर्युदासेन तेनैवोपपत्तेः। न द्वितीयः। तदा ह्ययं पर्युदासोऽनारभ्यवादस्य प्रकृतावेवोपदेशत्वेनावस्थितस्यातिरात्रे दशमाद्यन्यायेनोपकारपदार्थपृष्ठभावेन प्राप्तस्य शेषः स्यात्, उपदेशत्वेनैवाग्निष्टोमातिरात्रसाधारणस्य वा, तत्त्वेनातिरात्रमात्रविषयस्य वा, तत्त्वेन प्रकृतिमात्रविषयस्य वा ?। नाद्यः। 'प्रकृतौ वाद्विरुक्तत्वाद्'इति न्यायेन कौषीतकिप्रकरणपाठेन वा प्रकृतिनिविष्टस्य 'न प्रथमयज्ञे' इत्यस्य कथंचिदपि तत्रैव प्रयोजनसम्भवे सत्युत्कर्षकल्पनायोगात्। एतेन निषेधविधया ऽप्यतिरात्रविषयत्वमस्य प्रत्युक्तम्। न द्वितीयः। पूर्वोक्तन्यायेन प्रकृतिप्रविष्टस्य 'यत्प्रवृञ्ज-न्ति' इत्यस्यातिरात्रसाधारण्यं तदा स्याद् यदि संस्थाः समानविधाना भवेयुः। निरस्तं तु तासां समानविधानत्वं तृतीये। न तृतीयः। अतिरात्रावान्तरप्रकरणपाठाभावेऽतिरात्रविषयस्याशक्यवचनत्वात्। न चतुर्थः। तथा सत्यनारभ्यवादपर्युदासस्याग्निष्टोमप्रथमप्रयोगमात्रविषयत्वाद् 'अग्निष्टोमे प्रवृणक्ति'इति प्रतिप्रसवोऽपि तन्मात्रविषयः स्यात्। तत्र पर्युदासवशान्नित्यमकरणमुच्येत प्रतिप्रसवो व्यर्थः स्यात्। प्रतिप्रसवबलेन नित्यकरणे वा पर्युदासवैयर्थ्यमिति पुनरुभयानुरोधेन विकल्पापत्तेः किं पर्युदासेन। यथाहुः—यस्माद्विकल्पाद्बिभ्यद्भिः पर्युदास आश्रितः, स तस्मिन्सत्यप्यापन्न इति वरं शब्दस्वरसलभ्यः प्रतिषेध एवाश्रित इति। अतोऽग्निष्टोमप्रथमप्रयोगे निषेधप्रतिप्रसवाभ्यां विकल्पेऽपि अतिरात्रेऽग्निष्टोमसंस्थानिमित्तप्रतिप्रसवानतिदेशान्नित्यमकरणमिति। एवमग्निष्टोमप्रथमप्रयोगगतं वैकल्पिककरणं 'कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य

प्रवृञ्ज्याद्'इति वचनादनूचानश्रोत्रियविषयम्, अन्येषां नित्यमकरणामिति वार्त्तिककारीयः पन्थाः ।

अत्र न्यायसुधाकारः–'न प्रथमयज्ञे'इत्यस्य प्रतिषेधत्वेन 'अनुयाजेषु' इति न्यायेन सामान्यप्रवृत्तस्यापि प्रापकविधेः-निषेधेन समबलत्वात् प्रतिप्रसवं विनैवाग्निष्टोमे विकल्पसिद्धेः प्रतिप्रसवानर्थक्यम्, अतिरात्रेऽपि प्रतिषेधमात्रमहिम्ना विकल्पप्रसक्तिश्च। अतः पर्युदास एवायमनारभ्यवादशेषः। पर्युदासेन तेन द्वितीयादिप्रयोगगतकर्त्तव्यतामात्रप्रापणादग्निष्टोमवाक्यात्प्रथमप्रयोगे नित्यकर्त्तव्यतापत्तिः।अन्यत्र पर्युदासस्याकर्त्तव्यताऽप्रापकत्वेऽपि प्रतिप्रसवानर्थक्यभयेनेहैव पर्युदासस्याकर्त्तव्यताप्रापकत्वाश्रयणात्। अत एव पर्युदासेऽपि प्रतिषेधोक्तिः वार्त्तिककारीया सङ्गच्छते। अतोऽग्निष्टोमप्रथमप्रयोगे पर्युदासप्रतिप्रसवसामर्थ्याद्विकल्पः। सो ऽप्यनूचानश्रोत्रियविषयः, अन्येषां तत्र, सर्वेषामतिरात्रसंस्थप्रथमप्रयोगे च नित्यमकरणमित्याह ।

ननु पर्युदासस्य प्रतिषेधवदकर्त्तव्यतोक्त्यर्थत्वे कथं तेनातिरात्रेऽपि विकल्पपरिहारः, प्रतिप्रसवस्यानतिदेशेऽपि तेनाकर्त्तव्यतायां गृहीततात्पर्यकस्य पर्युदासस्य नावमिकैकधाशब्दगोचरन्यायेन विकृतौ विपरीततात्पर्यकत्वासम्भवादिति चेत् । हन्त किं नालोचितो न्यायसुधाग्रन्थः–नञ्शब्दस्याकर्त्तव्यत्वोक्तौ तात्पर्याभावेऽपि नञ्शब्दसामर्थ्यादकर्त्तव्यत्वप्रतीतेः प्रतिषेधोक्तिर्भाष्यकारादिभिराश्रितेति । अकर्त्तव्यतायास्तात्पर्याविषयत्वे कथं तत्प्रतीतिः पर्युदासादिति चेत्, 'इत्यश्वाभिधानीमादत्ते'इति शास्त्राद्गर्दभाभिधान्यां मन्त्रनिवृत्तिप्रतीतिवदिति ब्रूमः । प्रापकशास्त्रप्रतिबन्धसङ्कोचकृतविशेषसत्त्वेऽपि तात्पर्याविषयीभूतनिवृत्तिप्रतीतेः शास्त्रफलत्वस्योभयत्र साम्यात्। नच शास्त्रे तादर्थ्यतात्पर्ययोरभेदादतत्परस्य कथं तदर्थ-

त्वापरपर्यायं तत्फलत्वमपीति शङ्क्यम् । न्यायसुधाकृत्प्रक्रियायां तात्पर्यस्य तादर्थ्यातिरेकात् । कथमन्यथा तत्सिद्ध्यधिकरणादौ तात्पर्याख्यवृत्तेः शाब्दत्वनियामकत्वं वदता तेनैवार्थिकमन्त्रनिवृत्त्यर्थत्वं रशनादानमन्त्रविधेः स्वीक्रियेत । ननु पर्युदासान्तरेऽपि अर्थादकर्त्तव्यत्वप्रतीतिः सम्भवत्येव । यतो नानुयाजेषु यजतिषु येयजामहः कर्त्तव्य इत्युक्ते भवत्यर्थादीदृशी बुद्धिः–अनुयाजेषु येयजामहो न कर्त्तव्य इति, अतोऽकर्त्तव्यतायां तात्पर्याभावे कथं पर्युदासान्तरवैलक्षण्योक्तिर्न्यायसुधाकृतः सङ्गच्छत इति चेत् न । शास्त्रान्तरसङ्कोचार्थे पर्युदासान्तरेऽकर्त्तव्यताप्रतीतिरानुषङ्गिकी, प्रकृतपर्युदासे तु फलमिति वैलक्षण्योपपत्तेः । नच शास्त्रप्राप्तस्याप्यार्थिकानिवृत्तिप्रतीतिर्विकल्पमापादयति, गर्दभाभिधान्यां मन्त्रविकल्पापत्तेः । अत उपचारवृत्त्या प्रतिषेधत्वेन व्यवह्रियमाणं पर्युदासमाश्रित्यैव सम्भवति सिद्धान्त इति न्यायसुधानुसारिणां पन्थाः ।

मिश्रास्तु प्रतिषेधाद्विकल्पप्रसक्तिमनुपन्यस्यैव प्रतिषेधप्रतिप्रसवाभ्यां विकल्पं सोऽप्यनूचानवाक्यार्थोदाहृताव्यवस्थितविषयोऽनूचानस्य नित्यं करणमन्येषामकरणमित्याहुः ।

कथमेतदुपपद्यत इति चेत्, शृणु–यथा द्वादशाहाङ्गत्वेनावगताया एकादशिन्या अङ्गत्वेन प्रायणीयोदयनीययोः 'एकादशिनानालभेरन्'इति वाक्येन प्रायणीयोदयनीयदेश एव विधीयते । अत एव विवक्षितसाहित्यसत्त्वादुभयत्र विभज्यैकादशिनानामनुष्ठानमित्युक्तं दशमे । तथा 'न प्रथमयज्ञे प्रवृञ्ज्याद्'इत्यत्र नञभावे तावज्ज्योतिष्टोमाङ्गत्वेन प्राप्तस्य प्रवर्ग्यस्य प्रथमप्रयोगो देशत्वेन विधीयते यच्च नञभावे विधेयतया प्रतीयते तस्यैव नञ्वति निषेध्यत्वमुचितमिति पूर्वोक्तन्यायेन देशनिषेध एवायम्, न तु प्रवर्ग्यनिषेधः । तथाच शास्त्रप्राप्तस्य निषेधाभावान्न विकल्पप्रसक्तिः ।

अमुनैवाशयेनाह भवदेवः–'यदा प्रथमैकप्रयोगविषयः प्र-

निषेधस्तदा तद्गतसामान्यविधिबाधेनैव निषेधाद् व्यवस्थितविषय एव विकल्पः—प्रथमप्रयोगेऽननुष्ठानं द्वितीयादावनुष्ठानमिति । निषेधप्रतिप्रसवाभ्यां तु विकल्पप्रसक्तिर्वाच्या । अनूचानवाक्योपसंहृताग्निष्टोमवाक्यस्य त्वनूचानाख्यविशेषनिष्ठत्वात्तेन सङ्कोचं गमिता विकल्पप्रसक्तिः सामान्यनिषेधोऽननूचानविषयत्वेनावतिष्ठते इति । विकल्पस्यानूचानविषयत्वोक्तिर्वार्त्तिककारीया तु नात्र व्याख्येयेति मिश्रानुसारिणां पन्थाः ।

सर्वेऽप्येते पन्थानः सिद्धान्तसंरक्षणाय प्रवृत्ता न तु बुद्धिमता स्वीकर्त्तुमुचिताः । तथाहि—सिद्धोऽपि निषेधो विकल्पापादकत्वेन 'नानुयाजेषु'इत्यादौ यैर्न स्वीक्रियते तैः 'अग्निष्टोमे प्रवृणक्ति' इत्यस्य विकल्पापादकं प्रतिप्रसवत्वं किमित्याश्रीयत इत्याश्चर्यम् । तर्हि किमेतत् करोतीति चेत् । अनूचानवाक्यादनूचानकर्तृकत्वेन प्राप्तप्रवर्ग्यस्याग्निष्टोमनिमित्तत्वं बोधयतु, अनूचानवाक्यं तु 'यत्प्रवृञ्जन्ति'इति सामान्यविधेः 'न प्रथमयज्ञे' इत्यनेन द्वितीयादिप्रयोगविषयतां नीतस्यानूचानविषयताप्रापकं भवतु, सर्वशास्त्राणां परस्परानालोचनेनोत्पत्तिशास्त्रालोचनयैव प्रवृत्त्यौचित्यात् । अग्निष्टोमवाक्ये च निमित्तसम्बन्धप्रतिप्रसवोभयापेक्षया निमित्तसम्बन्धमात्रबोधने लाघवात् । अनूचानवाक्यादननूचानकर्तृकक्रतौ क्लृप्तसम्बन्धायाः प्रवर्ग्यनिवृत्तेरनूचानकर्तृकनिमित्तरहितप्रयोगेऽपि प्रापणेन लाघवाच्च अधिकारिव्यावर्त्तनस्वभावनिमित्तसमर्पणस्य च शाब्दाधिकारिप्राप्तिमपेक्ष्य प्रवृत्त्यौचित्यात् ।

एतेन यत्कैश्चिन्निषेधस्य विकल्पप्रसञ्जकत्वं स्वीकृत्य सिद्धान्तसंरक्षणायोक्तं 'अग्निष्टोमे प्रवृणक्ति'इति वचनं प्रथमप्रयोगे वैकल्पिकत्वेनावगतस्य प्रवर्ग्यस्यातिरात्रप्रथमप्रयोगात् परिसंख्यार्थम् । द्वितीयादिप्रयोगेऽत्यन्ताप्राप्तनिवृत्तिप्रापणात्प्राप्तनिवृत्तिके प्रथमप्रयोगे निवृत्तिनियमने नियमविधिवल्लाघवात् । सामान्यप्रवृत्त्याऽपि विधेर्हैरण्यगर्भमन्त्रविधिगोचरदाशमिकन्यायेन लाघववशेन वि-

शेषविषयत्वसम्भवात् । नचेयं परिसंख्या त्रिदोषा, रशनामन्त्रविधिना लैङ्गिकश्रुतिकल्पनाया इवानेनापि विधिनाऽतिरात्रप्रथमप्रयोगे 'यत्प्रवृञ्जन्ति' इत्यस्यातिदेशकल्पनाप्रतिबन्धादिति तन्निरस्तम्। उक्तरीत्या द्वितीयादिप्रयोगे लाघवसामान्यात्। 'न होतारं वृणीते' इतिवत्पर्युदासेन शक्यपरिहारस्य विकल्पस्य विना कारणमभ्युपगमायोगाच्च। सर्वप्रयोगसर्वपदार्थसाधारणातिदेशस्य प्रथमप्रयोगगतप्रवर्ग्यमात्रबाधकशास्त्रेण प्रतिबन्धायोगाच्च । सङ्कोचेनार्थप्राप्तबाधव्यवहारे विशेषशास्त्रादिना सामान्यशास्त्रबाधस्याप्यप्राप्तबाधत्वापत्तेः। अतः पूर्वोक्तन्यायद्वैविध्येन पर्युदासं निषेधं वा स्वीकृत्य प्रथमप्रयोगमात्रे नित्यं प्रवर्ग्याकरणमेवोचितं स्वीकर्त्तुं द्वितीयादिप्रयोगे त्वग्निष्टोमसंस्थेऽनूचानस्य चिन्त्यं करणम् । अननूचानस्य तत्रेतरसंस्थाद्वितीयादिप्रयोगे च सर्वेषां नियमकरणमिति व्यवस्था स्वीकार्येति चेत् । द्वितीयादिप्रयोगे विकल्पप्राप्त्यभावेनैच्छिकविकल्पवाचिनः काममित्यस्यानुवादत्वासम्भवात् । दृश्यते हि 'कामं यस्मै कामयेतां तस्मै दद्याताम्' इत्यापस्तम्बादिवाक्यं व्याचक्षाणानां धूर्त्तप्रभृतीनां काममित्यव्ययबलादेव विकल्पोक्तिः। नचानूचानवाक्ये विकल्पो विधीयत इति युक्तम्। प्राप्तप्रवर्ग्येऽनूचानसम्बन्धस्य विकल्पस्य च विधाने वाक्यभेदात् । नचानूचानकर्तृकप्रवर्ग्यानुवादेनेह विकल्पो विधीयतामिति शक्यम्। विशिष्टानुवादे वाक्यभेदात्। अत एवाग्निष्टोमवाक्यं यद्यप्यनूचानवाक्योत्तरं प्रवर्त्तते, तथाऽप्यनूचानवाक्ये विकल्पानुवादनिर्वाहाय 'न प्रथमयज्ञे' इत्यस्य विकल्पापादकमेव प्रतिषेधत्वं स्वीकृत्य तत्सिद्धवैकल्पिककरणानुवादेनानूचानसम्बन्धविधिपरमनूचानवाक्यं स्वीकार्यम्। यच्च प्रथमप्रयोगेऽनूचानकर्तृकं वैकल्पिकं करणं शब्दादुपस्थितं तस्याग्निष्टोमनिमित्तत्वमग्निष्टोमवाक्येन बोध्यत इति यथावार्त्तिकं सिद्धान्त्यभिमतानुष्ठानसिद्धिः—न अग्निष्टोमप्रथमप्रयोगे, अनूचानस्य वैकल्पिकं करणम्, तत्रान्येषामतिरात्रप्रथमप्रयोगे सर्वेषां नित्यम-

प्रसक्तावपि न तेषामनर्थहेतुत्वम्, रागप्राप्त्यभावात् । रागतः प्राप्तस्यापि क्रत्वर्थत्वेन प्रतिषेधे तदनुष्ठानात् क्रतोर्वैगुण्येनानर्थोत्पत्तिः । यथा स्वस्त्र्युपगमनादिप्रतिषेधे, रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे निषिध्यमानस्यानर्थहेतुत्वमिति दिक् ।

तत्सिद्धं निषेधानां पुरुषार्थानुबन्धित्वम् । एवं सर्वस्यापि वेदस्य पुरुषार्थानुबन्धित्वम् । प्रकृतमनुसरामः ।

तदेवं यथा विध्यादीनामध्ययनविध्युपात्तानां नानर्थक्यमेवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः स्वार्थप्रतिपादने च प्रयोजनाभावाल्लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यम् । ते चार्थवादाः द्विविधाः विधिशेषा निषेधशेषाश्च । 'तत्र वायव्यं श्वेतमालभेत' इत्यादिविधिशेषाणां 'वायुर्वै क्षेपिष्ठा देवता' इत्यादीनामर्थवादानां विधेयार्थस्तावकतयाऽर्थवत्त्वम् । 'बर्हिषि रजतं न देयम्' इत्यादिनिषेधशेषाणां 'सोऽरोदीद्' इत्यादीनामर्थवादानां तु निषेध्यनिन्दकतयेति । अतश्च लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते । तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्त्तव्यतात्वेन सम्बध्यते, तत्सिद्धं वक्ष्यमाणार्थभावनाभाव्यिका लिङादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्त्तव्यताका शाब्दी भावना लिङ्त्वां-

शनोच्यते इति ।

ननु केयं शाब्दी भावना । उच्यते । पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः । स एव विध्यर्थः । लिङादिश्रवणे 'अयं मां प्रवर्तयति' इति नियमेन प्रतीतेः । यत्तु-इष्टसाधनत्वं विध्यर्थस्तन्न । तथा सति इष्टसाधनमिति शब्दस्य विधिशब्दः पर्यायः स्यात् । न च पर्यायत्वं युज्यते । सन्ध्योपासनं ते इष्टसाधनं तस्मात् त्वं कुर्विति सहप्रयोगात्, पर्यायाणां च सहप्रयोगाभावात् । अतश्च व्यापारविशेष एव विध्यर्थः । स च लोके पुरुष-

---

करणमिति ।

या तु वार्त्तिके ऽनूचानवाक्योदाहरणानन्तरमपि अग्निष्टोमवाक्यस्य विकल्पकारित्वप्रतिप्रसवत्वोक्तिः, सा पूर्वाभ्युपगतयोस्तयोर्वाक्यानपेक्षणत्वेनेति बोध्यम् ।

एतेन श्रीकरोपन्यस्तपर्युदासनिराकरणाय 'न प्रथमयज्ञे' इति निषेधस्यैव नैमित्तिकनिषेधत्वेन विकल्पानापादकत्वोक्तिर्नयविवेकस्था निरस्ता । उक्तरीत्या विकल्पापादकनिषेधस्यैव शास्त्रानुमतत्वादित्यनवद्यम् ।

अतश्चेति तच्चेति चौ प्राशस्त्यं प्राशस्त्यज्ञानमित्यनन्तरौ ज्ञेयौ अप्राशस्त्यस्य तज्ज्ञानस्य च संग्रहाय । स्वर्गादिकर्मकभावनासमभिव्याहारलभ्यस्य यागादिगतस्य स्वर्गादीष्टसाधनत्वस्य घटादिवल्लोकगम्यस्य च कार्यत्वस्यान्यलभ्यत्वान्न विध्यर्थत्वमुचितम् । उचितं तु प्रवर्त्तनाया अतादृक्त्वात्पूर्वोक्तनयाच्चेत्याशयादाह स एवेति । दूषितमपि दोषान्तराभिधानायानुवदति-यत्त्विति । न्यायसुधाकृन्मतं प्रपञ्चयितुं स्मारयति सचेति । यद्धर्मावच्छिन्ने यस्य शब्दस्य श-

निष्ठो ऽभिप्रायविशेषः । वेदे तु पुरुषाभावाच्छब्दनिष्ठ एव प्रेरणापरपर्याय इत्युक्तम् ।

ननु लोके शब्दनिष्ठे प्रेरणापरपर्यायव्यापारे शब्दप्रयोगाभावेन शक्तिग्रहाभावात्कथं तस्य विधिशब्दात्प्रतिपत्तिरिति चेत, सत्यमेतत । तथापि बालस्तावत्स्तनदानादौ स्वकृतरोदनादिजनितमातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्त्तनाज्ञानजन्यत्वावधारणात्प्रविधिकप्रयोजकवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धप्रवृत्तिमुपलभ्य तत्कारणत्वेन तस्य प्रवर्त्तनाज्ञानमनुमिमीते । यद्यपि भोजनादौ स्वप्रवृत्तेः समीहितसाधनताज्ञानपूर्वकत्वावधारणात्प्रयोज्यवृद्धप्रवृत्तेरपि तत्पूर्वकत्वाध्यवसानं युक्तम्, तथाऽप्यन्यप्रेरितप्रवृत्तौ प्रवर्त्तनाज्ञानजन्यत्वस्योक्तमातृप्रवृत्तौ दर्शनेन प्रयोज्यवृद्धप्रवृत्तेरप्यन्यप्रेरितप्रवृत्तित्वात्तत्कारणत्वेन प्रवर्त्तनाज्ञानस्यैवाध्यवसानम् । तच्च प्रवर्त्तनाज्ञानमन्वयव्यतिरेकाभ्यां प्रयोजकवाक्यजन्यमित्यवधारयति । तत्र चावापोद्वापाभ्यां प्रवर्त्तनायां विधिशक्तिमवधारयति । प्रवृत्त्यनुकूलव्या-

---

क्तिग्रहो जातः,स तद्धर्मप्रकारकबोधे तेन शब्देन जनिते सति तद्धर्माश्रयप्रसिद्धव्यक्तीनां विशेष्यत्वानुपपत्तौ सत्यामप्रसिद्धव्यक्तिमाक्षिप्यैव बोधः पर्यवस्यतीत्यपूर्वात्मककार्यविध्यर्थवादिमते लोके च प्रसिद्धं न्यायं च प्रेरणाविध्यर्थमते योजयति—तथापीत्यादिना

पारः प्रवर्त्तना । स च व्यापारः प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वाद्विधिशब्दवाच्यत्वानुपपत्तेः प्रवर्त्तनासामान्यमेव विधिशब्दवाच्यमिति कल्पयति । एवं च विधिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य प्रवर्त्तनात्वेनैव रूपेण प्रतीतिर्न विशेषतया, तथैव शक्तिग्रहात् । विशेषरूपेण तु प्रतीतिर्लक्षणयैव । एवं च वैदिकलिङादिश्रवणे ऽपि प्रवर्त्तनासामान्यमेव प्रतीयते ।

तत्र कोऽसौ व्यापार इत्यपेक्षायां प्रैषादिरूपस्य वक्त्रभिप्रायस्यापौरुषेये वेदे ऽनुपपत्तेः शब्दनिष्ठ एव प्रेरणापरपर्यायः कश्चिद् व्यापार इति कल्प्यते । अतश्च शब्दनिष्ठ एव प्रेरणापरपर्यायो व्यापारः शाब्दी भावना । सैव च प्रवर्त्तनात्वेन रूपेण विध्यर्थ इति । अयमेव चार्थः—'अभिधाभावनामाहुरन्यामेव लिङादयः' इतिवार्त्तिकस्य। अभिधीयते अनयेति व्युत्पत्त्या ऽभिधाशब्देन शब्द उच्यते, तद्व्यापारात्मिका भावना लिङादिवाच्येति केचिदाचार्या आहुः ।

अन्ये त्वाहुः । सत्यं प्रवर्त्तनासामान्यं विध्यर्थः

---

तत्रैव वार्त्तिकं योजयति-अयमेव चेति । मिश्रमतमाह—अन्ये-त्विति । तस्यापीत्यनन्तरं ज्ञातस्येति शेषः ।

यत्तु प्रेरणावादिभिरुच्यते ज्ञातेष्टसाधनत्वेऽपि न प्रवर्त्तत-

तथैव शक्तिग्रहात् । प्रवृत्त्यनुकूलो व्यापारः प्रवर्त्तना । अपौरुषेये च वेदे प्रैषादेरसम्भवात्कश्चित्पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः कल्पनीयः । विधिशब्दाभिधेयप्रवर्त्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात् । 'तत्र को ऽसौ व्यापार' इत्यपेक्षायां धात्वर्थावगतसमीहितसाधनत्वमेवेति कल्प्यते । तस्यापि प्रवृत्त्यनुकूलत्वात् । सर्वो हि समीहितसाधनतां ज्ञात्वा प्रवर्त्तते । अन्यप्रेरितो यदीष्टसाधनतां न जानाति तदा नैव प्रवर्त्तते । स्वतन्त्रप्रेरणावादेऽपि तदाक्षिप्तसमीहितसाधनताज्ञानं स्वीक्रियत एव । अन्यथा विधेः प्रवर्त्तकत्वानुपपत्तेः । अतश्चावश्यकत्वात्समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण विध्यर्थः । एवं च विधिशब्दस्यान्यनिष्ठव्यापारबोधकत्वं लोकसिद्धं सिद्धं भवति ।

---

प्रेरणाज्ञानाच्च प्रवर्त्तत इति, तद्वैपरीत्यमपि संभवतीत्याशयेनाह—अन्येति । आवश्यकत्वादिति । ज्ञातायाः समीहितसाधनतायाः प्रवर्त्तनात्वस्य परेणाप्यवश्यस्वीकार्यत्वादिति व्याख्येयम्, विशेषरूपेणाक्षेपस्य स्वमते ऽप्यपरिहार्यत्वात् । एवंचेति । ननु प्रतिकूलमेतत् । 'अयं मां प्रवर्त्तयति' इति यस्याः प्रतीतेः प्रसादेन प्रवर्त्तनाया वाच्यत्वसिद्धिः, तया यथा लोके प्रवर्त्तनायाः निष्ठत्वसिद्धिस्तथा तथैव वेदे तस्याः शब्दनिष्ठत्वसिद्धिरिति चेत् न । लोके प्रवर्त्तनायाः शब्दनिष्ठत्वाभावेऽपि एतच्छब्दो मां प्रवर्त्तयतीतिवत् वेदेऽपि शब्दनिष्ठत्वमन्तरेण तथा प्रतीत्युपपत्तेः । वैदिकालिङ्बोधितत्वविशिष्टस्यैव यागादेः स्वर्गादीष्टसाधनताश्रयत्वेन लिङोऽप्याश्रयकोटिनि-

किं च शब्दे एको व्यापारः स्पन्दाद्यतिरिक्तः कल्पनीयः, तस्य च स्वप्रवृत्तौ पराधीनप्रवृत्तौ वा कारणत्वेनाक्लृप्तस्य प्रवर्त्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वम्, शब्दस्य च परनिष्ठव्यापारज्ञापकत्वेन क्लृप्तस्य स्वनिष्ठव्यापारबोधकत्वम्, विधेश्च प्रवर्त्तकत्वनिर्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति कल्पनाद्वर-

---

क्षिप्ततया तदुपपत्तेश्च। नन्वेवमपि 'यागो मां प्रवर्त्तयति' इति व्यवहारः स्यादिष्टसाधनतारूपप्रवर्त्तनाया यागाश्रितत्वादित्याशङ्क्याह-किंचेति। परमिति। नैमित्तिकं दृष्ट्वा निमित्तानुसरणं कार्यं नतु निमित्तमस्तीति नैमित्तिकापादनं निमित्तान्तराभावादपि तदुपपत्तेरिति। विषया इन्द्रियाणि स्वस्मिन्प्रवर्त्तयन्तीतिवदिष्टसाधनत्वेनावगतो यागः स्वस्मिन्पुरुषं प्रवर्त्तयतीति संभवत्येव व्यवहार इति च संभवत्परिहारैकदोषाभ्युपगमो नैकदोषाभ्युपगमाद्युक्त इत्याशयः। नन्वर्थप्रतीत्युन्नेयो लिङादिगतो यो ऽभिधाख्यो व्यापारः, अस्मन्नपि समीहितसाधनत्ववदावश्यक एव, कथमस्यैव प्रवर्त्तनात्वेन लिङ्वाच्यत्वं न स्वीक्रियते, एवं च 'अभिधाभावनामाहुः' इति वार्त्तिकमक्लेशेनानुसृतं भवेत्। अभिधाशब्दस्य प्रसिद्धार्थस्वीकरणात्। कोऽसौ व्यापार इति चेत्, शक्तिरिति केचित्।

परे त्वाहुः-यमागन्तुकं धर्मं प्राप्य कार्याय पर्याप्तो भवति स तद्व्यापारः। ज्ञातश्च शब्दोऽर्थप्रतीत्यै पर्याप्तः, अतो ज्ञानमेव व्यापारः। नच ज्ञाने कर्मीभूतस्य शब्दस्य ज्ञानात्मिकायामभिधायां कथं कर्तृत्वेन करणत्वेन वा व्यवहार इति शङ्क्यम्। एकस्या अपि क्रियायास्तत्फलावच्छेदलब्धतत्तद्धात्वभिधेयत्वायाः कर्तृकर्मादिवैचित्र्यस्यैकत्रापि सम्भवात्। दृश्यते हुघमनादिक्रियायाः कर्म-

मावश्यकस्यैव समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्त्तनात्वेन रूपेण विध्यर्थकल्पनम्, लाघवात्, अन्यनिष्ठत्वाच्च। न च विधेः प्रवर्त्तकत्वनिर्वाहार्थं समीहि-

---

णोऽपि परशोर्द्वैधीभावाख्यफलावच्छेदलब्धच्छिदेत्यभिधेयत्वायां तस्यां करणत्वम्, स्वातन्त्र्यविवक्षायां कर्तृत्वं च, तथैकस्यामपि ज्ञानाक्रियायां शब्दप्रकाशार्थप्रतिपत्तिप्रवृत्तिभावनाख्यफलावच्छेदेन यथासंख्यं जानात्यभिदधातीति भावयतीति लब्धतत्तद्धात्वभिधेयत्वायां शब्दार्थप्रवृत्तीनां कर्मत्वं शब्दस्यैव कर्मत्वकर्तृत्वकरणत्वानि च नानुपपन्नानीति । अतः कथं समीहितसाधनत्वस्यैव प्रवर्त्तनात्वेन लिङभिधेयत्वमिति शङ्कां निराकर्त्तुं साधनत्वस्यैवेति । भिन्नक्रम एवकारः । स्वेत्यस्य ज्ञाततयेत्यादिः । अस्तु वाऽशत्रयविशिष्टभावनाप्रतिपादनमेव शब्दव्यापारः, प्रवर्त्तनात्वेन लिङः, उक्तो ह्ययमपि पक्षः षष्ठाद्ये शास्त्रदीपिकायां मिश्रैः—यद्धि ज्ञातं सत् प्रवृत्तिहेतुत्वेन क्लृप्तं तस्यैव प्रवर्त्तनात्वेन रूपेण विधिज्ञाप्यत्वकल्पनमुचितम् । अन्यथेच्छायाः साक्षात्प्रवृत्तिहेतुत्वेन क्लृप्तायास्तत्त्वेन तदभिधेयत्वस्य दुर्निवारत्वात् । तत्र प्रेरणा स्वत एवाक्लृप्ता, शक्तिरूपाऽभिधा तु स्वतःसिद्धाऽपि न प्रवृत्तिहेतुत्वेन सिद्धा, शब्दज्ञानात्मिकाऽभिधा विशिष्टभावनाभिधानं वा प्रवृत्तिहेतुत्वेन सिद्धमपि न ज्ञातं सत्तथा । क्लृप्तं त्विष्टहेतुत्वं ज्ञातं सत् प्रवृत्तिहेतुरित्याशयः । ननु यजेतेत्यादिरूपाऽऽनुपूर्वी ज्ञाता सती प्रवृत्तिहेतुत्वेन क्लृप्ता, कथं स्वगता सैव तत्त्वेन न वाच्या? । अत आह अन्येति । स्वनिष्ठप्रवर्त्तमानाभिधाने याऽनुपपत्तिस्तच्छून्यत्वादित्यर्थः । 'न कलञ्जं भक्षयेद्'इत्यादौ ह्याकरे 'विध्यर्थानुवादेन नञ् प्रतिषेधति' इति वचनव्यक्तिर्दर्शिता, सा च प्रेरणाभिधाभावनाप्रतिपादनानुपूर्वीणामन्यतमस्य स्वनिष्ठस्य लिङा प्रवर्त्तनात्वेनाभिधाने नोपपद्यते ।

नहि 'भक्षयेद्' इतिप्रत्ययगतमुक्तप्रकाराणामन्यतममपि प्रवर्त्तनारूपमनुवदितुं योग्यम्, भ्रान्त्याऽपि प्राप्त्यभावात्। नहि निषेधान्तर्गतः प्रत्ययः प्रवर्त्तक इति कस्य चिद्भ्रमसम्भवः। क्लेशेन तु तद्ग्रन्थोपपादनमुन्नीयेत, यथोन्नीतं पुरस्तात्। शक्यते तु भक्षणगतेष्टसाधनताया अनिष्टानुबन्धित्वेनागृहीतायाः प्रवर्त्तनात्वभ्रमे सति लिङा तामनूद्य निषेधोऽक्लेशेन बोधयितुम्—यद् अन्नभोजनादाविव कलञ्जभक्षणेऽपीष्टहेतुत्वं प्रवर्त्तकत्वेन ज्ञातम्, तन्न तथा, कलञ्जभक्षणप्राप्येष्टस्यानिष्टानुबन्धित्वादिति। नचैवमनिष्टानुबन्धीष्टसाधनत्वस्य प्रवर्त्तकत्वाद्यजेतेत्यादिलिङाऽभिधानापत्तिः। पदार्थभूतेष्टसाधनतागतस्य प्रवर्त्तनात्वान्यधर्मस्य लिङा प्रतीत्यसम्भवेन वाच्यत्वस्य दुर्निरूपत्वात्। प्रवर्त्तनात्वसामर्थ्यलभ्यत्वेनान्यलभ्यत्वाच्च। इष्टहेतुतायास्तत्त्वेनैव लिङ्वाच्यत्वे परमेतद्गौरवं स्यात्। नच हि प्रवर्त्तनात्वं हेतुः, स चानिष्टाननुबन्धित्वविशिष्टायामेव तस्यां विद्यते(१)। अनिष्टाननुबन्धीष्टहेतुत्वनिर्णयेनैव हि प्रवर्त्तमाना दृश्यन्ते प्रेक्षावन्तः। विशिष्टाया एव वाच्यत्वे निषेध्यत्वोपपत्तेश्च। अन्यथाऽनिष्टानुबन्धिताया अशब्दार्थत्वेन तृप्तिरूपेष्टहेतुतायाश्च प्रत्यक्षसिद्धत्वेन निषेध्यत्वासम्भवात्। अतो यागगतेष्टहेतुताया एव प्रवर्त्तनात्वेनैव विध्यर्थत्वमित्याशयः। ननु यागगतं कृत्यर्हत्वमेव भवतु तदर्थः। शक्यते हि तत् प्रेक्षावत्प्रवृत्तिहेतुत्वेन निरूपयितुम्। इष्टहेतुत्वानिष्टाननुबन्धित्वाभ्यां कृत्यर्हत्वमेव हि निर्णीय प्रवर्त्तन्ते प्रेक्षावन्तः। सम्भवति च कृत्यर्हत्वमनूद्य निषेधः। तत इष्टाहेतुत्वस्यानिष्टहेतुत्वस्य वाऽप्रतिपत्तिश्च। यथा 'पुत्रकामः सौर्यं न कुर्वीत' इत्यादौ कर्त्तव्यतावचनो भावनायां पुरुषं प्रवर्त्तयतीत्यादिराकरग्रन्थश्चैवमनुसृतो भवतीत्याशङ्कां निराकर्त्तुं हेत्वन्तरसमुच्चयाभिधायी चः। इदं तव कृत्यर्हमतः कुरु, यद्यपि तत् कृत्यर्हं तथाऽपि कुर्वित्यादिप्रयोगोपपत्ते-

(१) विधत्तइति पाठः।

तसाधनत्वकल्पनात्प्रेरणानभिधाने च विधेः प्रवर्त्तकत्वाभावाद्धात्वर्थस्य समीहितसाधनत्वकल्पकमेव नास्तीति वाच्यम्। प्रवर्त्तनाभिधानेनैव तन्मतेऽपि विधेः प्रवर्त्तकत्वाद्विध्यभिहितस्य प्रवर्त्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात्समीहितसाधनत्वाक्षेपकत्वात्। न चेष्टसाधनत्वस्य

---

रिति। नह्येवं प्रयोगो भवति 'तव कृत्यर्हमतः कृत्यर्हम्' इति, नवा 'नैतत् कृत्यर्हमतः कृत्यर्हम्' इति। सम्भवति तु सर्वोऽपीदृशः प्रयोगः प्रवर्त्तनात्वेनेष्टहेतुतायां लिङ्वाच्यत्व इत्याशयः। ननु प्रवर्त्तनायामध्ययनविधिप्रेरिता लिङादयः प्रवर्त्तकतां प्रतिपद्यन्ते, तेषां प्रवर्त्तकत्वमहिम्ना च कर्मण इष्टहेतुतासिद्धिरित्याकररीतिः। नच लिङाद्यव्यापारस्य प्रवर्त्तनात्वे प्रवर्तनायां लिङादयः प्रेरयितुं शक्याः। 'स्वव्यापारे सर्वो नियुज्यते' इति न्यायात्। अतस्तेषां प्रवर्त्तकत्वासिद्धौ कर्मण इष्टहेतुत्वमपि न सिध्येदित्याशङ्क्याह—नचेति। यथाव्यापारेऽपि गोदोहने पञ्चमवर्षादौ पुंव्यापारभूतप्रणयनोपनयनादिव्यापाराविशिष्टे पुरुषः प्रवर्त्यते तथाऽव्यापारभूतायामपीष्टहेतुतात्मकप्रवर्त्तनायामभिधानात्मकशब्दव्यापाराविष्टायां सम्भवत्येव शब्दस्य प्रवर्त्यत्वव्यवहारः। नच यागभावनायाः पुन्निष्पाद्यत्ववत्प्रेरणात्मभावनाया अपि शब्दनिष्पाद्यत्वमस्ति येनान्यानपेक्षतया शब्दप्रवृत्तिविषयभावं गच्छेत्। अतः प्रेरणामतेऽपीत्थमेव समाधेयमित्याशयेनाह—विध्यभिहितस्येति।

नन्विष्टहेतुतायाः प्रवर्त्तनात्वे लिङर्थत्वे कथमिष्टहेतुतालिङर्थत्वादिनं प्रत्युपन्यस्तदोषानापत्तिः ?, कथं चाशब्दनिष्ठायाः शब्दभावनात्वव्यपदेशः, का चाभिधाभावनामाहुरिति वार्त्तिकस्य गतिरिति, शङ्काः क्रमेण निरस्यति—नचेत्यादिना। नन्वेवमपि नैष प्रयोगस्तवोपपद्यते। 'यद्यपि तवैतन्नेष्टसाधनं तथाऽपि त्वङ्कुरु'

विध्यर्थत्वे 'सन्ध्योपासनं ते इष्टसाधनं तत् त्वं कुरु' इति सहप्रयोगानुपपत्तिरिति वाच्यम्। इष्टसाधनत्वस्य विशेषरूपेण विधिनाऽनभिधानात्। प्रवर्त्तनात्वेन रूपेणाभिधानात्। सामान्यशब्दस्य च विशेषशब्देन दृष्टः सहप्रयोगः—पाञ्चालराजा द्रुपद इत्यादौ। तस्मात्समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण विध्यर्थः। सैव च तेन रूपेण शब्देनैवाभिधीयत इति शाब्दी भावना।

उक्तवार्तिकस्यापि अयमेवाभिप्रायः। अभिधीयते सा ऽभिधा समीहितसाधनता सैव प्रवर्त्तनात्वेनाभिहिता पुरुषप्रवृत्तिं भावयतीति भावना, तां लिङादय आहुरिति। यथाऽऽहुः—

पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्त्तनाम्॥ इति।

तत्सिद्धं यजेतेत्यत्र लिङ्त्वांशेन शाब्दी भावनोच्यते।

आख्यातांशेनार्थी भावनोच्यते इति।

---

इति स्वरूपतो निषिद्धस्वरूपान्तरेणापि प्रतिपादनासम्भवात्। नहि घटो नास्तीत्यप्रमितप्रतिषेधस्य घटस्य द्रव्यमस्तीति द्रव्यत्वाकारेण सत्त्वप्रमा सम्भवतीति चेत् न। परात्वगतेष्टविशेषसाधनत्वप्रतिषेधेऽपि इष्टान्तरसाधनत्वस्य प्रवर्त्तनात्वेन प्रतिपादनसम्भवात्। यद्यपि तव नेष्टसाधनं तथाऽपीष्टसाधनमिति प्रयोगस्य सर्वथाऽप्युपहसनीयत्वात्। उक्तार्थे मण्डनसम्मतिमाह—यथेति। अभावादिसनन्तरं प्रकृत्यर्थभास्यभावनायामभेदान्वयापत्तेः, करणत्वा-

ननु केयमार्थी भावना ?। कर्तृव्यापार इति चेन्न । यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः । तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावादिति चेत् । अत्राहुः—सत्यं न यागो भावना, किन्तु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः स भावना । स एव चाख्यातांशेनोच्यते । यजेतेत्याख्यातश्रवणे यागेन यजेतेति

---

ह्यन्वयानापत्तेश्चेति शेषः । अतो यागत्वेन प्रकृत्यर्थस्यापि भावनात्वेन प्रत्ययार्थत्वे किं बाधकमिति शङ्कानिरासः ।

न्यायसुधाकृन्मतमाह अत्रेति । 'प्रयत्नो भावना'इत्येव वक्तव्ये प्रकृतोदाहरणे फलस्य भाव्यनिष्ठतया भावनात्वमुपपादयितुं स्वर्गेच्छाजनितत्वमुक्तम् । यागस्य भावनायां कर्मत्वकरणत्वे उपपादयितुं यागविषयत्वप्रतीतिश्च यथा कर्मत्वकरणत्वपर्यवसानं तथोक्तमधस्तात् । स इति । यत्नत्वविशिष्टपरामर्शः । यत्नत्वविशिष्ट एवाख्यातवाच्यो यत्नत्वमेव तस्य शक्यतावच्छेदकं, न व्यापारत्वम्, जातित्वेन यत्नत्वस्यैव लघुभूतत्वादिति सूचनार्थ एवकारः । 'पाके यत्नवान्न वा'इतिसंशयनिवृत्तिस्तावत्पचतीतिश्रवणाज्जायते । नच सा यत्ननिश्चयं विना सम्भवतीत्याख्यातेन यत्ननिश्चयस्यावश्यं वाच्यत्वात्, पचति पाकयत्नवानितिविवरणदर्शनाच्चेति हेत्वन्तरसमुच्चयार्थश्चः । नच यत्नाविनाभूतपाकेन यत्नानुमानात्तन्निश्चयोपपत्तिरिति शङ्क्यम् । चैत्रः पचतीत्यादावशाब्दयत्नस्य लडाद्यर्थवर्त्तमानत्वाद्यन्वयित्वेन चैत्रादिवृत्तित्वेन च प्रतीत्यभावापत्तेः । जानातीत्यादौ हि वर्त्तमानत्वाद्यन्वयो धात्वर्थे दृष्टः, यजतीत्यादौ चाख्यातार्थव्यापारे । नत्वनुमेयेऽर्थे कुत्रापि सोऽनुभूतः । नच चैत्रवृत्तित्ववर्त्तमानत्वाभ्यां विशेषितेन पाकानुकूलव्यापारेणैव तदुभयविशेषिततत्तदनु-

प्रतीतेर्जायमानत्वात् । यश्च प्रयत्नपूर्वकं गमनादि करोति तस्मिन्देवदत्तो गमनं करोतीति करोतिप्रयोगदर्शनात्, वातादिना स्पन्दमाने तु 'नायं करोति, किं तु वातादिना

---

कूलयत्नानुमानमित्यपि साम्प्रतम् । तद्धात्वर्थवर्त्तमानतादृशव्यापारस्याप्यन्यदीयप्रयत्नादपि जन्मसम्भवेन हेतोर्व्यभिचारात् । नचैतादृशस्थले लक्षणया यत्नस्य शाब्दत्वम् । त्वरा हि ततो रथो गच्छतीत्यादौ व्यापारलक्षणाऽभ्युपगता । प्रथमतः स्वीकार्ये शक्यतावच्छेदक एव लाघवस्यानुसरणीयत्वात् । पश्चात्स्वीकार्ये लक्ष्यतावच्छेदके गौरवस्य फलमुखत्वेनादोषत्वात् । जायमानत्वादिति सिद्धवन्निर्देशेन तादृशप्रतीतिजन्मन आकरसिद्धतां दर्शयति । उक्तं ह्याख्यातार्थप्रदर्शनावसरे भावार्थाधिकरणे भाष्यकृता-'तथा यजते तथा किञ्चिद्भवति' इति । गुणकामाधिकरणेऽपि 'जुहुयादिति शब्दस्यैतत्सामर्थ्यं यद्धोमविशिष्टप्रयत्नमाह' इति । यद्वा तादृशनिर्देशेन यजेतेत्यत्र तस्या अवश्यस्वीकार्यतां दर्शयति । चेतनव्यापारभूतयत्नाभिधाने हि विधेश्चेतनप्रवर्त्तकत्वनियमः सङ्गच्छते, कथमन्यथा काष्ठादिप्रवर्त्तकत्वाभावः । यथाऽऽहुर्न्यायसुधाकृतः—

'चेतनप्रेरकत्वं हि विधेस्तद्विषयत्वतः ।
काष्ठाद्यप्यन्यथा कस्मान्न प्रेरयति वायुवत् ॥
विध्यर्थाज्ञानतोऽप्रेर्यं चेत्काष्ठादि ततः कथम् ।
सौधन्वननिषादादेरप्रेर्यस्याधिकारिता ॥
विधिस्त्वां प्रेरयत्यत्रेत्यप्रेर्यो ज्ञाप्यते कथम् ।
विद्वद्भिर्ज्ञापनादेव प्रेर्यत्वेऽन्योन्यसंश्रयम्' । इति ।

करोतिपर्यायत्वेनापि यत्नवाचित्वमाख्याते द्रढयितुं करोतेर्यत्नवाचितां साधयति-यश्चेति । करोतेर्यत्नवाचित्वे हेत्वन्तरसमुच्चयार्थश्चः । व्यापारसाध्यत्वावगमे तुल्येऽपि हि प्रयत्नसाध्यत्वा-

ऽस्य स्पन्दो जायत इति प्रयोगात्करोत्यर्थस्तावत्प्रयत्नः। करोतिसामानाधिकरण्यं चाख्याते दृश्यते। यजेत यागेन कुर्यात्, पचति पाकं करोति, गच्छति-गमनं करोतीति। अतश्च करोतिसामानाधिकरण्यात्प्रयत्नस्याख्यातवाच्यत्वम्। न च रथो गच्छतीति प्रयोगानुपपत्तिः, रथे यत्नाभावादिति वाच्यम्। वोढृस्थगतं प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः।

यन्मतेऽप्यन्योत्पादनानुकूलं व्यापारसामान्यं भा-

---

साध्यत्वप्रतीतेरेवौदनतण्डुलयोः कृताकृतव्यपदेशव्यवस्था दृश्यते। दृश्यते च सर्वकारकाणां व्यापाराश्रयत्वे तुल्येऽपि यत्नाश्रय एव कर्तृव्यवहारः। सम्भवति चैतदुभयमपि यत्नस्य करोत्यर्थत्वे सविषयार्थधातूत्तरकर्मनिष्ठाया विषयार्थत्वात् ओदनस्याप्युद्देश्यतया तद्विषयत्वात्। सविषयार्थधातूत्तरकर्मण आश्रयार्थत्वादाश्रयत्वस्य च सर्वकारकेष्वसम्भवादित्याशयः। उक्तं च न्यायाचार्यैः—

कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन्नैव भावना॥ इति।

विधेरन्यत्वेऽप्याख्यातस्य करोतिसामानाधिकरण्येन यत्नवाचितां दर्शयितुमाह—पचतीति। रथो गच्छतीत्याद्यनुरोधेन गम्युत्तराख्यातस्यापि न व्यापारवाचित्वमुचितमित्याशयेनाह गच्छतीति। वोढ्रिति। यद्यपि न्यायसुधाकृता पक्षान्तरमप्युक्तम्—

'स्त्रीत्वाभावेऽपि खट्वादौ टाबादिप्रत्ययो यथा।
प्रयुज्यते तथाऽऽख्यातं यत्नाभावेऽप्यचेतने॥
धातोरनुग्रहार्थं वा वाच्यान्तरधियाऽथवा। इति,

तथाऽप्याख्यातत्वांशस्याप्यर्थवत्त्वसम्भवे नानर्थक्यमुचितमित्याशयेनेत्थमे-

वना, तन्मतेऽपि रथे गमनातिरिक्तव्यापारानुपलब्धे रथो गच्छतीति प्रयोगस्यौपचारिकत्वमेवेति । अतश्च यत्न एवार्थी भावना । यथाहुः—

प्रयत्नव्यतिरिक्ताऽऽर्थी भावना तु न शक्यते ।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते ॥ इति ।

अन्ये त्वाहुः—भवितुर्भवनानुकूलो भावकव्यापारस्तावद्भावना । यस्मिन्व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशो व्यापार इति यावत् । स

---

वोक्तम् । औपचारिकत्वमिति । आश्रयत्वे लक्षणेत्याशयः । मिश्रमतमाह—अन्ये त्विति । तत्र व्यापारमात्रस्याख्यातवाच्यतां वक्तुं यत्तावन्मीमांसकानामाख्यातजन्यप्रतीतिविषयनिरूपणपरं वचः प्रागुक्तं तस्य सर्वव्यापारसाधारण्यं दर्शयति—भवितुरिति । स इति । व्यापारत्वविशिष्टपरामर्शः । व्यापारत्वमेव शक्यतावच्छेदकम्, यत्नत्ववद् व्यापारत्वस्याप्यखण्डोपाधित्वेन जातितुल्यत्वात् । न च तस्याखण्डोपाधित्वे मानाभावः । श्रुत एव मधुररसः स्वाश्रये जलाभिलाषगोचरतां नयतीति व्यवहारानुरोधेन तत्समवायतज्ज्ञानादेरवश्यवक्तव्यव्यापारत्वस्य तज्जन्यत्वाद्यात्मत्वासम्भवेनाखण्डोपाधेरवौचित्यापातत्वादिति सूचनार्थ एवकारः । अस्तु वा गुर्वेव व्यापारत्वं तथाऽपि तदेवावच्छेदकम्, पचतीत्यस्मात्पाकयत्नस्येव हि पतति फलं वृक्षादित्यादौ गुरुत्वस्य, स्रवति जलं गिरेरित्यादौ द्रवत्वस्य, व्रजति शरो दूरमित्यादौ वेगस्य, कम्पन्ते पत्राणि तरोरित्यादौ वायुसंयोगस्यापि संशयनिवृत्त्या निश्चयोऽभ्युपेयः । अस्ति च गुरुत्वादौ वर्त्तमानत्वाद्यन्वयस्य फलवृत्तित्वादेश्च प्रत्ययो यतो नानुमानिकत्वेनापि

एव चाख्यातार्थः । कुठारेण च्छिनत्तीत्याख्यातश्रवणे हि भवत्येतादृशी मतिः कुठारेण तथा व्याप्रियेत यस्मिन्व्यापारे कृते कुठारात् छेदनं भवतीति । एवं यजेत स्वर्गकाम इत्यस्यायमर्थः—यागेन तथा व्याप्रियेत यस्मिन्व्यापारे कृते यागात्स्वर्गो भवतीति। स च व्यापारः क्वचिदुद्यमननिपतनादिः, क्वचिच्चाग्न्यन्वाधानादिब्राह्मणतर्पणान्तः । कथंभावाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते । अन्योत्पाद-

---

तदन्यथासिद्धिः । भवन्ति च यत्नत्वत्वगुरुत्वत्वादीनि जातय इति कथं गुरुत्वत्वादीनि विहाय यत्नत्वमेव शक्यतावच्छेदकत्वेन शक्यमवधारयितुम् । भवतु सर्वाण्यपि शक्यतावच्छेदकानि व्यापारत्वस्य तु न तथात्वसिद्धिरिति चेत् । न । परस्परानपेक्षानेकशक्यतावच्छेदकाभ्युपगमेनानेकवाच्यवाचकभावाभ्युपगममपेक्ष्य गुरुभूतैकशक्यतावच्छेदकाभ्युपगमेनैकस्यैव वाच्यवाचकभावस्य स्वीकर्त्तुमुचितत्वात् । अनेकपदार्थघटितोपाध्यात्मनो हि व्यापारत्वस्यावच्छेदकत्वम्, तदाश्रयत्वमनेकेषां कल्प्यमिति गौरवं वाच्यम् । आश्रयतावच्छेदकत्वं तु सर्वेषु पर्याप्तमेकमेव स्यात् । यत्नत्वाद्यनेकावच्छेदकाभ्युपगमे स्वाश्रयित्वमप्यनेकत्र कल्प्यं सम्बन्धानेकत्वं चेत्यपि गौरवमिति हेत्वन्तरकथनार्थश्चः । व्यापारत्वस्याख्यातशक्यतावच्छेदकत्वे लौकिकवैदिकवाक्ययोर्बोधप्रकारं दर्शयति—कुठारेणेत्यादिना । आख्यातात्तु सामान्यत एवेति त्वेवौ भिन्नक्रमौ । सामान्यमेवावगम्यतेति । सामान्यतोऽवगतस्य विशेषाकाङ्क्षा हि कथमिति व्यपदिश्यते। संभवति चैषा व्यापारत्वे विनैव लक्षणाम्। अचेतनक्रियावाचिषु सर्वाख्यातेषु प्रतीतिनिर्वाहं

नानुकूलत्वेन सामान्यतस्त्वाख्यातादेव । रथो ग्रामं गच्छतीत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते । रथस्तथा गमने व्याप्रियते यस्मिन्व्यापारे कृते गमनाद्ग्रामप्राप्तिर्भवतीति प्रतीतेः । नत्वत्र गमनमात्रमाख्यातार्थः, तस्य धातुनोक्तत्वात् । तत्र कोऽसौ व्यापार इत्यपेक्षायां पूर्वोत्तरावान्तरदेशविभजनरूप इति पश्चादवगम्यते । पूर्वेण प्रदेशेन विभज्योत्तरेण संयुज्य रथो ग्रामं गच्छतीति प्रयोगात् । उद्यम्य निपात्य कुठारेण च्छिनत्तीतिवत् । एवं देवदत्तः प्रयतत इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवतीति प्रयत्नानुकूलो व्यापार एवाख्यातार्थो न तु प्रयत्नः । तस्य धातुनोक्तत्वात् । व्यापारविशेषापेक्षायां चेच्छादिः पश्चादवगम्यते उद्यमननिपातनवत् । तथा च सर्वत्रानुगतत्वादन्योत्पादनानुकूलव्यापारसामान्यमे-

---

दर्शयति रथइति । चेतनकर्तृकक्रियावाचिष्वपि यतत इत्यादिषु परमत एव लक्षणाप्रसक्तिर्नास्मन्मत इत्याह एवमिति । असिद्धकर्तृकक्रियावाचिनो भवतीत्यादेः संग्रहार्थमुक्तं सर्वत्रेति । उपपादिता हि भवतीत्यादावपचभेदेन प्रयोज्यप्रयोजकभेदमङ्गीकृत्य भावनाप्रतीतिर्वार्त्तिककृद्भिर्भावार्थाधिकरणे । वस्तुतस्तु यथैव भवतीत्यत्र भावनाप्रतीत्युपपादनं वार्त्तिककारीयमतिशयार्थं तथैवेहापि रथो गच्छतीत्यादिषु तदुपपादनमतिशयार्थमेव । नहि रथो गमनं करोति, पुरुषो यत्नं करोति, घटो भवनं करोतीति कस्याप्यनुभवोऽस्ति । अतो-

ख्यातार्थः, न तु प्रयत्नमात्रम्। रथो गच्छति देवदत्तः प्रयतत इत्यादिषु तदभावात्। न चात्रौपचारिकत्वं वक्तुं युक्तम्। मुख्ये सम्भवति तस्यान्याय्यत्वात्। करोत्यर्थोऽप्यन्योत्पादनानुकूलो व्यापार एव, न प्रयत्नमात्रम्। करोतेश्चेतनाचेतनकर्तृकाख्यातसामानाधिक-

---

ऽन्योत्पादानुकूलत्वांशानादरेण व्यापारसामान्यमेव सर्वत्राख्यातार्थ इत्येतावत्यर्थे ग्रन्थतात्पर्यम्। यथा चेदृशोदाहरणेषु रथाश्रितो गमनव्यापारः, पुरुषाश्रितो यत्नव्यापारः, घटाश्रितो भवनव्यापार इति विनैव लक्षणां बोधोपपत्तिस्तथोपपादितमधस्तात्। नन्वाकरे हि यजेतेत्यादौ यजेतेत्याख्यातार्थविवरणाद्भवितुम्प्रयतत इत्यादावाख्यातस्यौपचारिकत्वमत आह नचात्रेति। आ(क)जेतेत्यादौ यत्नस्याख्यातार्थत्वमुक्तम्। नच व्यापारत्वस्य शक्यतावच्छेदकत्वे तद्बाधः। तस्याप्याख्यातार्थेऽनुप्रवेशसत्त्वात्। तादृशाख्यातार्थे सत्यपि व्यापारान्तरानुप्रवेशे तस्यानियतत्वाद्यत्नस्यैव नियतत्वात् परं यत्नस्याख्यातार्थत्वकथनम्। न च परेणापि यततेति विवरणानुरोधेन यततेराख्यातस्य च सर्वात्मना तुल्यार्थत्वं शक्यं वक्तुम्। यततेरिवाख्यातस्यापि कर्मानपेक्षक्रियाभिधायित्वापत्तेः। भवतु वा को विरोधः, प्रतिपाद्याख्यातानां सर्वेषां सामञ्जस्यानुरोधेन नत्रैवासामञ्जस्यं वक्तुमुचितम्, नतु तदनुरोधेनात्र प्रतिपाद्याख्यातेष्वसामञ्जस्यमित्याशयेन अत्रेति। नच चेतनप्रवर्त्तकत्वनियमानुपपत्तिः, तदनुष्ठेयधात्वर्थानुरक्तव्यापाराभिधायित्वेन तन्नियमोपपत्तेः 'अहमत्र प्रेर्य' इति साक्षात्परम्परया वा स्वप्रयुक्तप्रतीतिभाज एव प्रेर्यत्वनियमाच्च, न यत्नत्वं करोतेः शक्यतावच्छेदकं येनाख्यातस्यापि करोतिना विवरणात्तथा स्यादित्याह—करो-

रण्यादिति ।

---

तच(१)र्थश्चेति । व्यापारत्वं शक्यतावच्छेदकं न यत्नत्वमित्येतावति तात्पर्यम्, अन्योत्पत्त्यनुकूलत्वस्य तु शक्यतावच्छेदकान्तर्भावेन प्रतीतिराक्षेपाद्वेत्यन्यदेतत् । अत एवाह–करोतेरिति । तत्कर्तृकव्यापाराभिधायित्वेनाख्यातस्य तत्कर्तृकत्वं यथैव चैत्रः पचतीत्यस्य पाकं करोतीति विवरणं दृश्यते, तथा स्थाली बिभर्त्तीत्यस्यापि धारणं करोतीति विवरणं दृश्यते, स्थाली पचतीत्यस्य पाकं करोतीति । नच तत्र करोतेर्यत्नवाचित्वे सङ्गच्छत इत्याशयः । एतेन कृताकृतविभागकर्तृव्यवस्थे अपि निराकृते । दृश्यते ह्ययत्नजातेऽपि कृतव्यवहारो यत्नाभाववति च कर्तृव्यवहारः, अग्निना ऽद्य पाकः कृतः, अग्निः पाककर्तेति ।

यस्तु यत्नसाध्यत्वासाध्यत्वाभ्यां क्वचित्कृताकृतव्यपदेशः स यत्नसाध्ययोरेव द्वयोर्मध्येऽल्पयत्नसाध्येऽकृतत्वव्यपदेशवद्व्यापारसाध्यत्वाविशेषेऽपि क्वचिद्यत्नन्यूनत्वेनैव स्वल्पव्यापारसाध्यत्वात्वादकृतव्यवहारोपपत्तेर्नासम्भवी । यत्नाश्रयत्वे तुल्येऽपि चैत्राश्वयोः स्वातन्त्र्यपारतन्त्र्याभ्यां यथा कर्तृकरणव्यपदेशव्यवस्था भवति चैत्रोऽश्वेन गच्छतीति नतु कदाचिदश्वश्चैत्रेण गच्छतीति, तथा करोतेर्व्यापाराभिधायित्वेऽपि ताभ्यामेव सम्भवति सा व्यवस्था । यथा च सत्यपि तदनुकूलव्यापाराश्रयत्वे तदभावविवक्षयैव सम्भवति कर्तृत्वनिषेधव्यवहारो वातादिना स्पन्दमाने स्वातन्त्र्यविवक्षयाऽनुभवति तस्मिन्नपि कर्तृत्वव्यवहारः, यथा तदीयस्पन्देन भग्ने केनेदं भग्नमनेनैव नान्येनेति । अतो न व्यापारस्याख्यातवाच्यत्वे किञ्चिद्बाधकं, प्रत्युत पाकानुकूलयत्नवत्त्वस्य चैत्रेश्वरयोस्तुल्यत्वाच्चैत्रः पचतीतिवदीश्वरः पचतीत्यपि प्रयोगापत्तिर्यत्न-

(१) करोत्यर्थोपीति पाठः ।

तत्सिद्धमन्योत्पादनानुकूलो व्यापार आर्थी भा-

स्य वाच्यत्वे बाधिका । अथेच्छाजन्यतावच्छेदको यत्नत्वव्याप्यो जातिविशेष एवाख्यातशक्यतावच्छेदकः, यद्वा धात्वर्थस्य पाकादेराख्यातार्थयत्ने चेष्टादिद्वारकमेव जनकत्वं संसर्गः, आख्यातार्थयत्नस्य वा प्रथमान्तपदार्थे चैत्रादाववच्छेदकत्वं संसर्ग इति स्वीकृत्य 'ईश्वरः पचति' इति प्रयोगं वारयामः, न हीश्वरो जन्यकृतिमान्, नापि तत्कृतेश्चेष्टाद्वारकं जनकत्वम्, नापि कृतिजन्यनि चैत्रस्येवेश्वरस्यावच्छेदकत्वमिति चेन्न । तथासतीश्वरकर्तृकक्रियावाचिनां वेदपुराणेतिहासगतानामाख्यातपदानामनुपपत्तेः । तथाऽगत्या व्युत्पत्तित्याग इति चेत् । न 'शास्त्रस्था वा तन्निमित्तत्वाद्' इत्यत्रोक्तेन त्रिवृच्चर्वश्ववालादिन्यायेन तादृशापदनुसारिण्या एव व्युत्पत्तेरङ्गीकार्यत्वात् । किञ्च यावन्तः पाकजनका यत्नास्ते प्रत्येकमाख्यातवाच्याः, किंवा यावतो यत्नसमुदायस्य फलोपधाननियमस्तावान्तसमुदायो वाच्यः । आद्ये तादृशयत्नवन्तं कचित्परं च तादृशसमुदायवन्तमुद्दिश्य नेदृशवचःप्रयोगः स्यात्—नायमपाक्षीत् किन्तु पर एवेति । पाकजनकयत्नस्य द्वयोरपि सर्वाविशेषात् । द्वितीये यत्नत्वं न शक्यतावच्छेदकं तस्य प्रत्येकसमाप्तत्वेन समुदायावृत्तित्वात् । अस्मन्मते तु व्यापारत्वशक्यतावच्छेदकत्वेऽपि फलोपहितत्वसम्बन्धेन भाव्यनिष्ठस्यैव तस्याख्यातेन प्रत्याय्यत्वात् । फलोपहितत्वस्य च व्यापारनिचयवृत्तित्वाद्व्यापारत्वस्य चाद्यपरिस्पन्दप्रभृत्याफललाभाद्विततत्वाद् भावनेतिव्यवहारात्कोऽसौ व्यापार इत्याकाङ्क्षायामन्वाधानादिब्राह्मणतर्पणान्तपदार्थनिचयस्यायमसौ व्यापार इत्यन्वयकथनाच्च समुदायेऽपि व्यवहारोपपत्तेः सम्भवति व्यापारनिचयवत्याख्यातप्रयोगनियम इत्यलं बहुना । अर्थभावनानिरूपणमुपसंहरति तत्सिद्धमिति । तद्द्वारकं यागादेर्विध्यन्वयं दर्श-

वनेति। सैव च यजेतेत्यत्राख्यातांशेनोच्यते भावये-दिति। तस्याश्च भाव्याकाङ्क्षायां स्वर्गादिर्भाव्यत्वे-न सम्बध्यते। करणाकाङ्क्षायां यागादिः करण त्वेन सम्बध्यते। प्रयाजादय इतिकर्तव्यतात्वेन। एवं च यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्वि-धानात्सिद्धं यागादेर्धर्मत्वम्। प्रयोजनमुद्दिश्य वेदेन वि-

---

यितुं तस्या आख्याताभिधेयरूपप्रदर्शनपूर्वकमंशत्रयान्वयेन पूर्ण-तया विध्यन्वयमापादयति सैव चेत्यादिना। विशिष्टभाव-नां विषयीकुर्वता च विधिना तद्द्वारा विशेषणीभूतस्य यागस्यापि विषयीकरणाल्लिप्साधिकरणन्यायेन चाविषयीकृतस्य स्वर्गादे-रुद्देश्यतयैव स्वीकरणाद्ग्रन्थारम्भोक्तधर्मलक्षणाक्रान्तत्वेन यागा-देर्धर्मत्वसिद्धिरिति। ग्रन्थार्थमुपसंहरति—एवं चेति। अंशत्रयपूर्ण-तया भावनाया विध्यन्वये सतीत्यर्थः।

अत्र केचित्कपिलगौतमादिप्रणीतशास्त्राणां मोक्षार्थतत्त्वज्ञान-जनकत्वात्परमपुरुषार्थपर्यवसायित्वं नतु जैमिनिप्रणीतशास्त्रस्य, तत्प्रतिपाद्यकर्मणां मोक्षाजनकत्वात्। तदजनकत्वमेव कुत इति चेत्। स्वर्गादिफलान्तरोद्देशेनैव कर्मणां विधिदर्शनात्, 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' इति मोक्षे कर्मज-न्यत्वप्रतिषेधदर्शनात्, 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति मोक्षे ज्ञानैकसाध्यत्वश्रवणाच्च। न च भगवदर्प-णबुद्ध्या ऽनुष्ठितानामपि तेषां मोक्षहेतुत्वम्। 'कर्मशुद्धिर्मदर्पणम्' इ-त्यादिशास्त्रवशेन भगवत्यर्पणस्य तत्तत्फलार्थकर्मवैगुण्यपरिहारार्थ-त्वेन कर्माङ्गत्वात्, परार्थतावगमे च फलश्रुतेरर्थवादत्वादित्याहुः।

हितत्वादिति । सोऽयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः, श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निश्रेयसहेतुः । न च तदर्पणबुद्ध्याऽनुष्ठाने प्रमाणाभावः । 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यासि कौन्तेय तत्कुरुष्व मदर्पणमिति

---

तन्निराकरणव्याजेन स्मृतिप्रामाण्यं दर्शयितुमाह—सोऽयमिति । तुशब्दस्तत्तत्फलोद्देश्यकत्वानिव्यवच्छेदार्थः । 'एष नु वा'आतिवादी' इत्यादौ तु शब्दस्य तथा शक्त्यवधारणात् । यद्यपि तत्फलोद्देश्यकानुष्ठानेऽर्पणबुद्धिर्वैगुण्यपरिहारमात्रार्था, तथाऽपि कल्पान्तरोद्देशमन्तरेण भगवत्प्रीत्युद्देशात्तत्कार्पणबुद्ध्याऽनुष्ठीयमानकर्मणां मुक्त्यर्थताऽवश्यमभ्युपेया ।

वेदोदितानि कर्माणि कुर्यादीश्वरतुष्टये ।
यथाश्रमन्त्यक्तकामः प्राप्नोति परमं पदम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।

इत्यादिभ्यः पुराणेतिहासवचोभ्यः संयोगपृथक्त्वन्यायेन तत्तत्फलार्थानामपि मुक्त्यर्थत्वसम्भवात् । विध्येकवाक्यतामन्तरेणार्थवादताया दुर्वचत्वात् । नच फलान्तरे विनियोगशून्यानां नित्यनैमित्तिकानामेवैष मोक्षे विनियोग इत्यपि शक्यम् । तेषामपि प्रातिस्विकविधिभिः पापक्षये विनियोगात् । त्यक्तकामः, शुभफलैर्मोक्ष्यस इति पदानां वैयर्थ्यापत्तेश्च ।

काम्यं विषयभोगार्थमिहामुत्र प्रयुज्यते ।
मोक्षाय सुकृतन्तद्धि ब्रह्मार्पणधिया कृतम् ॥ इति—

स्फुटेन वचोन्तरेण काम्यानामपि मोक्षार्थत्वप्रतीतेश्च ।

नच 'कर्मणा'इत्यादिश्रुतिविरोधः । सामान्यप्रवृत्तायास्तस्यास्ताद्दशार्पणबुद्धिशून्यकर्मविषयत्वोपपत्तेः । नापि 'तमेव विदित्वा' इति श्रुतिविरोधः । कर्मानुष्ठानसहितस्यात्मज्ञानस्याप्यस्माभिर्मोक्षजनकत्वाभ्युपगमात् । यथोक्तं बृहद्दीपिकायाम्–

ननु निःश्रेयसं ज्ञानाद्बन्धहेतोर्न कर्मणः ।
नैकस्मादपि तत्किं तु ज्ञानकर्मसमुच्चयाद् ॥ इति ।

नाप्येवकारश्रुतिविरोधः । तस्या मोक्षजनकीभूतज्ञाने तच्छब्दोपात्तात्मभिन्नविषयनिरासार्थत्वात् । नापि 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिविरोधः । तस्या एवकारबोधितनिरासानुवादत्वात् । एवकारसमभिव्याहृतनिषेधस्य सर्वत्र तथात्वदर्शनात् । अन्यथा वाक्यभेदाच्च । नन्वेवमपि श्रौतेन ज्ञानस्य मुक्तिसाधनत्वे कर्मणां मुक्तिसाधनत्वस्मार्तस्य बाधः स्यादिति चेत् । न । मोक्षविरोधिपापनिवृत्त्युत्पत्तिकारिणां कर्मणां मोक्षविरोधिकर्तृत्वाद्यभिमाननिवृत्त्यर्थत्वप्रकाशनकारिणश्च ज्ञानस्य भिन्नावान्तरकार्यत्वेन बाधविकल्पयोरनाशङ्कत्वात् । अत एवोक्तं बृहद्दीपिकायाम्–

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयन् ॥

वैराग्यात्पक्वविज्ञानः कैवल्यं भजते नरः । इति ।

'यजेत स्वर्गकामः'इतिवज्ज्ञानस्य मोक्षसाधनताविधेः स्पष्टस्यादर्शनाच्च । मानान्तरसंवादविसंवादरहितेन 'तरति शोकमात्मविद्' इतीद्दशेनैव विधिशून्येनापि वचसा तस्याः सिद्धिरिति चेत् । न । 'प्रयाजानुयाजा इज्यन्ते भ्रातृव्यस्याभिभूत्यै'इति वचसा प्रयाजानुयाजानां भ्रातृव्याभिभवार्थत्वापत्त्या फलवदफलन्यायेनाङ्गत्वासम्भवापत्तेः । प्रकरणसहायेन वाऽमुना सार्वकाम्यशास्त्रावगतदार्शिकफल-

भूतभ्रातृव्याभिभवं प्रत्येव क्रतूपकारप्रणालिकया साधनत्वापत्तेः । नच 'तरति शोकम्'इत्यादौ विधिकल्पनेनापि ज्ञानमोक्षयोः साध्यसाधनत्वोपपत्तिः । औपनिषदैर्ज्ञाने विध्यनङ्गीकारात् । परैरपि मिथ्याज्ञाननिवृत्त्यधीनजन्मनि मोक्षे तत्त्वज्ञानाधीनताया लोकसिद्धत्वाभ्युपगमेन विधिकल्पनायाः कर्तुमनुचितत्वात् । अत एव लोकसिद्धसाधनत्वानुवादिनी श्रुतिर्न स्मार्तस्य कर्मसाधनत्वस्य बाधायालम् । नहि कर्मणां मोक्षसाधनत्वं ज्ञानस्येव लोकसिद्धम्, येन स्मृतेरप्यनुवादत्वं शङ्क्येत । अस्मन्मते तु सत्यपि ज्ञानाविध्याश्रयणे भिन्नावान्तरकार्यत्वेनैवोक्तरीत्या बाधपरिहारात् । तदाश्रयणफलं त्वनन्तरमेव वक्ष्यामः । तर्हि परमतेन लोकसिद्धं ज्ञानस्य मोक्षहेतुत्वं शास्त्रीयेण कर्मणां हेतुत्वेन बाध्यते इति कर्मणैव मोक्षसिद्धिरिति कर्कोक्तं साध्विति चेत् । न । अपूर्वाधिकरणन्यायेन लोकसिद्धवस्तुस्वभावानतिक्रमेणैव शास्त्रप्रवृत्तेः । लोके च मिथ्याज्ञाननिवृत्तेस्तत्त्वज्ञानाधीनत्वावगमात् । तामन्तरेण मोक्षासम्भवात् । अतो यथैव पश्वादिप्राप्तिहेतुत्वेन विहितं चित्रादि लोकावगततद्धेतुभावशरीरादिसहितमेव स्वफलायालमित्यङ्गीक्रियते, तथैव मोक्षहेतुत्वेन विहितानि कर्माणि ज्ञानमापेक्षाण्येव तत्प्रापकाणीत्यभ्युपेयम् । अत एव ज्ञानकर्मणोरन्यतरव्यतिरेकतोऽपि मोक्षाभावं दर्शयति श्रुतिः-

'अन्धं तमः प्रविशन्ति ये ऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः' ॥ इति ।

अत्रोपासते रता इति चैकत्र निष्ठोक्त्या परव्यतिरेकः कथ्यते । तेनोभयनिष्ठा एव तमस्तरन्तीत्युक्त्या समुच्चितोभयमेव मुक्तिहेतुरित्युक्तं भवति । नच कर्मणां प्रतिबन्धकदुरितनिरासेनान्यथासिद्धत्वान्न फलहेतुत्वमिति साम्प्रतम् । ज्ञानस्यापि प्रतिबन्धकमिथ्याज्ञाननिवर्त्तकतायास्तुल्यत्वात् । प्रतिबन्धकनिरासस्य व्यापारत्वकल्पनाया अपि समत्वात् । नच मुमुक्षुं प्रति

'वेदानिमं च लोकममुं च परित्यज्यात्मानमन्विच्छेद्' इतिवेदोक्तकर्मत्यागश्रवणान्न कर्मणां मोक्षहेतुत्वमिति सांप्रतम्। ज्ञानात्पूर्वमनुष्ठितानां ज्ञानेन सह मुक्तिहेतुत्वस्य ज्ञानपरिपाककालीनतत्त्यागेन सह विरोधाभावात्। यथा रोगिणं प्रति कश्चिद् ब्रूयात् 'प्रथममयं क्वाथो ग्राह्यस्ततस्तं परित्यज्येदं चूर्णं सेव्यमेवं स्वास्थ्यं भविष्यति' इति। नचैवं सति चूर्णमेव स्वास्थ्यहेतुर्न क्वाथ इति शक्यं वक्तुम्। तथा ज्ञानपरिपाककाले कर्मणां त्यागश्रवणेऽपि न मोक्षहेतुत्वानुपपत्तिः। उक्तं हि न्यायसुधायाम्—परिपक्वेन ज्ञानेनात्मनः कर्मसम्बन्धो वार्यत इति। अस्तु वा तत्तत्फलकामनया कर्मानुष्ठानत्यागाभिप्रायत्वं त्यागवचसाम्। अत एवोक्तं 'काम्यानां कर्मणां न्यासं सन्यासं कवयो विदुः' इति एवमपि ज्ञानादेव तु कैवल्यमिति श्रुतिविरोधोऽपरिहार्य इति चेत्। न। 'यदि रथन्तरसामा सोमः स्याद्' इत्यत्र रथन्तरेण स्वप्रतिस्पर्द्धिबृहद्व्यावृत्तिवत् तत्त्वज्ञानवाचिज्ञानपदोत्तरैवकारेण तत्प्रतिस्पर्द्धिनोऽतत्त्वज्ञानस्यैव निरासौचित्यात्। नन्वेवमपि ज्ञानस्य मोक्षहेतुत्वे प्रामाणिके विविदिषावाक्याच्च कर्मणां ज्ञानहेतुत्वेऽवगते स्वर्गाद्यर्थं विहितैरपूर्वैस्येव मोक्षाय विहितैस्तत्त्वज्ञानस्य व्यापारत्वाश्रयणान्नाग्नेयाग्नीषोमीयवत्कर्मज्ञानयोर्मोक्षे समुच्चयसिद्धिरिति चेन्न। ज्ञानोत्तरमप्यनुष्ठेयानां नित्यादिकर्मणां मोक्षप्रतिबन्धकदुरितनिरासमात्रार्थत्वेन मोक्षोपयोगिनां ज्ञानव्यापारत्वासम्भवात्। करणतावच्छेदकरूपावच्छिन्नं यज्जनयित्वैव फलं जनयति तस्यैव व्यापारत्वनियमात्। ननु देहादिभिन्नजीवात्मज्ञानस्यौपनिषदस्यापि 'यदेव श्रद्धया करोति विद्ययोपनिषदा' इतिवचने उपनिषच्छब्दोक्तस्यानेनैव वाक्येन लिङ्गेन वा क्रत्वर्थता वार्त्तिककारे सम्बन्धवार्त्तिकादौ 'कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते' इत्यादिनोक्ता। अपहतपाप्मत्वादिसत्यकामत्वादिगुणवदात्मनोत्तरस्य 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यो मन्तव्यो बो-

च्छन्त्य' इत्यादिशास्त्रविहितस्य तु विज्ञानस्य 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्याद्यर्थवादोक्ताभ्युदयफलार्थत्वं व्याकरणाधिकरणे निर्दिष्टम्। 'आत्मानमुपासीत' इति श्रुतिविहितस्य निर्गुणात्मतत्त्वज्ञानस्य तु 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते' इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलसङ्कीर्तनान्निःश्रेयसार्थत्वमिति तत्रैवोक्तम्। परमशब्दोऽनौपाधिकत्वपरः। अनौपाधिक एवात्मा ब्रह्मशब्दवाच्यः। परमानन्दोपभोगहेतुत्वाल्लोकशब्दवाच्यश्च सन् श्रुतौ ब्रह्मलोकमितिकर्मधारयेन विवक्षित इति सूचयितुमौपाधिकरूपपरित्यागेनासंसारिरूपनिजावस्थात्मकत्वेन तत्प्राप्तेरक्षयत्वं च सूचयितुं श्रुतिर्निर्दिष्टा ब्रह्मलोकप्राप्तिः परमात्मप्राप्तिशब्देन व्याख्याता। तत्प्राप्तौ बन्धककर्माभावात्प्राप्ताया अपुनरावृत्तेरनुवादमात्रं 'न स पुनरावर्त्तते' इति, नतु पृथक्फलमेतदिति वक्तुन्तस्या एवापुनरावृत्त्यात्मकतोक्तेति न्यायसुधायां व्याख्यातम्। अस्माच्च ग्रन्थाद् अकर्तृत्वाभोक्तृत्वाद्यात्मकासंसारिरूपात्मतत्त्वज्ञानस्यानवच्छिन्नानन्दात्मकमोक्षप्रापकत्वप्रतीतेस्तादृशात्मज्ञानोत्तरं च कर्मानुष्ठानासम्भवात्कथं ज्ञानोत्तरं कर्मानुष्ठानस्य मोक्षोपयोगवार्ता सङ्गच्छते। ननु मोक्षे कथमानन्दोपभोगः, न तावदुत्पत्तिमत्सुखं तत्र प्रकाशत इति शक्यं वक्तुम्।

सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते।
स्वर्ग एव भवेदेष पर्यायेण क्षयी च सः॥

नहि कारणवत्किञ्चिदक्षयित्वेन गम्यते। इति—

सम्बन्धवार्त्तिके निरासात्। नापि स्वरूपसुखं स्वप्रकाशतया प्रकाशत इति शक्यं वक्तुम्। संसारावस्थायामपि प्रकाशापत्तेः। ओमित्युक्तेरनुभवविरुद्धायाः साहसमात्रत्वात्।

तत्र सोऽभिभूत इति चेत्, न। प्रकाशमाने प्रकाशनिवारणात्प्रकाभिभवस्य दुर्निरूपत्वात्।

यत्तु केचिदाहुः–मुक्तौ बाह्येन्द्रियनिवृत्तावपि मनसोऽवस्थितेः स्वरूपसुखं मानसप्रत्यक्षेणानुभवन्नात्माऽवतिष्ठत इति। तत्तुच्छम्। शरीरं विना मानसप्रत्यक्षासम्भवात्। 'अमनोऽवाग्' इति मनसोऽपि तत्राभावप्रतीतेश्च। न्यायसुधायामनौपाधिकात्मनो मुक्तप्राप्यत्वसंकीर्त्तनेन मनोरूपोपाध्यवस्थितेस्तत्र तदसम्मतत्वाच्चेति चेन्न। वायुविक्षिप्तदेशस्थितदीपप्रभावत्सांसारिकदुःखसम्वलितस्य स्वरूपसुखप्रकाशस्य सतोऽप्यसत्त्वव्यवहारोपपत्तेः। निर्वायुदेशस्थापितततप्रभावच्च मुक्तौ तत्प्राप्तिव्यवहारोपपत्तेरिति। उक्तं च–

निजं यत्त्वात्मचैतन्यमानन्दश्चेष्यते च यः।
यच्च नित्यविभुत्वादि तेनात्मा नैवमुच्यते।

इति। इतिन्यायसुधानुसारिणां पन्थाः।

आत्मवादग्रन्थे मिश्रास्त्वाहुः–देहव्यतिरिक्तस्याविनाश्यात्मन औपनिषदं ज्ञानमध्ययनविधिसिद्धार्थज्ञानवल्लिङ्गात् पारलौकिकफलक्रत्वङ्गम्।

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन' ॥ इति–

वार्त्तिकोक्तेः। प्रदेशविशेषचिन्तनाद्यात्मकेतिकर्त्तव्यताविशिष्टोपासनानाम् अभ्युदयार्थत्वम्। शान्त्यादीतिकर्त्तव्यतोपेतोपासनानां काम्यनिषिद्धवर्जनसहितनित्यनैमित्तिकानुष्ठानसहितानां मुक्त्यर्थत्वम्। मुक्तिश्च भोगायतनभोगसाधनभोग्यात्मकत्रिविधबन्धस्यात्यन्तिको विलयः, नतु सुखप्रकाशः। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति मुक्तौ प्रियस्पर्शस्यापि निषेधात्। 'विज्ञातारमरे केन विजानीयाद्' इति मुक्तावात्मप्रकाशनिवारणाच्च।

आनन्दप्राप्तिश्रुतयो दुःखाभाव एवोपचारेण गमयितव्याः । 'द्रष्टुर्दृष्टेर्विपरिलोपो न विद्यते' इति च प्रकाशशक्त्यविलोपाभिप्रायेण । नच प्रियास्पर्शवचनं वैषयिकसुखनिषेधाभिप्रायम्, यतः श्रुत्योर्विरोधे मानान्तरेण निर्णयः कर्त्तुमुचितः । बाधितं च स्वरूपसुखं 'नेदानीमहं किमपि सुखमनुभवामि' इति प्रत्ययेन, सौषुप्तिकेन सुखाननुभवेन च । बाधितं च दृष्टिघ्रातिश्रुतिस्पृष्टिविज्ञालीनां नियतचक्षुरादीन्द्रियजन्यनियतगन्धादिविषयज्ञानात्मकानां मुक्तौ सत्त्वम् । वार्त्तिकेऽपि संबन्धग्रन्थे—

तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते ।
न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ।
नच क्रियायाः कस्याश्चिदभावः फलमिष्यते ॥
तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये ।
उत्तरप्रचयासत्त्वाद्देहो नोत्पद्यते पुनः ॥ इति—

सोपपत्तिकाभावात्मकमोक्षप्रतिपादनादानन्दप्राप्तिवचनमुपन्यासमात्रमिति ।

अस्मिन्नपि मते उपासनाव्यापारभूतदेहभिन्नात्मतत्त्वसाक्षात्कारस्य जन्मानन्तरं कर्मसु प्रवृत्तिः संभवति । देहसम्बन्धोपाधिकेन 'ब्राह्मणोऽहम्' इत्याद्यभिमानेन ब्राह्मणत्वादिव्यपदेशभाज एव वसन्ताद्याधानेऽधिकारव्यवस्थाया अपूर्वाधिकरणाकरग्रन्थेऽभिधानात् । उक्ततत्त्वसाक्षात्कारानन्तरं च तादृशाभिमाननिवृत्तेरवश्यंभावात् । नन्वयुक्तमेतन्मतम् । औपनिषदस्य देहव्यतिरिक्तात्मज्ञानस्य लिङ्गात्परलोकफलविहितकर्माङ्गत्वे तादृक्फलनिषिद्धकर्माङ्गत्वमपि प्रसज्येत । तादृशात्मज्ञानशून्यस्य तादृक्फले कर्म्मणि प्रवृत्तेरिव तादृक्फलान्निषिद्धान्निवृत्तेरप्यसंभवात् । नचेष्टापत्तिः । अनात्मज्ञकृतब्रह्महत्यादेर्वैगुण्येन प्रत्यवायाजनकत्वप्रसङ्गात् । अतएवात्मज्ञानस्य क्रत्वर्थप्रतिज्ञायां वार्त्तिकोपन्यस्तस्य 'तेन विना परलोकफलेषु

कर्मसु प्रवृत्तिनिवृत्त्यसम्भवाद्'इतिहेतोर्व्याख्यावसरे व्याकरणाधिकरणे न्यायसुधायामुक्तम्—उपकारकत्वमात्राभिप्रायः क्रत्वर्थशब्द इति। नच बन्धनिवृत्तिर्मोक्ष इत्यपि साधु। दुःखनिवृत्त्या तस्य पुरुषार्थत्ववत्सुखनिवृत्तेः कामनाऽदर्शनेन स्वतः पुरुषार्थत्वाभावाच्चेति चेत् न। आत्मज्ञानरीत्याऽध्ययनसिद्धार्थज्ञानस्यापि क्रत्वङ्गत्वापत्तेः। अथोच्येत—विहितप्रवृत्तेरिव निषिद्धनिवृत्तेरपूर्वसाधनत्वाभावेन नाङ्गग्राहकत्वम्, निषेध्यस्य सत्यपि पापापूर्वसाधनत्वे रागतो यथा तत्र प्राप्तं तादृशस्यैव तस्यानिष्टहेतुत्वज्ञापनान्नाङ्गाकाङ्क्षा। नतरां तद्ग्राहकत्वम्। विहितेषु तूक्तबाधकाभावात्सम्भवत्यध्ययनसिद्धार्थज्ञानस्याङ्गत्वमिति,—तर्हि तुल्यन्यायतयाऽत्मज्ञानस्यापि विहितकर्माङ्गत्वं स्वीकुरु। यथा च निषेधाध्ययननियमो निषेधेष्वनुपयुज्यमानोऽपि निमित्तनिश्चयद्वारा प्रायश्चित्तेषूपयुज्यत इत्यभिप्रेत्य वार्त्तिके 'तेन विना निवृत्त्यसम्भवात्क्रत्वर्थत्वम्'इत्युपन्यासः सङ्गच्छते। दुःखवच्च सांसारिकसुखे विवेकिनां द्वेष्यत्वदर्शनान्न तन्निवृत्त्या मोक्षस्यापुरुषार्थत्वापत्तिः। अत एव सुखानुबन्धमन्तरेण दुःखनिवृत्तेः कामनादर्शनात् दुःखनिवृत्तेः पुरुषार्थत्वोपपत्तिः। यथाहुर्मिश्राः—

सुखदुःखोपभोगो हि संसार इति शब्द्यते।
तयोरनुपभोगं तु मोक्षं मोक्षविदो विदुः॥
श्रुतिरप्येवमेवाह भेदं संसारमोक्षयोः।
नह्यवेत्यशरीरस्य प्रियाप्रियविहीनता॥
अशरीरं वाव सन्तं स्पृशतो न प्रियाप्रिये।
आनन्दात्मकमात्मानं ये वदन्ति स्वयंप्रभम्।
तन्मतेऽपि च संसारान्मुक्तेरेतावती भिदा॥ इति—

मिश्रानुसारिणां पन्थाः।

द्वयोरपिच पथोस्तत्त्वज्ञानोत्तरं नित्यादिकर्मानुष्ठानं व्यर्थम्।

'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन'इतिस्मृतेस्तत्त्वज्ञानेनैव सर्वदुरितनिवृत्तिरिति चेन्न । अप्रामाण्यशङ्कानास्कन्दितत्वस्वरूपतत्त्वज्ञानपरिपाकात्प्राक्तस्यापि भ्रमस्य निवृत्त्यसम्भवेन कर्माधिकारोपपत्तेः । सम्बन्धग्रन्थे वार्त्तिककारैर्ज्ञानाग्निरित्यादिस्मृतेरौपचारिकत्वाश्रयणेन ज्ञानस्य कर्मनाशकत्वनिषेधाच्च । यथाहुः—

'यद्यप्यज्ञानजन्यत्वं कर्मणामवगम्यते ।
रागादिवत्तथाऽप्येषां न ज्ञानेन निराक्रिया ।
कर्मक्षयो हि विज्ञानादित्येतन्निष्प्रमाणकम् ॥
फलस्याल्पस्य चादानं राजपुत्रापराधवद् । इति ।

तस्माद्युक्तमुक्तं ज्ञानोत्तरमनुष्ठेयानां कर्मणां न ज्ञानव्यापारत्वमिति । किञ्च ज्ञानस्य व्यापारत्वे यागव्यापूर्वं प्रतीव कर्मणां ज्ञानं प्रत्यङ्गत्वं वाच्यम् । नच तत् सम्भवति । एकाधिकारिकयोरेव विहितयोरङ्गाङ्गित्वसम्भवात् । कर्मणां च जीवनादिनिमित्तवदधिकारिमात्रार्थत्वात् । कर्मणा मुक्तिज्ञानस्य मुमुक्षुमात्राधिकारिकत्वात् । विविदिषावाक्यं तु मोक्षार्थत्वेन विविदिषार्थत्वेन वा कर्मणां विधायकम् । तस्मात्समप्राधान्येनैव ज्ञानकर्मणोर्मुक्तिहेतुत्वम्, यदि वा ज्ञानद्वारा कर्मणां मुक्तिहेतुत्वम्, सर्वथाऽपि कर्मणां मुक्तिफलत्वात् कर्मविचारार्थस्य शास्त्रस्य सम्भवति मुक्तौ पर्यवसानमित्याशयः । नन्वीश्वरार्पणबुद्ध्याऽनुष्ठीयमानानां वेदोक्तसमस्तकर्मणां परस्परसहितानां मुक्त्यर्थत्वेन विधानेऽशक्यार्थविधिः स्यात् । नहि समस्तकर्माणि केनापि कर्त्तुं शक्यन्ते । अतो 'वेदोदितानि'इत्याद्युदाहृतशास्त्रं न मुक्त्यर्थत्वेन कर्मानुष्ठाने प्रमाणमित्यत आह—नचेति । यथाहि 'यत्करोषि यदश्नासि'इति ये क्रिये स्वभावतः कर्त्तव्यतया प्राप्ते तयोरेवेश्वरार्पणबुद्ध्याऽनुष्ठानं विधीयते, न त्वपूर्वे क्रिये विधीयेते, तथैव होमदानतपांस्यपि यान्येव यस्य पुंसः स्ववर्णाश्रमानुसारेण कर्त्तव्यतया प्राप्तानि तत्तच्छास्त्रेभ्यस्तान्येव ता-

दृशबुद्ध्या कर्त्तव्यतया विधीयन्ते न त्वपूर्वाणि कर्माणि, यच्छब्दोपबन्धानुपपत्त्यापातात् । 'यथाश्रमं त्यक्तकामः' इति शास्त्रान्तराच्च । नचैवं स्वभावप्राप्तस्य गमनादेरपि भगवत्यर्पणाङ्गीकारे निषिद्धस्यापि दैवात्कृतस्य तदापत्तिः ।

देवतानां गुरूणां च मातापित्रोस्तु सर्वथा ।
पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचिद् ॥ इति—

माधवोदाहृताङ्गिरोवचनाद् अपुण्यशब्दस्याधर्मशब्दपर्यायत्वात् अर्पणशब्दस्य दानवाचितायाः प्रसिद्धत्वात् । ननु स्मृतिशब्देन यदि ज्ञानविशेषः, तन्मूलकं वचो वा विवक्ष्यते । उभयथाऽपि न तस्य प्रामाण्यं सम्भवति । अनधिगतार्थगन्तृताया अभावात् । पौरुषेयवाक्यस्यापि धर्मप्रामाण्यसंभवे वेदापौरुषेयत्वसमर्थनस्य वैयर्थ्यापाताच्च । अथ स्वतन्त्रप्रामाण्यसिद्ध्यै तत् कृतम् 'स्मृतीनां तु प्रमाणान्तरमूलत्वेन पराधीनप्रामाण्यं ब्रूम इति चेत् । न । प्रत्यक्षसूत्रे निरस्तधर्मप्रामाण्यानां प्रत्यक्षादिलौकिकप्रमाणानां मूलत्वासम्भवात् । श्रुतिरपि मूलत्वेनोच्यमाना नित्यानुमेया वा स्यात्, उत्सन्ना वा, इदानीन्तनप्रत्यक्षा वा । नाद्यः । अन्धपरम्पराप्रसङ्गात् । द्वितीयेऽपि स्मार्त्तधर्मनिबन्धनरूपायाः कस्याश्चिच्छाखाया एव तावन्नोत्सादो वक्तुं शक्यः । प्रतिवेदं शाखानां नियतसंख्यत्वात् । नापि नानाशाखाविप्रकीर्णाः स्मृतिमूलभूताः श्रुतय उत्सन्ना इति शक्यं कल्पयितुम् । अत्यन्तावहिताध्येतृकासु मात्रामात्रस्याप्युच्छेदासम्भवात् । न तृतीयः । अनुपलब्ध्या बाधितत्वात् । शाखान्तरीयत्वेन परप्रत्यक्षायामप्युपलम्भकाभावेन पाठानुपलब्धिः सम्भवत्येवेति चेत् । प्रमाणसिद्धस्यानुपलम्भे वक्तुमुचितमेवम् । नच स्वयंप्रत्यक्षतयाऽनुपलभ्यमानाया अपि परप्रत्यक्षायाः स्मृतिमूलश्रुतेः सत्त्वे प्रमाणमस्ति । न तावदनुमानम् । पौरुषेयवचसो वेदामूलकस्यापि लोके व्याकरणे च दर्शनेन वेदमूलकत्वाविनाभावाभावात् । नच धर्मशा-

स्वप्रवर्त्तकत्वेन परिगणिताष्टकादिवाक्यस्य वेदमूलकत्वाविनाभावः । विरोधाधिकरणे भाष्योक्तन्यायेन श्रुतिविरुद्धस्मृतिवत्स्फुटव्यभिचारप्रतीतेः ।

'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥

इत्यादि न, न्यायमूलत्वात् । एतेन प्रामाण्यानुपपत्तिप्रसूतार्थापत्तिरेव वेदमूलत्वे प्रमाणमिति निरस्तम् । श्रुतिविरुद्धस्मृतिवदुदाहृतस्मृतिवच्च स्मृतित्वहेतुना सर्वस्मृतीनां वेदमूलत्वाभावनिश्चये धर्मे प्रामाण्यस्यैव बाधात् । नच वेदमूलकत्वाभावेनाष्टकादिस्मृतीनां धर्मे प्रामाण्यासम्भवेऽप्युक्तस्मृतिवदर्थान्तरेऽपि प्रामाण्यं वक्तुं शक्यम् । अर्थान्तरस्याप्रतीतेः । तर्हि 'वेदोऽखिलः' इत्यादेर्न्यायानभिज्ञं प्रति न्यायसिद्धमप्यर्थमनधिगतं बोधयतो वचनस्य प्रामाण्यमप्रतिहतमिति चेत् । न । उक्तस्मृत्यर्थस्य न्यायतोऽपि निरूपणानर्हत्वात् । तथाहि—नाखिलवेदस्य धर्ममूलत्वं शक्यं वक्तुम् । श्येनादिवाक्यानां निषेधवचसां च तदसम्भवात् । नच तद्विदामित्यनेनोक्तस्मृतिकर्तॄणां स्मृतिमूलवेदवित्त्वं सम्भवति । आथर्वणवेदगतानां मूलभूतवेदेनैव सर्वेषां धर्मप्रतीतिसम्भवेन स्मृतिप्रणयने प्रवृत्त्ययोगात् । नच तद्विदामित्यनेनातद्वित्स्मृतेर्धर्ममूलत्वाभावः शक्यो बोधयितुम् । चतुर्दशविद्यास्थानसंवादिन्याः सत्यवदनादिगोचराया अतद्विद्वाह्यस्मृतेरपि धर्मे प्रामाण्योपपत्तेः । नच चतुर्दशविद्यास्थानानामेव धर्मे प्रामाण्यनियमनान्न बाह्यस्मृतेः प्रामाण्यम् अनधिगतयथार्थबोधके वचसि प्रामाण्याभावस्य दुर्निरूपत्वात् । प्रवर्त्तनाविषयत्वेनैतद्बोधितसत्यवदनस्य श्रेयःसाधनत्वाभावान्न यथार्थबोधकत्वमस्येति चेत् न । सत्यवदनं श्रेयःसाधनमित्येवास्य वचसोऽर्थः, नतु स्वबोधितं तत्तत्साधनमिति । नच सत्यवदनं न श्रेयःसाधनम्, येनायथार्थत्वं स्यात् । तथाऽपि स्वबो-

षितसत्यवदनात्मकस्वार्थैकदेशे स्यादप्रामाण्यमिति चेन्न। अबाह्यस्मृत्यनुष्ठापितसत्यवदनात्मकैकदेशे मन्वादिस्मृतिप्रामाण्यस्यापि वक्तुं शक्यत्वात्। नच शीलस्य पृथगुपन्यासः सङ्गच्छते। न तावत् 'तद्विदां च स्मृतिशीले' इत्यत्र हरदत्तेन शीलपदस्याचारतया व्याख्यानादिहापि शीलपदमाचारपरमिति शङ्क्यम्। आचारश्चैव साधूनामित्यनेन पौनरुक्त्यात्। नच शीलं रागद्वेषप्रहाणम्, तच्च न ज्ञापकतया धर्ममूलं किन्तु निर्वर्तकतयेत्यस्यार्थ इति गोविन्दराजोक्तं साधु। एकस्य धर्ममूलशब्दस्य वेदादिविषये शीलविषये च भिन्नार्थबोधकत्वायोगात्। मनोजयविधायकग्रन्थवचःपौनरुक्त्याच्च। एतेन 'ब्राह्मण्यं, वेदपितृभक्तिता, सौम्यता, ऽपरोपतापिता, ऽनसूयता, मृदुता,ऽपारुष्यं, मैत्रता प्रियवादित्वं कृतज्ञताशरण्यता प्रशांतिश्चेति-त्रयोदशविधं शीलम्' इति हारीतोपदिष्टमिह शीलपदार्थ इति कुल्लूकभट्टोक्तं निरस्तम्। अस्यापि धर्मनिर्वर्तकत्वोपदेशे पूर्वोक्तदोषानपायात्। यत्तु वेदविदां बहूनां चित्तप्रसादः शीलं धर्मे प्रमाणं स्मृतेर्दुर्बलमाचाराच्च प्रबलम्। निर्निबन्धनत्वान्मिथ्याप्रसिद्धिमूलत्वेनानाशङ्क्यत्वाच्च। आत्मतुष्टिस्तु वेदविद एकस्य चित्तप्रसाद उक्तमानान्तरेभ्यो दुर्बल इति सर्वज्ञनारायणीयं व्याख्यानम्, तदप्ययुक्तम्। एकपुरुषीयप्रसादस्य प्रामाण्योक्तौ कैमुतिकन्यायेन बहुपुरुषीयप्रसादस्य प्रामाण्यसिद्ध्या शीलोपन्यासस्य वैयर्थ्यापत्तेः। स्यादेतत्। अन्यविषयव्याक्षेपपरिहारेण शास्त्रार्थनिरूपणप्रवणतारूपो मनोधर्मः शीलमुच्यते। 'शील समाधौ' इति धातुपाठात्। स्मृतिशीले इति द्वन्द्वेन चोक्तशीले सापेक्षा स्मृतिर्धर्मे प्रमाणमिति कथ्यते। तेन वेदार्थविदामप्युक्तसमाधिशून्यानां स्मृतिर्न प्रमाणमिति मेधातिथिव्याख्या स्वीकार्येति। मैवम्। यदि त्वस्माभिः स्मृतिकर्तॄणां मन्वादीनां मध्ये के समाधिशून्याः के च तद्वन्त इति विवेकः कर्त्तुं शक्येत, तदोक्तसमाधिशून्यवेदवित्स्मृत्यनादरसिद्ध्यै

फलवानेष उपदेशोऽस्मान् प्रति स्यात्। न च चिरातीतेषु मन्वादिष्वेष विवेकः शक्यो ऽस्माभिरिति वैयर्थ्यापातः। 'आचारश्चैव साधूनाम्' इत्यस्यापि किम् ईदृग्रूपसर्वाचारसाधारणश्रुत्यङ्गीकारेण निर्वाहः, उत स्मृतिवत् प्रत्येकं मूलश्रुतिकल्पनया। नाद्यः। विशेषरूपगोचरमूलश्रुतिशून्यतया निर्णीतस्यापि साध्वाचारस्यानुसरणीयत्वापत्तेः। न द्वितीयः। प्रतिदेशं प्रतिकुलमनन्ताचारेषु श्रुतीनां सम्भावनाऽयोगात्। आत्मतुष्टेरपि धर्ममूलत्वं कारकहेतुत्वेन वा स्याज्ज्ञापकहेतुत्वेन वा?। आद्येऽपि नकुलदंशनौषधैर्विषनिर्हरणशक्तिवच्छिष्टात्मतुष्ट्या स्वविषयाणां श्रेयःसाधनशक्तिजननाद्धर्मत्वं प्रति कारकत्वं स्यात, यद्वा सिद्धश्रेयःसाधनशक्तिके धर्मेऽधिकारसंपादनेन साक्षाच्छेषत्वेन वा कारकत्वं स्यात्?। सर्वथाऽपि वेदाद्यंशे ज्ञापकहेतुतां वदतो धर्ममूलशब्दस्यानन्वयापत्तिः। अथ संदिग्धार्थनिर्णायकत्वेन ज्ञापकहेतुत्वमेवास्तु। तथाच श्रुतिः—'यदेव किंचनानूचानोऽभ्यूहत्यार्षं तद्भवति' इति। कविवचश्च 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति। मैवम्। आत्मतुष्टेरनियतविषयत्वेन धर्माधर्मयोरव्यवस्थापत्तेः। अथ वैकल्पिकानां मध्ये यत्रात्मतुष्टिस्तस्यैव श्रेयःसाधनत्वनिर्णयं कुर्वती भवतु धर्ममूलम्। तथाच 'स्वस्य च प्रियमात्मनः' इति याज्ञवल्क्यस्मृतेरेतत्समानार्थाया व्याख्यानं कृतं विज्ञानेश्वरेण। अनुसृतं चेहापि मेधातिथिना। आह च वेदव्यासः—'वैकल्पिके आत्मनस्तुष्टिः प्रमाणम्' इति। तच्च न। वैकल्पिकानामन्यतमस्यात्मतुष्ट्यवधार्यतया लोकदृष्टत्वेनोपन्यासवैयर्थ्यात्। दृष्टो ह्यग्न्यर्थिनस्तृणारणिमणीनामन्यतमे स्वतुष्ट्यैव प्रवृत्तिनियमः। एतेन—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्॥ इति—

याज्ञवल्क्यस्मृतेर्व्याख्यावसरे यदपरार्केणोक्तं प्रियं मनस्तु-

स्मृतेः । अस्याश्चाष्टकादिस्मृतिवत्प्रामाण्याद्

---

ष्टिः, यत्कर्म द्रव्यशुद्ध्यादिमनस्तुष्टिपरिच्छिन्नतया निर्णीयते, यथाऽस्मिन्कर्मण्यकृते मनसः स्यादलाघवं तत् कुर्याद्यात्तुष्टिकरं भवेदिति तस्य निश्चये मनस्तुष्टिर्मूलम् । अनेन साधयामीति मनःकर्म संकल्पः । तज्जः कामः कर्मचिकीर्षा । सोऽपि धर्मनिश्चये मूलम् । 'यदेवैनं श्रद्धोपनमेद्यथादधीत' 'श्राद्धं प्रति रुचिश्चैव'इत्यादाविति । तदपि निरस्तम् । यया रीत्या मनस्तुष्टिसंकल्पजकामयोर्धर्ममूलत्वमिह विवक्षितं तया रीत्योदाहृतप्रातिस्विकविधिभिरेव धर्ममूलतया तयोः सिद्धावस्योपदेशस्य वैयर्थ्यात् । अतः स्मृतिप्रक्रमगतवाक्यानामप्रामाण्ये तद्दृष्टान्तेन दृढं स्मृतीनामप्रामाण्यम् । अथ 'यत्किंच मनुरवदत्तद्भेषजम्'इति श्रुत्यैव मनुस्मृतेः प्रामाण्यकथनान्नाप्रामाण्यशङ्केति चेत् । न । सोमारौद्रयागप्रकरणपठितस्य 'मानवी ऋचौ धाय्ये कुर्याद्'इत्यस्य विधेः समीपाम्नातस्य 'यद्वै किञ्च'इत्यस्य स्तुतिपरत्वेन स्वार्थतात्पर्याभावात् । वदत्यर्थोच्चारणकर्मणः शब्दस्यादृष्टार्थब्रह्मयज्ञादिद्वारा दोषनिवर्तकत्वेन प्रामाण्यस्याप्युपपत्तेश्च । बबरप्रमगन्दादिशब्दवन्मनुशब्दस्य श्रुतिसामान्यमात्रत्वेन पुंविशेषपरत्वासिद्धेश्च । एतेन 'सहोवाच व्यासः पाराशर्यः' इति श्रुतौ पराशरपुत्रत्वमुपजीव्य व्यासस्य स्तुतत्वादचिन्त्यमहिमा पराशर इति माधवोक्तं परास्तम् । अतः कथं व्यासप्रणीतेतिहासान्तर्गतस्य 'यत्करोषि'इत्यादेः प्रामाण्यमत आह—अस्याश्चेति । चो यद्यपीत्यर्थः, पौरुषेयत्वाभ्युपगमार्थः । यद्यप्यस्याः पौरुषेयत्वं तथाऽप्यष्टकादिस्मृतिवत्सम्भवत्येव प्रामाण्यमिति दृष्टान्तव्याजेन स्मृतिप्रामाण्यं व्यवस्थाप्यते । न तावद्वेद एव धर्ममूलमिति वदतां धर्मत्वेन स्मरणं तादृशानां पारम्पर्येण तथा स्वीकरणं चाष्टकादिषु वेदमूलत्वं विना सम्भवति । उत्सन्ननित्यानुमेयवेदमूलत्वासम्भवेऽपि शक्य-

त एव नानाशाखाविप्रकीर्णपुंप्रत्यक्षवेदवचोमूलत्वं निरूपयितुम् । स्मृतिमूलविज्ञानात्मककार्यलिङ्गकात्कारणसामान्यानुमानाल्लाघवतर्कहेतुकपरिशेषसहकृतात्सिद्धस्य मूलभूततादृशवेदस्यानुपलम्भेन निरासायोगात् । नहि भ्रमविप्रलम्भौ शक्यानुमानौ । चिरमनेकपुरुषेषु भ्रमकल्पनायां गौरवातिशयात् । नच प्रत्यक्षश्रुतिविरोधो ऽन्यायमूलता वाऽष्टकादिस्मृतिष्वस्ति, येनोक्तानुमानबाधोऽर्थान्तरता वा सम्भाविता स्यात् । उत्सन्नश्रुतिमूलकत्वेऽपि श्रुतेस्तदुत्सादस्य च कल्पनायां गौरवात् । नित्यानुमेयश्रुतिमूलत्वेऽपि तत्तत्पुरुषीयश्रुत्यनुमानलिङ्गभूतानां श्रुतिकल्पनागौरवात् । यदि परं स्मृतिकर्त्रा आपस्तम्बेन तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्त इत्येकेन स्मृतिव्याख्यात्रा च हरदत्तेन स्मृतीनामुत्सन्नवेदमूलत्वाभिधानात्तच्छाखीयत्वेन मुनिव्यवहृतस्यापि विधेः कस्य चित्तच्छाखायामनुपलम्भाच्चोत्सन्नवेदमूलत्वं स्वीक्रियते । तथा नित्यं मन्त्रार्थवादानुमेयश्रुतिमूलकानां कासांचित्सपादिस्मृतीनां दर्शनादाकरेऽपि कल्पसूत्राधिकरणे स्मृतीनामौत्सर्गिकतया मूलश्रुतिमूलकत्वनिरूपणात्तादृशनित्यानुमेयश्रुतिमूलकत्वमङ्गीक्रियते । स्वीक्रियतामनियमेन । नच तत्त्वीदृशश्रुतिमूलकमेवेति नियमः शक्यनिर्वचनः । 'प्रतिसम्वत्सरं सोमः पशुः प्रत्ययनं तथा' इत्यादीनां प्रत्यक्षश्रुतिमूलानामपि स्मृतीनां भूयसीनामुपलम्भात् । अत एव न्यायमूलकत्वेन निर्णीतस्मृतिदृष्टान्तेन स्मृतित्वाद्वेदमूलत्वानुमानं निरस्तम् । यत्तु 'वेदोऽखिलः' इत्यादेर्न वेदमूलत्वमिति । तन्न । 'पुराणन्यायमीमांसा' इत्यादिवदस्यापि वचनस्यैतान्येव धर्ममूलानीति नियमपरत्वात् । नियमस्य चालौकिकत्वेन वेदमूलत्वावश्यम्भावात् । नचैतद्वाक्यार्थस्य न्यायतः सिद्धौ नियमपरत्वमस्य स्यात्, दुर्निरूपस्त्वयं न्यायेन इति वाच्यम् । तथाहि धर्ममूलशब्दस्तावदिह साक्षात्पाम्पर्येण वा धर्म

प्रति कारकहेतुमेव वदति। पारंपर्येण च तत्त्वं सम्भवति ज्ञापकाज्ञापकयोः। नच ज्ञापकस्येन्द्रियादेरिव कथं कारकत्वमिति शङ्क्यम्। अवघातादेरिव ज्ञापकानामपि केषांचिद्धर्मं प्रति नियमविधिना तादर्थ्यावगमात्। तावता च प्रकृतहेतुतानिर्वाहात्। एवं नाखिलवेदस्य धर्ममूलत्वासम्भवः। धर्ममबोधयतामपि श्येनादिवाक्यानां निषेधानां च पारायणब्रह्मयज्ञादिनिर्वर्त्तनद्वारा धर्मं प्रति कारकत्वात्। प्रायश्चित्तविध्यपेक्षितनिमित्तसमर्पकत्वेन विद्वद्वाक्यवत्पारम्परया धर्मप्रमोपयोगाच्च। सम्भवति च नानाशाखाविप्रकीर्णमूलश्रुतिविदामपि मन्वादीनां तादृशश्रुत्यन्वेषणाशक्तत्वेन निर्णीतपुरुषेष्वनुकम्पया स्मृतिप्रणयनप्रवृत्तिः। तात्त्विकश्रेयःसाधनत्वबोधिकाया अपि बाह्यस्मृतेस्तादृशश्रुत्यन्वेषणाशक्तत्वे बोधद्वारा धर्मं प्रत्यकारकत्वाच्छक्यत एवोक्तविधधर्ममूलत्वाभावोऽपि बोधयितुम्। धर्ममूलशब्दस्य ज्ञापकाज्ञापकसाधारणकारकहेतुपरत्वाद्। एवं च रागद्वेषप्रहाणात्मनो ब्रह्मण्यताद्यात्मनो वा शीलस्य निर्वर्त्तकतया धर्ममूलत्वमिति व्याख्यासम्भवः। नच मनोजयविधायिवचसा पौनरुक्त्यम्। रागद्वेषप्रहाणस्य सर्वधर्ममूलताया असिद्धेः। न च वेदविदां बहूनां चित्तप्रसादः शीलमिति व्याख्यायां कैमुतिकन्यायेन शीलोपन्यासवैयर्थ्यम्। इहात्मपदात्स्वस्य च प्रियमात्मन इत्यत्र स्वपदाच्चैकपुरुषप्रसादस्य स्वचित्तप्रसादत्वेनैव प्रामाण्यावगतौ पुरुषान्तरीयप्रसादस्य प्रामाण्यासिद्धेः। नापि शीलं समाधिरिति मेधातिथिव्याख्यायां तदापत्तिः। इदानीन्तनवेदार्थविदां मध्ये य एवोक्तविधसमाधियुतस्तत्स्मृतिः प्रमाणमन्या स्मृतिस्त्वप्रमाणमिति विवेकप्रयोजनत्वात्। नच 'आचारश्चैव साधूनाम्'इत्येवंरूपाया एव सर्वाचारसाधारणश्रुतेरङ्गीकारेणाचारप्रामाण्ये विशेषरूपविषयमूलश्रुतिशून्याचारस्यानुसरणीयत्वापत्तिः। लोभादिदृष्टमूलत्वनिर्णयाभावे श्रुतिमूलत्वाभावनिर्णया

सम्भवात् । लोभादिमूलत्वनिर्णये वा साध्वाचारत्वस्यैवाभावात् । वेदविदां धर्मबुद्ध्याऽऽचरणस्यैव साध्वाचारत्वेन विवक्षितत्वात् । केषु चिदाचारेषु प्रातिस्विकमूलश्रुतिदर्शनात् परं नैष पक्ष आश्रीयते । नन्वेवमनन्ताचारप्रामाण्यनिर्वाहायानन्तश्रुतिकल्पनापत्तिरिति चेत् । अनन्तचरणाध्वरशाखाम्नातानां मन्त्रार्थवादानुमितानां वा मूलत्वेन स्वीक्रियमाणानामानन्त्यं सम्भवत्येवेति काऽनुपपत्तिः । नच केषु चिदाचारेषु विशेषतो मूलश्रुतिदर्शनेऽपि सर्वत्र तादृशश्रुतिमूलत्वमेवेत्यवधारणसम्भवः । आत्मतुष्टेर्नकुलदंशवत् श्रेयःसाधनशक्तिं प्रति कारकहेतुताया मेधातिथिनोक्तत्वाद् वार्त्तिककारैराचाराधिकरणे तस्यास्तद्दृष्टान्तेनाचाराणां च तथा उपपादनात् । 'सम्यक्सङ्कल्पजः कामः' इत्यत्र विज्ञानेश्वरेण शास्त्राबाधितस्यापि शास्त्राविरुद्धस्य 'भोजनव्यतिरेकेण जलं न पातव्यम्'इति सङ्कल्पजकामस्य धर्ममूलत्वाभिधानाद्विशेषरूपेण श्रेयःसाधनताबोधकश्रुत्यभावेऽपि शिष्टात्मतुष्ट्याचारान्यतरविषयत्वेन यत्किंचित्पुरुषीयतादृशसङ्कल्पजकामेन वा श्रेयःसाधनतां निर्णीय प्रवृत्तिसम्भवात् । इदानीमपीदृशकुलधर्मप्रवृत्त्युपलम्भात् । नचात्रत्यधर्ममूलशब्दस्य कारकहेतुप्रतिपादकत्वासम्भव इत्युपपादितम् । नच शिष्टात्मतुष्टेः, धर्मविषयत्वनियमसम्भवात् ।

अत एवाहुः—

यथा रुमायां लवणाकरेषु मेरोर्यथा चोज्ज्वलरुक्मभूमौ ।
यज्जायते तन्मयमेव तत्स्यात्तथा भवेद्वेदविदात्मतुष्टिः ॥ इति ।

नच वैकल्पिकान्यतरावधारणहेतुत्वेनात्मतुष्टिप्रामाण्योपन्यासवैयर्थ्यम् । परतुष्ट्याऽप्यवधारणप्राप्तौ स्वारसिकात्मतुष्टेरवधारणोपायत्वनियमसम्भवात् । नापि 'श्रुतिः स्मृतिः'इत्यादेरपरार्कव्याख्यायामुपदेशवैयर्थ्यम् । सिद्धधर्ममूलत्वानामपि पूर्वस्मात्परं दुर्बलमितिबलाबलज्ञापनायोपन्याससम्भवात् । श्रुतिस्मृत्योस्तन्निरपेक्षत्वसा-

इत्यन्यत्र विस्तरः ।

---

पेक्षत्वाभ्यामेव बलाबलं द्रष्टम् । स्मृतिसदाचारयोरपि सनिबन्धनत्वा-निबन्धनत्वाभ्यां विशिष्टतदन्ययुगान्तत्वाभ्यां वा द्रव्यशुद्ध्यादे र्मनस्तुष्टिपरिच्छिन्नतया विधावपि यदि क्वचित्सदाचारेण तदियत्तापरिच्छेदः प्राप्यते, तदा तेनैव मनः सन्तोष्टव्यम् । नतु स्वमनस्तुष्ट्येयत्तान्तरपरिच्छेदः कार्यः । सदाचारसिद्धेयत्तायाः श्रुतिमूलत्वस्यौत्सर्गिकत्वात् । श्रुतिविरुद्धत्वेन सम्भाविताया अपि मनस्तुष्टेः प्रामाण्यायोगादिति ज्ञापयितुं सदाचारानन्तरं 'स्वस्य च प्रियमात्मनः' इत्युक्तम् । सत्यपि 'यदेवैनं श्रद्धोपनमेद्' इतिशास्त्रे श्रद्धामूलकमनःसङ्कल्पजकामवतोऽप्यविहितर्तुनक्षत्राधाने यदि न मनस्तुष्टिस्तदा नियते वसन्ताद्यृतौ कृत्तिकादिनक्षत्रेषु चाधानं कार्यम्, नतु कालान्तरात्मकधर्माङ्गत्वेन मनस्तुष्टिविधिपरत्वेनापि मेधातिथिना 'आत्मनस्तुष्टिरेव च' इतिचो व्याख्यानाद् मनस्तुष्टिमन्तरेण कर्मवैगुण्यादिति ज्ञापयितुं स्वस्य च प्रियमात्मन इत्यनन्तरं सम्यक्संकल्पज इत्याद्युक्तम् । एवं स्मृतिप्रक्रमवाक्यप्रामाण्ये निरस्ते पूर्वोक्तविधयोपपन्नस्य स्मृतिप्रामाण्यस्य सम्भवत्येव 'यद्वै किञ्च' इति, 'सहोवाच' इति च लिङ्गम् । वदतेः शब्दकर्मकत्ववदर्थकर्मकत्वस्यापि बहुलमुपलब्धेः । रूढ्या प्रसिद्धार्थप्रतिपादकत्वेन मन्वादिशब्दोपपत्तावप्रसिद्धयोगाश्रयणेनार्थान्तरकल्पनानुपपत्तेश्च । प्रतिसर्गसमानानां तासां पूर्ववज्जन्माश्रयणेनाप्याकरे वेदनित्यतोपपादनाच्च । एवं च यदा पुण्यविशेषलब्धज्ञानातिशयमन्वादिवचःप्रामाण्यं सिद्धम् । तदा बादरायणोक्तन्यायानुगृहीतश्रुत्याद्यनेकमानसिद्धस्वाभाविकसार्वज्ञस्य चतुर्वेदनिःश्वासितस्य भट्टपादैः स्मृतिपादे सर्वलोकप्रमाणत्वेन कीर्तितस्य श्रीवासुदेवस्य वचसि 'यत्करोषि' इत्यादावितिहासान्तर्गतेऽपि का ऽप्रामाण्यकथेत्याशयेनाह इत्यन्यत्र विस्तर इति ।

काऽहं मन्दमतिः केयं प्रक्रिया भट्टसम्मता ।
तस्माद्भक्तेर्विलासोऽयं गोविन्दगुरुपादयोः ॥ १ ॥
ग्रन्थरूपो मदीयोऽयं वाग्व्यापारः सुशोभनः ।
अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः ॥ २ ॥

इति श्रीमदनन्तदेवसूनुना आपदेवेन कृतं
मीमांसान्यायप्रकाशसंज्ञकं मीमांसा-
प्रकरणं समाप्तम् ॥

---

दध्नो नन्विह मन्थनेन सकलं नेयं दिनं किं त्वया
देयं मे नवनीतमम्ब गिरमित्याकर्णयन्त्या हरेः ॥
गोप्या संघटितं झटित्यथ करे नैजेऽर्पितं सादरम्
दृष्ट्वा स प्रहसन्सदा वसतु मच्चित्ते यशोदाशिशुः ॥ १ ॥

इति श्रीमदगणितगुणसीमानिःसीमनिखिलविद्याविद्योतमान-
श्रीमदापदेवसुरिवरसूनोरनन्तदेवस्य कृतौ
न्यायप्रकाशटीकायां भाट्टालङ्कारा-
ख्यायां द्वितीयः परिच्छेदः ॥

॥ समाप्तोऽयं ग्रन्थः ॥

